# संस्कारदीपकस्य
# प्रथमो भागः

[illegible]

[illegible]

तेनैव काश्यां विद्याविलासयन्त्रालये मुद्रितः।

मूल्यम् १।)

---

# SAMSKARADIPAKA

## PART I

By Parvatiya Nityâ Nanda Panta.

---

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
*Benares.*

1914.

Price R 1–4 as

# संस्कारदीपकस्य
# प्रथमो भागः

गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग-
निरूपणात्मकः ।

पर्वतीयनित्यानन्दपन्तेन विरचितः शोधितश्च ।

तेनैव काश्यां विद्याविलासयन्त्रालये मुद्रितः ।
मूल्यम् १।)

# SAMSKARADIPAKA

## PART I

By Parvatiya Nitya Nanda Pant

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilasa Press,*
*Benares*

1914.

Price R 1-4 as.

श्रीगणेशाय नमः ।

# संस्कारदीपकः ।

सर्वस्फूर्तिविधातारं सर्वविघ्नविनाशनम् ।
सर्वाभीष्टप्रदातारं सद्गुरुं प्रणमाम्यहम् ॥
पर्वतीयेन पन्तेन नित्यानन्देन धीमता ।
क्रियते बालबोधार्थमेष संस्कारदीपकः ॥

तत्रादौ सर्वकर्मसाधारणी रुद्रकल्पद्रुमोक्ता परिभाषा सङ्क्षेपेण निरूप्यते ॥

१।तत्र शुचित्वं तावदधिकारिविशेषणम् ।
सदा कुर्याद्धर्मकार्यमापद्यपि शुचिर्नरः ।
इति टोडरानन्दे सप्तर्षिस्मृतेः ।
श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ।
इति प्रयोगपारिजाते भृगूक्तेश्च ।

२।शक्तिश्चाधिकारिविशेषणम् । आख्यातानामर्थंब्रुवता शक्तिः सहकारिणीति न्यायात् । तदभावे अन्येन करणीयम् । पाष्ठन्यायात् । (पू. मी. ६।३।१) माधवीये बौधायनोऽपि—

यथाकथंचिन्नित्यानि शक्त्यवस्थानुरूपतः ।
येनकेनापि कार्याणि नैव नित्यानि लोपयेत् इति ॥

यथाकथंचित्— केनाचिदङ्गेन हीनानीत्यर्थः । येनकेनापि— स्वतः परतो वेत्यर्थः।नित्यानीति नैमित्तिकमारब्धकाम्ययोरुपलक्षणम् । नैमित्तिकस्याप्यकरणे प्रत्यवायात् । समाप्तेः शास्त्रतात्पर्यविषयत्वेन प्रारब्धं काम्यमपि नित्यायते इति पाष्ठन्यायात् ।

(पू. मी. ६।२।३) आरम्भान्नियमो दोषश्चासमाप्तौ स्यात् सामान्याद्दर्शनाच्चेति कात्यायनसूत्राच्च। (अ० १ क० ४)

काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः—

इतित्वनारब्धकाम्यपरम्। अन्येनाप्यसंभवे न दोषः

अत्यन्तरोगयुक्तेऽङ्गे राजचोरभयादिषु।
गुर्वग्निदेवकृत्येषु नित्यहानौ न पापभाक्॥

इति माधवीयोक्तेः। अत्र नित्यपदेन न मारब्धकाम्यग्रहणम्। औपदेशिकनित्यग्रहणेनैव सिद्धौ आतिदेशिकनित्यग्रहणे मानाभावात्।

३।उपवासोऽप्यधिकारिविशेषणम्।

स्नानं संध्या तर्पणादि जपहोमामरार्चनम्।
उपवासव्रता कार्यं सायंसंध्याहुतीर्विना॥

इति वाराहात्।

जलस्यापि नरश्रेष्ठ प्राशनाद्व्रेपजाद्दते।
नित्यक्रिया निवर्तेत काम्यनैमित्तिकैः सह॥

इति कालिकापुराणाच्च।

इक्षुरापः पयो मूलं फलं ताम्बूलमौषधम्।
भक्षयित्वाऽपि कुर्वीत स्नानदानादिकाः क्रियाः॥

इति स्मृत्यर्थसारादिषु इक्ष्वादिपरिगणनं चाशक्तविषयम्।

४।स्नानमप्यधिकारितावच्छेदकम्।

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि।
पवित्राणां तथा जप्ये दाने च विधिचोदिते॥

इति हेमाद्रौ प्राचेतसोक्तेः। पवित्रपदेन मन्त्रा उच्यन्ते। मन्त्रः पवित्रमुच्यते इति निरुक्तात्।

५।कृतप्रातःसंध्योपासनत्वमपि अधिकारितावच्छेदकम्।

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।

इति छन्दोगपरिशिष्टे कात्यायनोक्तेः।

सुस्नातः सम्यगाचान्तः कृतसंध्यादिकक्रियः ।

कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः ॥

जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते ।

इति दानहेमाद्रौ वाराहोक्तेश्च। कर्माङ्गस्नाने विशेषो मार्कण्डेयपुराणे-

शिरःस्नातस्तु कुर्वीत दैवं पित्र्यमथापिवा।

प्राङ्मुखोदङ्मुखो वाऽपि श्मश्रुकर्म च कारयेत् ॥ इति।

तत्रादौ श्मश्रुकर्म, ततः शिरःस्नानम्। अन्यथा अशुचित्वापत्त्या पुनः स्नानापत्तेः। तच्च स्नानं मङ्गलकृत्यादौ तिलामलकादिना उद्वर्त्य अभ्यङ्गपूर्वकं वा कार्यम्। आद्यं तु रुद्रकारिकायां परशुरामेणोक्तम्—

ततः स्वगृहमागत्य मङ्गलस्नानमाचरेत्।

सर्वौषधिगन्धचूर्णयुक्तैः कृष्णतिलामलैः॥

उद्वर्त्याङ्गानि तैलेन चम्पकादिसुगन्धिना।

तैलेन मङ्गलस्नानं कुर्वीत ब्राह्मणैः सह ॥ इति।

अत्र सर्वशब्दस्य ओषधिगन्धचूर्णशब्देन कर्मधारयः। सर्वगन्धास्तु मदनरत्ने-

कुङ्कुमागरुकर्पूरकस्तूरीचन्दनं तथा।

जातीफलमिति प्रोक्ताः सर्वगन्धाः सदा बुधैरिति॥

ब्राह्मणैः सहेत्यत्र—

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।

इत्यत्र गर्दभ्या भारवाहकत्वे पुत्राणामिव ब्राह्मणानां सा-

हित्यमात्रमेव न पुनस्तेषां स्नाने कर्तृत्वम्। अन्यं तु निर्णय-सिन्धौ कात्यायनेनोक्तम्,

माङ्गल्यं विद्यते स्नानं वृद्धिपूर्वोत्सवेषु च।
स्नेहमात्रसमायुक्तं मध्याह्नात्प्राक् तदिष्यते इति ॥

वृहन्नारदीये,

शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् इति।

अशक्तौ तु आशिरस्कमपि स्नानम्।

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम्।

इति आह्निकप्रकाशे जाबालवचनात्।

६ अहतयोरधरीयोत्तरीययोः परिधानमपि अधिकारि-तानच्छेदकम् ॥

अधौते कारुधौते च परिदध्यान्न वाससी।
अहते तु परीदध्यात् सर्वकर्मणि संयतः ॥

इति हेमाद्रौ वाराहोक्तेः। "अहतं वासो धौतं वा अ-मौत्रेण आच्छादयीत" इति पारस्करगृह्योक्तेश्च। अमौत्रे-ण–अरजकेनेत्यर्थः। अहतलक्षणमुक्तं– स्मृतिरत्नावल्याम्–

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
अहतं तद्विजानीयात् सर्वकर्मसु पावनमिति ॥

ईषद्धौतम् अरजकादिना सकृद्धौतमिति नागदेवाह्निके व्याख्यातम्। कश्यपेन तु अन्यथोक्तम्—

अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा।
शस्तं तद् माङ्गलिक्येषु तावत्कालं न सर्वदा ॥

अत्रैवं व्यवस्था–विवाहादिमङ्गलकर्मसु यन्त्रनिर्मुक्तमेवाह-तम्। शस्तं तन्माङ्गलिक्येषु तावत्कालमिति वदता तत्रैव ताव-त्कालं तस्य शस्तत्वाभिधानात्। अन्यत्र यज्ञादौ त्वीषद्धौतमि-

ति । नच यज्ञादिकमपि माङ्गलिक्यमेवेत्याशङ्कनीयम् । विवाहोत्सवादेरैहिकसुखदस्याभ्युदयदस्य च माङ्गलिकत्वात् । यज्ञादेस्तु धर्मरूपादृष्टफलदत्वेन माङ्गलिकत्वाभावात् । अनन्तयाज्ञिकैरप्येवमेव व्याख्यातं "सौमम्" इत्यादिसूत्रे । ( कात्या० ७।२ )
हेमाद्रौ वृद्धमनुः,

स्वयं धौतेन कर्तव्या क्रिया धर्म्या विपश्चिता ।
न तु नेजकधौतेन नोपभुक्तेन वा क्वचित् ॥

नेजको रजकः । आह्निकप्रकाशे भारते—

ईषद्धौतं स्त्रिया धौतं शूद्रधौतमेव च ।
अधौतवस्त्रसंस्पृष्टं पुनः प्रक्षालनाच्छुचि ॥

अत्रहेमाद्रौ-

प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनाच्छुचि ॥

तत्रैव मार्कण्डेयः-

अन्यदेव भवेद्वासः शयनीये नराधिप ।
अन्यद्रथ्यासु, देवानामर्चायामन्यदेव हि ॥
अन्यच्च लोकयात्रायामन्यदीश्वरदर्शने ।

योगियाज्ञवल्क्यः,

अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासा येन वै भवेत् ॥

कुतपो नेपालकम्बलः । आपस्तम्बः-

आर्द्रवासास्तु यः कुर्यात् जपहोमप्रतिग्रहान् ।
सर्वं तद्राक्षसं विद्यात् बहिर्जानु च यत्कृतम् ॥
यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत् ॥

सप्तवाताहतमपि शुष्कम् । अग्निदग्धे सच्छिद्रे स्यूते च वाससी न परिधेये ।

न स्यूतेन न दग्धेन पारक्येण विशेषतः ।
मूषिकोत्कीर्णजीर्णेन कर्म कुर्याद् विचक्षणः ॥

इति महाभारतात् । बौधायनः-
काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं कर्म हव्यकव्येष्वथो हविरिति ॥

भवेदिति शेषः । आचारादर्शे नरसिंहपुराणे—
न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
मलाक्तं च सदा हीनं वर्जयेदम्बरं बुध इति ॥

उल्बणं—व्यक्तम् । एतच्च रक्तविशेषणं, तेनात्यन्तरक्तमित्यर्थः । उल्बणमञ्चलमिति केचित् । व्याघ्रपादः—
कषायं कृष्णवस्त्रं वा मलिनं केशदूषितम् ।
जीर्णं नीलं सन्धितं च पारक्यं मैथुने धृतम् ॥
छिन्नाग्रमपवस्त्रं च कुत्सितं धर्मतो विदुः । इति ।

अयं च निषेधः सति संभवे बोध्यः । अत एवाह गौतमः— सति विभवे न जीर्णमलवद्वासाः स्यात्, न रक्तमुल्बणम् अन्यधृतं वा वासो बिभृयादिति । नीलं तु सर्वथा निषिद्धमेव ।

नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

इत्यापस्तम्बवचनात् । नीलीरक्तमपि पट्टादिवस्त्रं न निषिद्धम् ।

कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति ।
स्त्रीणां क्रीडार्थसंभोगे शयनीये न दुष्यति ॥

इति आचारचिन्तामणावुक्तेः । व्याघ्रपादः -

नैकवस्त्रो द्विजः कुर्याद्भोजनं च सुरार्चनम् ।
तत्सर्वमसुरेन्द्राणां ब्रह्मा भागमकल्पयत् ॥ इति ।

शातातपः—

सव्यादंसात्परिभ्रष्टकटिदेशधृताम्बरः ।
एकवस्त्रं तु तं विद्यात् दैवे पित्र्ये च वर्जयेत् ॥

अम्बाम्बरपदमुत्तरीयपरम् । तथा च ।

सव्यादंसात् परिभ्रष्टं कटिदेशे धृतं चाम्बरं यस्येत्यर्थ इति परिभाषाप्रकाशे मित्रमिश्रः । सव्यांसे उत्तरीयाधारणे कट्यादौ तद्धारणेऽपि एकवस्त्रत्वमेवेति भावः ।

संग्रहे—

वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम् ।
त्रिभिः कच्छैः परिज्ञेयो विप्रो यः स शुचिर्भवेत् ॥
आदौ कच्छस्तथा नीवी नाभिमध्ये च वाससी ।
नीवी दक्षिणतः स्थाप्या एतत्त्रिकच्छलक्षणम् ॥
कटिवेष्ट्यं तु यद्वस्त्रं पुरीषं येन वा कृतम् ।
मूत्रमैथुनकृद्वस्त्रं धर्मकार्ये विवर्जयेत् इति ॥

दानहेमाद्रौ श्लोकगौतमः—

स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नासुरीं कक्षां शेषकाले यथारुचि ॥

तत्रैव याज्ञवल्क्यः—

परिधानाद् बहिः कक्षा निबद्धा ह्यासुरी मता ।
धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

*बहिः कक्षा—बहिर्निर्गता कक्षेत्यर्थः । कक्षा पश्चादञ्चलम् । प्रान्तद्वयमित्यन्ये ।*

७। उपवीतित्वं बद्धशिखित्वञ्चाधिकारिविशेषणम् ।

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

इति छन्दोगपरिशिष्टे कात्यायनवचनात् । अनेन हि दधिखादिरादिवत् उपवीतित्वस्य बद्धशिखित्वस्य च क्रतुपुरुषोभयार्थत्वमवगम्यते । तेन विशिखेन व्युपवीतिना च कर्मणि क्रियमाणे कर्मणोऽपि वैगुण्यं भवति । एवं सति क्रतुपुरुषोभयार्थापचारप्रयुक्तं प्रायश्चित्तद्वयमत्र बोध्यम् ।

उपवीतं द्विधा, नवसूत्रं संस्थानविशेषश्च । तत्राद्यं शूद्रस्य नेत्युक्तं मिताक्षरायाम् । अन्त्यं तु शूद्रस्यापि भवति । उपवीतिना कर्म कर्तव्यमित्यस्य सर्वकर्मशेषत्वेन शूद्रस्याप्यदृष्टार्थे कर्मणि उपवीतित्वावश्यम्भावात् उपवीतादि उत्तरीयवस्त्रेणापीति पारिजातकल्पतरू ।

न शिखी नोपवीती स्यात् नोच्चरेत् संस्कृतां गिरम् ।

इति पाद्म वचनं तु असच्छूद्रपरम्, अकर्मकालपरम्, न वसूत्रपरं वा । संस्थानविशेषोपवीतादिस्वरूपं तु मन्वादितो बोद्धव्यम् । नवसूत्रात्मकोपवीतस्य कण्ठादुत्तारणनिषेधं प्रक्षालनार्थं शाखाविशेषेण तदपवादं चाह भृगुः—

मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ।
नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥
सकृदुत्तारणात्तस्य प्रायश्चित्ती भवेद् द्विजः ।
तैत्तिरीयाः कठाः कण्वाः चरका वाजसनेयिनः ॥
कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः ।
बह्वृचाः सामगाश्चैव ये चान्ये यजुःशाखिनः ॥
कण्ठादुत्तार्य सूत्रं तु पुनरर्हन्ति संस्क्रियामिति ।
पुनः संस्क्रियां— मन्त्रेणोपवीतान्तरधारणमेव ॥

अभ्यङ्गे चोद्धिस्नाने मातापित्रोर्मृतेऽहनि ।
कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः ॥

इत्येतद्वाक्यबोधितविषयेष्वेवोक्तव्यवस्था । एतेन नित्यस्नानविधौ विहितयज्ञोपवीतप्रक्षालनविषया उक्तव्यवस्थेति गोपीनाथदीक्षितोक्तं परास्तम् । विश्वामित्रः—

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते इति ॥

यद्यपि तृतीयोपवीतधारणम् उत्तरीयकार्ये विधानात् उत्तरीयमन्त्रेण प्रतिभाति तथापि मन्त्रेणैव स्मृतं कर्म कर्तव्यमित्यभिधानात् प्रकृते च मन्त्रेणोपवीतधारणस्यैव स्मरणीयत्वात् उपवीतमन्त्रेणैव युक्तम् ।

तृतीयमुत्तरीयार्थे इत्येतावतैव अनुकल्पत्वे सिद्धे वस्त्राभावे इत्युक्तिः उत्तरीयाभावे एव अनुकल्पत्वार्था । तेन तृतीये धृते उत्तरीयलाभे तदपि धार्यमिति केचित् ।

तन्नेत्यन्ये । एकस्यैव कदाचिदनुकल्पत्वे प्राधान्ये च विरोधात् ।

वृद्धास्त्वाहुः—उत्तरीयस्य सर्वकर्मार्थत्वात् प्रतिकर्मधारणानुपपत्तेः तद् उपवीतवत् सर्वार्थं सकृदेव धार्यम् । एवं तृतीयोपवीतमपि । तदङ्गीकारेण कर्मविशेषारम्भोत्तरं मुख्योत्तरीयलाभेऽपि न तद्ग्रहणं पौष्कन्यायात् (पू.मी. ६।३।१७)। कर्मानारम्भे तु तृतीयसत्त्वेऽपि मुख्यग्रहणं पौष्कन्यायात् (पू.मी. ६।३।१६)। न च

१ उपवीतं येन प्रकारेण धार्यते तेन प्रकारेणेत्यर्थः ।

२ प्रतिनिधिना प्रवृत्ते यागे न मुख्योपादानम् अनर्थकत्वात् इति अधस्तनाधिकरणे ।

३ मुख्यस्य व्रीह्यादेरभावेन प्रतिनिधिना नीवारादिना यागार्थं प्रवृत्त दैवाद् व्रीह्यादिलाभे मुख्येनैव यागं कुर्यात् इति हि तत्रोक्तम् ।

तृतीयत्यागापत्तिः।सर्वार्थत्वेन धृतत्वात्। उत्तरीयस्य च सर्वदा सत्त्वासंभवात् इति। शिष्टाचारोऽप्येवम्। उत्तरीयवस्त्राभावे तु **पारस्करगृह्ये**—"एकं चेत् पूर्वस्योत्तरवर्गेण प्रच्छादयीतेति। एकवस्त्रत्वेन उत्तरार्द्धस्योत्तरीयत्वेनोपादाने तु यशसामेत्युत्तरीयमन्त्रः प्रवर्तते एव क्रियान्तरत्वात्।

शिखाबन्धस्तु दक्षिणपार्श्वादौ माध्यन्दिनादिभिः कार्यः।

मध्ये तु बह्वृचाश्चैव निबध्नीयुः शिखां ततः।
माध्यन्दिनाश्च ये विप्राः पार्श्वे दक्षिणतः क्रमात्॥
वामपार्श्वे निबध्नीयुर्ये विप्राः सामगायिनः।

*इति चतुर्विंशतिमतवचनात्।* शूद्रस्य तु "अनियताः केशवेषाः" इति वसिष्ठोक्तेः शिखाविकल्पः। स च सदसच्छूद्रविषयत्वेन व्यवस्थित इति। सर्वेषां शिरसि यत्र-कुत्रचित्केशसत्त्वे तत्रैव शिखाबन्धः। खल्वाटत्वेन सर्वथा केशाभावे विशेष उक्तः काठकगृह्ये- अथ चेत्प्रमादान्न शिखा स्यात् तदा कौशीं शिखां ब्रह्मग्रन्थियुतां दक्षिणकर्णे निदध्यात् इति। शिखाभिन्नकेशानामपि कर्मकाले बन्धः—

मुक्तकेशैर्न कर्तव्यं प्रेतस्नानं विना क्वचित्।
स्नानं दानं जपं होमं मुक्तकेशो न कारयेत्॥

इति वृद्धवसिष्ठोक्तेः। न च पूर्वार्द्धे प्रेतस्नानाभिन्नस्नानएव मुक्तकेशत्वनिषेध इति वाच्यम्। उत्तरार्द्धे स्नानपदवैयर्थ्यापत्तेः। स्नाने तदनुवादे दानादौ तद्विधौ वैरूप्यापत्तेः। उत्तरार्धे एव सर्वत्र मुक्तकेशत्वनिषेधे वाक्यभेदापत्तेः। पूर्वार्द्धवैयर्थ्यापत्तेश्च। न च प्रेतस्नानपर्युदासार्थं पूर्वार्द्धमिति वाच्यम्। आद्यपादवैयर्थ्यापातात्। तेन उत्तरार्धैकवाक्यतया प्रेतस्नानान्यकर्मसु मुक्तकेशत्वं निषिध्यते।

विष्णुपुराणे —
कुशोपरि निविष्टेन तथा यज्ञोपवीतिना ।
सर्वं कर्म प्रकर्तव्यम् अन्यथा विफलं भवेदिति ॥
कुशोपरि निविष्टेनेति कुशासनोपादानं कर्मार्हासनोपलक्षणम् । आसनान्याह श्राद्धकाशिकायां—
शमीकाष्ठमर्थशल्लाश्च कदम्बो वारणस्तथा ।
पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथेति ॥
श्राद्धे देवार्चनइति दैवपित्र्यकर्ममात्रोपलक्षणम् ।
८।मन्त्रेण पवित्रधारणं चाधिकारितावच्छेदकम् ॥
मन्त्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु ।
मन्त्रं विना धृतं यत्तु पवित्रमफलं भवेत् ॥
पवित्रवन्त इत्यादिमन्त्रद्वितयमस्य तु—
इति प्रयोगपारिजातोक्तेः । हेमाद्रावत्रिः—
उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके ।
धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते ॥
ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्त्तुलः प्रोक्तः एवं धर्मो न हीयते इति ॥
वृत्तग्रन्थिमत्पवित्रलक्षणमुक्तं हेमाद्रौ गारुडे—
अर्द्धं प्रदक्षिणीकृत्य शिखायां संप्रवेशयेत् ।
वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रके ॥
वैष्णवो मार्गः- पश्चाद् भागः । ब्रह्मग्रन्थिमत्पवित्रलक्षणमपि तत्रैवोक्तं—
संत्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतम् ।
सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥
तद् ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः इति ।

पवित्रकर्तुरभिमुखमदेशो ब्रह्ममार्गः । सर्वसाधारणपवित्रलक्षणं तु-

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

इति छन्दोगपरिशिष्टोक्तं ज्ञेयम् । द्विदलम्- अखण्डैकपत्रात्मकमिति केचित् । पत्रद्वयात्मकमित्यन्ये । तद्विचारस्तु अग्रे स्फुटीभविष्यति ॥

९।आचमनं चाधिकारितावच्छेदकम्।तदुक्तं मार्कण्डेयेन-
देवार्चनादिकार्याणि तथा गुर्वभिवादनम् ।
कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विजः इति ॥

आचान्तस्य प्रयतस्यापि कर्मारम्भप्रयुक्तमाचमनमनेनोक्तं भवति । आचमनप्रकारश्च आचारादर्शादितोऽवगन्तव्यः ॥

१०।कृतप्राणायामत्वमपि अधिकारितावच्छेदकम् ।
प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः ।
प्राणायामैस्त्रिभिः पूतः तत ओंकारमर्हति ॥

इति वृद्धमनूक्तेः।प्राणायामलक्षणं तु छन्दोगपरिशिष्टे कात्यायनेनाभिहितं-

भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्जनस्तपः सत्यं गायत्री च शिरस्तथा इति ॥
आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरिति शिरः ।
प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ।
एता एतां सहानेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते इति ॥

मुक्तिफलत्वादव्ययाः । एताः-सप्तव्याहृतयः । एतां-गायत्रीम् । अनेन-शिरसा सह । तथा एभिर्दशभिः-प्रणवैः

सह । आयतप्राणो–निरुद्धप्राणः । त्रिर्जपेदिति अयमेकः प्राणायामः ।

शाट्यायनः–दानयज्ञतपःस्वाध्यायजपध्यानसंध्योपासनप्राणायामहोमदैवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेदिति । अतश्च मन्त्रमात्रोच्चारणे आदावोंकारः कार्य इति सर्वानुक्रमसूत्रभाष्ये । केचित्तु प्रवर्तयेदिति वचनात् प्रारम्भेएव युक्तः । तथाच छन्दोगपरिशिष्टे कात्यायनः–

नोंकुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् ।
अन्येषां च विकृष्टानां कालेनाचमनादिना ॥ इति ।

अस्यार्थः—"गोभिलगृह्यप्रसिद्धषडाहुतिर्विंशत्याहुतिमन्त्रेषु प्रतिमन्त्रम् आदौ न ओंकारप्रयोगं क्वचिदपि कुर्यात् किन्तु प्रथममेव । अन्येषां जपाद्यर्थानां रुद्राध्यायादीनां मध्ये अमायत्ये सति आचमनादिना कालेन ओंकारेण सह व्यवधाने जाते न आचमनानन्तरं पठ्यमानस्य मन्त्रस्य आदावोंकारप्रयोगः कर्तव्यः । होममन्त्रेष्वेवं व्यवधाने ओंकारः कर्तव्य एव" इति नारायणवृत्तिकृता प्रतिपादितः । अतएव शाखान्तरीया न कुर्वन्तीत्याहुः ।

पारस्करगृह्यभाष्ये हरिहरस्तु अन्येषां चाविकृष्टानामिति पाठं धृत्वा अविकृष्टानामनन्तरितानां कालेनाचमनादिना चेति व्याख्यातवान् । स च त्रिमात्रः प्रयोक्तव्यः ।

त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।

इति मदनरत्ने व्यासोक्तेः । ओमित्यधिकृत्य तथैवापस्तम्बोक्तेश्च । अस्य पृथग्विधित्वात् मन्त्रेण सह न सन्धिः । पृथग्विधानेन सह सन्धिर्न भवतीत्युपपादितं "स्विपिमान्"

इत्यादिकातीयसूत्रे (अ.३।क.३) कर्कोपाध्यायैः। अध्याहारस्य तु लौकिकत्वात् मन्त्रेण सह सन्ध्यभाव इत्यपि प्रतिपादितं " पशुंपूर्वं समनक्ति " इत्यधिकृत्य " सन्तइति प्रतिमन्त्रम् " इति कातीयसूत्रे ( अ. ६। क. ४ ) कर्कोपाध्यायैः।

दानहेमाद्रौ मदनरत्ने च याज्ञवल्क्यः—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैवच।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥
अविदित्वा तु यः कुर्यात् यजनाध्ययनं जपम्।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेदिति॥

तथा—

यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्।
विनियोगं ब्राह्मणं च मन्त्रार्थज्ञानमेवच॥
एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद् भवेदिति।
एकैकस्य ऋषेः-एकैकस्य मन्त्रस्येत्यर्थः।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः॥
पूर्वोक्तेन प्रकारेण ऋष्यादीन्वेत्ति यो द्विजः।
अधिकारी भवेत्तस्य रहस्यादिषु कर्मसु॥
येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै।
मन्त्रेण तस्य तत्प्रोक्तमृषेर्भावस्तदार्षकम्॥
छादनाच्छन्द उद्दिष्टं वाससी इव चाकृतेः।
आत्मा सञ्छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा॥
आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै।
यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या॥
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते।
पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेवच॥

अनेन चेदं कर्तव्यं विनियोगः स उच्यते।
तैरुक्तं यच्च मन्त्रस्य विनियोगः प्रयोजनम्॥
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते।
एवं पञ्चविधं योगं जपकाले ह्यनुस्मरेत्॥
होमे चान्तर्जले योगे स्वाध्याये याजने तथेति।

सर्वानुक्रमसूत्रे (अ.१) कात्यायनोऽपि—"ऋषिदैवतच्छन्दांसि अनुक्रमिष्याम" इति प्रकृत्याह—"एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति अथान्तरा श्वगर्तं वा ऽऽपद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति, अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्, अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति, जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते" इति। अत्र ऋषिश्छन्दो देवता इत्येवं क्रमः स्वीकार्यः।

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥

इति वाक्ये वेदितव्यमितिविधिस्थानीयतव्यप्रत्ययश्रवणात्। अत्र हि ऋष्यादिज्ञानार्थः कर्तव्यतया विधीयते। तस्मिंश्च विधीयमाने पाठानुपूर्व्या अवगम्यमानः क्रमोऽपि तदाश्रितो विधीयते। क्रमान्तरपरिग्रहे विनिगमनाविरहात्। यत्तु कात्यायनेन "ऋषिदैवतच्छन्दांसि" इतिसर्वानुक्रमसूत्रे क्रम उक्तः, स न ज्ञानार्थत्वेन, किन्तु अनुक्रमिष्याम इत्युक्तेरनुक्रमार्थत्वेन। वेदितव्यमितिवत् अत्र ऋष्यादिज्ञानकर्तव्यताबोधकसाक्षाद्विध्यश्रवणात्। क्लृप्तकल्प्ययोर्मध्ये क्लृप्तविधेर्बलीयस्त्वाच्च। अत एव योगियाज्ञवल्क्येनापि "प्रजापतेर्मुखोत्पन्नाः" इत्यादिना प्रणवव्याहृत्यादिमन्त्राणाम् ऋषिच्छन्दोदेवता इति क्रमेणैव आ-

र्पादिकमभिहितम् । गृह्यगङ्गाधरपद्धतौ अपीत्थमेवोक्तम् । आचारादर्शे योगियाज्ञवल्क्यः सन्ध्यामधिकृत्य अघमर्षणसूक्तस्य आपोहिष्ठेति सूक्तस्य द्रुपदायाश्च ऋष्यादिकमभिधायाह—

एवं ज्ञात्वा तु मन्त्राणां प्रयोगं वै द्विजोत्तमः ।
सन्ध्यामुपासयेच्चद्वत् यथावत्तन्निबोधतेति ॥

अत्र च सन्ध्याग्रहणं विहितऋष्यादिज्ञानककर्ममात्रोपलक्षणम् । पूर्वोक्तकात्यायनयोगियाज्ञवल्क्यादिवचनैकवाक्यतया तथैवावगमात् ।

अत्र केचिदाहुः—सर्वेषामेव मन्त्राणाम् आदौ ऋष्यादीनि स्मृत्वा ततः सन्ध्याप्रयोगः इति । तन्नातीवयुक्तम् । एवं हि अङ्गभूतेन ऋष्यादिस्मरणेन सह सर्वेषां मन्त्राणामानन्तर्यं न्यायागतं बाध्येत । ओंकारस्य सप्तव्याहृतीनां गायत्र्याः शिरसश्च ऋष्यादीनि स्थलान्तरे योगियाज्ञवल्क्येनाभिहितानीति कथं न तत्पूर्वभावः । किञ्च अघमर्षणसूक्तस्य ऋष्यादेः प्रथमम् अभिधानात् तदेव प्रथमं स्यात् । तस्मात् ज्ञात्वेति प्रयोगात् बहिर्ज्ञानं प्रयोगकालसौकर्यार्थम् । अथवा ज्ञात्वोपासयेदिति प्रत्येकमभिसम्बध्यते । तेन तत्तन्मन्त्रस्य ऋष्यादिकं तत्तन्मन्त्रस्य प्रयोगात्प्राक् ज्ञातव्यमित्यर्थः सिद्ध्यति । अयमेव पक्षो बहुसंमतः । प्रणवव्याहृतिगायत्रीशिरसां च मिलितानामेव प्राणायामे विनियोगात् तेषां च मिलितानामेव ऋष्यादिकं स्मृत्वा प्राणायामः कार्यः । अन्यत्रापि यत्रैकस्यां क्रियायाम् अनेकमन्त्राणां विनियोगः तत्राप्येवमेव । यथा रुद्रजपरुद्राभिषेकादौ । एवं पञ्चविधं योगमितिब्राह्मणान्तर्गतेन पञ्चविधत्वं प्रकारा-

"आर्षं छन्दश्च दैवत्यं विनियोगस्तथैवच"

इत्यादिनानास्थानेषु चतुर्णामेवाभिधानात्। "एवं ज्ञात्वा तु मन्त्राणाम्" इति योगियाज्ञवल्क्येन "अथ विज्ञायैतानि योऽधीते" इत्यादिना कात्यायनेन च ऋष्यादिज्ञानस्यैव अङ्गत्वाभिधानात् अर्थज्ञानवत् तज्ज्ञानमेवाङ्गं न तु ऋष्याद्युच्चारणम्। मानाभावात्। असम्बद्धव्यवायापत्तेश्चेत्युक्तमाचारादर्शे आचारचिन्तामणौ च। प्रयोगकालिकार्थस्मरणस्य अध्ययनजन्यबोधाहितसंस्काराधीनत्वात् प्रयोगकाले मन्त्रोच्चारणे कारणविशेषमनपेक्ष्यैव मन्त्रार्थस्मरणसंभवाद्युक्ता तत्रान्यानपेक्षता, ऋष्यादिस्मरणस्य तु मन्त्रोच्चारणमात्रेण प्रयोगकालेऽसंभवात् ऋष्यादिबोधकं वाक्यमेव तत्स्मारकत्वेनाश्रयणीयम्। एवं च तदभिव्यक्त्यर्थमुच्चारणमावश्यकमेव। बहूनां संमदायोऽप्येवमेवेति परे। इदं च ऋष्यादिज्ञानं यत्र मन्त्रे प्रामाणिकं ततः प्राक् प्रयोगे एव कर्तव्यम्।

एतच्च ऋष्यादिज्ञानं वैकल्पिकम्। एतान्यविदित्वेत्युपक्रम्य तस्य ब्रह्म निर्वीर्यं यातयामं भवतीत्युक्तत्वात्। अथ विज्ञायैतानि योऽधीते तस्य वीर्यवदित्युक्तेश्च। सर्वमेतच्छन्दो दैवतमार्षं च विज्ञाय यत्किञ्चित् जपहोमादि करोति तस्य फलमश्नुते इत्युक्तेश्चेति दर्शपूर्णमासपद्धतौ तट्टीकायां च वैद्यनाथमिश्राः। प्राच्यग्रन्थे तु अध्ययनाध्यापनान्तर्जलजपेषु नियमो ऽन्यत्र पुरुषार्थता न कर्मवैगुण्यमिति।

क्वचिदस्यापवादः कृष्णभट्टीये,

न च स्मरेदृर्षिं छन्दः श्राद्धे वैतानिके मखे इति।

११। नारायणनतिश्चाधिकारिविशेषणम्।

सर्वमङ्गलमाङ्गल्यं वरेण्यं वरदं विभुम्।

नारायणं नमस्कृत्य सर्वकर्माणि कारयेत् ॥

इति वामनपुराणोक्तेः । नारायणग्रहणं गणेशोमामहेश्वराद्युपलक्षणम् । कारयेदिति स्वार्थे णिच् ।

१२। कृतसंकल्पत्वमप्यधिकारितावच्छेदकम् ।

संकल्प्य विधिवत्कुर्यात् स्नानदानव्रतादिकम् ।
इति मार्कण्डेयपुराणात् ।
प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत् ।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलमश्नुते ॥ इति दक्षोक्तेः ।
सङ्कल्पेन विना विप्र यत्किञ्चित्कुरुते नरः ।
फलं चास्याल्पकं तस्य धर्मस्यार्धक्षयो भवेत् ॥

इति भविष्योक्तेश्च । सङ्कल्पशब्देन अमुकफलार्थमिदं कर्म करिष्ये इत्याकारक मानसं कर्मोच्यते । तदुक्तं भट्टाचार्यैः, सङ्कल्पः कर्म मानसमिति । तत्र विशेषमाह देवलः-

मासपक्षतिथीनां च निमित्तानां च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् इति ॥

असौ च सङ्कल्पः केवलमदृष्टार्थ एव, नानुसंधानरूपदृष्टफलार्थः । अनुसन्धानोत्तरमेव तस्य कर्तव्यत्वेन तस्य तत्फलत्वानुपपत्तेः।मासपक्षतिथ्यादयः प्रयोगाधिकरणभूताः सर्वेऽपि। यत्तु अनेकदिनसाध्ये कर्मणि आद्यदिने सङ्कल्पकालिकीं तिथिमधिकरणत्वेनोल्लिख्य ज्योतिष्टोमेनाहं यक्ष्ये इत्यादिवाक्यं प्रयुञ्जते यायजूकाः, तत्तु पदानामन्वयायोगात् नादर्तव्यमिति शान्तिमयूखे नीलकण्ठभट्टाः ।

यदपि केचित्-तेन रूपेण प्रयोगाद्बनया विहितानामेव मा-

सादीनामुल्लेख इति। तदपि न। अविहितमासादिके आधानादौ मासपक्षतिथीनां ज्योतिष्टोमे एकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसङ्गात्। अतो ज्योतिष्टोमादौ एकादश्यादिपूर्णिमान्तानामुल्लेखः। एवमन्यत्रापीति दिक्।

अत्र केचिदाहुः–ग्रहणादिरूपनिमित्तस्य मासपक्षतिथीनां प्रयागादेश्च देशविशेषमात्रस्योल्लेखः कार्यो न तु व्यापकानामुत्तरायणमध्यदेशादीनामिति।

अपरेत्वाहुः–

प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च।

इति मात्स्यवाक्यात् यथा प्रयागादितीर्थविशेषस्याङ्गत्वम्, एवम्–

आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः—

इत्यादिवाक्येन आर्यावर्तादिसामान्यस्याप्यङ्गत्वावगमात्, निमित्तानां च सर्वेषाः इतिसर्वपदस्वारस्याच्च सर्वनिमित्तानामुल्लेखः कार्यः। नचानेनैव सिद्धे मासपक्षतिथीनामित्यनर्थकमिति वाच्यम्। विधिस्पृष्टानां कार्तिकमाघादीनामुल्लेखसिद्धावपि तदस्पृष्टसाधारणमासाद्युल्लेखप्राप्त्यर्थत्वात्। तेन व्यापकानां व्याप्यानां च सर्वेषामुल्लेखः कार्य इति। संकल्पे च मुख्यचान्द्रमासातिरिक्तगौणमासप्रयुक्तकर्मस्वपि विन्ध्यदक्षिणे शुक्लादेः तदुत्तरे कृष्णादेश्चान्द्रमासस्यैवोल्लेखो न तु गौणानामित्युक्तं कालतत्त्वविवेचने। कर्माङ्गतिथ्यन्यातिथेः संकल्पकालसत्त्वे तु सङ्कल्पकालवर्तमानतिथिमेव कर्मतिथियुक्तत्वेन रूपेणाधिकरणतयोल्लिख्य सङ्कल्पः कार्यः। सङ्कल्पवाक्यं तु हेमाद्रौ श्राद्धखण्डे प्रदर्शितम्॥

ॐ इह पृथिव्यां जम्बूद्वीपे भारतवर्षे कुमारिकाखण्डे प्रजा-

पतिक्षेत्रे विशेषक्षेत्रे चेत् अमुकक्षेत्रे अमुकस्मिन् प्रदेशे इत्यादि-देशं समनुकीर्त्य ब्रह्मणो द्वितीयपरार्धे श्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमस्य कलियुगस्य प्रथमचरणे इत्यभिधाय वर्तमानसंवत्सरायनर्तुमासपक्षतिथिवारनक्षत्रयोगकरणरौद्रादिकालनामानि सप्तम्यन्तानि कीर्तयेत् । स्मार्तानि रौद्रादिकालनामानि तु– कालमाधवे पुराणे दर्शितानि ततएव ज्ञेयानि। कुमारिकाखण्डस्यैव वर्णधर्मव्यवस्थाधिकरणत्वं सिद्धान्तशिरोमणौ–

ऐन्द्रं कशेरुशकलं किल ताम्रपर्णं–
*मन्यद् गभस्तिमदतश्च कुमारिकाख्यम् ।*
नागं च सौम्यमिह वारुणमन्त्यखण्डं
गान्धर्वसंज्ञमिति भारतवर्षमध्ये ॥
वर्णव्यवस्थितिरिहैव कुमारिकाख्ये
शेषेषु चान्त्यजजना निवसन्ति सर्वे । इति ।

एवं देशकालाद्यधिकरणतया समनुकीर्त्य अमुकफ-ममुककर्म करिष्ये इति संकल्पयेत् । तत्र कैश्चित्- मातृपूजादीनां प्रयोगबहिर्भूताङ्गत्वं वदद्भिः दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयया यक्ष्ये इति वाजपेयेन यक्ष्यमाणो बृहस्पतिसवेन यक्ष्ये इतिसंकल्पवत् करिष्यमाणामुककर्माङ्गत्वेन मातृपूजादीनि करिष्ये इत्येवं मातृपूजादीनां संकल्प उक्तः ।

अन्यैस्तु प्रधानप्रयोगान्तःपातिगुणत्वं वदद्भिः अमुककर्म करिष्ये तदङ्गत्वेन मातृपूजादीनि करिष्ये इत्येवं प्रधानसंकल्पोत्तरमेव एषां संकल्प उक्तः ।

छन्दोगपरिशिष्टे कात्यायनः–
यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।

दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥
यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजितेति ॥

ऐन्द्री– पूर्वा । सौम्या– उदीची । अपराजिता–ऐशानी ।

तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठतेति ॥ प्रह्वो– नम्रः ।

श्रौतसूत्रे प्रथमाध्यायान्ते कात्यायनः– रौद्रं राक्षसमासुरम् आभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदप इति । अत्र चशब्दात् तद्दैवत्यं कर्म कृत्वेति कर्कोपाध्यायादयः सर्वे कल्पसूत्रभाष्यकारा व्याख्यातवन्तः । तद्दैवत्यं रुद्रादिदैवत्यम् । छन्दोगपरिशिष्टे च कात्यायनः–

पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥
मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे ।
निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥

अनुद्रवणमुच्चारणम् । आत्मालम्भो हृदयस्पर्शः।अवेक्षणमपि तस्यैव । अत्र मन्त्रोच्चारणात्मालम्भावेक्षणानि यज्ञादौ विहितान्येव ग्राह्याणि न लौकिकानि । अन्तरङ्गत्वेन तन्निषेधस्यैवोचितत्वात् । प्रहासे—महति हासे न स्मितमात्रे । मार्जारस्पर्शो मार्जारकृत एव । स्वयंकृते तु स्नानस्योक्तत्वात् इत्युक्तमाचारादर्शे । आक्रुष्टे– परुषभाषणे। क्रोधसंभवे–मानसिककोपे । अपः स्पृशेदित्यनेन अपां स्पर्शनमेव विवक्षितं न त्वाचमनमिति भर्तृयज्ञपितृभूतिकर्कोपाध्या-

यथा वासुदेवगर्गश्रीअनन्तदेवयाज्ञिकादयः सर्वे कल्पसूत्रभाष्यकारा व्याख्यातवन्तः संप्रदायादयः पद्धतिकाराश्च । अपां स्पर्शनमाचमनमिति हेमाद्रिणा व्याख्यातम् । अत्र सर्वेषु वाक्येषु अपः स्पृशेदिति पाठात् अपः स्पर्शो जलस्पर्श एव याज्ञिकसंप्रदायाविरुद्धः । येषु तूपस्पृशेदिति पाठः तत्र तूपस्पर्शनमाचमनमित्युक्तमाचारादर्शे । आपस्तम्बः, स्वप्ने क्षवथौ सिङ्घाणिकाऽश्र्वालम्भे लोहितस्य केशानाम् अग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वा ऽमेध्यंचोपस्पृश्य अप्रयतं च मनुष्यं नीवीं च परिधाय अप उपस्पृशेदिति । क्षवथुः -क्षुतम् । सिङ्घाणिका नासामलम् । अश्रु- नेत्रजलम् । उपस्पर्शोऽत्राचमनम् ।

हेमाद्रौ मार्कण्डेयपुराणे-

क्षुतादौ सम्यगाचामेत् स्पृशेद्वाऽऽर्द्रतृणादिकम् ।
कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य वै ॥
यथाविभवतो ह्येतत् पूर्वालाभे ततः परम् ।
न विद्यमाने पूर्वस्मिन् उत्तरप्राप्तिरिष्यते इति ॥

तत्रैव वसिष्ठः—

क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ।
पञ्चस्वेतेषु चाचामेत् श्रोत्रं वा दक्षिणं स्पृशेत् ॥ इति ।

पराशरः—

क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथाऽनृते ।
पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥
प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥
आदित्यो वरुणः सोमो वह्निर्वायुस्तथैवच ।

विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः॥ इति।

**मदनरत्ने बौधायनः—**

कर्मयुक्तो नरो नाभेरधःस्पर्शं विवर्जयेदिति।

**स्कन्दपुराणे—**

पाखण्डिनश्च पतिता ये च वै नास्तिका द्विजाः।
पुण्यकर्मणि तेषां वै संनिधिर्नेष्यते क्वचित्॥ इति।

**छन्दोगपरिशिष्टे—**

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः।
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्॥
यन्नाम्नातं स्वशाखायां परोक्तमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवदिति॥

यथा छन्दोगादिभिः स्वशाखायामनुक्तमपि यजुर्वेदशाखासु विहितमग्निहोत्रादिकर्म अविरुद्धत्वादनुष्ठीयते, यद्वा स्वशाखोक्तस्याकाङ्क्षापूरकत्वेन स्वरूपतो वा यदविरोधि, यथा मनुनोक्तस्य—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम्।
अप्सु प्रास्य विनष्टानि गृहीतान्यानि मन्त्रवत्॥

इत्यस्य मन्त्राकाङ्क्षापूरकगृह्यान्तरे मन्त्राभिधानं तद् धर्मज्ञैः कर्तव्यमेव। पौराणिकादि तु साधारणत्वात् न पारक्यमिति तदपि स्वशाखोक्तादधिकं मनुष्ठेयमेव। यथा देवताभ्य इतिमन्त्रजपादि। यत्तु गृह्यपरिशिष्टे—

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदिति,

तत् साधारणानां परोक्तानां च नावश्यकमनुष्ठानमित्येव-

न्परम् । न तु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति । अन्यथा गृह्यस्थानुक्तानां साधारणानाम् उपदेशानर्थक्यापत्तेः । शाखान्तराधिकरणविरोधाच्च । ( पू. मी. २ । ४ । २ )

तत्रैव—

प्रवृत्तमन्यथा कुर्यात् यदि मोहात्कथञ्चन ।
यतस्तदन्यथाभूतं तत एव समापयेदिति ॥

प्रवृत्तं–मारब्धं कर्म । अन्यथा– क्रमान्यत्वेन । कुर्यात्– तत्र यस्मात्पदार्थादारभ्य यत्कर्म अन्यथा जातं तत एवारभ्य पुनर्यथोक्तप्रकारेण कुर्यात् । यथा गन्धोत्सर्गगन्धदानयोः क्रमान्यत्वेनानुष्ठाने अन्यथाकरणकाले ज्ञातयोः तत एवारभ्य पुनरनुष्ठानम् । तत्रैव,

समाप्ते यदि जानीयात् मयैतदयथाकृतम् ।
तावदेव पुनः कुर्यात् नावृत्तिः सर्वकर्मणः इति ॥

समाप्ते अन्यथाकृते अन्यथाकरणज्ञाने सति यत्पदार्थान्यथाकरणं जातं तमेव यथोक्तप्रकारेण पुनः कुर्यात् न तत आरभ्य सर्वकर्मकाण्डम् । एतच्च पुनरनुष्ठानम् अविलम्बे सुकरत्वे च कर्तव्ये । यत्र तु विलम्बो दुष्करत्वं वा तत्र विष्णुस्मरणमेव नावृत्तिः । यथा कृतोत्सर्गस्यान्नस्य ब्राह्मणैर्भोजने पुनरन्नान्तरोपादानेनोत्सर्गे । अन्यथा ब्राह्मणोपरोधसहस्त्रबाधापत्ते इत्युक्तं नारायणवृत्तौ । तत्रैव—

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्नैच तत्क्रियेति ॥

यत्र प्रधानस्य कर्मणो दानादेरकरणम् उत्सर्गश्च तदङ्गभूतः कृतः तत्र पुनरङ्गानुष्ठानसहितं कर्तव्यम् । अङ्गमात्रस्य तूत्सर्गस्या-

करणे कृतस्य प्रधानस्य नावृत्तिः । नापि तावदङ्गमात्रकरणम् । किन्तु तत्समाधानार्थम्—

अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

इति याज्ञवल्क्योक्तं प्रायश्चित्तमनुष्ठेयम् । एवं समाप्ते प्रयोगे अकरणज्ञानेऽपि एतदेव समाधानमिति ।

अन्ये तु तदङ्गस्य साङ्गप्रधानाङ्गस्य उपवीतित्वादेः अकरणे न साङ्गप्रधानस्यावृत्तिः, नाप्युपवीतित्वादेः करणं, किन्तु तत्समाधानार्थं विष्णुस्मरणमेव प्रायश्चित्तमित्याहुः ॥

अथ होमेतिकर्तव्यता ।

अथातो गृह्यस्थालीपाकानां कर्म ॥१॥ परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्यग्निकुर्यात् ॥ २ ॥ स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ॥ ३ ॥ आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववद् उपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् ॥ ४ ॥ एष एव विधिर्यत्रक्वचिद्धोमः ॥ ५ ॥

अथातो गृह्यस्थालीपाकानां कर्म ॥ १ ॥

अथ श्रौतकर्मविधानानन्तरं यतः श्रौतानि कर्माणि विहितानि स्मार्तानि तु विधेयानि अतो हेतोः गृह्ये आवसथ्येऽग्नौ ये स्थालीपाकास्तेषां कर्म अनुष्ठानं वक्ष्यते इति शेषः । तत्रादौ विवाहादिसर्वकर्मणां प्रायः होमयुक्तत्वात् होमेतिकर्तव्यता प्रथमकण्डिकयोच्यते । तत्र विवाहादिसर्वकर्मसु यजमान एव

कर्ता नान्य ऋत्विक्। श्रौते अध्वर्योरिव स्मार्ते सर्ववेदसाधारणे कर्मणि तस्यानुक्तत्वात्। ग्रहयज्ञादौ तु वरणाम्नानादस्ति ऋत्विजां कर्तृत्वमिति वक्ष्यते। अथ यजमानः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तः कर्मस्थानमागत्य वारणादियज्ञियवृक्षोद्भवासने प्रागग्रानुदगग्रान्वा त्रीन्कुशान्दत्वा प्राङ्मुख उपविश्य प्राग्यतः शुद्धायां भूमौ सप्तविंशत्यङ्गुलमण्डलं परिलिख्य, तत्र—

परिसमुह्य ॥ २ ॥

त्रिभिर्दर्भैः पांसूनपसार्य। परिसमूहनं च सामर्थ्यात्पांस्वपसारणयोग्यैर्दर्भादिभिर्यावत्पांस्वपसारणं भवति तावत्कार्यम्। "प्राञ्च्युदञ्चा"(१।७) इति कात्यायनपरिभाषातः प्राक्संस्थमुदक्संस्थं वा कार्यम्। एवमुपलेपनादिकमपि। अग्निगृह्ये—

कृमिकीटपतङ्गाद्या भ्रमन्ति वसुधातले।
तेषां संरक्षणार्थाय कुर्यात्परिसमूहनम् ॥

उपलिप्य ॥ ३ ॥

उपलेपनं भूमेरुद्वर्तनम्। तच्च गोमयेन। स्थण्डिलं गोमयेनोपलिप्य मण्डलं चतुरश्रं वा, अग्निं निर्मथ्याभिमुखं प्रणयेत् इति मैत्रायणीयगृह्यात्।

पुरा इन्द्रेण वज्रेण हतो वृत्रो महासुरः।
मेदसा व्यापिता भूमिस्तदर्थमुपलेपनम् ॥

इदं च वारत्रयं भवतीति हरिहरः।

उल्लिख्य ॥ ४ ॥

उल्लेखनं रेखाकरणम्। तच्च स्फ्येन, तदभावे स्रुवेण।
खादिरं स्फ्यं प्रकल्प्याथ तिस्रो रेखाश्च पञ्च वा।

स्थण्डिलोल्लेखनं कुर्यात्स्रुवेण च कुशेन च ॥

इति वासनाभाष्यधृतवचनात् । चतुर्थपादे चद्वयं वाऽर्थे । रेखाश्च उदक्संस्थाः प्राक्संस्था वा स्थण्डिलायामपरिमिताः प्रागग्रा उदगग्रा वा तिस्रः पञ्च वा कार्याः ।

तिस्रः पञ्चाथवा रेखा न भिद्यन्ते कदाचन ।
रेखा येन विभिद्यन्ते तमाहुर्ब्रह्मघातकम् ॥

इति वचनात् ।

उदृघृत्य ॥ ५ ॥

उद्धरणं च रेखातः पांसूनामुद्वपनम् । तच्च उल्लेखनक्रमेण अनामिकाङ्गुष्ठेन कर्तव्यमिति सांप्रदायिकाः ॥

विचरन्ति पिशाचा ये आकाशस्थाः सुखासनाः ।
तेभ्यः संरक्षणार्थाय उद्धृतं चैव कारयेत् ॥ णिच् स्वार्थे ।

अभ्युक्ष्य ॥ ६ ॥

अभ्युक्षणं सेचनम् । तच्चाद्भिः ।

गङ्गादिसर्वतीर्थेषु समुद्रेषु सरित्सु च ।
सर्वतश्चाप आदाय अभ्युक्षेच्च पुनः पुनः ॥

इति वचनात् । तच्च न्युब्जेन हस्तेन कार्यम् ।

उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ।
तिरश्चाऽवोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम् ॥

इति वर्धमानधृतपरिशिष्टवचनात् । दैवे परिसमूहनादि त्रिस्त्रिः पित्र्ये सकृदिति कर्कः । तथाचोक्तं वायुपुराणे—

कण्डनं पेषणं चैव तथैवोल्लेखनक्रिया ।
सकृदेव पितॄणां स्याद्देवतानां त्रिरुच्यते इति ॥

परिसमूहनादयः पञ्चापि भूसंस्कारार्थां इति केचित् । अग्न्यर्था इति परे । तस्माद्यत्र यत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्याः ।

अग्निमुपसमाधाय ॥ ७ ॥

कर्मसाधनभूतमग्निमात्माभिमुखं स्थापयेत् । अभिमुखमग्निं प्रणयन्तीति गोभिलसूत्रात् । स्थापनं च ताम्रादिना ।

पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे ।
अग्निप्रणयनं कुर्यात् शरावे वाऽथ नूतने ॥

इति मेरुतन्त्रवचनात् ।

दक्षिणतो ब्रह्मासनमास्तीर्य ॥ ८ ॥

उपस्थितत्वात्स्थापितस्याग्नेर्दक्षिणतो दक्षिणस्यां दिशि ब्रह्मण आसनं वारणादियज्ञियकाष्ठनिर्मितं पीठम् आस्तीर्य कुशैः स्तीर्त्वा तत्र वरणाभरणाभ्यां पूर्वसंपादितं कर्मसु तत्त्वज्ञं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मितम् अग्नेरुत्तरतः प्राङ्मुख आसीनः अनुलेपन-पुष्पमालावस्त्रालंकारादिभिः संपूज्य "अमुककर्माहं करिष्ये तत्र अमुकगोत्र अमुकशर्मन् त्वं ब्रह्मा भव" इति हृत्वा "भवामि" इत्युक्तवन्तमुपवेश्य । ब्रह्मवरणात्पूर्वमाचार्यवरणं कर्तव्यम् ।

यजमानः शुचिः स्नातः श्रद्धायुक्तो जितेन्द्रियः ।
पादशौचार्घवस्त्राद्यैराचार्यादीन्समर्चयेत् ॥

इति वासिष्ठवचनेन वरणे आचार्यपूर्वकत्वप्रतीतेः । यत्र स्वयमेव कर्म करोति तत्र नाचार्यवरणस्यापेक्षेति बोध्यम् ॥

ब्रह्मासनइतिव्यपदेशानुपपत्त्या तत्र ब्रह्मोपवेशनम् । हिर-ण्यकेशिगृह्ये, "ब्रह्मा यज्ञोपवीतं कृत्वा अप आचम्य अ-परेणाग्निं दक्षिणाऽतिक्रम्य ब्रह्मासनात्तृणं निरस्य अप उपस्पृश्य अग्निमभिमुख उपविशति" इति सर्वसाधारणेतिकर्तव्यतासु स्पष्टं ब्रह्मोपवेशनस्योक्तत्वात् । अग्निगृह्ये—

ब्रह्माचार्यप्रणीतानाम् आसनं च त्रिभिः कुशैः ।

१ अस्य उपवेशयेत्यन्वयः ।

न द्वाभ्यां नैकदर्भेण ऋषयो बहवो विदुः ॥
उत्तरे सर्वपात्राणि उत्तरे सर्वदेवताः ।
उत्तरेऽपां प्रणयनं किमर्थं ब्रह्म दक्षिणे ॥
यमो वैवस्वतो राजा वसते दक्षिणा दिशि ।
तस्मात् संरक्षणार्थाय ब्रह्मा तिष्ठति दक्षिणे ॥

प्रत्यक्षब्रह्मणोऽभावे पञ्चाशत्कुशैर्ब्रह्मा कर्तव्य इत्यत्र प्रमाणमुक्तं विधानपारिजाते छन्दोगपरिशिष्टे–

पञ्चाशत्कुशको ब्रह्मा तदर्धेन तु विष्टरः ।
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ॥
दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः । इति ।

प्रणीय ॥ ९ ॥

अप इति शेषः । अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयं कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुरङ्गुलखातं चमसं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थोदकेन पूरयित्वा दर्भैराच्छाद्य ब्रह्ममुखमवलोक्य पश्चिमासने निधाय आलभ्य

---

१. दर्शपूर्णमासयोः गार्हपत्यस्योत्तरतः उदपात्रं निधाय भूतकृत्स्वेति मन्त्रेण आलभ्य ब्रह्मणोऽनुमतिं गृहीत्वा आहवनीयस्योत्तरतः कस्त्वेति मन्त्रेण निधानं दृश्यते। स्मार्तकर्मणि तु "एष विधिरेव न तु मन्त्रा अत्र प्रयुज्यन्ते" इत्यर्थकेन "एष एव विधिः" इति सूत्रशेषेण मन्त्रप्रयोगनिषेधात् अप्प्रणयनादिषु तत्रत्येतिकर्तव्यताऽभ्यनुज्ञायते । तथाच तत्र गार्हपत्यस्य आहवनीयापेक्षया पश्चिमदिक्स्थत्वात् आहवनीयस्य च तदपेक्षया पूर्वदिक्स्थत्वात् उदपात्रस्य पश्चिमासननिधानपूर्वकस्य पूर्वासननिधानस्योपलब्धेः स्मार्तकर्मण्यपि पूर्वपश्चिमासनद्वयकल्पनापूर्वकं पश्चिमासने निधायालभ्य पूर्वासने निदध्यादिति लभ्यते । ब्रह्ममुखावलोकनमपि तत्रत्योम् प्रणयेत्याकारकानुमतिग्रहणस्थानीयम् । दर्भैराच्छादनं यद्यपि

पूर्वासने स्थापयित्वा ।

मणीतापात्रलक्षणं यज्ञपार्श्वे—

चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ।
त्र्यङ्गुलं तु भवेत्खातं विस्तारे चतुरङ्गुलम् ॥
विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः ।
अन्येभ्यो वापि कार्याः स्युस्तेषां दण्डेषु लक्षणम् ॥

चतुरङ्गुलं भवेत् खातमिति हरिहरसंमतः पाठः ।

मध्यमातर्जन्यङ्गुष्ठाग्रे मणीतापूरणं भवेत् ।
नो भूमौ नैव हस्तेच न काष्ठोपरिसंस्थिते ॥
उदकं पूरयेत्तत्र आकाशवति संस्थिते ।

आकाशवल्लक्षणमग्निगृह्ये—

मध्यमा तर्जनीयुक्ता अङ्गुष्ठेन समन्विता ।
आकाशसहिताऽऽख्याता मणीतापूरणं भवेत् ॥

परिस्तीर्य ॥ १० ॥

परिस्तरणं च कुशैः अग्नेः समन्तात् आच्छादनम् । उक्तं च कातीयश्रौतसूत्रे—तृणैरग्निं परिस्तीर्य पुरस्तात्प्रथममिति (२।३)।तृणशब्देन बर्हिरुच्यते।बर्हिःशब्देन कुशा एवोच्यन्ते। कौशं बर्हिरितिकात्यायनेनैव परिभाषणात्(१।३)।तच"आवृत्तिसामन्तेषु प्रदक्षिणम्" इतिपरिभाषासूत्र(१।७)बोधितप्रादक्षिण्यानुग्रहाय ईशानकोणादारभ्य उत्तरपर्यन्तं प्रागग्रैरुदगग्रैश्च कुशैः

कातीयश्रौतसूत्रे नोपलभ्यते तथापि "उत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति" इति हिरण्यकेशिगृह्ये उक्तेः कातीयदर्शपूर्णमासपद्धतिकारैः देवयाज्ञिकादिभिः पात्रस्यस्य दर्भैराच्छादनस्य स्वीकृततया च स्मार्ते कर्मण्यपि तदनुष्ठेयमेव। एतत्सर्वमभिप्रेत्य प्रणीयेत्यस्य व्याख्यानम् अग्नेरुत्तरत इत्यारभ्य स्थापयित्वेत्यन्तं कृतम् इति बोध्यम् ।

कर्तव्यम्। पुरस्तात्पश्चाच्चोदगग्रैः, दक्षिणत उत्तरतश्च प्रागग्रैः। तदाहापस्तम्बः—उदगग्रैः प्रागग्रैश्च दर्भैरग्निंपरिस्तृणाति, उदगग्राः पश्चात्पुरस्ताच्चेति। स्मृत्यन्तरे–

यज्ञवास्तुनि मुष्टौ च स्तम्बे दर्भवटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च इति॥
अग्निगृह्ये–वह्नितस्तु परित्यज्य द्वादशाङ्गुलतो बहिः।
परिस्तरणदर्भास्तु षोडश द्वादशापिवा इति॥

अर्थवदासाद्य॥ ११॥

यावद्भिः पदार्थैरर्थः प्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राक्संस्थानुदगग्रान् अग्नेरुत्तरतः पश्चाद्वा आसाद्य। आसादनं च विनियोगक्रमेण।

छन्दोगपरिशिष्टे–प्राक्प्राक्प्रमुदगग्रेरुदगग्रं समीपतः।
तत्तथाऽऽसादयेत्पात्रं यद्यथा विनियुज्यते इति॥

विशिष्टो नियोगो विनियोगः मुख्यप्रयोग इति यावत्। तथाच यत्कार्यार्थं यत्पात्रमुपादीयते तत्कार्यक्रमेण तस्यासादनम्।

कारिकायां–पश्चादुत्तरतो वा स्यात्पात्रासादनमग्नितः।
उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत्॥
प्राग्बिलान्युदगग्राणि प्राक्संस्थान्यग्नितो यदि।
प्रागग्रोदग्बिलान्यग्नेरुदक्संस्थानि चैव हि इति॥
अग्निगृह्ये, आसादयति पात्राणि प्रदेशे वरके बुधः।
अङ्गुलित्रिप्रमाणेन पात्रात्पात्रान्तरस्थितिः॥ इति।
दर्भास्त्रयः पवित्रे द्वे प्रोक्षणीपात्रमुत्तमम्।
आज्यस्थाली चरुस्थाली संमार्गोपयमौ कुशौ॥
पालाशयः समिधस्तिस्रः स्रुव आज्यं गवेधुकाः।

तण्डुलाः पूर्णपात्रं च दक्षिणा च वरोऽथवा इति कारिकायाम् ।

विपुलस्थानासम्भवे तु-

प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः ।

इति कात्यायनपरिशिष्टाद्यथा कार्यमिति देवयाज्ञिकाः।

प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलमितखातं कमलमुकुलाकृति भवतीति हरिहरादयः । अन्यमते—

वैकङ्कतं पाणिमात्रं प्रोक्षणीपात्रमुच्यते ।

हंसमुखमसेकं च त्वग्बिलं चतुरङ्गुलम् ॥

आज्यस्थाली प्रकर्तव्या तैजसद्रव्यसम्भवा ।

महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च—

इति छन्दोगपरिशिष्टे कात्यायनः । तत्प्रमाणं याज्ञिकम् ।

तिर्यगूर्ध्वं समिन्मात्री दृढाऽनतिबृहन्मुखी ।

मृन्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते ॥

कुलालचक्रनिष्पन्नं मृन्मयं आसुरं भवेत् ।

तदेव हस्तघटितं स्थाल्यादि खलु दैविकम् ॥

औदुम्बरं ताम्रम् । समिल्लक्षणम्—

ब्रह्मपुराणे—पलाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।

वेतसौदुम्बरौ बिल्वश्चन्दनं सरलस्तथा ॥

शालश्च देवदारुश्च खादिरश्चेति याज्ञिकाः ।

मरीचिः—विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।

दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥

गृह्यसङ्ग्रहे—अग्रप्राः समिधो देयास्ताश्च काम्येष्वपाटिताः।

शान्त्यर्थेषु सवल्काऽर्द्रा विपरीता जिघांसतः ॥

परिशिष्टान्तरे—समित्पवित्रं वेदश्च त्रयं प्रादेशसंमितम् ।

इध्मश्च द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः॥ स्रुवलक्षणं—
कात्यायनः—अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तचतुष्करइति।
स च खादिरः। खादिरः स्रुवः इति कात्यायनसूत्रा-
त् ( १।३ )। स्फ्यश्चेत्युत्तरसूत्रात् स्फ्योऽपि खादिरः। स च
"अस्याकृतिः" इति सूत्रात् ( १।३ ) खड्गाकृतिः। पुरश्चर्या-
र्णवे वायवीयसंहितायां—

स्रुवस्रुचौ तैजसौ ग्राह्यौ न कांस्यायससैसकौ।
यज्ञदारुमयौ वाऽपि तान्त्रिकौ शिल्पिसंमतौ॥

तत्रैव वसिष्ठसंहितायां—

पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ मतौ।
निदध्याद्वाऽश्वत्थपत्रे संक्षिप्ते होमकर्मणि॥

आज्यं च सति सम्भवे गव्यम्।
तदभावे माहिषाद्यपि। नित्ये सामान्यतः प्रतिनिधिः
स्यात् ( १।४ ) इति सूत्रात्। मण्डनश्च—

घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम्।
आजं वा तदभावे तु साक्षात्तैलमपीष्यते॥
तैलाभावे ग्रहीतव्यं तैलं जर्तिलसम्भवम्।
तदभावेऽतसीस्नेहः कौसुम्भः सर्षपोद्भवः॥
वृक्षस्नेहोऽथवा ग्राह्यः पूर्वालाभे परः परः।
तदभावे यवव्रीहिश्यामाकान्यतमोद्भवः॥ इति।

प्रतिनिध्युपादानेऽपि मुख्यशब्देनैव तदुपादानम्।

घृतं वा यदि वा तैलं पयो दधि च यावकम्।
संस्कारयोगादेतेषु आज्यशब्दो विधीयते॥

इति यज्ञपार्श्वपरिशिष्टवचनात्। शब्देऽविप्रतिपत्तिरिति सूत्रा-
(१।४)। चरुश्चेद् व्रीहितण्डुलाः। पूर्णपात्रं पराद्ध्यम् अपरा-

र्घ्यं वा । पद्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं परार्ध्यम्। तदुक्तं—

पञ्चपार्श्वे-अष्टमुष्टि भवेत् किञ्चित् किञ्चिदष्टौ तु पुष्कलम्।
पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षते ॥

यद्भोक्ता यः पुरुषस्तदाहारपरिमितम् अपरार्ध्यम् । दक्षिणा यथाशक्तिहिरण्यादिद्रव्यम्। वरो वा "गौर्ब्राह्मणस्य वर" इत्याद्युक्तः ।

पवित्रे कृत्वा ॥ १२ ॥

पवित्रकरणप्रकारमाह कात्यायनः—कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति इति । शाङ्खायनः-कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशमात्रं मापयित्वा कुशैश्छिनत्तीति ।

छन्दोगपरिशिष्टे-अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् इति ॥

नन्वेतावद्विशेषणयुक्तस्य कुशपत्रद्वयस्य पवित्रपदार्थताऽस्माद्वचनबलाल्लभ्यते, तत्र च द्विवचनविभक्त्यर्थद्वित्वान्वयात्पत्रचतुष्टयं लभ्यते। तथाचाचारविरोधः इतिचेत्, मैवम् । प्रादेशमात्रे पवित्रे कुरुतइत्यत्र पवित्रपदस्य शक्यैकदेशपत्रमात्रपरत्वात् । मुख्यपरत्वे हि सूत्रे प्रादेशमात्रे इति विशेषणं व्यर्थं स्यात् । विशिष्टार्थशक्तपवित्रपदादेव तल्लाभसंभवात् । पूर्वोक्तं पवित्रलक्षणमभिधाय कात्यायनेन—

आज्यस्योत्पवनार्थं यत् तदप्येतावदेवतु—

इत्युक्तेश्च पवित्रे कुरुते इत्यादौ पत्रचतुष्टयविनियोगशङ्का न कार्या । परिशिष्टस्य सूत्रतात्पर्यौपायकत्वात् । अत एव आचारोपष्टब्धं पवित्रमन्तरा कृत्वेति गृह्यसंग्रहवचनमपि संगच्छते । स्पष्टंचेद शुभकर्मनिर्णये मुरारिमिश्रकृते गोभिलगृह्य-

व्याख्याने। वीरमित्रोदयस्य परिभाषाप्रकाशे परशुरामकारिकायां चायमर्थः स्फुटः। दृश्यतेचान्यत्र श्रुतावपि एवंतात्पर्येण द्विवचनम्,यथा"मधुश्च माधवश्च वासन्तिकावृतू"इत्यादौ ऋतुत्वस्य मासद्वयपर्याप्तत्वेऽपि ऋतू इति द्विवचनम्। भागद्वयतात्पर्येण द्विवचनोपपादनं चायुक्तम्। तथासति श्राद्धादौ द्विवचनाभावेन एकपत्रात्मकपवित्रग्रहणापत्तौ सर्वदेशीयशिष्टाचारविरोधापत्तेरित्यलम्।

प्रोक्षणीः संस्कृत्य ॥ १३ ॥

प्रोक्षणीपात्रं प्रणीतासंनिधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणेनोच्छाल्य प्रणीतोदकेन प्रोक्ष्यं। अत्र मूलं कात्यायनश्रौतसूत्रम् (२।३)। तथाहि "हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्वइति, ताः स्थानं तयोः, सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति, प्रोक्षिताः स्थेति तासां प्रोक्षणम्"इति ॥

अर्थवत्प्रोक्ष्य ॥ १४ ॥

प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि प्रोक्षणीभिरद्भिरासादनक्रमेण एकैकशः उत्तानहस्तेन दैवतीर्थेन प्रोक्ष्य। प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रं निदध्यात्। तथाचोक्तम्—

अग्निगृह्ये—निदध्यात्प्रोक्षणीपात्रं सपवित्रमसंचरे।
यदन्तरं प्रणीताग्न्योरसंचरस्तु स स्मृतः ॥ इति।

निरुप्याज्यम् ॥ १५ ॥

आसादितमाज्यम् अग्नेः पश्चान्निहितायामाज्यस्थाल्यां प्र-

क्षिप्य चरुश्चचरुस्थाल्यां प्रणीतोदकमासिच्य आसादितांस्तण्डुलान् प्रक्षिप्य । तण्डुलनिर्वापश्च "पवित्रान्तर्हिते अप आनीय तण्डुलानोप्य मेक्षणेन पर्यावर्तयन् तण्डुलं श्रपयति" इति मैत्रगृह्योक्तप्रकारेण कार्यः ॥

अधिश्रित्य ॥ १६ ॥

अधिश्रपणमग्नौ स्थापनम् । आज्यचर्वोर्युगपदधिश्रपणम्। दर्शपूर्णमासयोस्तथा दृष्टत्वात् । तत्राज्यं ब्रह्माऽधिश्रयति । तदुत्तरतश्च स्वयं चरुम् । आचार्यसत्त्वे आचार्यः ॥

पर्यग्निकुर्यात् ॥ १७ ॥

ज्वलदुल्मुकम् अधिश्रितमाज्यं चरुं वा परितः भ्रमयेत् ॥

स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ॥ १८ ॥

दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखं तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन संमार्गाग्रैः मूलतोऽग्रपर्यन्तं, मूलैरधस्तादग्रमारभ्य मूलपर्यन्तं संमृज्य, प्रणीतोदकेनाभ्युक्ष्य पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात्। संमार्जनप्रकारश्च कात्यायनेनोक्तः-वेदाग्रैरन्तरतः प्राक् संमार्ष्टि "अनिशित"इति, विपर्यस्य बहिः मूलैः प्राकुत्क्रम्येति । अस्यार्थः- वेदः ग्रथितकुशमुष्टिविशेषः। तदग्रैः अन्तरतः मुखप्रदेशे प्राक्संस्थं संमार्ष्टि सम्यक्प्रकारेण तत्संलग्नरजःपातो यथा स्यात्तथा मार्जनं करोति । विपर्यासः प्रागित्यस्य, प्रत्यगित्यर्थः । बहिः बाह्यतः मूलैः वेदमूलैः इति । स्मार्ते वेदाभावेन संमार्गार्थं कुशा एवोपादीयन्ते । तथाच छन्दोगपरिशिष्टे—

कात्यायनः-

तेषां प्राक्शः कुशैः कार्यः सम्प्रमार्गो जुहूषता-

इति। तेषां कुशानाम् अग्नौ प्रक्षेप इत्याश्वलायनकारिककार आह—

तान्कुशान् कृतसम्मार्गान् प्रोष्याग्नौ प्रहरेदिति।

युक्तं चैतत्। श्रौते तथा दृष्टत्वात्। अभ्युक्षणं च प्रणीतोदकेन। यावदुदककार्यार्थं प्रणीतानामुपादानात्। पुनः प्रतप्य स्रुवस्य निधानमाज्यस्य दक्षिणतः। दर्शपूर्णमासयोस्तथा दृष्टत्वात्। आत्मनो दक्षिणतो निधानमिति पद्धतिकाराः।

पुनः प्रतप्य तौ मन्त्री दर्भानग्नौ विनिक्षिपेत्।

आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशान्तरे॥

इति कारिकावचनात्। तौ स्रुक्स्रुवौ॥

आज्यमुद्वास्य॥ १९॥

आज्यमुत्थाप्य चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय चरुं चानीय आज्यस्योत्तरतो निधाय। एवमन्यहविःसत्त्वे उद्वासनम्। अधिश्रितानां पूर्वेण उद्वासितानां पश्चिमतः हविष उद्वास्य आनयनम् इति याज्ञिकसंप्रदायात्। उद्वासनम्-उत्तारणम्। तच्च उत्तरतः। तथाच कात्यायनसूत्रम्—उत्तरत उद्वासयति हविश्चेति (२।४)। पश्चिमतो निधानं च श्रौते हविरासादनस्य तथा दृष्टत्वात् अत्रापि तथैव कार्यम् इति सम्प्रदायः॥

उत्पूय॥ २०॥

आज्यं पवित्राभ्याम् उत्क्षिप्य इति हरिहरादयः॥ आश्वलायनसूत्रादौ तु उत्पवने प्रकारविशेष उपदिष्टः।

अवेक्ष्य॥ २१॥

अवलोक्याज्यम्। अवलोकनमपद्रव्यनिरसनार्थम्।

प्रोक्षणीश्च पूर्ववत् ॥ २२ ॥

श्रौतवत्, अर्थात् पवित्राभ्यामुत्पूय तासु पवित्रनिधानम्। "ताः स्थानं तयोः" इति पूर्वोक्तसूत्रात्। चशब्दात् आज्यस्यापि पूर्ववदेव पवित्राभ्यामुत्पवनम्। प्रोक्षणीसंस्कारोऽयं करिष्यमाणाग्निपर्युक्षणार्थः ॥

उपयमनकुशानादाय ॥ २३ ॥

उपयमनकुशाः उपग्रहार्थाः कुशास्तान् दक्षिणहस्तेनादाय सव्ये निधाय ॥

समिधोऽभ्याधाय ॥ २४ ॥

तिष्ठन् तिस्रः समिधः अग्नौ प्रक्षिप्य। तिष्ठन् समिध आदधातीति श्रुतेः। तिष्ठन् समिधः सर्वत्र मध्ये इति कात्यायनसूत्राच्च। समिधां च प्रागग्राणां प्रक्षेपणम् ॥

प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः।

शान्त्यर्थेषु सवल्काद्रीः विपरीता जिघांसनाः ॥ इति गृह्यसंग्रहपरिशिष्टात्।

पर्युक्ष्य जुहुयात् ॥ २५ ॥

पर्युक्षणम् अग्नेः ईशानाद्युत्तरपर्यन्तं दक्षिणचुलुकगृहीतेन प्रोक्षण्युदकेन परिषेचनम्। उत्पवनरूपप्रोक्षणीसंस्कारस्योत्तरकार्यार्थत्वात्। ततः पवित्रे प्रणीतायां निदध्यात्। तथाच परशुरामकारिकायां-

पर्युक्ष्याग्निं प्रणीतासु निक्षिपेत्तत् पवित्रकम्। इति।

एवं वह्नेः कुशकण्डिकां कृत्वा आघारादिहोमं कुर्यात्। संस्रवधारणार्थं प्रोक्षणीपात्रं प्रणीताग्न्योर्मध्ये निदध्यात्। एतच्चाज्यहोमे, आज्यातिरिक्तहोमद्रव्ये तु पात्रान्तरे स्रोपप्रक्षेपः।

प्रोक्षणीषु त्यजेच्छेषं संस्रवं तु स्रुवाहुतेः ।
हस्ताहुतेर्हविर्यस्य सं तत्तस्य प्रकल्पयेत् ॥

इति परशुरामकारिकावचनात्। संस्रवधारणं च–" पाकयज्ञेष्ववत्तस्यासर्वहोमो हुत्वा शेषप्राशनम्" इति कात्यायनेन श्रौतसूत्रे षष्ठाध्याये (कं.१०)विहितम्। पाकयज्ञेषु स्मार्तहोमेषु पश्वादिकर्मसु होमार्थम् अवत्तस्य गृहीतस्य आज्यादेः सर्वस्य होमो न कर्तव्यः, प्रतिहोमं किंचित् परिशेषणीयम् । हुत्वा साङ्गं पाकयज्ञं समाप्य तस्य शेषस्य प्राशनं भक्षणं कर्तव्यमिति तदर्थः। तत्प्राशनं च बर्हिर्होमानन्तरम्। बर्हिर्हुत्वा प्राश्नातीत्युत्तरद्वितीयकण्डिकासूत्रात् । प्राशनान्ते आचमनम् । प्राशनस्याचमनविधिनिमित्तत्वात् । प्राशनाकरणे अनुकल्पतया विहितमवघ्राणं कर्तव्यम् ॥

एष एव विधिर्यत्र क्वचिद्धोमः ॥ २६ ॥

यत्रक्वचन स्मार्ते लौकिके वा अयं विधिरेव न तु मन्त्राः । अतः परिसमूहनादिः पर्युक्षणान्तः कर्मकलापः अमन्त्रक एवानुष्ठेयः । एतेन समित्प्रक्षेपणं समिधाग्निमित्यादिमन्त्रैः क्रियमाणमनार्षमेव ।

देवीपुराणेतु परिसमूहनादिषु प्रत्येकं मन्त्रा उक्ताः— यद्देवादेवहेडनमिति परिसमूहनम्। मानस्तोके इत्युपलेपनम्। त्वां द्युन्नेष्विन्द्रसत्पतिमिति उल्लेखनम् । प्रमंगच्छेत्युद्धरणम् । देवस्य त्वेत्यभ्युक्षणम् । अग्निर्मूर्धेत्यग्न्युपसमाधानम् । समिधाग्निन्दुवस्यतेति समिदाधानम्। मयिगृह्णामीत्यग्नेः संधुक्षणम्। हिरण्यगर्भेति ब्रह्मासनम् । आपोहिष्ठेतिप्रणीतास्थापनम् । कयानश्चित्रेति प्रणीतापूरणम्। पवित्रेस्थोवैष्णव्याविति पवित्रकरणम्। इषेत्वेति आज्यनिर्वापः । त्रातारमिन्द्रमिति स्रुवप्रतपनम् । सवितुर्वः प्रसव इत्युत्पवनम् । धूरसीति पर्युक्षणमिति ॥

अनयोश्च पक्षयोर्व्यवस्था संहिताप्रदीपे–समन्त्रककरणपक्षो देवीपुराणोक्तशान्तिकस्थालीपाकपरः। तदन्ते एव तस्य पाठात्। स्मार्तकर्ममात्रपरत्वे "एष एव विधिर्यत्रक्वचिद्धोम"इति सूत्रविरोधापत्तेः॥

विवाहहोमप्रसङ्गेन सर्वहोमसाधारणीं परिभाषामाह–

कात्यायनः–

अन्वारब्ध आघाराबाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्च एतन्नित्यꣳसर्वत्र॥

अन्वारम्भश्च स्मार्ते ब्रह्मकर्तृकः। अत्र यजमानस्य कर्मकर्तृत्वेन अन्वारम्भकर्तृत्वासम्भवात्। श्रौतेतु "दानवाचनान्वारम्भवरणव्रतप्रमाणेषु यजमानं प्रतीयात्"इति सूत्रेण(का.१।१०) यजमानकर्तृकोऽन्वारम्भः अध्वर्योः। पत्नीकर्तृकोऽपि नात्र। (यत्तु तो वा कश्चित्) "कर्मणि पुरुषाणाम्" (१।७) इति कात्यायनपरिभाषया यत्नप्रऋत्विजामेव कर्मकर्तृत्वबोधनात्। ऋत्विक्चात्र ब्रह्मैव वृत इति तत्कर्तृक एवान्वारम्भ इति। नच ब्रह्मणो वृतत्वात् सर्वकर्मकर्तृत्वमस्तु अन्वारम्भकर्तृत्वं च यजमानस्यैवास्तु इति वाच्यम्। ब्रह्मवरणात्पूर्वं विहितेषु परिसमूहनादिषु यजमानस्य कर्तृत्वे सिद्धे प्रणयनादीनामपि तत्कर्तृकत्वस्य ल्यबन्तप्रयोगैर्वाच्यत्वात्। तस्मात् ब्रह्मण एवान्वारम्भे कर्तृत्वमिति सिद्धम्। पाकयज्ञेषु स्वयं होता भवतीति गोभिलगृह्याच्च होमकर्तृत्वं यजमानस्यैव। अन्वारम्भश्च दक्षिणहस्तेन दक्षिणे बाहौ कार्यः, तत्रापि कुशेन कार्यः निगमपरिशिष्टादिति गदाधरः। आघारादि स्विष्टकृदन्तमन्वारब्धो जुहुयात्।

जान्वाच्य दक्षिणं, होम्यं स्रुवेण जुहुयाद्धविः।

इति परशुरामकारिकायामुक्तेः दक्षिणजानु भूमौ पातयित्वा होमः कार्यः ।

आघारसंज्ञके द्वे आहुती । तत्र पूर्वाघारः प्राजापत्यः उत्तराघार ऐन्द्रः । मनसा पूर्वाघारः । आज्यभागौ अग्निदैवत्य सोमदैवत्यौ । "आग्नेयमुत्तरपूर्वार्धे दक्षिणपूर्वार्धे सौम्यं समिद्धतमे वा" इति (श्रौ० ३।२) कात्यायनात्तथा कार्यौ । सर्वत्र अन्ते स्वाहाकारः कार्यः । "स्वाहाकारप्रदाना जुहोतय" इति कात्यायनसूत्रात्(श्रौ० १।२) । स्वाहाकारप्राप्तौ तदेकवाक्यत्वाय चतुर्थ्यन्तं देवतापदमुच्चार्य स्वाहान्तेन होमः कार्यः । तथा च शाङ्खायनगृह्यम्–अनाम्नातमन्त्रास्वादिष्टदेवतासु अमुष्मै स्वाहेति जुहुयादिति । हिरण्यकेशिगृह्यं च–सर्वदर्विहोमानामेष कल्पो मन्त्रान्ते स्वाहाकारो ऽमन्त्रास्वमुष्मै स्वाहेति यथादैवतमिति । संहितायां स्वाहान्तत्वेन पठिते मन्त्रे तु द्वितीयं स्वाहाकारं न कुर्यात् ।

नमोऽन्ते न नमो दद्यात् द्विठान्ते द्विठमेव च ।
पूजायामाहुतौ चैव सर्वत्रायं विधिः शिवे ॥ इति ।
पुरश्चर्यार्णवे मन्त्रप्रकाशवचनात् । शिवे इति सम्बोधनम् ।
द्विठः स्वाहाकार इति सांप्रदायिका इत्यपि तत्रोक्तम् ॥

सर्वे होमाः समिद्धेऽग्नौ कार्याः । तथाच छन्दोगपरिशिष्टे–

कात्यायनः–योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चापि जायते ॥
तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा ॥

अग्निधमने विशेषश्च तत्रैव–

जुहूपश्च हुते चैव पाणिशूर्पास्यदार्विभिः[१] ।
न कुर्यादग्निधमनं कुर्याच्च व्यजनादिना ॥
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत इति ।

मुखेन धमनं कलौ न भवतीत्याहतुः माधवपृथ्वीचन्द्रोदयौ—

ब्राह्मणानां प्रवासित्वं मुखाग्निधमनं तथेति ।

अत्र न भवतीत्यनुवर्तते । यत्तु वंशादिं व्यवधाय धमनमाचरन्ति तन्मुखविप्लुडुत्पतनशङ्कया । एवं प्रजापतये स्वाहेति पूर्वाघारो भवतीति पद्धतयः । त्यागश्च इदं प्रजापतये न ममेत्येवं कार्यः । स च पत्नीयजमानाभ्यामुभाभ्यामपि कार्यः । उभयोः स्वामित्वाविशेषात् । मण्डनस्तु उक्तं प्रकारमुक्त्वा—

यद्वा त्यागं पतिः कुर्यात्पत्नी तमनुमन्यते ।
अधिकारे च वैषम्यं प्रोक्तं शब्दानुसारिणा ॥
संनिधौ यजमानः स्यादुद्देशत्यागकारकः ।
असंनिधौ तु पत्नी स्यादध्वर्युस्तदनुज्ञया ॥
उन्मादे प्रसवे चार्तौ कुर्वीतानुज्ञया विना ।
उभावप्यसमर्थौ चेत् नियुक्तः कश्चन त्यजेत् इति ॥

होमश्च देवतोद्देशेन द्रव्यत्यागं कृत्वैव कार्यः । तदुक्तं देवयाज्ञिकभाष्ये कारिकायाम्—(श्रौ० २।५)

आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ।
प्रयोग इदमिन्द्राय न ममेति यथार्थतः ॥
अवत्तं तु त्यजेद्दत्तं मनसा वचसाऽपिच ।

---

[१] पाणिशूर्पस्फ्यदारुभिः इति शुभकर्मनिर्णये पाठः । अत्र न कुर्यादिति पाठे व्यजननिषेधो भाय(?)व्यजनपरः । पक्षकेण भवेद्व्याधिरितिवचनान्तरसंवादात् ।

ततश्च प्रक्षिपेदग्नाविति धर्मः सनातनः ॥
अत्यक्त्वा जुहुयाद्यस्तु मोहेनान्वितमानसः ।
देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथा ॥
यत्किंचिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् ।
अन्यथा जुहुयाद्यस्तु नरकं स तु गच्छति इति ॥

अनेककर्तृकहोमे तु त्यागस्य विभिन्नकर्तृकत्वेन त्यागकालस्य ज्ञातुमशक्यत्वेन प्रत्याहुतित्यागासंभवात् होमोपक्रमकालएव यष्टव्या देवताः स्मृत्वा यजनीयद्रव्यं च मनसि निधाय इदं यथादैवतमस्तु न ममेत्येवं त्यागः कार्य इति वृद्धाः ।

अत्र वदन्ति "जुहोतिरासेचनाधिकः स्यात्" (पू० मी० ४।२।१२) इति जैमिनिसूत्रात् होमे त्यागस्याङ्गत्वात् सकृत् तन्त्रेण त्यागे सर्वहोमसिद्धेः शतलक्षादिहोमे सकृदेव आदौ तन्त्रेण त्यागो न प्रत्याहुति । तेनअनेककर्तृकहोमे प्रत्याहुतित्यागस्य कर्तुमशक्यत्वादिति वृद्धोक्तिरपि हेत्वाभास एव । अतएव सर्वतोमुखे विहारचतुष्के अनेककर्तृकपशुपाजेपु प्राजापत्यसान्नाय्यादौ च अग्नये अग्निभ्यो वा एतानि त्यजामि इति कपर्दिस्वाम्यग्रहयिलपाज्ञिकाद्यैः ऋत्विक्कर्तृके सकृदेव त्याग उक्तः । स्वकर्तृकहोमे तु मन्त्रेण देवतां स्मृत्वा प्रक्षेपात्पूर्वं प्रक्षेपकाले वा त्यागो ऽवत्तानवत्ते द्रव्ये निर्दिश्य कार्यो न तदूर्ध्वमित्युक्तं वार्तिकादौ। (पू.मी.३।४।१९)

स च इन्द्रायेदं न ममेत्येवंरूपः इति केचिदाहुः ।

इदमिन्द्राय न ममेति कात्यायनीयाः । "यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्" इति (पू० मी०४।२।१२) जैमिनिसूत्रे "यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग" इति (श्रौ० १।२) कात्यायनसूत्रे च तथैव क्रमनिर्देशादिति।

न च इदमिति द्रव्यस्य न ममेति त्यागस्य च मध्ये बहिरङ्गा देवतया व्यवधानं न युक्तमिति वाच्यम्। ईदृशस्यैव क्रमस्य जैमिनिकात्यायनाभ्यां निर्दिष्टत्वेन देवताव्यवधानस्यादुष्टत्वात्।

द्विविधोऽपि त्यागोऽयुक्त एव क्रियापदाभावात् । तिङ्सुबन्तचयो वाक्यमिति कोशात्—

भावनैव च वाक्यार्थः सकारकविशेषणा ।

इति वाक्याच्च आख्याताभावे वाक्यस्यासाधुत्वेन प्रयोगानर्हत्वात् । तेन इदमिन्द्राय त्यजामीत्येव त्यागः कपर्द्यादिसंमतः सर्वत्र युक्त इत्यपि केचित् ।

क्रियापदमध्याहृत्यैव तत्र वाक्ये साधुत्वं संपादनीयम् । न ममेति च स्वत्वनिवृत्तेः स्पष्टीकरणार्थं प्रयोक्तव्यमेव । वेदयाज्ञिकभाष्ये "प्रयोग इदमिन्द्राय न मम" इति कारिकया तथैव बोधनात् । दानचन्द्रिकायामपि दानोत्तरं न ममेति कीर्तयेदित्युक्तम् । तस्मात् दत्तकादिस्थले उभयसाधारणस्वत्वस्याप्यङ्गीकारात् अत्रापि स्वत्वानिवृत्तिशङ्का माभूत् इति दाने त्यागे च तत्कीर्तनमावश्यकम् । इत्थं च इदमिन्द्राय न ममेति प्रयोगः साधुरेवेति संप्रदायः ।

केचित्तु यत्र याग उपदिश्यते तत्र होमस्य प्रक्षेपात्मकस्य तदङ्गत्वात् यागस्य च त्यागरूपत्वात् प्राधान्यात् त्यागाङ्गत्वमेव मन्त्राणामिति "मन्त्रान्तैः कर्मादिः सांनिपात्य" इति सूत्रात् ( १।३ ) मन्त्रान्ते त्यागः, तदन्ते च प्रतिपत्तिरूपः प्रक्षेपः । यत्र तु होम उपदिश्यते तत्र त्यागस्य तदङ्गत्वात् मन्त्राणां होमाङ्गत्वमेवेति मन्त्रान्ते प्रधानभूत. प्रक्षेपात्मको होमः, तदन्ते च तदङ्गभूतस्त्यागः । अत एव कर्मकौमुद्यां—

स्वाहावसाने जुहुयात्स्वाहया सह वा हविः ।
त्यागान्ते ब्रुवते केचिद् द्रव्यप्रक्षेपणं बुधाः ॥

इति उक्तम्। विष्णुधर्मेच—
मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः।
स्वाहावसाने जुहुयात् ध्यायन्वै मन्त्रदेवताम्—इत्युक्तम्।
परशुरामकारिकायां च—
स्वाहान्ते जुहुयाद्धोता स्वाहया सह वा हविः।
त्यागान्ते ब्रुवते केचित् द्रव्यप्रक्षेपणं बुधाः॥
वषट्कृते जुहुयात् स्यक्ते वषट्कारेण वा सह।
इति श्रुतिविकल्पेन स्वेच्छया जुहुयाद्धविः॥

इत्युक्तम्। यद्यप्यत्र सर्वत्र ऐच्छिकविकल्प एव प्रतीयते तथापि अष्टदोषग्रस्तस्य तस्य स्वीकर्तुमनुचितत्वात् व्यवस्थैव युक्ता। सा च पूर्वोक्तरीत्या संभवत्येव। विवाहादिस्मार्तकर्मसु सर्वत्र होमस्यैवोपदेशात् प्रक्षेपान्ते एव त्यागः समुचितः प्रक्षेपकाले वा। न तु त्यागोत्तरं प्रक्षेपः। अनेककर्तृकहोमे तु प्रत्याहुतित्यागस्याशक्यत्वाद्देवताभिध्यानकाले एव सकृत्तन्त्रेणैव त्यागः कार्यः।

अतएव हरिहरादिपद्धतिषु सर्वत्र प्रक्षेपं निर्दिश्य त्यागोल्लेखो दृश्यते। ध्वनितं चेदं भाट्टदीपिकायां चतुर्थाध्याये द्वितीयपादे द्वादशाधिकरणे "यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते स यागपदार्थः, प्रक्षेपप्रधानकः उक्तविधस्त्यागो होमपदार्थः" इति वदता खण्डदेवेन इत्याहुः।

भूर्भुवःस्वरिति तिस्रो महाव्याहृतयः अग्निवायुसूर्यदैवत्याः क्रमेणेति। सर्वप्रायश्चित्तमिति "त्वन्नो अग्ने" इत्यादिमन्त्रकरणकपञ्चहोमानां संज्ञा। इदं च कात्यायनश्रौतसूत्रे पञ्चविंशाध्याये स्पष्टम् (कं० १)। प्रजापतिदेवताको होमः प्राजापत्यशब्देनोच्यते। स्विष्टकृच्छब्देन स्विष्टकृद्दैवत्यो होम उच्यते। अयं च

होमः "उत्तरार्धादवद्यति उत्तरार्धे जुहोति" इति स्विष्टकृतं प्रकृत्य श्रुतेः तथा कार्यः । असंसृष्टामाहुतिभिरिति कात्यायनसूत्रात् ( श्रौ० ३।३ ) तथैव होतव्यः । "प्राङ् महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः" इति सूत्रात् (गृ० १।५) यत्राज्यातिरिक्तं हविरस्ति तत्र महाव्याहृतिहोमात् पूर्वमनुष्ठेयः । होमश्च—

उत्तानेन तु हस्तेन अङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥

इत्युक्तप्रकारेण कार्यः । सर्वकर्मसु होमान्ते पवित्रेण मार्जनम्, अग्नौ पवित्रत्यागः, परिस्तरणार्थबर्हिर्होमः, प्रणीताविमोकः प्रत्यक्-एते चत्वारः पदार्थाः भाष्यकारमते गृह्यकर्मसु न भवन्ति । परन्तु पद्धतिकाराणां सम्मतत्वादनुष्ठीयन्ते। तत्र अग्नौ पवित्रत्यागः स्वाहेति मन्त्रेण । मन्त्रानादेशे स्वाहाकारविधानात् । प्रजापतिश्च देवता । अतः प्रजापतये न ममेति त्यागः । बर्हिर्होमेऽपि प्रजापतिर्देवता ।

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

इति छन्दोगपरिशिष्टात् । होमे द्रव्यानुक्तौ आज्यं द्रव्यं ग्राह्यं, मन्त्रानुक्तौ प्रजापतिदेवताको मन्त्रः, देवताया अनुक्तौ प्रजापतिर्देवता –इति तस्यार्थः । प्रजापतिदेवताको मन्त्रश्च महाव्याहृतिमन्त्रः, स च समस्तव्याहृतित्रयात्मकः । अतएव—

यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत् ।
मन्त्राणामेव चोद्देशे मन्त्रैः कर्म समाचरेत् ॥
भूरादयो व्याहृतयो वेदेभ्यो निःसृताः पुरा ।
महत्त्वं व्याहृतित्वं च प्राप्तास्तेनैव कर्मणा ॥
ओंकारजननात्तासां महत्त्वं प्रतिभाष्यते ।

व्याप्त्या च व्याहृतित्वं च तेन त्रैविद्यतां ययुः ॥

इति वचनान्तरमपि सङ्गच्छते । प्रणीताविमोकानन्तरं ब्रह्मणे पूर्णपात्रं दद्यात् । तदाह शुभकर्मनिर्णये—

कात्यायनः—ब्रह्मणे दक्षिणा देया या यत्र परिकीर्तिता ।
कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेदिति ॥

इदं च होतृभिन्नब्रह्मपक्षे । यद्येक एव (यजमानः) होतृत्वं ब्रह्मत्वं च करोति तदाऽऽह तत्रैव कात्यायनः—

विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्धहरो भवेत् ।
स्वयञ्चेदुभयं कुर्यादन्यस्मै प्रतिपादयेत् ।

अन्यः—शिष्यादिः । एतच्चाशक्तविषयम् । अन्यस्मै—अर्थात्पुरोहिताय । तदाह कात्यायन एव—

कुलर्त्विजमधीयानं संनिकृष्टं गुरुं तथा ।
नातिक्रामेत्सदा दित्सन् य इच्छेदात्मनो हितमिति ॥

पुरोहितस्य चाध्ययनशालित्वात् संनिकृष्टत्वात्कर्मोपदेशकत्वेन गुरुत्वाच्चेति ।

कात्यायनस्तत्रैव—

अहमस्मै ददानीति एवमाभाष्य दीयते ।
नैतावदपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि ॥
दूरस्थाभ्यामपि द्वाभ्यां प्रदाय मनसा धनम् ।
इतरेभ्यस्ततो दद्यात् एष दानविधिः स्मृतः ॥
संनिकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।
यद्ददाति तमुल्लङ्घ्य ततः स्तेयेन युज्यते ॥
यस्य त्वेकगृहे मूर्खो दूरस्थश्च गुणान्वितः ।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।

ज्वलन्तमभिमुत्सृज्य न हि भस्मनि हूयते इति ॥

पूर्णपात्रदाने विशेषः पुरश्चर्यार्णवे मेरुतन्त्रे—

द्वात्रिंशत्पलमानेन निर्मितं ताम्रपात्रकम् ।

तण्डुलैस्तत्समापूर्य सहिरण्यं सदक्षिणम् ॥

दद्याद्विप्राय तत्पुष्ट्यै पूर्णपात्रमितीरितम् ।

पात्रानादेशे—

कात्यायनःछन्दोगप०

होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।

पाणिनैवेतरस्मिंस्तु स्रुचा चात्र न हूयते इति ॥

अत्र अनादेशे द्रवद्रव्ये तदतिरिक्ते वा स्रुचा होमो न कार्य इति चतुर्थपादार्थः । स्रुवश्च चतुरङ्गुलं त्यक्त्वा शङ्खमुद्रया धार्यः । तथाच—

मत्स्यपुराणे—मूले हानिकरं प्रोक्तं मध्ये शोककरं तथा ।

अग्रे व्याधिकरं प्रोक्तं स्रुवं धारयते कथम् ॥

कनिष्ठाङ्गुलिमानेन चतुर्विंशतिकाङ्गुलम् ।

चतुरङ्गुलं परित्यज्य अग्रे चैव द्विरष्टकम् ॥

चतुरङ्गुलं च तन्मध्ये धारयेच्छङ्खमुद्रया ॥

हीयते यजमानो वै स्रुवमूलस्य दर्शनात् ।

तस्मात्संछादयेन्मूलं होमकाले स्रुवस्य तु इति ॥

द्विरष्टकं—षोडश । आहुतिद्रव्यपरिमाणं च कात्यायनः—

पाण्याहुतिर्द्वादशपर्वपूरिका कंसादिना चेत् स्रुवमात्रपूरिका ।

दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च पावके॥इति।

दैवं तीर्थमङ्गुल्यग्रं—तथाच याज्ञवल्क्यः—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य तु ।

प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमादिति ॥

मध्ये आग्नेयम् इति पञ्चमं तीर्थं हारीतेनोक्तं तस्य विनियोगः प्रतिग्रहे—प्रतिग्रहमाग्नेयेन गृह्णीयादिति ।

भविष्ये—आहुतिस्तु घृतादीनां स्रुवेणाधोमुखेन च ।
हुवेत् तिलाद्याहुतीश्च दैवेनोत्तानपाणिना ॥ इति ।

होमकाले होमक्रियाबाहिर्भूतशब्दाभिलापो न कार्यः । तथाच—

मनुः— स्नातश्च वरुणस्तेजो जुह्वतोऽग्निः श्रियं हरेत् ।
भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत्रिषु इति ॥

होमावसरे वह्नेर्जिह्वादिकं ध्येयम् । तदुक्तम्—

गृह्यसंग्रहे—सप्तजिह्वा भवन्त्येता हुताशनमुखोद्गताः ।
याभिर्हव्यं सदाऽश्नन्ति हुतं सम्यक् द्विजोत्तमैः ॥
पावकस्य मुखं वक्ष्ये यदुक्तं पद्मयोनिना ।
सप्तजिह्वाप्रमाणं तु प्रादेशं परिकीर्तितम् ॥
प्रमाणं चतुरस्रं च वर्तुलं मुखमण्डलम् ।
कराली धूमिनी श्वेता लोहिता महालोहिता ॥
सुवर्णा पद्मरागा च सप्तैताः परिकीर्तिताः ।
करालीं राक्षसाश्नन्ति धूमिनीमसुरास्तथा ॥
श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा ।
महालोहितां गन्धर्वाः सुवर्णां च यमास्तथा ॥
पद्मरागां तथा देवाः ख्याता जिह्वा हुताशने ।
तस्यां तु होमयेन्नित्यं सुसमिद्धे हुताशने ॥
एताश्चोक्ताः समासेन ज्ञातव्यास्तु द्विजोत्तमैः इति ।

करालीमित्यादौ द्वितीया तृतीयार्थे । राक्षसाश्नन्तीत्यत्र संधिरार्षः ।

परशुरामकारिकायां तु—

हिरण्या कनका रक्ता कृष्णा तदनु सुप्रभा ।
बहुरूपाऽतिरिक्ता च वह्निजिह्वाश्च सप्त च ॥
इति सप्तजिह्वा उक्ताः । जिह्वानां स्थानादिकं तत्र स्पष्टम् ।
ततः पूर्णाहुतिहोमः । तत्र शौनकः–
अथ पूर्णाहुतिं दद्यात् गन्धपुष्पफलान्विताम् ।
साक्षतामूर्ध्वकायश्च समपाच्छकदिङ्मुखः ॥
ऊर्ध्वकायः–तिष्ठन् । समपात्–समपादः ।
अग्निपुराणे–मूर्धानंदिवमन्त्रेण संस्रवेण च धारया ।
दद्यादुत्थाय पूर्णां तु नोपविश्य कदाचन ॥ इति ।
एतेन परिभाषाबलादासीनेन होमोऽयं कार्य इति परास्तम् । सकलदेशीयाचारविरोधाच्च । परशुरामकारिकायां तु–
केचिदुत्थाय कुर्वन्ति कात्यायनमतं न तत् ।
तस्मादध्वर्युणा कार्या पूर्णाऽऽसीनेन सर्वथा ॥ इत्युक्तम् ।
कात्यायनः–
ततः पूर्णाहुतिं कृत्वा सर्वतन्त्रसमन्विताम् ।
गां दद्यात् यज्ञवास्त्वन्ते ब्रह्मणे वाससी तथा ॥
गोभिलीये–पूर्णाहुतिं च मूर्द्धानन्दिवइत्यभिपातयेदिति । वायवीयसंहितायां–
ततो होमावशिष्टेन घृतेनापूर्य वै स्रुचम् ।
निधाय पुष्पं तस्याग्रे स्रुवेणाधोमुखेन ताम् ॥
सदर्भेण समाच्छाद्य मूलेनाञ्जलिनोत्थितः ।
वौषडन्तेन जुहुयात् धारां जवसमन्विताम् इति ॥
ततो वसुभ्यः स्वाहेति अविच्छिन्नां घृतधारां दद्यात् ।
तदुक्तं गृह्यसङ्ग्रहे–
यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्मणा ।

आज्यधारामविच्छिन्नां पातयेदनलोपरि इति ॥

ततः स्रुवलग्नसघृतभस्मना त्र्यायुषकरणम्। तत्र च–

ततोऽनामिकया कुर्यात् बिन्दुं सघृतभस्मना।

हृदंसयोर्ललाटे च त्र्यायुषेति पदैः क्रमात्–

इति वचनं प्रमाणयन्ति शिष्टाः। पदैः–पादैः।

यो यत्र विहितोऽग्निः तं ज्ञात्वा ध्यात्वा आवाह्य पूजयित्वा होतव्यम्। तथाच शुभकर्मनिर्णये–

अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः।
न हुतं न च संस्कारो न स कर्मफलं लभेत् ॥
ज्ञात्वा स्वरूपमाग्नेयं योऽग्नेराराधनं चरेत्।
ऐहिकामुष्मिकैः कामैः सारथिस्तस्य पावकः ॥
आहूयैव तु होतव्यं यो यत्र विहितो भवेत्। इति।

एवं च स्थापनावसरे सर्वत्र–

सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥

इति विश्वरूप एव अग्निर्ध्यातव्यः। ततो यस्मिन्कर्मणि योऽग्निरुक्तः स चिन्तनीयः, ततश्च तमग्निमाहूय स्थापयित्वा होतव्यमिति ॥

विधानपारिजाते अग्निनामानि–

लौकिकः पावको ह्यग्निः प्रथमः परिकीर्तितः।
अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्तितः ॥
पुंसवे चमसो नाम सीमन्ते मङ्गलाभिधः।
प्रगल्भो जातसंस्कारे शोभनः शुभकर्मसु ॥
पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः।
सभ्यनामा तु चूडायां व्रतादेशे समुद्भवः ॥

गोदाने सूर्यनामा स्याद्विवाहे योजकः स्मृतः ।
वैश्वानरो विसर्गे स्यात् शान्तिके वरदः स्मृतः ॥
चतुर्थीकर्मणि शिखी धृतिरग्निस्तथा परे ।
आवसथ्यस्तथाऽऽधाने वैश्वदेवे तु पावकः ॥
ब्रह्माग्निर्गार्हपत्यः स्याद् दक्षिणाग्निस्तथेश्वरः ।
विष्णुराहवनीयः स्यादग्निहोत्रे त्रयोऽग्नयः ॥
लक्षहोमेऽभीष्टदः स्यात्कोटिहोमे महाशनः ।
एके घृतार्चिषं प्राहुरग्निध्यानपरायणाः ।
रुद्रादौ तु ( पूर्णाहुतौ ) मृडो नाम पौष्टिके बलवर्द्धनः ॥
मृतदाहे तु क्रव्यादः क्रोधाग्निश्चाभिचारिके ।
वश्यार्थे वशकृत्प्रोक्तो वनदाहे तु पोषकः ॥
ज्ञात्वैवमग्निनामानि गृह्यकर्म समारभेत् । इति ।

सर्वेषां संस्काराणामन्ते ब्राह्मणभोजनं च कार्यम् । तथाचोक्तं-

यज्ञपार्श्वे-गर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद्दश ।
शतं विवाहसंस्कारे पञ्चाशन्मेखलाविधौ इति ॥

ब्राह्मणभोजनस्य आशीर्वादोपलक्षकत्वात्कर्मसमाप्त्यनन्तरमाशीर्वचनं च ग्राह्यम् । तदुक्तंसङ्ग्रहे-

सर्वत्र कर्मणामन्ते मन्त्राशिषमनुत्तमाम् ।
दद्युर्विप्राः स्वशाखोक्ताम् आदौ तत्कर्मशालिनः इति ॥

आदौ तत्कर्मशालिन इत्यनेन ऋग्वेदस्यैव पूर्वं पाठ इति भ्रान्तानामुक्तिः परास्ता ।

अथ सकलविवाहादिमङ्गलकर्मसाधारणी शिष्टाचारप्राप्ता इतिकर्तव्यता ।

कर्मादौ मन्त्रसंयुक्तं मङ्गलस्नानमाचरेत् ।
दिव्याभरणवासोभिरलंकृत्य ततः शुचिः ॥

विवाहादिदिने मासे तत्कर्त्रा भार्यया सह ।
कुलदेवादिसंप्रीत्यै ब्राह्मणांश्च सुवासिनीः ॥
स्नापयित्वा सकन्येन स्नातव्यं ससुतेन च ।
परिधायाहतं वस्त्रं द्विपटीं च स्त्र्यपि द्वयम् इति ॥
वसिष्ठसंहितायां—
नरकायां चतुर्दश्यां विवाहादिमहोत्सवे ।
तथा संवत्सरस्यादौ सूतकान्ते शिरोरुजि ॥
श्रावण्यां वलिराज्ये च वसंतस्योदये तथा ।
तैलाभ्यङ्गो न दुष्येत संक्रान्तिग्रहणादिषु इति ॥
कार्पासे अन्तरीयोत्तरीये द्वे वस्त्रे परिधायेति सूत्रान्तरम् ।
याज्ञवल्क्यः-नीलीरक्तं च यद्वस्त्रं दूरतः परिवर्जयेत् ।
द्रव्यान्तरयुता नीली न दुष्यति कदाचन ॥
केवलं पट्टसूत्रे च नीलीदोषो न विद्यते ।
स्त्रिया वस्त्रं सदा त्याज्यमन्यवस्त्रं विवर्जयेत् ॥
अधौतं क्षारधौतं च पूर्वेद्युर्धृतमेवच ।
त्रयमेतदसंबद्धं सर्वकर्मसु वर्जयेत् ॥
गौतमः—
एकवस्त्रो न भुञ्जीत, श्रौते स्मार्ते च कर्मणी ।
न कुर्याद्देवकार्याणि दानं होमं जपं तथा ॥
मनुः—
खण्डवस्त्रावृतश्चैव वस्त्रार्धालम्बितस्तथा ।
उत्तरीयव्यपेतश्च तत्कृतं निष्फलं भवेत् ॥
विधानपारिजाते—
एकवस्त्रा तु या नारी मुक्तकेशा व्यवस्थिता ।
न साऽधिकारिणी ज्ञेया श्रौते स्मार्ते च कर्माणि ॥

आचमनप्रकारमाह—याज्ञवल्क्यः—
अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥
विस्तरस्तु मिताक्षरादौ ज्ञेयः ।
उपवेशनं च वस्त्राच्छादिते पीठे एव कार्यम् ।
स्नात्वा चैव शुचौ देशे पीठे यज्ञियदारुजे ।
वस्त्राच्छन्ने उपासीत अभावे कुशविस्तृते ॥
पत्नीकुमारोपवेशनं प्रयोगपारिजाते—
संस्कार्यः पुरुषो वाऽपि स्त्री वा दक्षिणतः सदा ।
संस्कारकर्ता सर्वत्र तिष्ठेदुत्तरतः सदा ॥
धर्मप्रवृत्तौ—जातके नामके चैव ह्यन्नप्राशनकर्मणि
तथा निष्क्रमणे चैव पत्नीपुत्रं च दक्षिणे ॥
गर्भाधाने पुंसवने सीमन्तोन्नयने तथा ।
वधूप्रवेशने चैव पुनः संधानएवच ॥
प्रदाने मधुपर्कस्य कन्यादाने तथैवच ।
कर्मस्वेतेषु वै भार्या दक्षिणे तूपवेशयेत् ॥
स्मृतिसंग्रहे—व्रतबन्धे विवाहे च चतुर्थ्यां सहभोजने ।
व्रते दाने मखे श्राद्धे पत्नी तिष्ठति दक्षिणे ॥
धर्मप्रवृत्तौ—आशीर्वादेऽभिषेके च पादप्रक्षालने तथा ।
शयने भोजने चैव पत्नी तूत्तरतो भवेत् ।
अनन्तपाठककारिकायां—
गणाधिपं गुरुं स्मृत्वा कुलपूजितदेवताम् ।
इष्टमन्यत्ततो देशकालौ स्मृत्वैकमानसः ॥
कर्म कुर्यादिति शेषः । विधानपारिजाते—
मासपक्षतिथीनां च निमित्तस्य च सर्वशः ।

उल्लेखनमकुर्वाणो न तत्फलमवाप्नुयात् ॥

इत्यादिनिरूपितं सर्वकर्मसाधारणपरिभाषायां तत्रैव द्रष्टव्यम्।

गणपतिपूजनं पद्मपुराणे—

नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तम ।
तस्माद्विघ्नं समुत्पन्नमाकस्मिककमिदं तव ॥

ब्रह्मवैवर्तेऽपि—

ढुण्ढिराजः प्रियः पुत्रो भवान्याः शंकरस्य च ।
तस्य पूजनमात्रेण त्रयोऽपि वरदाः सदा ॥

त्रयो ब्रह्मविष्णुमहेश्वराः । रुद्रकल्पद्रुमे—

गणेशः सर्वदेवानामादौ पूज्यः सदैव हि ।
सर्वैरपि महाविघ्ननाशकोऽन्यो न विद्यते ॥

बह्वृचपरिशिष्टे—

आदौ विनायकः पूज्यो ह्यन्ते च कुलदेवतेति ।

लिङ्गपुराणेच—सर्वकामसमृद्ध्यर्थमादौ पूज्यो विनायक इति।

पूजाप्रकारश्च रुद्रपद्धतौ—

गणेशं पूजयेत् पूर्वं निर्विघ्नार्थं स्वकर्मणः ।
पट्टे वा मृन्मये पीठे रक्तवस्त्रेऽरुणाक्षतैः ॥
कार्यमष्टदलं पद्मं तस्योपरि गणेश्वरम् ।
गणानान्त्वेति संस्थाप्य पूजयेत्तदनन्तरम् ॥
गणानां त्वेति मन्त्रेण पूजयेदित्यन्वयः ।
नाक्षतैरर्चयेद्विष्णुं न तुलस्या विनायकम् ।
न दूर्वया यजेद्दुर्गां न शम्भुं शङ्खवारिणा ॥

इति सिद्धान्तसंग्रहोक्त्या गणेशं तुलस्या नार्चयेत् ।

गणानांत्वेति मन्त्रस्य समाप्तिस्तु कण्डिकासमाप्त्या ज्ञेया । सर्वत्र स्मार्तकर्मणि मन्त्रावसानबोधकप्रमाणाभावे मन्त्रस्य क-

ण्डिकान्तत्वात् । उक्तंच रेणुककारिकायां—
गृह्यकर्मणि ये मन्त्रा ज्ञेयाः स्वाध्यायपाठतः ।
किंच मध्यमवृत्त्या ते न द्रुता न विलम्बिताः इति ॥
रुद्रकल्पद्रुमे-मत्स्यपुराणे-
उपचारैः ससिन्दूरैश्चन्दनै रक्तचन्दनैः ।
पुष्पैर्धूपैस्तथा दीपैराच्छादनसुशोभनैः ॥
इति पञ्चोपचारैश्च यन्मया पूजनं कृतम् ।
प्रारब्धकर्मसिद्ध्यर्थं देवाय कल्पयामि तत् ॥
षोडशोपचारपूजनं विष्णुपुराणे-
पूर्वमावाहनं प्रोक्तमासनं तदनन्तरम् ।
ततश्च पाद्यमर्घ्यं च ततस्त्वाचमनीयकम् ॥
स्नानं वस्त्रं चोपवीतं ततो गन्धादिचन्दनम् ।
पुष्पं धूपं च दीपं च नैवेद्यं तदनन्तरम् ॥
ततो देयः प्रणामश्च ततो देया प्रदक्षिणा ।
विसर्जनं ततो दद्यात् उपचारास्तु षोडश ॥
वैद्यनाथरुद्रपद्धतौ—
आदौ विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्मणां सिद्धिमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥
शातातपः शुभकर्मनिर्णये—
आदौ नवग्रहानर्च्य ततः कर्म समाचरेत् ।
नवग्रहानर्चने तु न सिद्धिर्विधिचोदिता ॥
तत्रैव कालिकापुराणे-
यद्दीयते च देवेभ्यो गन्धपुष्पादिकं नरैः ।
अर्घपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत् ॥
पितृभक्तितरङ्गिण्यां वाचस्पतिमिश्राः—

आदौ प्रधानसंकल्पः ततः पुण्याहवाचनम् ।
मातृपूजा ततः कार्या वृद्धिश्राद्धं ततः स्मृतम् ॥
मातृपूजनं विष्णुपुराणे—
अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।
तस्य क्रोधसमायुक्ता हिंसामिच्छन्ति मातरः ॥
परिशिष्टे—यत्रयत्र भवेच्छ्राद्धं तत्रतत्र च मातरः इति ।
शातातपः—नानिष्ट्वा तु पितॄन् श्राद्धे कर्म कुर्याच्च वैदिकम् ।
तेभ्योऽपि मातरः पूर्वं पूजनीयाः प्रयत्नत इति ॥
नचास्माद्वचनात् मातृपूजनस्य श्राद्धाङ्गत्वं शङ्क्यम् ।
कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥
इति कात्यायनेन साक्षात्कर्मान्वयोक्तेः । अत एव श्राद्धसंकल्पात्पृथगेवास्याः संकल्पः आचारप्रमाणकः । अतएव श्राद्धरहितेष्वपि एतासां पूजनं दृश्यते वर्षवृद्ध्यादिकर्मसु । श्राद्धस्य च कर्माङ्गतायां मानं—
यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्—
इति विष्णुपुराणीयं वचनम् । छन्दोगपरिशिष्टे—
गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिः तथाऽऽत्मकुलदेवता ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश इति ॥
अत्र अन्ते श्रुतमपि गणपतिपूजनमादौ कार्यम् ।
आदौ विनायकः पूज्यो ह्यन्ते च कुलदेवता ।
इति स्मृतिकौस्तुभे बह्वृचपरिशिष्टात् । इदं च ग-

णपतिपूजनं मातृपूजनाङ्गम् । मातरः सगणाधिपा इत्यनेनोक्तत्वात् । अतएव कर्मारम्भे निर्विघ्नफलसिद्ध्यर्थं गणपतिपूजनं पृथक् कार्यम् । तस्य पुरुषार्थत्वेन मातृपूजाङ्गभूतस्य च कर्मार्थत्वेन तयोर्भेदात् । अतएव तन्त्रेणापि न तयोरनुष्ठानम् ।

सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते ।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥

इति वचनात् वाजसनेयिनां स्वगृह्येषु पूजाविधेरनुक्तत्वात् इच्छया ग्रहणं प्राप्तं तथापि छन्दोगपरिशिष्टोक्ता एव मातरः पूज्याः । सूत्रपरिशिष्टयोरेककर्तृकत्वात् । पारस्करमतस्याश्रयणीयत्वाच्च । तथाच—

स्मृतिसंग्रहे—न गृह्येषु स्मृतिर्येषां श्राद्धादावुपलभ्यते ।
कर्तुमर्हन्ति ते सर्वे पारस्करमुनीरितमिति ।

मातृपूजाप्रकारः छन्दोगपरिशिष्टे—

प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ।
अपिवाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥ इति ।

अत्र प्रत्येकं मातॄणां देवतात्वमिति सिद्धान्तः । तथाच प्रत्येकं पृथक्पृथक् प्रतिष्ठां विधाय ओंकारादिनमोऽन्तेन चतुर्थ्यन्तेन स्वस्वनाम्ना गौर्यादयो मातरः गन्धादिभिरर्चनीयाः । अर्चनं च पदार्थानुसमयेनैव आसां कर्तव्यमिति रुद्रपद्धतौ नारायणभट्टाः । ग्रहपूजाऽपि पदार्थानुसमयेनैवेति शान्तिमयूखे । पदार्थानुसमयो नाम सर्वेषाम् एकैकपदार्थसमर्पणानन्तरं पदार्थान्तरार्पणं, नतु सर्वपदार्थार्पणम् एकस्य कृत्वा अन्यस्य कर्तव्यम् । स्पष्टं चेदं गदाधरकृते श्राद्धसूत्रभाष्ये द्वितीयकण्डिकाव्याख्याने । अत्र चतुर्दशत्वषोडशत्वपक्षौ शाखाभेदेन व्यव-

स्थितौ। षोडशत्वपक्ष एव बहुसम्मतः। मातृपूजनं कृत्वा वसोर्धाराः पञ्च सप्त वा घृतेन कुर्यात्। रुद्रयामलादौ तथैवाभिधानात्। छन्दोगपरिशिष्टे पूजामुक्त्वा–

कुड्यलग्ना वसोर्धाराः पञ्च धारा घृतेन तु।
कारयेत्सप्त धारा वा नातिनीचा नचोच्छ्रिताः॥

वसोः पवित्रमसीतिमन्त्रेण–इत्यभिधानाच्च। वसोर्धारादेवानां पूजनं च पञ्चोपचारैः कुर्यात्। अत्र बहवो देशाचारा दृश्यन्ते तद् यथादेशाचारमनुष्ठेयम्।

## अथाभ्युदयिकश्राद्धम्॥

विष्णुपुराणे–कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः।
शुभकर्मणि बालानां चूडाकर्मादिके तथा॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखान्पितृगणान् तर्पयेत्प्रयतो गृही इति॥

सर्वकर्मादौ श्राद्धे प्राप्तेऽपवादमाह कात्यायनः–
असकृद्यानि कर्माणि क्रियन्ते कर्मकारिभिः।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च इति॥

यानि कर्माणि श्रावणाग्रयणादीनि वारंवारं क्रियन्ते तेषु प्रथमप्रयोगे एव मातृपूजाऽऽभ्युदयिके, न तु प्रतिप्रयोगमित्यर्थः। इदमाभ्युदयिकश्राद्धम् एकस्थाने कर्मसंस्कारेषु एककर्तृकेषु युगपदुपस्थितेषु सर्वादौ सकृदेव कार्यम्, न तु प्रतिसंस्कारमावृत्त्या। यथा दैवादकृतजातकर्मादिकस्य उपनयनकाले जातकर्माद्यनुष्ठाने, देशान्तरगतस्य मृतबुद्ध्या कृतौर्ध्वदेहिकस्य आगतस्य पुनर्जातकर्मादिसंस्काराणां विहितानां युगपदनुष्ठाने, कर्मनाशाजलस्पर्शादीनां प्रायश्चित्ततया पुनःसंस्काराणां विहि-

तानां युगपदनुष्ठाने वा । तदुक्तं ब्रह्मपुराणे-

गणशः क्रियमाणानां मातॄणां पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धम् आदौ न पृथगादिषु ॥

तेषां क्रियमाणानां कर्मणामादिषु पृथक् भिन्नतया मातृपूजनं श्राद्धं च न कार्यमित्यर्थः । नान्दीश्राद्धविधिश्च नवकण्डिकासूत्रे कात्यायनीये षष्ठ्यां कण्डिकायाम्—

आभ्युदयिके प्रदक्षिणमुपचारः, पूर्वाह्णे, पित्र्यमन्त्रवर्जं जपः, ऋजवो दर्भाः, यवैस्तिलार्थाः, संपन्नमिति तृप्तिप्रश्नः, सुसंपन्नमितीतरे ब्रूयुः, दधिबदराक्षतमिश्राः पिण्डाः, नान्दीमुखान् पितॄन् आवाहयिष्ये इति पृच्छति, आवाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामिति, अक्षय्यस्थाने नान्दीमुखान् पितॄन् वाचयिष्ये इति पृच्छति, वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाः प्रमातामहाः वृद्धप्रमातामहाश्च प्रीयन्तामिति, न स्वधां प्रयुञ्जीत, युग्मानाशयेदत्र ॥

अत्र प्रदक्षिणमुपचार इत्यनेन सकलदैवधर्मोपलक्षणात् प्राक्संस्थत्वोदक्संस्थत्वोपवीतित्वप्राङ्मुखोदङ्मुखत्वदक्षिणजानुनिपातित्वदेवतीर्थत्वादिः दैवधर्मः सर्वोऽत्र भवति ।

हेमाद्रौ शातातपः-

कर्तव्यं चाभ्युदयिकश्राद्धमभ्युदयार्थिना ।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥
पितॄणां रूपमास्थाय देवा अन्नं समश्नते ।
तस्मात्सव्येन दातव्यं वृद्धिकाले तु नित्यदा ॥

यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपि इति ।

छन्दोगपरिशिष्टे कात्यायनः—

दक्षिणं पातयेज्जानु देवान्परिचरन् सदा ।

पातयेदितरज्जानु पितॄन्परिचरन्नपि ॥

निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ।

सदा परिचरेद् भक्त्या पितॄनप्यत्र देववत् इति ॥

अत्र सत्यवसुसंज्ञका विश्वे देवाः ।

नान्दीश्राद्धे सत्यवसू इतिवचनात् ।

अत्र नवदैवत्यं श्राद्धं बहुषु स्मृतिषूपलभ्यते । कात्यायनश्राद्धकल्पे स्वधावचने षण्णामेवोल्लेखात् मातॄणामनुल्लेखात् कातीयानां षड्दैवतमेवेति केचित् । अतएव—

षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।

इति छन्दोगपरिशिष्टं सङ्गच्छते ।

अन्येतु पूर्वोक्तं वचनं कोकिलमताभिप्रायेण, तेषां मातृमातामहपार्वणयोः पृथगभावात् । अन्येषां नवदैवतमेव बहुषु स्मृतिषु तथैवोपलम्भादित्याहुः ।

कात्यायनानां सूत्रे परिशिष्टे च तथोपलम्भात् तेषां गोभिलीयानां च षड्दैवतम् अन्येषां नवदैवतम् । छन्दोगपरिशिष्टवचनस्य कोकिलमतानुसार्यभिप्रायकत्वे स्वधावाचनसूत्रे मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्य इत्युल्लेखो नोपपद्यते । तेषां मते वृद्धप्रमातामहस्य श्राद्धदेवतात्वाभावात् इति संस्कारगणपतौ ।

तत्परिशिष्टस्य कात्यायनकृतत्वेऽपि छन्दोगानुद्दिश्यैव करणात् छन्दोगानां षड्दैवतमन्येषां नवदैवतमेवेति स्वारसिकोऽर्थः । षड्भ्य इति वचनं मात्रादेरप्युपलक्षणमिति कल्पत-

रुः । जीवन्मात्रादित्रिकपरमिति श्राद्धकल्पः । वस्तुतस्तु षड्भ्यः पितृभ्य इत्यस्य शातातपादिवचनैकवाक्यतालाघवात् आनन्तर्यमात्रविधायकत्वात् न संख्यायां तात्पर्यम् इति न कोऽपि विरोधशङ्कावकाशः इति निष्कण्टकः पन्थाः ।

"पूर्वाह्णे" इत्यनेनापराह्णनिषेधः । "पित्र्यमन्त्रवर्जं जप" इत्यनेन अस्मत्सु ब्राह्मणेषु उदीरतामवरइत्यादिः यः पितृजप उक्तः स प्रतिषिध्यते न त्वायन्तुन इत्यादिः । पित्र्यमन्त्रइतिसंज्ञाशब्दत्वात्, अस्य चावाहनार्थत्वात् । तिलोऽसीतिपदस्थाने यवोऽसीत्यूहः कार्यः,

तिलोऽसीतिपदस्थाने यवोऽसीति पदं वदेत् ।
स्वधयेतिपदस्थाने पुष्याशब्दं वदेदिह ॥
पितॄनिति पदात्पूर्वं वदेन्नान्दीमुखानिति-

इत्याश्वलायनवचनात् । न स्वधां प्रयुञ्जीतेतिनिषेधः स्वायत्तवाक्ये, न तु वैदिकमन्त्रादावपि । अन्यथा स्वधास्थेति मन्त्रभागे स्वाहास्थेतिपदोहः स्यात् । नचेष्टापत्तिः, शिष्टाचारविरोधात्-इति वाचस्पतिमिश्रादयः ।

पुराणसमुच्चये—

न स्वधाशर्मवर्मेति पितृनाम न चोच्चरेत् ।
न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः ॥
न तिलैर्नापसव्येन पित्र्यमन्त्रविवर्जितम् ।
असमच्छन्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित्-इति ॥

अत्र "पितृनाम नचोच्चरेत्" "असमच्छन्दं न कुर्वीत" इति-शाखान्तरविषयं, स्वशाखायां न स्वधां प्रयुञ्जीतेतिस्वधाशब्दमात्रनिषेधस्योपलम्भात् ।

गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत् ।

इति नान्दीश्राद्धे गोत्रनामोच्चारणस्य छन्दोगपरिशिष्टे कात्यायनेन स्पष्टं विधानाच्च । गोत्रादिनिषेधानामन्यशाखीयविषयत्वादेव संबन्धनिषेधोऽपि तद्विषय एव। तस्मात् कात्यायनमतानुसारिणां नान्दीश्राद्धे संबन्धादिकथनं भवत्येवेति गदाधरादयः । अतएव मदनरत्ने दानखण्डे टोडरमिश्रपद्धतौ च आभ्युदयिकश्राद्धे सर्वत्र गोत्रशर्मशब्दनाम्नामुच्चारणं लिखितम् । संबन्धाद्युच्चारणे क्रमनियममाह हेमाद्रौ भृगुः—

गोत्रसंबन्धनामानि पितृकर्मणि कीर्तयेत् ।

तत्रैव व्यासः—गोत्रसम्बन्धनामानि पितॄणामनुकीर्तयन् ।
एकैकस्य तु विप्रस्य अर्घपात्रं विनिक्षिपेत् ॥

याज्ञवल्क्योऽपि—गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्वशः—इति । अन्यादृशक्रमः शाखान्तरविषयः । माध्यंदिनादीनां याज्ञवल्क्योक्तक्रमस्यैवोपादातुमुचितत्वात् । तस्य च तेषां गुरुत्वात् । संकल्पादौ विशेषः—

शुभाय प्रथमान्तेन वृद्धौ संकल्पमाचरेत् ।
न षष्ठ्या न चतुर्थ्या वा संबुद्ध्या वा कदाचन ॥

कात्यायनः—

प्रातरामन्त्रितान् विप्रान् युग्मानुभयतः स्थितान् ।
उपवेश्य कुशान् दद्यात् ऋजुनैव हि पाणिना ॥

तथाचात्र श्राद्धदिने प्रातरेवामन्त्रणं न ॥ विकृतिन्यायप्राप्तपाक्षिकपूर्वदिने। वैकृतविशेषविधेरधिकबलत्वात् । पिण्डदानं त्वत्र प्राङ्मुख एव कुर्यात् ।

संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्तथा—इतिवचनात्।

अत्र मात्रादिपिण्डानां दक्षिणे पित्रादिपिण्डा देयाः, तद्दक्षिणे मातामहादिपिण्डाः, प्रदक्षिणमुपचार इतिकात्यायनसूत्रा-

देः प्रादक्षिण्येनैव पिण्डानां दानसिद्धेरिति केचित्। तन्न।

प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत्।
अपः क्षिपेन्मूलदेशे ऽवनेनिक्ष्वेति निस्तिलाः॥
द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः।
मातामहप्रभृतींस्तु तेषामेवहि वामतः॥

इति परिशिष्टे विशेषस्मृतेः तेषां पित्राद्यवनेजनस्थानानां वामत उत्तरतः मातामहाद्यवनेजनस्थाने सिद्धे "यथाऽवनिक्तं पिण्डान् ददाति" इति वचनात् तत्रैव पिण्डदाने प्रवामत्वस्यैव सिद्धेः। एवं च मात्रादिपिण्डापेक्षया पितृपिण्डानामपि प्रवामतैव। एकत्र निर्णीत इति न्यायात्। नच प्रत्यङ्मुखोपविष्टानां पितॄणां तद्ब्राह्मणानां वा वामत इत्येव परिशिष्टवचनार्थः, तेन प्रादक्षिण्यलाभ एवेति वाच्यम्। तेषामित्यनेन पूर्वप्रक्रान्तानाम् आस्तरणकुशानामवनजेनस्थानानां वा प्रत्यवमर्शौचित्यात्। किंच प्रत्यङ्मुखतायां प्रमाणाभावात् प्राङ्मुखेषूदङ्मुखो दद्याद उदङ्खेभ्यः प्राङ्मुखो वेत्येव श्रुतेरिति। अत्र मात्रादीनां नवानामपि नान्दीमुखत्वविशिष्टानां देवतात्वमिति सर्वत्र त्यागवाक्ये नान्दीमुखपदं प्रक्षिप्य प्रयोगः कर्तव्यः। अन्यत्र तु आवाहनस्वधावाचनादिविशेषोपदेशस्थले विशेषोपदेशादेव।

मात्रादिषु नान्दीमुखशब्दः ङीपन्तः प्रयोक्तव्य इति हेमाद्र्यादिनिबन्धेषु। टावन्तः प्रयोक्तव्य इति स्मृतिकौस्तुभादिषु। उभयविधोऽपि प्रयोगः साधुरेव। स्वाङ्गाच्चोपसर्जनादित्यस्य वैकल्पिकत्वात्। नच नखमुखात्संज्ञायामिति निषेधः शङ्क्यः। संकेतस्थानादित्वेन आधुनिकसंकेतत्वरूपसंज्ञात्वाभावेन विश्वेषां देवानामित्यादौ संज्ञात्वप्रयुक्तसर्वनामत्वनिषेधाभाववत् अत्रापि तदप्रवृत्तेः।

यत्तु—नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
वाक्यमुच्चारयेद्धीमान् अन्यत्र पितृपूर्वकम् ॥

इति वचनात् कन्यादानवाक्यस्य यथा प्रपितामहपूर्वकत्वं तथा नान्दीमुखश्राद्धेऽपि प्रपितामहपूर्वकत्वमिति कश्चित्, तन्न । प्रकृतवचनस्थनान्दीमुखपदस्य विवाहविशेषणत्वेनोपपत्तेः । चकारस्य च पूर्वोक्तसमुच्चयपरत्वेनाप्युपपन्नत्वात् । तेन नान्दीमुखे विवाहे यद् दानवाक्यम्, अर्थात् कन्यायाः, तत् कन्यायाः प्रपितामहपूर्वकं कार्यम् । येनापौत्रीमुपक्रामेदिति वचनात् । आभ्युदयिकश्राद्धसूत्रे— "नान्दीमुखाः पितरः पितामहाः प्रपितामहाः" इति पितृपूर्वकत्वस्यैवोल्लेखाच्च । तस्मात् नान्दीमुखश्राद्धे न प्रपितामहपूर्वकत्वोल्लेखो युक्त इति । इदं च नान्दीमुखश्राद्धं पिण्डरहितमपि कर्तुमर्हति । तदाह—

मार्कण्डेयपुराणे—पिण्डनिर्वपणं कुर्यान्नवा कुर्याद् विचक्षणः।
वृद्धिश्राद्धे कुलाचारदेशकालाद्यवेक्ष्य हि ॥

परंत्वस्मिन्कल्पे आवाहनादिनिवृत्तिरपि । तदुक्तम्—

अग्नौकरणमर्घ्यं च आवाहनावनेजनम् ।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्जयेदिति ॥

इदं च श्राद्धं क्वचिदङ्गम् । तदुक्तं भविष्यपुराणे—

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमिष्यते ॥ इति ।

पुत्रजन्मादौ नैमित्तिकम्,

नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम् ।
पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः ॥

इति मार्कण्डेयपुराणवचनात्। एतच्चोपलक्षणं, पुत्रविवाहादावपि तद् नैमित्तिकमेव । निमित्तसप्तमीश्रवणात् । नवगृहप-

वेशादौ च, "नालौकिकं लौकिकर्मादिम्" इति न्यायात्। एवञ्च पितरि देशान्तरस्थे जीवति मृते वा आभ्युदयिकं विना पुत्रविवाहे नाङ्गवैगुण्यम्। न वा पितुर्नैमित्तिकाकरणेन प्रत्यवायः, निमित्ताज्ञानेनानाधिकारात्।

नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमारभेत्—

इति शातातपवाक्ये पितृपदं श्राद्धार्हपितृपरम्, न तु सम्बन्धिशब्दत्वेन स्वपितृपरम्। कर्त्रन्तरेण संस्कार्यपितामहादिश्राद्धाकरणप्रसङ्गात्। नचेष्टापत्तिः। सकलशिष्टाचारविरोधात्। "तस्याभावे तु तत्क्रमात्" इतिविधिविरोधाच्च। उक्तशातातपवाक्ये कर्मपदं यत्राभ्युदयिकं निषिद्धं तदतिरिक्तवैदिककर्मपरम्।

अथ नान्दीश्राद्धे कर्तृनिर्णयः।

प्रयोगरत्ने—नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्॥

छन्दोगपरिशिष्टे—

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मणि।
पिण्डान् ओद्वहनात् तेषां तस्याभावे तु तत्क्रमात्॥ इति।

सुतसंस्कारेति सुतासुतपदयोर्विगृहीतयोः "पुमान् स्त्रिया" इत्येकशेषेण प्रयोगः, आउद्वहनादित्याङ् अभिविधौ। कन्यापुत्रविवाहेष्वित्यनेनैकवाक्यत्वात्। तेन आ उद्वहनात् विवाहपर्यन्तम् अपत्यसंस्कारजनककर्मणि जातकर्मनामकरणचूडाकरणोपनयनविवाहरूपे पिता स्वपितृभ्यः पिण्डान् दद्यात्। आभ्युदयिकश्राद्धं कुर्यादित्यर्थः। अङ्गमुखेन प्रधानविधेरेकवाक्यतालाघवात्। अन्यथा पिण्डदानमात्रापत्तिः। पुत्रस्य प्रथमविवाहएव आभ्युदयिकश्राद्धं पित्रा कार्यम्।

संस्कारके कर्मणि तद्विधानात् । द्वितीयादेश्च तदजनकत्वात् । संस्कारवति सजातीयसंस्कारानुत्पत्तेः । अत एव पुत्रस्य द्वितीयविवाहादौ न पितुः नान्दीश्राद्धानुष्ठानम् । अत्र—*तेषां संस्कार्यपितुः पितॄणां, *तस्याभावे संस्कार्यपितुरभावे, *तत्क्रमात् संस्कार्यपितरमादाय क्रमः तत्क्रमः तस्मात्—तथाच योऽन्यः संस्कारकर्ता स संस्कर्तव्यमाणवकादि-पितृपितामहप्रपितामहानां तत्पितृ—मातामहादीनां च श्राद्धं कुर्यात् इति समुदायार्थः संपद्यते । पितुरधिकस्यानुप्रवेशे अर्थात् वृद्धप्रपितामहस्य त्याग इति संप्रदायः । अत एव "पितृहीनस्य यो नामादिकर्ता स तदीयपितरमारभ्य आभ्युदयिकं कुर्यात्" इति तत्र तत्र व्याख्यातम् ।

नवीनास्तु— *तस्य संस्कार्यपितुः अभावे *तेषां संस्कार्यपितुः पितॄणामेव प्रकृततया प्रत्यवमर्शे तत्पितुः पितॄणाम् अर्थे दाने प्राप्ते संस्कार्यपितृक्रमस्यार्थत एव लाभे तत्क्रमादित्यस्य वैयर्थ्यापत्त्या तत्पदेन प्रस्तुतस्य सुतस्य प्रत्यवमर्शे तत्क्रमादित्यस्य संस्कार्यक्रमादित्यर्थो लभ्यते। तेन संस्करणीयो यथा करोति तथा पितुरभावे पित्रन्यः संस्कर्ता कुर्यादित्यर्थः । तथाच संस्करणीयपित्रादीनां तन्मातामहादीनां तन्मातृपितामह्यादीनां च श्राद्धं पित्रन्यः कुर्यादिति पर्यवसितोऽर्थः इत्याहुः ।

अत्र पूर्वमतमेव समीचीनम् । तथाहि—संस्करणीयपितुरन्तर्भावबलेन संस्करणीयवृद्धप्रपितामहस्य अर्थतस्त्यागात् सर्वेनाम्नः प्रस्तुतप्रत्यवमर्शकतया तेषामित्यनेन पूर्वप्राप्तानां षण्णां मध्ये पश्चान्नव स्यपितृभ्य इत्यनेन अप्राप्तस्य संस्करणीयपितुः तत्क्रमादित्यनेन श्राद्धदेवतात्वं विधीयतइ-

ति युज्यते । नचैवं नवीनमते संभवति । संस्करणीयक्रमे पूर्वमाप्तानां षण्णां मध्ये संस्करणीयपितामहमपितामहयोरेवानूद्यतया बहुवचनानुपपत्तेः । नच तेषामित्यनेन संस्कार्यपितॄणामेव परामर्शः । अप्रस्तुतत्वात् । तस्मात् तं संस्कार्यपितरमादाय क्रमस्तत्क्रम इति व्याख्यानमेव रमणीयम् । अन्यथा तत्पदेनोपसर्जनपरामर्शापत्तिः । पितृपरामर्शे तु न तथा । स्वपितृभ्यः पिता दद्यादित्यत्र पितुरनुपसर्जनत्वात् । नचानुवादापत्तिः । अप्राप्तसंस्करणीयपितृविधायकत्वात् । मांसभागस्य तदुपकारकत्वेनोपदेशात् । भूतभव्यसमाहारे भूतं भव्यायोपदिश्यतइति न्यायात् । किञ्च-तदभावे इत्यत्र पितुरेव परामर्श इत्याविवाद एव । एवञ्चाव्यवहितोच्चरिततत्पदेनापि स एव परामृश्यते अत्यन्तसंन्निधेरिति ।

पितरि जीवति अन्यः संस्कर्ता संस्करणीयपितृक्रमेणैव श्राद्धं कुर्यात् ।

अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् ।

पिता कुर्यात्तदन्यो वा तस्याभावे च तत्क्रमात्-

इतिवचनात् वाकारस्वरसाचस्य पितृवत्कर्तव्यत्वप्रतीतेः । तस्याभावे तस्य पितुः सुतसंस्कर्तृत्वाभावे, न तु मरणे । नानानिबन्धविरोधात्, आकाङ्क्षानुरोधाच्च। आभ्युदयिकश्राद्धेऽकृतसपिण्डनो नाधिकारी । तदुक्तम्-

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।

सहपिण्डक्रियां कृत्वा पश्चादभ्युदयं चरेदिति ॥

जीवत्पितृकोऽपि सुतसंस्कारादावाभ्युदयिके पितुर्मात्रादिभ्यः कुर्यात् । मदृहे-

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥ इति।

संन्यस्ते जीवतीत्यर्थः। अत्र वृद्धौ तीर्थे चेत्यनेकनिमित्तसमावेशे वाक्यभेदात् "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यादाविव वृद्धितीर्थादिपदैः जीवत्पित्रधिकारिकं श्राद्धमात्रं लक्ष्यते। छन्दोगपरिशिष्टे कात्यायनोऽपि—

पितुः पितृभ्यो वा दद्यात् सपितेत्यपरा श्रुतिः इति'।

विष्णुः— पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात् तेषां कुर्यात्, पितरि पितामहे च जीवति येषां पितामहः, (कुर्यात् तेषां कुर्यात्) पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्।

आश्वलायनगृह्यपरिशिष्टे तु—जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्, तस्यां जीवन्त्यां पितृमातामहयोः कुर्यात्, पित्रोर्जीवतोः मातामहस्यैव कुर्यात्, त्रिषु जीवत्सु न कुर्यात् इत्युक्तम्। यत्तु पितरि पितामहे प्रपितामहे च जीवति न कुर्यादिति विष्णुवचनं तत् जीवत्पित्रादित्रिकं यस्य तत्कर्तृकतीर्थश्राद्धविषयम्। श्राद्धमिति सामान्येनैवोपक्रमात्। एवमेव रुद्रकल्पद्रुमे कल्पतरौ हलायुधभाष्ये च व्यवस्थापितम्। स्वोद्वाहादिनिमित्तकवृद्धिश्राद्धे तु पितरि पितामहे प्रपितामहे च जीवति वृद्धप्रपितामहादिभ्यो दद्यात्।

दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदा—इति निगमोक्तेः।

जीवन्मातृकस्य च न मातृपार्वणम्, जीवन्मातामहस्य न मातामहपार्वणम् द्वारलोपात्। अत्र च "जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात् तस्यां जीवन्त्यां पितृमातामहयोः कुर्यात्, पित्रोर्जीवतोः, मातामहस्यैव कुर्यात्"

इत्याश्वलायनवाक्येन "न जीवन्तमतिक्रम्य प्रेतेभ्यो ददातीति श्रुतेः" इति कात्यायनसूत्रस्यैकवाक्यतया सुतसंस्कारेषु वर्गीयाद्यजीवने तद्वर्गं परित्यज्यैव नान्दीश्राद्धं जीवत्पितृकेण कार्यम्, नतु " येभ्य एव पिता दद्यात्" इतिवचनानुसारेण पितुः पित्रादीनामपि श्राद्धं कार्यम् । एतेन पितुः पित्रादिश्राद्धेन सह स्वमात्रादिश्राद्धं वदन्तः परास्ताः । अत एव-

पितृवर्गे मातृवर्गे तथा मातामहस्य च ।

जीवेत्तु यदि वर्गाद्यस्तं तु वर्गं परित्यजेत् ।

इति वचनमपि सङ्गच्छते ।

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।

तीर्थे ब्राह्मणआयाते षडेते जीवतः पितुः ॥

इति मैत्रपरिशिष्टमुदाहृत्य-

येभ्य एव पिता दद्यात् तेभ्यो दद्यात् स्वयं सुतः ।

इत्येतत्समानार्थो "पितरि जीवति यः श्राद्धं कुर्यात् स येषां पिता कुर्यात् तेषां कुर्यात्" इत्यादिका विष्णुस्मृतिरुदाहृता स्वोद्वाहादिनिमित्तकनान्दीश्राद्धविषयेति न विरोधः । वर्गत्रयाद्यजीवनेतु सुतसंस्कारेषु " त्रिषु जीवत्सु नैव कुर्यात्" इति आश्वलायनोक्त्या नैव श्राद्धं कुर्यात् इति न सुतसंस्कारेषु येभ्य एव पिता दद्यात् इत्यस्य स्वीकारापत्तिः। विस्तरस्तु रुद्रकल्पद्रुमे द्रष्टव्यः । धर्मसिन्धुकारोऽपि इत्थमेव वचनानां व्यवस्थामभिप्रेत्य येभ्य एव पिता दद्यादिति पक्षस्य वर्गाद्यजीवने तत्पार्वणलोपपक्षस्यच द्वितीयविवाहादिस्वसंस्कार-सुतसंस्कारभेदेन व्यवस्थामङ्गीचकार । पक्षद्वयस्यैच्छिकत्वं च केचित्तु इत्यादिना प्रतिपादयामास । येभ्य एव पिता दद्यादिति पक्षमेव सर्वत्राङ्गीकृत्य तत्र च स्वेन पित्रा वा श्राद्धकरणे

पितॄणां समानत्वात् पितरि जीवति मृतसंस्कारेषु द्वितीयविवाहादिस्वसंस्कारेषुच सर्वत्र पित्रैव नान्दीश्राद्धं कर्तव्यं समाचारात् इति वदन्ति । सर्वत्र येभ्य एवेति पक्षस्य स्वीकारेऽपि नान्दीश्राद्धं स्वेनैवानुष्ठेयम्, वचनेन तथैव बोधनादिति युक्तं पश्यामः । गर्भाधानस्य साक्षात्सुतसंस्कारत्वाभावेऽपि स्वसंस्कारत्वाभावात् तत्रापि जीवेत्तु यदि वर्गाय इति द्वारलोपपक्ष एवाश्रयणीयो व्यवस्थितत्वपक्षे । ऐच्छिकत्वपक्षे तु न शङ्केति दिक् ।

अथ पुण्याहवाचनम् । यद्यपि—

आदौ प्रधानसङ्कल्पस्ततः पुण्याहवाचनम् ।
मातृपूजा ततः कार्या वृद्धिश्राद्धं ततः स्मृतम् ॥

इति वाचस्पतिमिश्रोक्तेखात् मातृपूजनात्पूर्वमेव पुण्याहवाचनं प्रतीयते, तथापि दानखण्डे, मदनरत्ने, सर्वासु ग्रहयज्ञप्रयोगादिपद्धतिषु च आभ्युदयिकानन्तरमेवोक्तत्वात् आभ्युदयिकानन्तरकरणमपि प्रामाणिकमेव । भट्टकुमारिलकारिकासु स्वस्तिवाचनप्रकरणे "आद्यन्ते प्रयोक्तव्यम्" इत्यत्र आदिपदेन च वृद्धिश्राद्धानन्तरं कर्मादौ स्वस्तिवाचनमिति लभ्यते। तथाच प्रयोगपारिजाते—

गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि ।
वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥ इति ।

कारिकाकारेण कुमारिलेन चौलादावपि तथैव प्रयोगः प्रदर्शितः—

शुक्लपक्षे शुभर्क्षे तु कृत्वाऽभ्युदयिकं तथा ।
यथाऽन्वयं वा केषाञ्चिन्नू उपनीत्या सहेष्यते ॥
स्वस्त्यादि वाचयेत्पूर्वं वृद्धिपूर्तेषु कर्मसु—इति वदता ।

उपनयनादौ शौनकोऽपि—

अश्नीयुः कृतस्नानखूपणः स्वस्तिवाचनम्—

इति वदन् तथैवाभिप्रैति ।

स्वस्तिवाचनप्रयोगेऽपि कुमारिलेन "प्रस्तुत्य देवतां यान्तु" इत्यनया कारिकया प्रधानकर्मनिष्ठा स्वस्तिवाचनस्याङ्गप्रधानतैव बोधिता ।

आचार्येणापि शास्त्रेऽस्मिन् मङ्गलार्थमुदीरितम्—

इति कुमारिलोक्तेश्च आभ्युदयिकानन्तर्यमेव पुण्याहवाचनस्य लभ्यते, मङ्गलस्य श्राद्धानन्तरमेव कर्तव्यत्वात् । तस्मात् आभ्युदयिकानन्तरमेव पुण्याहवाचनमिति संप्रदायः ।

वैद्यनाथकृतरुद्रपद्धतौ—

सोंकारं ब्राह्मणे कुर्यात् निरोंकारं महीपतौ ।
उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्तितम् ॥

वैश्ये शूद्रे च उपांशु स्वस्ति प्रकीर्तितम् इति संबन्धः ।

ग्रहतत्त्वदीपिकायां—

पुण्याहवाचने विप्राः युग्मा वेदविदः शुभाः ।
यज्ञोपवीतिनः शस्ताः प्राङ्मुखाः स्युः पवित्रिणः ॥
गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः ।
आसीनाः पश्चिमे भागे पूर्णकुम्भस्य सत्तमाः–इत्यादि ॥

शौनककारिकायां—

पुण्याहं वाचयिष्येऽहम् इति वाचयिता वदेत् ।
वाच्यतामिति भाषन्ते वक्तारश्च सुचेतसः ॥
ओमुक्तिपूर्वं पुण्याहं भवन्त इति भाषते ।
ब्रुवन्त्विति परं, ब्रूयुः ओंपुण्याहमितीतरे ॥
पुनरप्येवमेव द्विः कृत्वा पुण्याहवाचनम्–इति ।

ओमुक्तिपूर्वं ब्रुवन्त्विति परं पुण्याहं भवन्त इति यजमानो भाषते इत्यर्थः ।

विधानपारिजाते–

पुण्याहादेस्त्रिरभ्यासे मन्द्रमध्योच्चनिस्वनम् ।

श्रावयेरन् इमे सर्वे यथागमपरम्परम् ॥

एवम् ऋद्धिं (वृद्धिं) कल्याणं स्वस्ति श्रियं(शान्तिम्) इति ।

रूपनारायणादयस्तु—यजमानः प्राङ्मुखस्त्र्यधिकान् ब्राह्मणानुपवेश्य चन्दनवस्त्रताम्बूलादिभिः परितोष्य ओं पुण्याहं भवन्तो ब्रुवन्त्विति त्रिस्तान् श्रावयेत्, ते च ओं पुण्याहमिति त्रिर्ब्रूयुः । ओं स्वस्ति भवन्तो ब्रुवन्त्विति त्रिस्तान् श्रावयेत्, ओं स्वस्तीति ते त्रिर्ब्रूयुः । ऋद्धिं भवन्तो ब्रुवन्त्विति त्रिस्तान् श्रावयेत् , ओंम् ऋध्यतामिति ते त्रिर्ब्रूयुः । इदं ब्राह्मणस्यैव सोंकारं क्षत्रियादिकस्य निरोङ्कारम् । ततः कुशाग्रैः सपल्लवैः विप्रा अभिषिञ्चेयुः । ततः सुवासिनीभिर्नीराजनं कारयेत् । अभिषेकमन्त्राः स्मृत्यन्तरोक्ताः–

चतुःस्वस्ति, पयःपञ्च, विष्णोःषट्, द्वादशदेवताः ।

मातःषट्, पञ्चभगः, पञ्चैन्द्रैः, पञ्चवारुणैः ॥

षड्वातैः, शान्तिरष्टौ, जपान्मृत्युर्विनश्यति ।

स्वस्तिनइन्द्रो, पयःपृथिव्याम्, विष्णोरराटमसि, अग्निर्देवता, मातरग्निम्, भगप्रणेतः, त्रातारमिन्द्रम्, वरुणस्योत्तम्भनमसि, समुद्रायत्वावाताय, द्यौः शान्तिः–एते मन्त्राः चतुःस्वस्त्यादिशब्दैः ज्ञेयाः । कण्वशाखायां द्यौः शान्तिरितिमन्त्रे अष्टावेव शान्तिशब्दा उपात्ता इति तदभिप्रायेण कारिकायां संस्कारगणपत्युक्तायां शान्तिरष्टौ इत्युल्लेखः । अन्ये च अभिषेकमन्त्राः प्रयोगे वक्ष्यन्ते ।

कात्यायनेन क्वचिदपि पुण्याहवाचनस्यानुक्तत्वात् केचित् माध्यन्दिना बह्वृचपरिशिष्टोक्तप्रकारेण पुण्याहवाचनमाचरन्ति। अन्ये पुनः हिरण्यकेशिगृह्याद्युक्तरीत्या ब्राह्मणानां पूजनपूर्वकं वरणं कृत्वा तदाचरन्ति । कलशस्थापनादिप्रकारस्य तदनुक्तत्वान्न तदनुष्ठानं तैः क्रियते । स प्रकारश्च प्रयोगे स्फुटीभविष्यति ।

अथ ग्रहयागः ।

स च नित्यनैमित्तिककाम्यभेदात् त्रिविधः । अयनविषुवोपरागादिषु नित्यः । गर्भाधानादिसंस्कारकर्मसु नैमित्तिकः । विपदपगमसम्पदादिकामेषु काम्यः । तथाच शौनकः,

ग्रहशान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम्
पुण्येऽहनि शुभे वारे कुर्याद्वाऽथ त्रिजन्मसु ॥
अयने विषुवे चैव सोमसूर्योपरागयोः ।
ग्रहाणामुग्रचेष्टानामेतां शान्तिं समाचरेत् ॥
नित्योऽयं ग्रहयज्ञः स्यात्, नैमित्तिक इतः परः
गर्भाधानादिसंस्कारकर्मस्वपि विशेषतः, ॥
कार्यारम्भेषु सर्वेषु नववेश्मप्रवेशने ।
आरोग्यस्नानसमये संक्रान्तौ रोगसम्भवे ॥
अभिचारे च यः कुर्याद् ग्रहपूजां विधानतः ।
सोऽभीष्टफलमाप्नोतीति ।

रुद्रपद्धतौ,

आदौ विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्मणां सिद्धिमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥

कर्मतत्त्वदीपिकायां—

विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ।

निर्विघ्नार्थे मुनिश्रेष्ठ तथोद्वेगोद्भवेषु च ॥
वश्यकर्माभिचारेषु तथैवोच्चाटनादिषु ।
नवग्रहमखं कृत्वा ततः काम्यं समाश्रयेत्–इति ॥

ग्रहानाह तत्रैव—

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥
गृहस्योत्तरपूर्वेण मण्डपं कारयेद् बुधः ।
रुद्रायतनभूमौ वा चतुरस्रमुदक्प्लवम् ॥
दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः ।
तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः ॥

स्कान्दे—

नवग्रहमखे कुण्डं हस्तमात्रं समं भवेत् ।
चतुरस्रमधोहस्ते योनिवक्त्रं समेखलम् ॥
चतुरङ्गुलविस्तारा मेखलास्तद्वदुच्छ्रिताः ।
मानहीनाधिकं कुण्डमनेकभयदं भवेत् ॥

मात्स्ये अध्याये ९३–

सूत उवाच ।

वैशम्पायनमासीनमपृच्छच्छौनकः पुरा ।
सर्वकामाप्तये नित्यं कथं शान्तिक–पौष्टिकम् ॥ १ ॥

वैशम्पायन उवाच ।

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समारभेत् ।
वृद्ध्यायुःपुष्टिकामो वा तथैवाभिचरन् पुनः ।
येन ब्रह्मन् विधानेन तन्मे निगदतः शृणु ॥ २ ॥
सर्वशास्त्राण्यनुक्रम्य संक्षिप्य ग्रन्थविस्तरम् ।

ग्रहशान्तिं प्रवक्ष्यामि पुराणश्रुतिचोदिताम् ॥ ३ ॥
पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ।
ग्रहान् ग्रहाधिदेवांश्च स्थाप्य होमं समारभेत् ॥ ४ ॥
ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिकोविदैः ।
प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परम् ॥ ५ ॥
तृतीयः कोटिहोमस्तु सर्व्वकामफलप्रदः ।
अयुतेनाहुतीनाञ्च नवग्रहमखः स्मृतः ॥ ६ ॥
तस्य तावद्विधिं वक्ष्ये पुराणश्रुतिभाषितम् ।
गृहस्योत्तरपूर्व्वेण वितस्तिद्वयविस्तृताम् ॥ ७ ॥
वप्रद्वयावृतां वेदिं वितस्त्युच्छ्रयसम्मिताम् ।
संस्थापनाय देवानां चतुरस्रामुदङ्मुखाम्[१*] ॥ ८ ॥
अग्निप्रणयनं कृत्वा तस्यामावाहयेत् सुरान् ।
देवतानां ततः स्थाप्या विंशतिर्द्वादशाधिका ॥ ९ ॥
सूर्य्यः सोमस्तथा भौमो बुध–जीव–सितार्कजाः ।
राहुः केतुरिति प्रोक्ता ग्रहा लोकहितावहाः ॥ १० ॥
मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ।
उत्तरेण गुरुं विद्याद् बुधं पूर्व्वोत्तरेण तु ॥ ११ ॥
पूर्व्वेण भार्गवं विद्यात् सोमं दक्षिणपूर्व्वके ।
पश्चिमेन शनिं विद्याद्राहुं पश्चिमदक्षिणे ।
पश्चिमोत्तरतः केतुं स्थापयेच्छुक्लतण्डुलैः ॥ १२ ॥
भास्करस्येश्वरं विद्यादुमाञ्च शशिनस्तथा ।
स्कन्दमङ्गारकस्यापि बुधस्य च तथा हरिम् ॥ १३ ॥

---

१* ग्रहवेदिं कुर्यात् तस्यां च शुक्लव्रीहितण्डुलैः सकर्णिकमष्टदलमम्बुजमुल्लिख्य कर्णिकायां दलेषु च यथास्थानं ग्रहपीठानि स्थापयेदिति आश्वला० गृ० प० अ० २।२ विशेषः ।

ब्रह्माणञ्च गुरोर्विद्याच्छुक्रस्यापि शचीपतिम् ।
शनैश्चरस्य तु यमं राहोः कालं तथैव च ॥ १४ ॥
केतोश्च चित्रगुप्तञ्च सर्व्वेषामधिदेवताः ।
अग्निरापः क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवता ॥
प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदेवताः ॥ १५ ॥
विनायकं तथा दुर्गां वायुमाकाशमेव च ।
*आवाहयेद् व्याहृतिभिस्तथैवाश्विकुमारकौ ॥ १६ ॥
संस्मरेद्रक्तमादित्यमङ्गारकसमन्वितम् ।
सोम–शुक्रौ तथा श्वेतौ बुध–जीवौ च पिङ्गलौ ।
मन्द–राहू तथा कृष्णौ धूम्रं केतुगणं विदुः ॥ १७ ॥
ग्रहवर्णानि देयानि वासांसि कुसुमानि च ।
धूपामोदोऽत्र सुरभिरुपरिष्टाद्वितानकम् ।
शोभनं स्थापयेत् प्राज्ञः फलपुष्पसमन्वितम् ॥ १८ ॥
गुडौदनं रवेर्दद्यात् सोमाय घृतपायसम् ।
अङ्गारकाय संयावं बुधाय क्षीर–षष्टिकम् ॥ १९ ॥
दध्योदनञ्च जीवाय शुक्राय च गुडौदनम् ।
शनैश्चराय कृसरमजामांसञ्च राहवे ।
चित्रौदनञ्च केतुभ्यः सर्व्वभक्ष्यैरथार्चयेत् ॥ २० ॥
प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम् ।
चूतपल्लवसंछन्नं फलवस्त्रयुगान्वितम् ॥ २१ ॥
पञ्चरत्नसमायुक्तं पञ्चभङ्गसमन्वितम् ।

---

* आवाहनपूजनादिप्रकारश्च आश्वला० अ.२। खं. ४–५ विस्तरेणोक्तस्तत एवावगन्तव्यः । अत्रापि प्रयोगे संक्षेपेण वक्ष्यते ।

इन्द्रादिदिक्पालानां वास्तोष्पतेः क्षेत्राधिपतेश्चावाहनं मदनरत्नसंग्रहस्थ कारिकामुल्लिख्य संस्कारभास्करे आश्वला.प.चोक्तम् ।

[१]स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत् ॥ २२ ॥
गङ्गाद्याः सरितः सर्व्वाः समुद्राश्च सरांसि च ।
गजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलात् ॥ २३ ॥
मृदमानीय विप्रेन्द्र सर्वौषधिजलान्वितम् ।
स्नानार्थं विन्यसेत् तत्र यजमानस्य धर्म्मवित् ॥ २४ ॥
सर्व्वे समुद्राः सरितः सरांसि च नदास्तथा ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ २५ ॥
एवमावाहयेद्देवानमरान् मुनिसत्तम ।
होमं समारभेत् सर्पिर्यव-व्रीहि-तिलादिना ॥ २६ ॥
अर्कः पलाश[२]-खदिरावपामार्गोऽथ पिप्पलः ।
औदुम्बरः शमी-दूर्वा-कुशाश्च समिधः क्रमात् ॥ २७
एकैकस्याष्टकशतमष्टाविंशतिरष्ट वा ।
होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ॥ २८ ॥
प्रादेशमात्रा अशिफा अशाखा अपलाशिनीः ।
समिधः कल्पयेत् प्राज्ञः सर्व्वकर्म्मसु सर्व्वदा ॥ २९ ॥
देवानामपि सर्व्वेषामुपांशु परमार्थवित् ।
स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् ॥ ३० ॥
होतव्यश्च घृताभ्यक्तं चरुभक्ष्यादिकं पुनः ।
मन्त्रैर्दशाहुतीर्हुत्वा होमं व्याहृतिभिस्ततः ॥ ३१ ॥
उदङ्मुखाः प्राङ्मुखा वा कुर्य्युर्ब्राह्मणपुङ्गवाः ।
मन्त्रवन्तश्च कर्त्तव्याश्चरवः प्रतिदैवतम् ॥ ३२ ॥

---

१ पञ्चगव्यानि पञ्चामृतानि नवपर्वतधातून् नवपवित्रमृदो नवरत्नानि प्रक्षिप्य दूर्वापल्लवैर्मुखमाच्छाद्य वस्त्रयुग्मेन वेष्टयित्वा समुद्रादीनि तीर्थान्यावाह्य कुम्भमभिमृश्य अष्टिलङ्गा वारुणीः पावमानीश्च जपेत् इतियादवला.गृ.प.अ. २।२। २ पलाशं पत्रं तद्रहिताः ।

हुत्वा च तांश्वक्रन् सम्यक् ततो होमं समाचरेत् ।
आकृष्णेनेति सूर्य्याय होमः कार्य्यो द्विजन्मना ॥ ३३ ॥
आप्यायस्वेति सोमाय मन्त्रेण जुहुयात् पुनः ॥
अग्निर्मूर्द्धादिवःककुदिति भौमाय कीर्त्तयेत् ॥ ३४ ॥
अग्नेविवस्वदुषस इति सोमसुताय वै ।
बृहस्पतेपरिदीयारथेनेति गुरोर्मतः ॥ ३५ ॥
शुक्रन्तेअन्यदिति च शुक्रस्यापि निगद्यते ।
शनैश्चराय तु पुनः शन्नोदेवीति होमयेत् ॥ ३६ ॥
कयानश्चित्रआभुवदिति राहोरुदाहृतः ॥ ३७ ॥
केतुंकृण्वन्निति ब्रूयात् केतुनामपि शान्तये ।
आवोराजेति रुद्रस्य बलिहोमं समाचरेत् ।
आपोहिष्ठेत्युमायास्तु स्योनेति स्वामिनस्तथा ॥ ३८ ॥
विष्णोरिदंविष्णुरिति तमीशेति स्वयम्भुवः ॥
इन्द्रमिद्देवतायेति इन्द्राय जुहुयात् ततः ॥ ३९ ॥
तथा यमस्य चायंगौरिति होमः प्रकीर्त्तितः ।
कालस्य ब्रह्मजज्ञानमिति मन्त्रः प्रशस्यते ॥ ४० ॥
चित्रगुप्तस्यानाज्ञातमिति मन्त्रविदो विदुः ॥
अग्निंदूतंवृणीमह इति वह्नेरुदाहृतः ॥ ४१ ॥
उदुत्तमंवरुणमित्यपां मन्त्रः प्रकीर्त्तितः ।
भूमेः पृथिव्यन्तरिक्षमिति वेदेषु पठ्यते ॥ ४२ ॥
सहस्रशीर्षापुरुष इति विष्णोरुदाहृतः ।
इन्द्रायेन्दोमरुत्वत इति शक्रस्य शस्यते ॥ ४३ ॥
उत्तानपर्णेसुभगे इति देव्याः समाचरेत् ।
प्रजापतेः पुनर्होमः प्रजापते इति स्मृतः ॥ ४४ ॥
नमोस्तुसर्पेभ्य इति सर्पाणां मन्त्र उच्यते ।

एषब्रह्मायज्ञस्त्विरम्य इति ब्रह्मण्युदाहृतः ॥ ४५ ॥
विनायकस्य चातूनइति मन्त्रो बुधैः स्मृतः ॥
जातवेदसे सुनवामेति दुर्गामन्त्र उच्यते ॥ ४६ ॥
आदित्प्रत्नस्यरेतस आकाशस्य उदाहृतः ।
प्राणाशिशुर्म्महीनाञ्च वायोर्मन्त्रः प्रकीर्त्तितः ॥ ४७ ॥
एषोउषाअपूर्व्याइत्यश्विनोर्मन्त्र उच्यते ।
पूर्णाहुतिस्तु मूर्द्धानंदिव इत्यभिपातयेत् ॥ ४८ ॥
अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ।
पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखम् ॥ ४९ ॥
अव्यङ्गावयवैर्ब्रह्मन् हेमस्रग्दामभूषितैः ।
यजमानस्य कर्त्तव्यं चतुर्भिः *स्नपनं द्विजैः ॥ ५० ॥
सुरास्त्वामभिषिञ्चन्तु ब्रह्म–विष्णु–महेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ।
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ ५१ ॥
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ।

---

* अथ यजमानाभिषेको ग्रहवेदे प्रागुदीच्यां शुचौ देशे संमृष्टालंकृते प्राक्प्रवणे चतुष्पादं दीर्घचतुरस्रं सोत्तरच्छदं पीठं निधाय तत्रोदगग्रानमूलान् हरितदर्भानास्तीर्य प्राङ्मुखं कर्त्तारं सामात्यमुपवेश्याचार्यः सहर्त्विग्भिः अभिषेककुम्भमादाय प्रत्यङ्मुखस्तिष्ठन्नौदुम्बर्याऽऽर्द्रया शाखया सपलाशया हिरण्मय्या सकुशदूर्वयाऽन्तर्धाय कुम्भोदकपृषद्भिरभिषिञ्चेत् अब्लिङ्गाभिर्वारुणीभिः पवमानीभिः अन्याभिश्च शान्तिपावित्र्यलिङ्गाभिः महाभिषेकमन्त्रैः समुद्रज्येष्ठा इति सूक्तेन सुरास्त्वामिति सूक्तेन च श्रीसूक्तेन इमा आपः शिवतमा इति त्र्यृचेन देवस्यत्वेतिच यजुषा भूर्भुवः स्वरिति च व्याहृतिभिरभिषिक्तस्तेभ्यो यथोक्तां दक्षिणां दद्यात् इति माधवा. विशेषः ।

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहितः शेषो दिक्पालास्त्वामवन्तु ते ॥ ५२ ॥
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुःशान्तिस्तुष्टिः कान्तिश्च मातरः ।
एतास्त्वामभिषिञ्चन्तु धर्म्मपत्न्यः समागताः ॥ ५३ ॥
आदित्यश्चन्द्रमा भौमो बुधो जीवः सितोऽर्कजः ।
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ ५४ ॥
देव-दानव-गन्धर्व्वा यक्ष-राक्षस-पन्नगाः ।
ऋषयो मुनयो गावो देवमातर एव च ॥ ५५ ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ।
अस्त्राणि सर्व्वशस्त्राणि राजानो वाहनानि च ॥ ५६ ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये ।
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये ॥ ५७ ॥
ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः ।
सर्व्वौषधैः सर्व्वगन्धैः स्नापितो द्विजपुङ्गवैः ॥ ५८ ॥
यजमानः सपत्नीक ऋत्विजः सुसमाहितान् ।
दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥ ५९ ॥
सूर्य्याय कपिलां धेनुं शङ्खं दद्यात् तथेन्दवे ।
रक्तं धुरन्धरं दद्याद्भौमाय च ककुद्मिनम् ॥ ६० ॥
बुधाय जातरूपन्तु गुरवे पीतवाससी ।
श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे ॥ ६१ ॥
आयसं राहवे दद्यात् केतुभ्यश्छागमुत्तमम् ।
सुवर्णेन समं कार्य्या यजमानेन दक्षिणा ॥ ६२ ॥
सर्व्वेषामथवा गावो दातव्या हेमभूषिताः ।

सुवर्णमथवा दद्याद् गुरुर्वा येन तुष्यति ।
मन्त्रेणैव प्रदातव्याः सर्व्वाः सर्वत्र दक्षिणाः ॥ ६३ ॥
कपिले सर्व्वदेवानां पूजनीयाऽसि रोहिणि ।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥ ६४ ॥
पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलम् ।
विष्णुना विधृतश्चासि ततः शान्तिं प्रयच्छ मे ॥ ६५ ॥
धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ ६६ ॥
हिरण्यगर्भगर्भस्त्वं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ ६७ ॥
पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् ।
प्रदानात् तस्य मे विष्णो ह्यतः शान्तिं प्रयच्छ मे ॥ ६८ ॥
विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ।
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥ ६९ ॥
यस्मात् त्वं पृथिवी सर्व्वा धेनुः केशवसन्निभा ।
सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ ७० ॥
यस्मादायस कर्म्माणि तवाधीनानि सर्व्वदा ।
लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे ॥ ७१ ॥
यस्मात् त्वं सर्व्वयज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ ७२ ॥
गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात् तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ ७३ ॥
यस्मादशून्यं शयनं केशवस्य च सर्व्वदा ।
शय्या ममाप्यशून्याऽस्तु दत्ता जन्मनि जन्मनि ॥ ७४ ॥
यतो रत्नेषु सर्व्वेषु सर्व्वे देवाः प्रतिष्ठिताः ।

ततो रत्नानि यच्छन्तु रत्नदानेन मे सुराः ॥ ७५ ॥
यतो भूमिप्रदानस्य कलां नार्हन्ति षोड़शीम् ।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह ॥ ७६ ॥
एवं सम्पूजयेद्भक्त्या वित्तशाठ्येन वर्ज्जितः ।
रत्न–काञ्चन–वस्त्रौघैर्धूपमाल्यानुलेपनैः ॥ ७७ ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्व्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥ ७८ ॥
यस्तु पीड़ाकरो नित्यमल्पवित्तस्य वै ग्रहः ।
तञ्च यत्नेन सम्पूज्य शेषानप्यर्च्चयेद्बुधः ॥ ७९ ॥
ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ।
पूजिताः पूजयन्त्येते निर्द्दहन्त्यवमानिताः ॥ ८० ॥
यथा वाणप्रहाराणां कवचं भवति वारणम् ।
तद्वद्दैवोपघातानां शान्तिर्भवति वारणम् ॥ ८१ ॥
तस्मान्न दक्षिणाहीनं कर्त्तव्यं भूतिमिच्छता ।
सम्पूर्णया दक्षिणया यस्माद्देवोऽपि तुष्यति ॥ ८२ ॥
सदैवायुतहोमोऽयं नवग्रहमखे स्थितः ।
विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्म्मसु ॥ ८३ ॥
निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाद्भुतेषु च ।
कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु ॥ ८४ ॥
सर्वकामाप्तये यस्माल्लक्षहोमं विदुर्बुधाः ।
पितॄणां वल्लभं साक्षाद्भुक्ति–मुक्तिफलप्रदम् ॥ ८५ ॥
ग्रहताराबलं लब्ध्वा कृत्वा ब्राह्मणवाचनम् ।
गृहस्योत्तरपूर्वेण मण्डपं कारयेद् बुधः ॥ ८६ ॥
रुद्रायतनभूमौ वा चतुरस्रमुदङ्मुखम् ।
दशहस्तमथाष्टौ वा हस्तान् कुर्य्याद्विधानतः ॥ ८७ ॥

प्रागुदक्प्लवनां भूमिं कारयेद्यत्नतो बुधः ।
प्रागुत्तरे समासाद्य प्रदेशं मण्डपस्य तु ॥ ८८ ॥
शोभनं कारयेत् कुण्डं यथावल्लक्षणान्वितम् ।
चतुरस्रं समन्तात् तु योनिवक्त्रं समेखलम् ॥ ८९ ॥
चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता ।
प्रागुदक्प्लवना कार्या सर्वतः समवस्थिता ॥ ९० ॥
शान्त्यर्थं सर्वलोकानां नवग्रहमखः स्मृतः ।
मानहीनाधिकं कुण्डमनेकभयदं भवेत् ।
यस्मात् तस्मात् सुसम्पूर्णं शान्तिकुण्डं विधीयते ॥ ९१ ॥
अस्माद्दशगुणः प्रोक्तो लक्षहोमः स्वयम्भुवा ।
आहुतीभिः प्रयत्नेन दक्षिणाभिस्तथैव च ॥ ९२ ॥
द्विहस्तविस्तृतं तद्वच्चतुर्हस्तायतं पुनः ।
लक्षहोमे भवेत् कुण्डं योनिवक्त्रं त्रिमेखलम् ॥ ९३ ॥
तस्य चोत्तरपूर्वेण वितस्तित्रयसंस्थितम् ।
प्रागुदक्प्लवनं तच्च चतुरस्रं समन्ततः ॥ ९४ ॥
विष्कम्भार्द्धोच्छ्रितं प्रोक्तं स्थण्डिलं विश्वकर्म्मणा ।
संस्थापनाय देवानां वप्रत्रयसमावृतम् ॥ ९५ ॥
द्व्यङ्गुलं ह्युच्छ्रितो वप्रः प्रथमः समुदाहृतः ।
अङ्गुलोच्छ्रयसंयुक्तं वप्रद्वयमथोपरि ॥ ९६ ॥
त्र्यङ्गुलस्य च विस्तारः सर्व्वेषां कथ्यते बुधैः ।
दशाङ्गुलोच्छ्रिता भित्तिः स्थण्डिले स्यात् तथोपरि ।
तस्मिन्नावाहयेद्देवान् पूर्व्ववत् पुष्पतण्डुलैः ॥ ९७ ॥
आदित्याभिमुखाः सर्व्वे साधिप्रत्यधिदेवताः ।
स्थापनीया मुनिश्रेष्ठ नोत्तरेण पराङ्मुखाः ॥ ९८ ॥
गरुत्मानधिकस्तत्र सम्पूज्यः श्रियमिच्छता ।

सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः।
विषपापहरो नित्यमतः शान्तिं प्रयच्छ मे ॥ ९९ ॥
पूर्व्ववत् कुम्भमामन्त्र्य तद्वद्धोमं समाचरेत्।
सहस्राणां शतं हुत्वा समित्संख्याधिकं पुनः।
घृतकुम्भवसोर्धारां पातयेदनलोपरि ॥ १०० ॥
औदुम्बरीं ततश्चोर्द्ध्वं ऋज्वीं कोटरवर्ज्जिताम्।
बाहुमात्रीं स्रुचं कृत्वा ततः स्तम्भद्वयोपरि।
घृतधारां तया सम्यगग्नेरुपरि पातयेत् ॥ १०१ ॥
श्रावयेत् सूक्तमाग्नेयं वैष्णवं रौद्रमैन्दवम्।
महावैश्वानरं साम ज्येष्ठसाम च वाचयेत ॥ १०२ ॥
स्नानञ्च यजमानस्य पूर्व्ववत् स्वस्तिवाचनम्।
दातव्या यजमानेन पूर्व्ववद्दक्षिणाः पृथक् ॥ १०३ ॥
काम-क्रोधविहीनेन ऋत्विग्भ्यः शान्तचेतसा।
नवग्रहमखे विप्राश्चत्वारो वेदवेदिनः ॥ १०४ ॥
अथवा ऋत्विजौ शान्तौ द्वावेव श्रुतिकोविदौ।
कार्य्यावयुतहोमे तु न प्रसज्येत विस्तरम् ॥ १०५ ॥
तद्वच्च दश चाष्टौ वा लक्षहोमे तु ऋत्विजः।
कर्त्तव्याः शक्तितस्तद्वच्चत्वारो वा विमत्सराः ॥ १०६ ॥
नवग्रहमखात् सर्व्वं लक्षहोमे दशोत्तरम्।
भक्ष्यान् दद्यान्मुनिश्रेष्ठ भूषणान्यपि शक्तितः ॥ १०७ ॥
शयनानि सवस्त्राणि हैमानि कटकानि च।
कर्णाङ्गुलिपवित्राणि कण्ठसूत्राणि शक्तिमान् ॥ १०८ ॥
न कुर्य्याद्दक्षिणाहीनं वित्तशाठ्येन मानवः।
अददल्लोभतो मोहात् कुलक्षयमवाप्नुते ॥ १०९ ॥
अन्नदानं यथाशक्त्या कर्त्तव्यं भूतिमिच्छता।

अन्नहीनः कृतो यस्माद् दुर्भिक्षफलदो भवेत् ॥ ११० ॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
यष्टारं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥ १११ ॥
न वाऽप्यल्पधनः कुर्याल्लक्षहोमं नरः क्वचित् ।
यस्मात् पीडाकरो नित्यं यज्ञे भवति विग्रहः ॥ ११२ ॥
यस्तु पीडाकरो नित्यमल्पवित्तस्य वै ग्रहः ।
तमेव पूजयेद्भक्त्या द्वौ वा त्रीन् वा यथाविधि ॥ ११३ ॥
एकमप्यर्चयेद्भक्त्या ब्राह्मणं वेदपारगम् ।
दक्षिणाभिः प्रयत्नेन न बहूनल्पवित्तवान् ॥ ११४ ॥
लक्षहोमस्तु कर्त्तव्यो यथावित्तं यथाविधि ।
यतः सर्व्वानवाप्नोति कुर्व्वन् कामान् विधानतः ॥ ११५॥
पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः ।
यावत्कल्पशतान्यष्टावथ मोक्षमवाप्नुयात् ॥ ११६ ॥
सकामो यस्त्विमं कुर्याल्लक्षहोमं यथाविधि ।
स तं काममवाप्नोति पदमानन्त्यमश्नुते ॥ ११७ ॥
पुत्रार्थी लभते पुत्रान् धनार्थी लभते धनम् ।
भार्य्यार्थी शोभनां भार्य्यां कुमारी च शुभं पतिम् ॥११८॥
भ्रष्टराज्यस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् ।
यं यं प्रार्थयते कामं स वै भवति पुष्कलः ।
निष्कामः कुरुते यस्तु स परं ब्रह्म गच्छति ॥ ११९ ॥
अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा ।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥ १२० ॥
पूर्व्ववद्ग्रहदेवानामावाहन–विसर्जने ।
होममन्त्रास्तएवोक्ताः स्नाने दाने तथैव ।
कुण्ड–मण्डप–वेदीनां विशेषोऽयं निबोध मे ॥ १२१ ॥

कोटिहोमे चतुर्हस्तं चतुरस्रन्तु सर्व्वतः ।
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम् ॥ १२२ ॥
द्व्यङ्गुलाभ्युच्छ्रिता कार्य्या प्रथमा मेखला बुधैः ।
त्र्यङ्गुलाभ्युच्छ्रिता तद्वद् द्वितीया परिकीर्त्तिता ॥ १२३ ॥
उच्छ्राय-विस्तराभ्याञ्च तृतीया चतुरङ्गुला ।
द्व्यङ्गुलश्चेति विस्तारः पूर्व्वयोरेव शस्यते ॥ १२४ ॥
वितस्तिमात्री योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ।
कूर्म्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रिता ॥ १२५ ॥
गजोष्ठसदृशी तद्वदायता छिद्रसंयुता ।
एतत् सर्व्वेषु कुण्डेषु योनिलक्षणमुच्यते ॥ १२६ ॥
मेखलोपरि सर्व्वत्र अश्वत्थदलसन्निभम् ।
वेदी च कोटिहोमे स्याद्वितस्तीनां चतुष्टयम् ॥ १२७ ॥
चतुरस्रा समन्ताच्च त्रिभिर्वप्रैस्तु संयुता ।
वप्रप्रमाणं पूर्व्वोक्तं वेदीनाञ्च तथोच्छ्रयः ॥ १२८ ॥
तथा षोडशहस्तः स्यान्मण्डपश्च चतुर्म्मुखः ।
पूर्व्वद्वारे च संस्थाप्य बह्वृचं वेदपारगम् ॥ १२९ ॥
यजुर्व्विदं तथा याम्ये पश्चिमे सामवेदिनम् ।
अथर्व्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः ॥ १३० ॥
अष्टौ तु होत्रकाः कार्य्या वेदवेदाङ्गवेदिनः ।
एवं द्वादश विप्राः स्युर्वस्त्रमाल्यानुलेपनैः ।
पूर्व्ववत् पूजयेद्भक्त्या वस्त्राभरणभूषणैः ॥ १३१ ॥
रात्रिसूक्तञ्च रौद्रञ्च पावमानं सुमङ्गलम् ।
पूर्व्वतो बह्वृचः शान्ति पठन्नास्ते ह्युदङ्मुखः ॥ १३२ ॥
शान्तं शाक्रञ्च सौम्यञ्च कौष्माण्डं शान्तिमेव च ।
पाठयेद्दक्षिणद्वारि यजुर्व्वेदिनमुत्तमम् ॥ १३३ ॥

सुपर्णमथ वैराजमाग्नेयं रुद्रसंहिताम् ।
ज्येष्ठसाम तथा शान्तिं छन्दोगः पश्चिमे जपेत् ॥ १३४ ॥
शान्तिसूक्तञ्च सौरञ्च तथा शाकुनकं शुभम् ।
पौष्टिकञ्च महाराज्यमुत्तरेणाप्यथर्व्ववित् ॥ १३५ ॥
पञ्चभिः सप्तभिर्वापि होमः कार्य्योऽत्र पूर्व्ववत् ।
स्नाने दाने च मन्त्राः स्युस्तएव मुनिसत्तम ॥ १३६ ॥
वसोर्धाराविधानञ्च लक्षहोमे विशिष्यते ।
अनेन विधिना यस्तु कोटिहोमं समाचरेत् ।
सर्व्वान् कामानवाप्नोति ततो विष्णुपदं व्रजेत् ॥ १३७ ॥
यः पठेच्छृणुयाद्वाऽपि ग्रहयज्ञत्रयं नरः ।
सर्व्वपापविशुद्धात्मा पदमिन्द्रस्य गच्छति ॥ १३८ ॥
अश्वमेधसहस्राणि दश चाष्टौ च धर्म्मवित् ।
कृत्वा यत् फलमाप्नोति कोटिहोमात् तदश्नुते ॥ १३९ ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ।
कोटिहोमेन नश्यन्ति यथावच्छिवभाषितम् ॥ १४० ॥
वश्यकर्म्माभिचारादि तथैवोच्चाटनादिकम् ।
नवग्रहमखं कृत्वा ततः काम्यं समाचरेत् ॥ १४१ ॥
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ।
तस्मादयुतहोमस्य विधानं पूर्व्वमाचरेत् ॥ १४२ ॥
वृत्तं वोच्चाटने कुण्डं तथा च वशकर्म्मणि ।
त्रिमेखलञ्चैकवक्त्रमरत्नेर्विस्तरेण तु ॥ १४३ ॥
पलाशसमिधः शस्ता मधुगोरोचनान्विताः ।
चन्दनागुरुणा वद्वत् कुङ्कुमेनाभिषिञ्चिताः ॥ १४४ ॥
होमयेन्मधुसर्पिर्भ्यां बिल्वानि कमलानि च ।
सहस्राणि दशैवोक्तं सर्वदैव स्वयम्भुवा ॥ १४५ ॥

वश्यकर्म्मणि बिल्वानां पद्मानाञ्चैव धर्म्मवित् ।
"सुमित्रिया न आप ओषधय" इति होमयेत् ॥ १४६ ॥
न चात्र स्थापनं कार्य्यं न च कुम्भाभिषेचनम् ।
स्नानं सर्व्वौषधैः कृत्वा शुक्लपुष्पाम्बरो गृही ॥ १४७ ॥
कण्ठसूत्रैः सकनकैर्विप्रान् संसमभिपूजयेत् ।
सूक्ष्मवस्त्राणि देयानि शुक्ला गावः सकाञ्चनाः ॥ १४८ ॥
अवशानि वशीकुर्य्यात् सर्व्वशत्रुबलान्यपि ।
अमित्राण्यपि मित्राणि होमोऽयं पापनाशनः ॥ १४९ ॥
विद्वेषणेऽभिचारे च त्रिकोणं कुण्डमिष्यते ।
द्विमेखलं कोणमुख हस्तमात्रञ्च सर्व्वशः ॥ १५० ॥
होमं कुर्य्युस्ततो विप्रा रक्तमाल्यानुलेपनाः ।
निवीतलोहितोष्णीषा लोहिताम्बरधारिणः ॥ १५१ ॥
नववायससंरक्ताढ्य पात्रत्रयसमन्विताः ।
समिधो वामहस्तेन श्येनास्थिबलसंयुताः ।
होतव्या मुक्तकेशैस्तु ध्यायद्भिरशिवं रिपौ ॥ १५२ ॥
दुर्मित्रियास्तस्मै सन्तु तथा हूफाडितीति च ।
श्येनाभिचारमन्त्रेण क्षुरं समभिमन्त्र्य च ॥ १५३ ॥
प्रतिरूपं रिपोः कृत्वा क्षुरेण परिकर्त्तयेत् ।
रिपुरूपस्य शकलान्यथैवाग्नौ विनिक्षिपेत् ॥ १५४ ॥
ग्रहयज्ञविधानान्ते सदैवाभिचरन् पुनः ।
विद्वेषणं तथा कुर्व्वन्नेतदेव समाचरेत् ॥ १५५ ॥
इहैव फलदं पुंसामेतन्नामुत्र शोभनम् ।
तस्माच्छान्तिकमेवात्र कर्त्तव्यं भूतिमिच्छता ॥ १५६ ॥
ग्रहयज्ञत्रयं कुर्य्याद् यस्त्वकामेन मानवः ।
स विष्णोः पदमाप्नोति पुनरावृत्तिदुर्लभम् ॥ १५७ ॥

य इदं शृणुयान्नित्यं श्रावयेद्वाऽपि मानवः ।
न तस्य ग्रहपीडा स्यान्न च बन्धुजनक्षयः ॥ १५८ ॥
ग्रहयज्ञत्रयं गेहे लिखितं यत्र तिष्ठति ।
न पीडा तत्र बालानां न रोगो न च बन्धनम् ॥ १५९ ॥
अशेषयज्ञफलदं निःशेषाघविनाशनम् ।
कोटिहोमं विदुः प्राज्ञा भुक्ति-मुक्तिफलप्रदम् ॥ १६० ॥
अश्वमेधफलं प्राहुर्लक्षहोमं सुरोत्तमाः ।
द्वादशाहमखस्तद्वन्नवग्रहमखः स्मृतः ॥ १६१ ॥
इति कथित इदानीमुत्सवानन्दहेतोः
सकलकलुषहारी देवयज्ञाभिषेकः ।
परिपठति य इत्थं यः शृणोति प्रसङ्गा-
दभिभवति स शत्रूनायुरारोग्ययुक्तः ॥ १६२ ॥ इति ।
विधानपारिजाते—मानहीनाधिकं कुण्डमनेकभयदं भवेत्।
तस्माच्चोत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् ॥
त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितम् ।
स्थण्डिलं वेदिः । वप्रो मेखला ।
ऋत्विग्वरणं स्कन्दपुराणे—
नवग्रहमखे कुर्याद् ऋत्विजश्चतुरः शुभान् ।
अथवा चैकमभ्यर्च्य विधिना ब्रह्मणा सह ॥
ग्रहदीपिकायाम्—ऋत्विजोऽष्टौ च चत्वारो द्वावप्येकस्तथैवच।
एतच्चोपलक्षणं, बहवोऽपि कर्तव्याः । होमसंख्याकान् ऋ-
त्विजो वृणीतेति । सर्वत्राचार्यब्रह्माणौ नियतौ । वरणं विना
त्वानुपपत्तेः । यथाचोक्तं श्रीमदनन्तभाष्ये—
होतृत्वमापणायैतत् वरणं दृष्टसाधनम् ।
यजमानेन कर्तव्यमानन्त्यार्थमिहापि तत् ॥

वरणानन्तरम् ऋत्विजि ज्वरादियुक्ते मृते वा यजमानः तत्स्थाने अन्यं दत्वा कर्मणि योजयेत् । तथाच श्रौतसूत्रभाष्ये ब्रह्मवरणप्रकरणे अनन्तदेवेन लिखितम् । तद्यथा—

यावन्न योज्यतेऽन्यस्तु वरणेन स्वकर्मणि ।
न तावत्तत्समाख्यानं लभते कर्महेतुकम् ॥
रक्षाकङ्कणबन्धनं मात्स्ये इति संस्कारगणपतौ ।
होममुद्राः परशुरामकारिकासु—
होमे मुद्राः स्मृतास्तिस्रो मृगी हंसी च सूकरी ।
मुद्रां विना कृतो होमः सर्वो भवति निष्फलः ॥
शान्तिके तु मृगी ज्ञेया हंसी पौष्टिककर्मणि ।
सूकरी त्वभिचारेषु कार्या तन्त्रविदुत्तमैः ॥
मुद्रालक्षणमाह तत्रैव—सूकरी करसङ्कोची हंसी मुक्तकनिष्ठिका।
मुक्तकनिष्ठातर्जनी मृगी मुद्रा प्रकीर्तिता ॥
मध्यमाऽनामिकाभ्यां चेति पाठान्तरम् ।
मृगी मोक्षे प्रकर्तव्या आहुतिः सर्वकामिका ।
हुतं यद्द् मुद्रया हीनं तत्सर्वं निष्फलं भवेत् ॥
बधिरत्वं कर्णहोमे नेत्रे त्वन्धत्वमाप्नुयात् ।
नासिकायां मनःपीडा शिरोहोमो हि मृत्युदः ॥
यतः काष्ठं ततः श्रोत्रं यतो धूमोऽपि नासिका ।
यतोऽल्पज्वलनं नेत्रं यतो भस्म ततः शिरः ॥
यतः प्रज्वलितो वह्निस्तन्मुखं जातवदेसः ।
संस्कारभास्करे स्कान्दे—
जन्मभूर्गोत्रमग्निश्च वर्णः स्थानं मुखानि च ।
योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः ॥
संस्कारभास्करे ग्रहभूमयः—

उत्पन्नोऽर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः ।
अङ्गारकस्त्ववन्त्यां च मगधायां हिमांशुजः ॥
सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा ।
शनैश्चरस्तु सौराष्ट्रे राहुर्बर्बराटिने पुरे ॥
अन्तर्वेद्यां तथा केतुः इत्येता ग्रहभूमयः ।

गोत्राणि तत्रैव-

आदित्यः काश्यपो गोत्रे अत्रिजश्चन्द्रमा भवेत् ।
भारद्वाजो भवेद्भौमः तथाऽऽत्रेयश्च चन्द्रजः ॥
शक्रपूज्योऽङ्गिरोगोत्रः शुक्रो वै भार्गवस्तथा ।
शनिः काश्यप एवाथ राहुः पैठितसिस्तथा ॥
केतवो जैमिनीयाश्च ग्रहगोत्राणि कीर्तयेत् ॥

ग्रहाग्नयः संस्कारगणपतौ—

आदित्ये कपिलो नाम पिङ्गलः सोमउच्यते ।
धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ॥
गुरौ चैव शिखी नाम शुक्रे भवति हाटकः ।
शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥

याज्ञवल्क्यः,

ताम्रकात्स्फाटिकाद्रक्तचन्दनात् स्वर्णकादुभौ ।
रजतादयसः सीसात् कास्यात्कार्या ग्रहाः क्रमात् ॥
स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा ।

स्कन्दपुराणे,

शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ ।
प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः ॥
आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः ।
स्थापनीया मुनिश्रेष्ठा नान्तरेण पराङ्मुखाः ॥

आदित्यस्य अन्यस्य च ग्रहस्य मध्ये अन्यो ग्रहो न स्थापनीयः इति नान्तरेणेत्यस्यार्थः । अत्र प्राङ्मुखत्वम् ऊर्ध्वदृष्टित्वम्, उदङ्मुखत्वं वामदृष्टित्वम्, दक्षिणमुखत्वं दक्षिणदृष्टित्वम् । तेन आदित्याभिमुखाः सर्वे इत्यनेन न विरोधः- इति स्मृतिकौस्तुभे लक्षहोमप्रकरणे स्पष्टम् । मण्डलानि संस्कारगणपतौ—

पद्ममध्ये रविं रक्तं प्राङ्मुखं वर्तुलं सदा ।
आग्निकोणे सितं चन्द्रं चन्द्रार्धसदृशं शिवम् ॥
दक्षिणे मङ्गलं विद्यात्त्रिकोणं लोहितं शुभम् ।
ऐशान्यां धनुराकारं पीतवर्णं तु सोमजम् ॥
उत्तरे पीतवर्णं च पद्माकारं बृहस्पतिम् ।
चतुरस्रं तु पूर्वस्यां शुक्लवर्णं तु भार्गवम् ॥
पश्चिमे कृष्णवर्णं तु दण्डाकारं शनैश्चरम् ।
नैर्ऋत्यां मकराकारं कृष्णाङ्गं रविमर्दनम् ॥
धूम्रवर्णास्तु वायव्ये केतवः खड्गसंनिभाः ।

शिष्टसमाचारात् महाव्याहृतिभिरावाहनं तत्प्रकाशकमन्त्रैः पौराणिकमन्त्रैरित्येके । समुच्चयेनेति केचित् ।

इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।

मानवसंहितायाम्—

गोमयोपलेपिते देशे धात्वाद्यैरुपशोभिते ।
पङ्कजं कारयेत्तत्र चतुर्विंशतिदलान्वितम् ॥
तण्डुलैः कारयेद्वाऽपि रक्तपीतसितासितैः ।
कर्णिकायां न्यसेद् व्रीहीन् स्थापयेत्तेषु कुम्भकम् ॥

ततोऽस्मिन्वरुणं देवं मन्त्रैरावाह्य स्थापयेत् ।

तत्प्रकाशकमन्त्रैस्तत्त्वायामीत्यादिभिः । "कलशे ब्रह्मपूजनमप्युक्तं ज्ञानार्णवे—

पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पञ्चान्मुखैः स्थितः ।
संस्थाप्य स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः ॥
ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत्"—

इति स्मृतिकौस्तुभे । सर्वान् संपूज्य होमः कार्यः । कुण्डाभावे स्थण्डिलं कार्यम्,

नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत् ।

इति शारदातिलकोक्तेः ।

कुण्डमेवंविधं न स्यात्स्थण्डिलं वा समाश्रयेत् ।

इति प्रपञ्चसारोक्तेश्च । विधानपारिजाते—

कुर्याच्छतार्धेऽङ्गुलमानमूर्ध्वकं शताहुतौ व्यङ्गुलमानमुच्छ्रितम् ।
वेदाङ्गुलोर्ध्वं तु सहस्रहोमके वस्वङ्गुलं चैव तथैव चायुते ॥
लक्षाहुतौ स्थण्डिलकं नृपाङ्गुलं चोर्ध्वं विदध्यात्प्रयुते च विंशतिम् ।
तत्त्वाङ्गुलं कोटिमखे तयोच्छ्रितं तथाऽर्बुदे नाधिकमाहुरार्याः ॥

ग्रहहोमे प्रतिदैवतं निर्वापः कार्यः । ग्रहेभ्यः सूर्याय त्वा जुष्टं निर्वपामीत्यादिक्रमेण चतुरश्चतुरो मुष्टीन् निरूप्य इतरासां देवतानां सकृदेव देवेभ्यो जुष्टं निर्वपामीति चतुरो मुष्टीन् निर्वपेत् । एवं निरूप्य देवतार्थत्वात् त्रिः प्रक्षाल्य चरुं श्रपयित्वा घृतेन अभिघार्य उदगुद्वासयेत् । ततो यजमानेन द्रव्यत्यागः कार्यः । त्यागे कृते समिदादिद्रव्येण प्रतिग्रहं प्रतिद्रव्यं दशदशाहुतीर्हुत्वा अधिदेवतादीनुद्दिश्य प्रत्येकं तिस्रस्तिस्रः एकैकां वा आहुतिं हुत्वा चतसृभिर्व्याहृतिभिश्चतस्र आहुतीर्हुत्वा

पश्चात् प्रतिग्रहमष्टौ अष्टाविंशतिम् अष्टोत्तरशतम् अष्टोत्तरसहस्रं वा आवाहनक्रमेण होमः कर्तव्यः । ग्रहाणाम् अर्कादिसमिधः याज्ञवल्क्येनोक्ताः—

अर्कः पलाशः खदिरः अपामार्गोऽथ पिप्पलः ।
औदुम्बरः शमी दूर्वाः कुशाश्च समिधः क्रमादिति ॥

अधिदेवतादीनां पालाश्य एव समिधः, मत्स्यपुराणवचनात् । होमं कृत्वा तदुत्तरकृत्यमाह—

पूजां कृत्वा ग्रहाणां च जुहुयात् स्विष्टकृदाहुतिम् ।
नवाहुतीस्ततो हुत्वा बलिदानमथाचरेत् ॥
मूर्द्धानमितिमन्त्रेण दद्यात्पूर्णाहुतिं ततः ।
होमशेषं समाप्याथ आचार्योऽथ द्विजैः सह ॥
अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ।
पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखैः ॥
अव्यङ्गावयवैर्ब्रह्मन् हेमस्रग्दामभूषितैः ।
यजमानस्य कर्तव्यं चतुर्भिः स्नपनं द्विजैः ॥

अभिषेकमन्त्राः शान्त्यादिलिङ्गाः स्वस्वशाखोक्ताः सुरास्त्वामभिषिञ्चन्त्वित्यादयः पौराणिकाश्च ग्राह्याः ॥

होमद्रव्यप्रमाणम् परशुरामकारिकासु—

कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ।
उक्तानि पञ्चगव्यानि शुक्तिमात्राणि साधुभिः ॥
तत्समं मधु दुग्धान्नमक्षमात्रमुदाहृतम् ।
दधि प्रसृतिमात्रं स्यात् लाजाः स्युर्मुष्टिसंमिताः ॥
पृथुकास्तत्प्रमाणाः स्युः सक्तवोऽपि तथाविधाः ।
पलार्धं गुडमानंच शर्कराऽपि तथाविधा ॥
ग्रासार्धं मानमन्नानामिक्षुः पर्वावधिः स्मृतः ।

एकैकं पत्रपुष्पादि तथाऽपूपादि कल्पयेत् ॥
कदलीफलनारिङ्गफलान्येकैकशो विदुः ।
मातुलिङ्गं चतुष्खण्डं पनसं दशधा कृतम् ॥
अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ।
त्रिधा कृतं फलं बैल्वं कापित्थं खण्डितं द्विधा ॥
उर्वारुकफलं होमे गदितं खण्डितं त्रिधा ।
व्रीहयो मुष्टिमात्राः स्युः मुद्गा माषा यवास्तथा ॥
तण्डुलाः स्युस्तदर्धांशाः कोद्रवा मुष्टिसंमिताः ।
लवणं शुक्तिमात्रं स्यात् मरिचान्येकविंशतिः ॥
खण्डत्रयं तु मूलानां फलानां स्वप्रमाणता ।
इक्षूणां पर्वकं मानं लतानामङ्गुलद्वयम् ॥
चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान् ।
कलायसंमितानेतान् गुग्गुलं बदरास्थिवत् ॥
कन्दानामष्टमं भागं जुहुयाद्विधिना परम् ।
चतुःषष्टितिलैः प्रोक्ता तिलानामाहुतिर्बुधैः ॥
व्रीहीणां च यवानां च शतमाहुतिरिष्यते । इति ।
होमकाले देवताभिध्यानस्यावश्यकत्वं स एवाह —
देवतानामभिध्यानं न करोत्यत्र मूढधीः ।
तस्य कर्म वृथैव स्यात् इति वेदविदो विदुः ॥
द्रव्यं तृतीयया ध्यायेत् देवतां च द्वितीयया ।
द्रव्यदैवतरूपत्वात् कर्मणो ऽतस्तदुच्यते ॥ इति ।
चैत्रं मधोर्णे ।

ॐ श्रीमन्महामङ्गलमूर्तये गणेशाय नमः ॥

अथ सर्वकर्मादौ शान्तिपाठः । अस्यैव पर्वतीयेषु स्वस्तिवाचनत्वेन व्यवहारः । अन्वर्थश्चायम् । बहूनां मन्त्राणां स्वस्तिशब्दघटितत्वेन छत्रिन्यायेन सर्वेषां मन्त्राणां तदभिधानस्य योग्यत्वात् । गदाधरेण गृह्यभाष्ये गर्भाधानशान्तिप्रकरणे महाशान्तिघटकत्वेन "आनोभद्रा" इति दश "स्वस्तिनोमिमीताम्" इति पञ्च इति पञ्चदश मन्त्रा उक्ताः । यद्यपि अन्येऽपि तत्र मन्त्रा उक्ताः तथापि सर्वकर्मादौ एतेषामेव पाठस्य सम्प्रदायसिद्धत्वाद् न तेऽत्र लिख्यन्ते । "स्वस्त्ययनम्" "अंहोमुचम्" इति मन्त्रौ तत्र भाष्ये ऋक्संहितायां चानुक्तावपि ऋक्संहितापरिशिष्टे उक्तत्वात् तयोः सर्वकर्मादौ पाठस्य समाचारसिद्धत्वाच्च अत्रोपन्यस्तौ । आनोभद्रा इत्यनुवाकान्ते पठितौ द्वौ मन्त्रौ तु यद्यपि क्वचित् पद्धतौ न दृश्येते तथापि अत्र तौ उपन्यस्येते । तयोस्त्यागे मानाभावात् । संस्कारभास्करादौ सर्वकर्मादौ क्रियमाणे शान्तिपाठे तद्दर्शनाच्च ।

तत्र कर्ता शुभदिने सुस्नातः शुक्लवासाः कुङ्कुमादिना कृततिलकः शुभासने प्राङ्मुख उपविश्याचम्य स्वस्ति वाचयेत् ।

ॐस्वस्ति नो' मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः

(ऋ० अ० ४।३।७) नः अस्मभ्यम् अश्विना अश्विनौ (छन्दसि औकारस्य आकारः) स्वस्ति अविनाशं क्षेमं मिमीतां कुरुताम्, भगश्च स्वस्ति क्षेमं मिमीताम्, तथा देव्यदितिश्च स्वस्ति मिमीताम् । अनर्वणः अप्रत्यूतः पूषा असुरः शत्रूणां निरसिता प्राणानां बलानां दाता वा नः स्वस्ति दधातु, नः अस्मभ्यं द्यावापृथिवी द्यावापृथिव्यावपि (सुपां सुलुगिति पूर्वसवर्णः) सुचेतुना शोभनेन

स्वस्ति द्यावापृथिवी सुचेतुना ॥ १ ॥ स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ २ ॥ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ ३ ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदि-

---

प्रज्ञानेन विशिष्टे (इत्थंभूतलक्षणे तृतीया) स्वस्ति मिमीताम् ॥ १ ॥

स्वस्तये क्षेमाय वायुमुपब्रवामहे स्तुम इत्यर्थः । सोमञ्चोपब्रवामहै, यश्च सोमो भुवनस्य पतिः पालकः । सर्वलोकजीवनस्य सोमायत्तत्वात् । तथा सर्वगणं सर्वदेवगणोपेतं बृहस्पतिं बृहतः कर्मणो मन्त्रस्य वा पालयितारं स्वस्तये स्तुमः । आदित्यासः आदित्याः (आज्जसेरसुक्) अदितेः पुत्राः सर्वे देवा अरुणादयो द्वादश वा नः अस्माकं स्वस्तये भवन्तु । सत्रमध्ये दीक्षिते व्याधिते सति तस्मिन्नहनि वैश्वदेवशस्त्रेऽयं तृचो निविद्धानार्थः । सूत्रितं च, स्वस्त्यात्रेयं निविद्धं दध्यादिति । स्वस्त्यात्रेयशब्देनायं तृचो विवक्षित इति तत्र व्याख्यातम् । तथा भयादिके सत्ययं तृचो जप्यः ॥ २ ॥

विश्वे सर्वेऽपि देवाः नः अस्मान् अद्या अद्य (छान्दसो दीर्घः) अस्मिन् यागदिने स्वस्तये क्षेमाय भवन्तु । वैश्वानरः विश्वे एनं नरा नयन्तीति वैश्वानरः । वसुः सर्वस्य वासयिता अग्निर्देवः । अयमेवाग्निर्वैश्वानर इति शाकपूणिरिति *यास्कः* । सोऽपि स्वस्तयेऽवतु । देवा ऋभवोऽपि स्वस्तयेऽवन्तु । रुद्रो दुःखानां द्रावयिता देवोऽपि अंहसः पापात् स्वस्ति पातु नः अस्मान् ॥ ३ ॥

हे मित्रावरुणा मित्रावरुणौ (पूर्ववत् पूर्वसवर्णः) अहोरात्राभिमानिनौ देवौ स्वस्ति कुरुतम् । हे पथ्ये-पथ्या स्वस्तिदेवी पन्था अन्तरिक्षमार्गः तत्र हिता मार्गाभिमानिनी देवी हे तादृशि रेवति धनवति देवि स्वस्ति कृधि । इन्द्रश्चाग्निश्च प्रत्येकं नः अस्मभ्यं स्वस्ति कृधि ।

ते कृधि ॥ ५ ॥ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव ।, पुनर्ददताघ्नता जानता सङ्गमेमहि ॥ ५ ॥ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ॥ ६ ॥ अंहोमुचमाङ्गिरसं गयंश्च स्वस्त्यात्रेयम्मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयन्नो अस्तु ॥ ७ ॥

ॐ आ नो भद्राः क्रतयो यन्तु विश्वतोऽदब्धा-

---

हेऽदिते देवि नः स्वस्ति कृधि कुरु। (श्रुशृणु इत्यादिना हेर्धिः) ॥४॥

पन्थां पन्थानं स्वस्ति क्षेमेण अनुचरेम सूर्याचन्द्रमसाविव तौ यथा निरालम्बे मार्गे राक्षसादिभिरनुपद्रुतौ संचरतः तद्वत् । किञ्च वयं प्रवसन्तः पुनः ददता अभिमतम्, अघ्नता चिरकालविलम्बकोपेन अहिंसता, जानता अविस्मरता–मदीयश्चिरकालं गतः कोऽयमिति संदेहमकुर्वता–मदीयोऽयमिति बुध्यमानेनेत्यर्थः । उक्तलक्षणेन बन्धुजनेन संगमेमहि । यद्वा पूर्वार्धे प्रवसतां वाक्यम्, उत्तरार्धे बन्धूनाम् । वयं बन्धवः ददता अभिमतमुपार्जितं यच्छता, अघ्नता प्रवासकोपेन अहिंसता, जानता संबन्धमधिगच्छता प्रवसता संगमेमहि ॥ ५ ॥ स्वस्त्ययनम् अंहोमुचम् इति द्वौ मन्त्रौ संहितायामनुक्तत्वात् भाष्यकारेण न व्याख्यातौ ।

यजुर्वेदसंहिता. अ० २५, मं० १४–२३ क्रतवो–यज्ञाः संकल्पा वा नः–अस्मान्प्रति आयन्तु–आगच्छन्तु । ( व्यवहिताश्चेतिसूत्रेण आङो व्यवहितः प्रयोगः ) । यज्ञकर्तारो वयं भवेमेत्यर्थः । कीदृशाः क्रतवः, भद्राः–भन्दनीयाः कल्याणकारिणः । ( भदि कल्याणे इत्यस्य प्रयोगः ) । तथा विश्वतः अदब्धासः–सर्वतोऽनुपहिंसिता निर्विघ्ना इत्यर्थः ( दम्भु हिंसायामिति धातोः क्तप्रत्ययान्तस्य नञ्तत्पुरुषे जसि रूपम्– आज्जसेरसुक् ) । अपरीतासः–न परीताः अपरीता, अपरिमिताः, अज्ञाताः केनचित्–फलानुमेया इत्यर्थः । उद्भि-

सो ऽअपरीतास ऽउद्भिदः। देवा नो यथा सदमिद् वृधे ऽअसन्नप्रायुवो रक्षितारो दिवे दिवे ॥ १ ॥ देवानां भद्रा सुमतिर्ऋजूयतान्देवानां रातिरभि नो निवर्त्तताम्। देवानां सख्यमुपसेदिमा वयन्देवा न ऽआयुः प्रतिरन्तु जीवसे ॥ २ ॥ तान्पूर्वया निविदा हूमहे वयम्भगम्मित्रमदितिन्दक्षमस्रिधम्। अर्यमणं वरुणं

---

वः-उद्भिन्दन्ति प्रकटयन्ति उद्भिदः उद्गन्तारः यज्ञान्तराणां प्रकटीकर्तार इत्यर्थः। किञ्च यथा येन प्रकारेण देवा नः अस्माकं सदमित्-सदैव वृधे-वृद्धौ असन्-भवन्ति तथा क्रतवः आयन्तु इत्यर्थः। सदमि त्यव्यय सदार्थे, इत् इति पदार्थे। कीदृशा देवाः, अप्रायुवः-प्रकर्षेण आयुवन्ति प्रमाद्यन्ति ते प्रायुवः (यौते क्विप्-तुगभाव आर्षः) न प्रायुवः अप्रायुवः अनलसाः अस्माकं वृद्धौ भवन्तु इत्यर्थः। तथा दिवेदिवे-अहनि अहनि प्रत्यहं रक्षितारः पालकाः भवन्तु ॥ १ ॥

भद्रा कल्याणकारिणी देवानां सुमतिः-शोभना बुद्धिः नः अस्मान्प्रति अभिनिवर्त्तताम् (अभेः पूर्ववद् व्यवहितः प्रयोगः) अस्मदभिमुखीभवतु। कीदृशानां देवानाम्, ऋजूयताम्-ऋजुम् अवक्रं साधुं यजमानं कामयन्ते ते ऋजूयन्तः तेषां (क्यजन्तात् शतृप्रत्ययः)। किञ्च देवानां रातिः दानं नः अस्मान् अभिनिवर्त्तताम्, देवा अस्मभ्यं ददत्वित्यर्थः। देवेभ्यो लब्धदाना वयं देवानां सख्यं मैत्रीम् उपसेदिम प्राप्नुयाम (सदेर्लिटि उत्तमपुरुषस्य बहुवचने संहितायां छान्दसत्वाद्दीर्घः रूपमिदम्)। देवाः नः अस्माकम् आयुः जीवसे-जीवितुं (तुमर्थे इत्यादिना जीव्धातोः असेप्रत्ययः) प्रतिरन्तु-प्रवर्द्धयन्तु ॥ २ ॥

पूर्वया-प्राचीनया अकृत्रिमया स्वयम्भुवा, निविदा वाचा, वेदरूपया वयं, तान् प्रसिद्धान् देवान् हूमहे-आह्वयाम (ह्वेञ्धातोः लेटि उत्तमपुरुषबहुवचने बहुलं छन्दसीति शपो लुकि छान्दसत्वात् सम्प्रसारणे कृते इति दीर्घे रूपम्)। निविच्छब्दो वाग्वाचकः।

सोमंमश्विना सरंस्वती नः सुभगा मयंस्करत् ॥ ३ ॥
तन्नो वातों मयोभु वांतु भेषजन्तन्माता पृंथिवी त-
त्पिता द्यौः । तद् ग्रावांणः सोमसुतों मयोभुवस्तदं-
श्विना शृणुतन्धिष्ण्या युवम् ॥ ४ ॥ तमीशानञ्जगं-
तस्तस्थुषस्पतिंन्धियञ्जिन्वमवंसे हूमहे वयम् । पूषा

---

तान् कान्, तथाह-भग-मित्रम्, अदितिं-देवमातरं, दक्षं-प्रजापतिम्, अर्यमणं, वरुणं, सोमम्, अश्विना अश्विनौ, (सुपां सुलुगित्यौकारस्याऽऽकारः)। अस्त्रिधामिति भगादीनां विशेषणम्। न स्रेधते च्योतते सोऽस्त्रित् तम् अच्युतसन्द्वावम्। किञ्च शोभनं भगं भाग्यं यस्याः सा सुभगा—भजनीया सरस्वती भगादिसहिता नः— अस्माकं मयः-सुखं करत्-करोतु। कृधातोर्लिङर्थे लेटि व्यत्ययेन शपि उत्वं बाधित्वा छान्दसत्वादिकारलोपे रूपम् ॥ ३ ॥

वातः-पवनः नः-अस्माकं भेषजम्-औषधं हितं यथा तथा वातु-प्रयातु अनुगृह्णात्वित्यर्थः। ददात्विति यावत्। कीदृशं हितं, मयोभु-मयः सुखं भवति यस्मात् तन्मयोभु-सुखोत्पादकं हितं ददातु। माता-जगन्निर्मात्री पृथिवी तद्-हितं धातु, पिता-पालको द्यौः स्वर्गः तद्-हितं यातु। सोमं सुन्वन्ति ते सोमसुतः-सोमाभिषवकारिणो ग्रावाणः दृषदः तत् भेषजं वान्तु-ददतु। कीदृशा ग्रावाणः, मयोभुवः-मयः सुखं भावयन्ति ते मयोभुवः सुखस्य दातारः। हे अश्विना अश्विनौ युवं-युवां (आपायामित्युक्तेर्नोऽऽकारश्छन्दसि) तत्-वातादिभ्यो भेषजप्रार्थनं शृणुतं-युवामपि हितं दत्तमित्यर्थः। कीदृशौ युवां, धिष्ण्या धिष्ण्यौ-गृहधारयितारौ, (सुपां सुलुगिति पूर्वसवर्णदीर्घः) ॥ ४ ॥

वयं तं प्रसिद्धम् ईशानं रुद्रं हूमहे-आह्वयामः। (पूर्ववत्सिद्धिः)। कीदृशं तं, जगतः-जङ्गमस्य, तस्थुषः-स्थावरस्य च भूतजातस्य पतिं पालकं, धियंजिन्वं-धियं बुद्धिं जिन्वति प्रीणातीति धियं

नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा ऽअवसा ग-

---

जिन्वः तं बुद्धिसंतोपकारकं, जिन्वतिः प्रीणनार्थः (कर्मण्यणि उपपदसमासे छान्दसत्वात् विभक्तेर्लुगभावः) । किमर्थं हूमहे, अवसे अवितुं-तर्पयितुम् । (तर्पणार्थात् अव्धातोः तुमर्थे असेप्रत्ययः) । यथा येन प्रकारेण पूषा नः-अस्माकं, वृधे-वृद्ध्यै (भावे क्विप्-) स्वस्तये-कल्याणाय च असत् अस्तु भवतु तथा हूमहे इत्यर्थः । (अस्धातोः व्यत्ययेन शप्लुगभावे छान्दसत्वात् इकारलोपः) । कीदृशः पूषा वेदसां धनानां ज्ञानानां वा रक्षिता-रक्षकः, पायुः—पालकः पुत्रादीनाम्, अदब्धः अनुपहिंसितः ॥ ५ ॥

इन्द्रः नः अस्मभ्यं स्वस्ति अविनाशं शुभं दधातु-ददातु, अनेकार्थत्वाद्धातूनां धाधातोर्दाने वृत्तिः । कीदृशः, वृद्धश्रवाः-वृद्धं महत्- श्रवः-कीर्तिः यस्य सः । विश्ववेदाः-विश्वं सर्वं वेदो धनं यस्य विश्वं वेत्तीति वा विश्ववेदाः, पूषा नः स्वस्ति ददातु । अरिष्टनेमिः-अरिष्टा अनुपहिंसिता (रिष हिंसायां) नेमिः-चक्रधारा पक्षौ वा यस्य सः तार्क्ष्यः-रथः गरुडो वा, नः स्वस्ति ददातु । बृहस्पतिः-देवगुरुः नः-अस्मभ्यं स्वस्ति ददातु ॥ ६ ॥

पृषदश्वाः-पृषत्यः पृषतीसंज्ञाः अश्वाः वडवाः वाहनं येषां ते पृषदश्वाः (संज्ञात्वेऽपि छान्दसत्वात् पुंवद्भावः), यद्वा पृषन्तः शबलाः अश्वाः येषां ते पृषदश्वाः, पृश्निमातरः-पृश्निः द्यौः गौः दितिर्वा माता जननी येषां ते, शुभं कल्याणं यान्ति प्राप्नुवन्ति प्रापयन्ति वा शुभंयावानः (आतो मनिनिति याधातोः वानप्प्रत्ययः । छान्दसत्वाद्विभक्तेर्लुगभावः) विदथेषु, यज्ञगृहेषु जग्मयः-गमनशी-

मग्निह ॥ ७ ॥ भद्र कर्णेभिः शृणुयाम देवा भद्र पंश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाᳬसंस्तनूभि-र्व्यशेमहि देवहितँयदायुः ॥ ८ ॥ शतमिन्नु शरदो ऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्ग-

---

ला ( आदृगमहनेति किप्रत्यय । लिङ्गव्यत्ययाद् ङ्याद्ि ), अग्निजिह्वा-अग्निर्जिह्वा भोजनसाधन येषां ते अग्निजिह्वा, हुताद इत्यर्थं, मन्यन्ते जानन्ति ते मनव —सर्वज्ञा, सूर सूर्यं चक्ष चक्षु येषां ते सूर्यं चक्षते पश्यन्ति वा सूरचक्षस, मरुत —देवा, न केवल मरुत एव, किन्तु विश्वे सर्वे देवाश्च न-अस्माकम् अवसा-अन्नेन हविर्लक्षणेन हेतुना इह यज्ञे आगमन्-आगच्छन्तु । (पुर्षवद् व्यत्ययेन शब्लुकि इकारलोप ) ॥ ७ ॥

हे देवा कर्णेभि —कर्णै ( बहुल छन्दसीति ऐस्त्वाभाव ) भद्र— कल्याण वय शृणुयाम । हे यजत्रा —यजन्त त्रायन्ते रक्षन्ति ते यजत्रा यजमानपालका अक्षभि —नेत्रै (बहुल छन्दसी ति हलादावपि अक्षिशब्दस्याऽनङादेश ) भद्र वय पश्येम । किञ्च देवहित-देवै स्थापित, देवाना हित, देवोपासनयोग्य वा यत् आयु जीवन तद् वय व्यशेमहि व्यश्नुवीमहि प्राप्नुयाम ( व्यत्ययेन श्नुविषये शप् )। कीदृशा वय, स्थिरै दृढै अङ्गै अवयवै करचरणादिभि तनूभि—शरीरैश्च पुत्रादिभिर्वा युता तुष्टुवास भवत स्तुवन्त सन्त ॥ ८ ॥

हे देवा शतमित् शतमपि शरदो-वर्षाणि शतवर्षपर्यन्त यूयम अन्ति- अन्तिक समीपे, भवत इति शेष । यत्र शरच्छते न अस्माक तनूनां- शरीराणा यूय जरस जरा चक्रा चक्र कुरुथ (करोतेर्लिटि मध्यमबहुवचनम्, द्व्यचोऽतस्तिङ इति चक्र इत्यत्र संहितायां दीर्घः, यत्रेत्यत्र निपातस्यचेति दीर्घ ) । वार्द्धक्यावधि यूय समीपे भवतेत्यर्थ । यत्र-अस्माक जरायां पुत्रास - अस्मत्पुत्रा ( आज्जसेर्-

न्तोः ॥ ९ ॥ अदि॑ति॒र्द्यौरदि॑ति॒रन्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः । विश्वे॑ दे॒वा ऽअदि॑तिः पञ्च॒जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ १० ॥ इति शान्तिपाठः ।

अथ गणेशपूजा ।

कर्त्ता कर्मदिने प्रातरुत्थाय स्नात्वा अहते धौते वाससी परिधाय नित्यकर्म समाप्य सर्वविघ्ननिवारकगणेशपूजनं कुर्यात् । प्रथमं तमःसंचारिभूतादिनिवारणार्थं दीपं प्रज्वलय्य "नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः" इति तं संपूज्य आचम्य गणेशाय पुष्पाञ्जलिं समर्पयेत्—सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहेच प्रवेशे निर्गमे तथा । संग्रामे संकटेचैव विघ्नस्तस्य न-

---

सुक् इति असोऽसुगागमः ) पितरो भवन्ति-पुत्रवन्तो भवन्ति-यावत् अस्माकं पौत्रा भवन्तीत्यर्थः-तावत्-मध्या-मध्ये (सुपांसुलुगिति ङेराकारः ) नः- अस्माकम् आयुः मा रीरिषत—मा हिंसिष्ट ( रिषतेर्हिंसार्थस्य णिजन्तस्य चाङि रूपम् ) । कीदृशम् आयुः, गन्तोः-गन्तृ गमनशीलम् । ( गम्धातोस्तोसुन् ) ॥ ९ ॥

द्यौः स्वर्गः अदितिः तदधिष्ठात्रीत्वात् । एवमग्रेऽपि । अन्तरिक्षम् अदितिः । अदितिः माता, पिता पुत्रश्च सः—सा अदितिरेव । ( लिङ्गव्यत्ययश्छान्दसः ) । विश्वे-सर्वे देवाः अदितिः । पञ्चजनाः-मनुष्या अप्यदितिः । किं बहुना, जातम्- उत्पन्नं प्राणिजातं जनित्वं जनिष्यमाणं च सर्वम् अदितिरेव । यद्वा अदितिर्मन्त्रेण नोच्यते । द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितिः अदितीनि अदीनानि ( छान्दसो लिङ्गवचनव्यत्ययः ) महाभाग्ययुक्तानि सन्तु ॥ १० ॥

जायते ॥ विघ्नवल्लीकुठाराय गणाधिपतये नमः ।वक्रतुण्ड महाकाय सूर्य्यकोटिसमप्रभ । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ इति नमस्कृत्य ततो विष्णुं–

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ लाभस्तेषांजयस्तेषां कुतस्तेषां पराजयः। येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः इति नत्वा महेश्वरं गौरीं सूर्यंच प्रणमेत् । अर्घस्थापनं कुर्यात् —चन्दनेन भूमौ त्रिकोणं वृत्तं चतुरस्रमण्डलं च लिखित्वा तत्र शङ्खचक्रे लिखित्वा गन्धाक्षतपुष्पैः सम्पूज्य अर्घं संस्थाप्य "शं नो देवीरभिष्टयआपो भवन्तु पीतये । शँय्योरभिस्रवन्तु नः" इति जलेनापूर्य्य "गङ्गेच यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन्सन्निधिं कुरु"इत्यङ्कुशमुद्रया*१ तीर्थान्यावाह्य गन्धाक्षतपुष्पादि निक्षिप्य प्रथमं सूर्य्यायार्घं दद्यात्, पुरश्चर्याणवे निबन्धोक्तेः । ताम्रस्थाल्यां सूर्यं लिखित्वा प्रतिष्ठाप्य ध्यानम् । अरुणोऽरुणपङ्कजे निषण्णः कमलेऽभीतिवरौ करैर्दधानः । स्वरुचाऽऽहितमण्डलस्त्रिनेत्रो रविराकल्पशताकुलोऽवतान्नः ॥ इति ध्यात्वा अर्घं दद्यात् । एहि सूर्य्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या गृहाणार्घं दिवाकर ॥ इत्यर्घं दत्त्वा सर्षपाक्षतैर्भूतोत्सादनं कुर्य्यात्—अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशः । सर्वेषामविरोधेन ब्रह्मकर्म समारभे । अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया इति । निर्गच्छतां च भूतानां

*१ पुरश्चर्याणवे–ऋज्वीं च मध्यमां कृत्वा तर्जनीं मध्यपर्वणि । सयोज्याकुञ्चयेत् किञ्चिद् मुद्रेयाऽङ्कुशसंज्ञिका ॥ इति ।

वर्त्म दद्यात्स्ववामतः। तालत्रयेण सर्वान्विघ्नानुत्सार्य ॐ आधारशक्तये पृथिव्यै नमः कमलासनाय नमः इत्यासनं सम्पूज्य पुनरर्घं संस्थाप्य जलेनापूर्य गन्धाक्षतपुष्पादि निक्षिप्य तेन जलेनात्मानं पूजासामग्रीं च दैवतीर्थेन संप्रोक्ष्य प्राणायामं विधाय तिलकुशयवजलान्यादाय पूजासंकल्पं कुर्यात्।

ॐविष्णुः३ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय ॐतत्सदद्य पृथिव्यां जम्बूद्वीपे भारतवर्षे कुमारिकाखण्डे१* आर्यावर्तैकदेशे पुण्यक्षेत्रे२* ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवारा-

---

*१ कुमारिकाखण्डस्वरूप मात्स्ये अ० ११४।

भारतस्यास्य वर्षस्य नव भेदान् निबोधत ॥ ७ ॥ इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुण ॥ ८ ॥ अयं तु नवमस्तेषां द्वीपः सागरसंवृत। योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः ॥ ९ ॥ आयतस्तु कुमारितो गङ्गायाः प्रभवावधि। तिर्यगूर्ध्वं तु विस्तीर्णः सहस्राणि दशैव तु ॥१०॥ इति। अत्रैव वर्णव्यवस्थोक्ता निरूपित परिभाषायाम्। पृ० २०।

*२ अविमुक्तवाराणसीक्षेत्रे महाश्मशाने आनन्दकानने गौरीमुखे त्रिकण्टकविराजिते भागीरथ्याः पश्चिमे तीरे इति काश्यां विशेषः।

विश्वेश्वरेण मुक्तं न भवतीत्यविमुक्तम्। वरानस गङ्गायाः अदूरभवत्वाद् वाराणसी। लिङ्गदेहस्यापि विश्वेश्वरप्रसादाद् दाहात् महाश्मशानम्। सच्चिदानन्दस्वरूपमुक्त्याविर्भावात् आनन्दकाननम्। विरहोन्मादेन मृतसतीदेहं गृहीत्वा सञ्चरतो महादेवस्य हस्तात् विष्णुबाणेन वियुक्तं सतीमुखं केदारसन्निधौ अस्मिन् क्षेत्रे पपातेति गौरीमुखम्। "अविमुक्तं च स्वर्लीनं तथा मध्यमथ परम्। एतत्त्रिकण्टकं दिवि मृत्युकालेऽमृतप्रदम्" इति लिङ्गपुराणोक्तम् अविमुक्तेश्वरलिङ्ग, स्वर्लीनम्भिविष्टपलिङ्ग त्रिलोचनइतिप्रसिद्ध, मध्यमेश्वरलिङ्ग चेति त्रिकण्टकसप्तम्, "कलि, काल, कृत कर्म, त्रिकण्टकमितीरितम्" इति कोमोक्तकण्टकत्रयनाशकं तेन विराजित मिदं क्षेत्रम्।

हकल्पे सप्तमे वैवस्वतमन्वन्तरे कृतत्रेताद्वापरान्ते अष्टाविंशतितमकलियुगस्य प्रथमचरणे षष्ट्यब्दानां मध्ये अमुकनामसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथाराशिस्थानस्थितेषु एवंगुणविशिष्टायाम् अमुकपुण्यतिथौ अमुकवासरे अमुकनक्षत्रे अमुकगोत्रोऽमुकशर्माऽहं श्रुतिस्मृतिपुराणोक्तफलप्राप्तये करिष्यमाणामुककर्मणो निर्विघ्नतासिद्ध्यर्थं भगवतो गणेशस्य षोडशोपचारैः पूजनं करिष्ये इति संकल्प्य पीठे नवशक्तिपूजनं कुर्यात्। ॐतीव्रायै नमः ॐज्वालिन्यै नमः ॐनन्दायै नमः ॐभोगदायै नमः ॐकामरूपिण्यै नमः ॐसत्यायै नमः ॐउग्रायै नमः ॐतेजोवत्यै नमः ॐमध्ये विघ्नविनाशिन्यै नमः ॐसर्वशक्तिकमलासनाय नमः । इति पीठशक्तीः संपूज्य गणानान्त्वेति समुच्चितेन ॐगणपतये नम इति मन्त्रेण वक्ष्यमाणमन्त्रैश्च, उक्तमन्त्रेणैव वा, अन्यैर्वा पौराणिकमन्त्रैः, पुरुषसूक्तेन वा यथासमाचारं गणेशपूजनं कुर्यात् । वक्ष्यमाणः पूजाप्रकारः सर्वोऽपि स्मृतिकौस्तुभादौ सिद्धिविनायकचतुर्थीव्रतप्रस्तावे द्रष्टव्यः । ध्यानम्—एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम्। पाशाङ्कुशधरं देव ध्यायेत्सिद्धिविनायकम्॥ आवाहनम्—विनायक नमस्तेऽस्तु उमामलसमुद्भव । इमां मया कृतां पूजां गृहाण सुरसत्तम ॥ पुष्पादिनिर्मितम् आसनं देवस्य वामभागे—नानारत्नसमायुक्तं मुक्ताहारविभूषितम् । स्वर्णसिंहासनं चारु प्रीत्यर्थं प्रतिगृह्यताम् । पाद्यम् पादाम्बुजे—गौरीप्रिय नमस्तेऽस्तु शङ्करप्रिय सर्वदा । भक्त्या पाद्यं मया दत्तं गृहाण प्रणतप्रिय ॥ अर्घ्यम् हस्तयोः—व्रतमुद्दिश्य देवेश

गन्धपुष्पाक्षतैर्युतम् । गृहाणार्घं मया दत्तं सर्वसिद्धिप्रदो भव ॥ आचमनीयं दत्त्वा स्नानम्-स्नानं पञ्चामृतैर्देव गृहाण गणनायक । अनाथनाथ सर्वज्ञ गीर्वाणपरिपूजित ॥ ( पयोदधिघृतक्षौद्रशर्कराः पञ्चामृतानि ) ॐगणानान्त्वा गणपतिँ हवामहे प्रियाणान्त्वा प्रियपतिँ हवामहे निधीनान्त्वा निधिपतिँ हवामहे व्वसो मम । आऽहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम्-इति मन्त्रेण च स्नानम् । पञ्चामृतस्नानान्ते शुद्धोदकस्नानम् आपोहिष्ठेत्यादितिसृभिः । स्नानाङ्गमाचनीयं पुनः दत्त्वा, वस्त्रम्-रक्तवस्त्रयुगं देव देवाङ्गसदृशप्रभम् । भक्त्या दत्तं गृहाणेदं लम्बोदर हरप्रिय ॥ वस्त्रान्ते आचमनीयं दत्त्वा यज्ञोपवीतम्-राजतं ब्रह्मसूत्रं च काञ्चनस्योत्तरीयकम् । गृहाण चारु सर्वज्ञ भक्तानां सिद्धिदायक ॥

---

१य स अ २३ म १९ हे मम वसो सर्वस्वभूत गणपते वय त्वा त्वा हवामहे- आह्वयाम । ( ह्वेञ्धातो शपि छान्दसत्वाद्किस्यपि सम्प्रसारणम् ) । कीदृश त्वा, गणाना रुद्रपारिषदानां मध्ये गणपतिं-गणरूपेण पालक, प्रियाणा वल्लभाना भार्यादीना मध्ये प्रियपतिं प्रियस्य पालक, निधीना सुखनिधीना मध्ये निधिपतिं सुखनिधे पालक त्वा हवामहे । हेगणपते गर्भध- गर्भ दधाति इति गर्भध गर्भधारक रेत पत्युरिति शेष अह आअजानि- आकृष्य क्षिपाणि । (अज गतिक्षेपणयोरित्यस्मात् लोट् छान्दसत्वात् आङो व्यवहित प्रयोग) । त्वञ्च गर्भध-रेत आअजासि- आकृष्य अज क्षिप । ( आङ पूर्ववत्प्रयोग । लेडन्तोऽय तेन लेटोऽडाटाविति सिप आडागम )।

प्रकरणानुरोधात् महीधरादिभि अश्वपरतया व्याख्यातोऽपि अय मन्त्र स्मृत्या गणपतिपूजने विनियुक्त गणपतिपरतया व्याख्यात । श्रुतीनामनेकार्थत्वस्यालङ्कारिकत्वात् । अत्र भौतिकविघ्नोपशमनाय भार्यापुत्रादिलाभाय धनलाभाय च त्वा गणपतिं प्रियपतिं निधिपतिं च आह्वयाम इति वाक्यार्थ ।

कस्य चिदुपचारस्यासम्पत्तौ पुष्पं समर्पयेत्, पुरश्चर्यार्णवे कुलोड्डीशवचनात् । यज्ञोपवीतान्ते आचमनीयं दत्त्वा गन्धम्—गन्धं कर्पूरसंयुक्तं दिव्यं चन्दनमुत्तमम् । विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम्॥ अक्षताः—अक्षतान्धवलान्देव सुरगन्धर्व्वपूजित । सर्व्वदेवनमस्कार्य्य गृहाण मदनुग्रहात् ॥ पुष्पाणि—सुगन्धीनि सुपुष्पाणि मालत्यादीनि वै प्रभो । मयाऽऽनीतानि पूजार्थं पुष्पाणि त्वं गृहाण मे ॥ घण्टानादपूर्वकं धूपः देवस्य पुरतो वामे वा–दशाङ्गं गुग्गुलं धूपं सुगन्धि सुमनोहरम् । उमासुत नमस्तुभ्यं गृहाण वरदो भव ॥ दीपोऽपि घण्टानादपूर्वकम्–देवस्य पुरतो दक्षिणेवा– गृहाण मङ्गलं दीपं घृतवर्त्तिसमन्वितम् । दीपं ज्ञानप्रदं देव रुद्रप्रिय नमोऽस्तुते ॥ पारावतभ्रमाकारं भ्रामयेच्च प्रदर्शयेत् । देवस्य सर्वावयवान्, श्लोकमेतं ततः पठेत् ॥ स्वप्रकाशो महादीपः सर्वत्र तिमिरापहः । सबाह्याभ्यन्तरं ज्योतिः दीपोऽयं प्रतिगृह्यताम् ॥ नैवेद्यम् पुरतः, आमं वामे पक्वं दक्षिणे वा, तैजसाद्यन्यतमपात्रे-सगुडान्सघृतांश्चैव मोदकान्घृतपाचितान् । नैवेद्यं सफलं दद्यां गृह्यता विघ्ननाशन ॥ एकं मोदकं विनायकाय दद्यात्, दश वक्ष्यमाणप्रकारेण ब्राह्मणाय दद्यात्, दश स्वार्थं स्थापयेत्—इति स्कन्दपुराणे सिद्धिविनायकचतुर्थीव्रतकथायाम् एकविंशतिमोदकव्यवस्था । हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यं फलदमतः शान्तिं प्रयच्छमे ॥ इति भूषणार्थे द्रव्यं समर्प्य *मूलमन्त्रेण जपं विधाय समर्प्य पानी-

---

* हेमाद्रौ दानखण्डे तृतीयप्र० गरुडपुराणे-प्रणवादि नमोऽन्तं च चतुर्थ्यन्तं च सत्तम । देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तित इति ॥ ततश्च प्रकृते ॐगणपतये नमः इति मूलमन्त्रो भवति । एवमन्यत्रापि बोध्यम् ।

यजलम् आचमनीयञ्च दद्यात् । फलम्—इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ ताम्बूलम्—पूगीफलसमायुक्तं नागवल्लीदलान्वितम् । कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ दशमोदकदानसङ्कल्पः । अद्येहामुकोऽहम् अमुककर्मनिमित्तकगणेशपूजनकर्मणः साङ्गफलप्राप्त्यर्थं गणेशप्रीतये इमान्दश मोदकान्दक्षिणासहितान् ब्राह्मणाय दास्ये ॐतत्सन्न मम । नमो ब्रह्मण्यदेवाय गोब्राह्मणहितायच । जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥ इति ब्राह्मणं गन्धाक्षतपुष्पैः सम्पूज्य दद्यात् । मोदकदानमन्त्रः—विघ्नेश विप्ररूपेण गृहाण दश मोदकान् । दक्षिणाघृतताम्बूलगुडयुक्तान्ममेप्सद ॥ दाता विघ्नेश्वरो देवो ग्रहीता सर्व्वविघ्नराट् । तस्मादिदं मया दत्तं परिपूर्णं तदस्तु मे ॥ "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्" इत्यनेन प्रतिग्रहः । प्रार्थना—विनायक नमस्तुभ्यं सततं मोदकप्रिय । अविघ्नं कुरु मे देव सर्वकार्य्येषु सर्व्वदा ॥ अथ दूर्वाङ्कुरपूजा । गन्धादियुतान् एकविंशतिदूर्वाङ्कुरान् गृहीत्वा प्रतिनाम दूर्वाङ्कुरयुग्मं समर्प्य अन्ते सर्वनामभिः एकां समर्पयेत् । ॐगणाधिप नमस्तेऽस्तु ॐउमापुत्र नमस्तेऽस्तु ॐअघनाशन नमस्तेऽस्तु ॐविनायक नमस्तेऽस्तु ॐईशपुत्र नमस्तेऽस्तु ॐसर्वसिद्धिप्रदायक नमस्तेऽस्तु ॐएकदन्त नमस्तेऽस्तु ॐइभवक्त्र नमस्तेऽस्तु ॐमूषकवाहन नमस्तेऽस्तु ॐकुमारगुरवे तुभ्यं नमोऽस्तु ॐचतुर्थीश नमोऽस्तुते ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः

---

१ य. सं. अ. १३ मं० २० । मूलैर्मूसम्बद्धं पर्व काण्डं, भूम्यसम्बद्धं परुः । हे दूर्वे काण्डात् काण्डात् प्रतिकाण्डं परुषः परुषः प्रति- [illegible] सर्वपर्वभ्यः सकाशात् यथा स्वं-

परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ इति एका दूर्वा समर्प्य नीराजनं कुर्यात्—अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्। आरार्त्तिकमिदं देव गृहाण मदनुग्रहात् ॥ ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा। अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा। सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा*। ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ इति नीराज्य पुष्पाञ्जलिः—सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो

---

परि–समन्तात् प्ररोहन्ती– अङ्कुरयती वर्तसे, एवेत्यव्ययम् एवमित्यर्थे (निपातस्यचेति संहितायां दीर्घः) हे दूर्वे एव स्वाङ्कुरविस्तारवत् सहस्रेण शतेन च सहस्रशतशब्दौ असंख्यार्थौ असंख्यैः पुत्रपौत्रनप्त्रादिभिः अस्मान् प्रतनु विस्तारय ॥

दूर्वामेव भावयित्वा गणपतये समर्पयेत्। अत्र दूर्वादीनाम् अचेतनत्वेऽपि तदभिमानिनीनां देवतानां सत्त्वात् देवतात्वेन सम्बोधनाद्यर्हता ज्ञेया। अभिमानिव्यपदेशस्तु—इतिव्याससूत्रोक्ते। मृदब्रवीत्, आपोऽब्रुवन् इतिश्रुतेश्च ॥

*य स अ ३–म ९ योऽयम् अग्निर्देव स एव ज्योति दृश्यमानज्योति स्वरूप, यश्चेद दृश्यमान ज्योति तदेव अग्निर्देव। देवस्य ज्योतिषश्च कदाचिदपि अवियोगात् एकत्वेन प्रतिपादनम्। स्वाहा ज्योतीरूपायाग्नये हवि प्रदत्तम्। योऽय सूर्यो देव स एव ज्योति दृश्यमानज्योति स्वरूपम्, यश्चेद दृश्यमान ज्योति तदेव सूर्य। तस्मै सूर्याय स्वाहा सुहुतमस्तु। योऽग्नि वर्चस अनन्यभूतस्य तज्ज्योति वर्चोऽनन्यभूत तस्मै अग्नये स्वाहा सुहुतमस्तु।

सूर्यो वर्चोऽनन्यभूत यस्य तत् ज्योति वर्चोऽनन्यभूत तस्मै सूर्याय स्वाहा सुहुतमस्तु। यत् ज्योति स सूर्य एव य सूर्य स ज्योतिरेव तस्मै सूर्याय स्वाहा सुहुतमस्तु।

इत्थं दीपम् एतादृशगुणविशिष्टाग्न्यादिरूपत्वेन भावयित्वा तेन देवं नीराजयेत् ॥

विनायकः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ विघ्नवल्लीकुठाराय गणाधिपतये नमः । अविरलमदजलनिवहं भ्रमरकुलानीकसेवितकपोलम् । अभिमतफलदातारं कामेशं गणपतिं वन्दे–इति *नमस्कृत्य त्रिः प्रदक्षिणीकृत्य दक्षिणासङ्कल्पं कुर्य्यात्। अद्येहेत्यादिदेशकालसंकीर्त्तनान्ते अमुकोऽहम् अमुककर्मणि निर्विघ्नतासिद्धये भगवतो गणेशस्य पूजाकर्मणः साद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् न मम इति दक्षिणांदत्त्वा ॐगणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ हवामहे व्वसो मम । आऽहमजानि गर्भधमा त्वमजासि गर्भधामिति पठित्वा शेषां (देवोपभुक्तपुष्पादिकम्) यजमानाय दद्यात् ॥

इति गणेशपूजा ॥

अथ मातृपूजा। सर्वकर्म्मसु प्रधानसङ्कल्पानन्तरं मातृपूजनादिकं कुर्यात् प्रयोगान्तर्गतत्वस्वीकारात् इति सम्प्रदायः। पीठे कुङ्कुमादिना गणपतिं षोडशमातॄश्च लिखित्वा गोमयेन दूर्वाभिश्च विभूष्य अर्घं संस्थाप्य पूजासङ्कल्पः–अद्येहेत्यादिदेशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्माऽहम् अमुककर्मणः पूर्वा-

---

*विष्णुकल्पलतायां–पद्भ्यां कराभ्यां जानुभ्याम् उरसा शिरसा दृशा । वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥

बाहुभ्यां च सजानुभ्यां शिरसा वचसा दृशा । पञ्चाङ्गोऽयं प्रणामः स्यात् पूजासु प्रवराविमौ ॥ इति । त्रिः प्रदक्षिणीकरणं च गणेशपूजाभिप्रायेण–एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद्विनायके । चत्वारि केशवे दद्यात् शिवस्यार्धं प्रदक्षिणम्–इति वचनात् ।

ङ्गत्वेन सर्वाभ्युदयप्राप्तये पीठे लिखितासु प्रतिमासु गणपति सहितगौर्य्यादिषोडशमातॄणां पूजनं करिष्ये । एतन्ते इति प्रतिष्ठा । ॐ एतन्ते देव सवितर्य्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव। मनो जूतिर्जुष तामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञᳬ समिमं दधातु। विश्वेदेवास इह मादयन्तामोम्प्रतिष्ठ ॐ भूर्भुवः स्वः गणपतिसहितगौर्य्यादिषोडशमातरः इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु । अथ ध्यानम्—गौरी पद्मा शची

---

१ य स अ २–म० १२–१३ हे देव दानादिगुणयुक्त हे सवितः प्रसवितः एतं यज्ञम्–इदानीं क्रियमाणम् इमम् एव त तुभ्य त्वदर्थं प्राहुः यजमाना कथयन्ति अनुज्ञापयन्ति इत्यर्थ । किञ्च त्वया प्रेरित देवानां यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये च प्राहु । बृहस्पतिर्वै देवानां ब्रह्मा तदधिष्ठितं यज्ञाय मानुषो ब्रह्मत्वं करोति । किञ्च तेन हेतुना त्वदीयं जनं यज्ञम् अव रक्ष । तथा तेनैव हेतुना यज्ञपतिं यजमानं च अव रक्ष । तथा तेनैव हेतुना मां ब्रह्माणम् अव पालय । किञ्च जूतिः गन्तृ अतीतानागतवर्तमानेषु कालेषु पदार्थेषु यद्गच्छति ( गत्यर्थकस्य जु इति सौत्रधातोः 'ऊतियूति' इत्यादिना क्तिचि धातोर्दीर्घे च रूपम्–स्त्रीत्वं छान्दसम् ), तादृशं मनः आज्यस्य स्वम् अंश जुषताम् सेवताम् । किञ्च–बृहस्पतिर्यज्ञमिमं तनोतु विस्तारयतु अरिष्टम्– अविनष्टं ( रिषतिर्हिंसार्थे ) यज्ञमिमं कृत्वा दधातु । किञ्च विश्वेदेवास –सर्वेदेवा (पूर्ववदसुगागम ) इह–यज्ञकर्माणि मादयन्ताम्– तृप्यन्ताम् । ( मद तृप्तौ चुरादि तत स्वार्थे णिच् )। एवं प्रार्थित सविता देव ओं प्रतिष्ठ इत्यनुज्ञां प्रयच्छतु । आम्–इत्यङ्गीकारार्थ । प्रतिष्ठ– प्रकर्षेण तिष्ठ ॥ हे देव उक्तमदभीष्टसकलसम्पत्यर्थं त्वम् अस्मिन् स्थाने प्रकर्षेण तिष्ठ–इति प्रार्थना वाक्यार्थ ॥ क्वचित्पद्धतिषु मनोजूतिरित्येक एव मन्त्र प्रतिष्ठाया विनियुज्यते, तद् यथा चास्मनुष्ठेयम् ।

मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका ह्येताः वरदाभयपाणयः ॥ इति ध्यात्वा नाममन्त्रेण पूजनम्-ॐगणपतये नमः ॐगौर्य्यै नमः ॐपद्मायै नमः ॐशच्यै नमः ॐमेधायै नमः ॐसावित्र्यै नमः ॐविजयायै नमः ॐजयायै नमः ॐदेवसेनायै नमः ॐस्वधायै नमः ॐस्वाहायै नमः ॐमातृभ्यो नमः ॐलोकमातृभ्यो नमः ॐधृत्यै नमः ॐपुष्ट्यै नमः ॐतुष्ट्यै नमः ॐआत्मनः कुलदेवतायै नमः इति नाममन्त्रै. आवाहनादिपदार्थानुसमयेन पूजनम् । पदार्थानुसमयस्वरूपं ग्रहपूजाप्रकरणे वक्ष्यते । आवाहनम् आसनं पाद्यं अर्घम् आचमनम् स्नानम् आचमन वस्त्रम् आचमनम् यज्ञोपवीतम्' आचमनम् गन्धम् अक्षतान् पुष्पाणि धूपं दीपं नैवेद्यम् पानीयम् आचमनम् फल ताम्बूलं भूषणार्थे द्रव्यं च समर्प्य नाममन्त्रेण जप कृत्वा समर्प्य वसोर्द्धारासङ्कल्पः-अद्येह अमुकोऽहम् अमुककर्मणि सर्वाभ्युदयप्राप्तये गणपतिसहितगौर्यादिषोडशमातृणामुपरि गुडसर्पिर्भ्यां वसोर्द्धाराः पातयिष्ये । १वसोः पवित्रमसि शतधारँ-

---

१य स अ १ म ३ हेघृत वसो वासहेतो (जीवनहेतोरिति वा धन) अन्नस्य पवित्र शोधक त्वमसि। किम्भूत घृत, शतधार-शतसख्या धारा यस्मिन्, तथा सहस्रधार-सहस्रसख्या धारा यस्मिन् तत् । द्विरुक्ति शोधकत्वदृढीकरणार्था । अभ्यासे भूयासमर्थं मन्यन्ते इति .द्वि .रुक्तम् । सविता प्रेरको देव पूर्वोक्तरीत्या शतधारेण वसो पवित्रेण त्वा त्वा पुनातु शोधयतु । कीदृशन घृतेन, सुप्वा-सुष्ठु पुनातीति सुपु ।(तृतीयादिष्विति पुवद्भावान्नुम् ह्रस्वयोरभाव ) । कामधुक्ष इति देवविशेषणम्-कामान् दोग्धि प्रपू

ष्वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा स-
विता पुनातु ष्वसोः पवित्रेण शतधारेण सुप्वा
कामधुक्षः ॥ आज्यं यतोऽस्ति देवानामशनं मङ्गला-
त्मकम् । ततो मातॄः समुद्दिश्य घृतधारां ददाम्यहम् ॥
कुड्यस्तम्भसुसंलग्ना मातॄणामुपरि स्थिताः। कारयेत्पञ्च तिस्रो वा
सप्त वोदङ्मुखस्थिताः ॥ इतिमन्त्रैः तिस्रः पञ्च सप्त वा धाराः
पातयित्वा तच्छेपघृतं ललाटे धृत्वा नीराजनङ्कुर्य्यात् । पुष्पा-
ञ्जलिः—गौरी पद्मा शची मेधा सावित्री विजया जया । देव-
सेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टि-
रात्मनः कुलदेवता। गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश ॥
हरात्मज चतुर्बाहो वारणास्य महोदर । प्रसन्नो भव मह्यं त्वं
गौरीपुत्र नमोऽस्तु ते ॥ ब्रह्माणी कमलेन्दुसौम्यवदना माहे-
श्वरी लीलया, कौमारी रिपुदर्पनाशनकरी चक्रायुधा वै-
ष्णवी । वाराही घनघोरघर्घरमुखी चैन्द्री च वज्रायुधा, चा-
मुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ॥ गणपतये
नमः—इत्यादिपूर्वोक्तनामभिश्च पुष्पाञ्जलिं समर्प्य दाक्षि-
णासङ्कल्पः—अद्येहेत्यादि संकीर्त्य अमुकगोत्रोऽमुकराशिरमुक-
शर्माऽहं सर्वाभ्युदयप्राप्तये अमुककर्माङ्गभूतस्य गणपतिसहि-
तगौर्य्यादिषोडशमातॄणां पूजाकर्मणः साद्गुण्यार्थम् इमां दक्षि-
णां ब्राह्मणाय दास्ये ॐतत्सत् इति सङ्कल्प्य दक्षिणां दद्यात् ।
मन्त्रपाठः—ॐसमख्ये देव्या धिया सन्दक्षिणयोरुचक्ष-

---

रयतीति कामधुक्षः । (दुह धातोः छान्दसत्वात् क्सप्रत्ययः) ॥
एवं घृतं भावयित्वा तेन मातृकासु धारा दद्यात् ॥

१ अ. ४ मं. २३. देव्या द्योतमानया त्वया धिया बुद्ध्या सह बु-
द्धिपूर्वकम् अहं समख्ये अद्राक्षि दृष्ट इत्यर्थः । (दर्शनार्थकात् समपू-

सा । मा मआयुः प्रमोषीर्म्मो ऽअहं तव व्वीरँविदेय तव देवि संदृशि ॥ ॐअम्बेऽअम्बिकेऽअम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ इति पठित्वा शेषां यजमानाय दद्यात् ॥ अम्बे इति मन्त्रः पूजायामपि विनियुज्यते कैश्चित् । युक्तं चैतत् ।

इति मातृपूजा ॥

---

र्घकात् चक्षधातोः कर्मणि लुङि उत्तमपुरुषैकवचने च्लेः अस्यतिवक्तीति च्लेरङि रूपम् ) । एक सम्पद पादपूरणार्थम् । किम्भूतया त्वया, दक्षिणया– दक्षिणात्वयोग्यया, तथा उरुचक्षसा–उरु चष्टे सा उरुचक्षाः तया विस्तीर्णदर्शनया । एवंविधा त्व मे–मम पत्न्याः आयुः मा प्रमोषीः मा खण्डय । मा उ इतिच्छेदः । तव आयु. अह मा उ मैव–उ एवार्थे, मो इति मार्थे अव्यय वा, प्रमोषिषमित्यध्याहारः—अह तवायु. न नाशयामीत्यर्थ. । किञ्च । हे देवि । तव सन्दृशि सदर्शने सति वीर पुत्रं विदेय लभेय । सदर्शन सदृक् तस्यां ( भावे क्विप् । विदॢल् लाभे इत्यस्य तौदादिकस्य छान्दसत्वान्नुमभावे विदेय इति लिङि रूपम् ) ॥

अ. २३, क. १८ रा. ४ हे. अम्बे हे अम्बिके हे अम्बालिके (आपोज्जुषाणो इति प्रकृतिभाव ) । कश्चन नर मा–माम् न नयति न प्रापयति । स्वामिनं प्रतीति शेष. । तर्हि किमर्थं गम्यते, तत्राह–अश्वक–अश्वशब्द' स्वामिवचनः तत कुत्सायां कप्रत्यय. कुत्सितोऽश्वः स्वामी अकुत्सितोऽपि ईर्ष्यया कुत्स्यते । काम्पीलवासिनीं–काम्पीले नगरे वसतीति काम्पीलवासिनी ताम् । तत्रहि विदग्धा. सुरूपा' कामिन्यो भवन्ति । तादृशीं सुभद्रिकां नारीम् आदाय ससस्ति शेते तदासक्तो भवतीत्यर्थ. । षस स्वप्ने इति आदादिकोऽपि धातुछान्दसत्वाद् व्यत्ययेन श्लुविकरण लभते । मद्गमने स्वामी सुभद्रिकासक्तो भविष्यति इति मया गम्यते, न तु मां कश्चिन्नयतीति ॥

मया पूजिता भगवती स्वामिनः अन्यासक्तिं निवर्तयतु, स्वामिनं मदभिमुख च करोतु इति प्रार्थना वाक्यार्थ ॥

आयुष्याणि च शान्त्यर्थं जपेदत्र समाहितः–इति वचनात् आयुष्याणाम् "आनोभद्रा" इत्यादीनां दशानां पूर्वं शान्तिपाठे उक्तानां मन्त्राणामत्र पाठं केचित् कुर्वन्ति, तत् पूर्वप्रकरणे एवावश्यकम् । केचित् आयुष्यं वर्चस्यम् , नतद्रक्षांऽसि, यदाबध्नन् इत्यादीनां पाठं कुर्वन्ति ।

अथाभ्युदयिकश्राद्धम् ॥ इदं च पुण्याहवाचनात्पूर्वमेवोचितमिति पूर्वं निर्णीतम् । जीवत्पितृकाविषये पक्षद्वयमुपन्यस्तं पूर्वं तथापि सर्वत्र, पितुरेव मात्रादीनां पित्रादीनां मातामहादीनां च तेन नान्दीश्राद्धं स्वयङ्कार्यमिति बहूनां कातीयानां संप्रदायः ।

आचम्य ॐ यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथाऽन्ये । विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ इति गणेशं नमस्कृत्य शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ इति विष्णुं च प्रणम्य*

(सव्येन प्राङ्मुखः आसनेषु अष्टौ चतुरो वा यथासंभवं ब्राह्मणान् उदङ्मुखान् प्राक्संस्थान्, उदङ्मुखो वा प्राङ्मुखान् उदक्संस्थानुपवेश्य तदभावे *कुशबटून् संस्थाप्य एतेते इति प्रतिष्ठाप्य यवान् गृहीत्वा निमन्त्रयेत् । तत्र वैश्वदेविकब्राह्मणं प्रथमम्–अद्येह नान्दीश्राद्धे अमुकगोत्रास्मन्मात्रादित्रयपित्रादित्रयामुकगोत्रास्म-

---

*अत्र ब्राह्मणोपवेशनादिः ब्राह्मणाचामनान्तः कर्मकलापो यद्यपि पर्वतीयपद्धतौ न दृश्यते तथापि संस्कारभास्करादिपद्धतिषु दर्शनादौचित्याच्च शिष्टैरनुष्ठेय एवेति बोध्यम् ।

*कुशबटूनां मुखकल्पना च प्रमेण कार्येति रुद्रकल्पद्रुमे । दूर्वाकाण्डानि वा स्थापनीयानि । मुखकल्पनाऽत्रापि पूर्ववदेवेति बोध्यम् ।

न्मातामहादित्रयश्राद्धसम्बन्धिनां सत्यवसुसंज्ञकानां विश्वेषां देवानां कृत्ये भवन्तो मया निमन्त्रिताः । निमन्त्रिताः स्म इति प्रतिवचः । पुनर्यवान् गृहीत्वा अद्येह अमुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाममुकदेवीनां नान्दीमुखीनामस्यकर्तव्येऽमुककर्माङ्गनान्दीश्राद्धे भवन्तो मया निमन्त्रिताः । निमन्त्रिताः स्म इति प्रतिवचः । पुनर्यवान् गृहीत्वा अद्येह अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकदेवानां नान्दीमुखानामद्यकर्तव्येऽमुककर्माङ्गनान्दीश्राद्धे भवन्तो मया निमन्त्रिताः । निमन्त्रिताः स्मः । पुनर्यवान् गृहीत्वा अद्येह अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकदेवानां सपत्नीकानां नान्दीमुखानामद्यकर्तव्ये नान्दीमुखश्राद्धे भवन्तो मया निमन्त्रिताः । निमन्त्रिताः स्मः । एवं निमन्त्र्य अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः । भवितव्यं भवद्भिश्च मयाच श्राद्धकारिणा ॥ सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः । भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ॥ इति नियमान् श्रावयेत् । आगतं वः इति प्रश्नः । स्वागतम् इति प्रतिवचः । ततः वैश्वदेविकब्राह्मणपूर्वकं पादप्रक्षालनं कृत्वा पादयोरर्घं दद्यात् । यवकुशगन्धादियुतं पादार्घं सम्पाद्य अद्येह अमुकगोत्रनान्दीमुखास्मन्मात्रादित्रयनान्दीमुखास्मत्पित्रादित्रयामुकगोत्रनान्दीमुखास्मन्मातामहादित्रयश्राद्धसम्बन्धिनः सत्यवसुसंज्ञका विश्वेदेवाः एष पादार्घो वो नमो ( वृद्धिरश्रियै )। अत्र "वृद्धिरश्रियै" इति प्रयोगः पर्वतीयानामेव समाचारसिद्धः । अन्येषां नमोऽन्त एव प्रयोगः । केषांचित् सम्प्रदता वृद्धिरित्यन्तोऽपि । तद्यथासमाचारमेवानुष्ठेयम् । ततः पूर्ववत् पादार्घं सम्पाद्य अमुकगोत्रा-

अस्मन्मातृपितामहीप्रपितामह्यः अमुकदेव्यः नान्दीमुख्यः एष पादार्घो वो नमो वृद्धि१श्रियै । पुनः पूर्ववत्० अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहाः अमुकदेवा नान्दीमुखाः एष पादार्घो वो नमो वृद्धि१श्रियै। पुनः पूर्ववत्० अद्येह अमुकगोत्रा अस्मन्मातामहप्रमातामहवृद्धप्रमातामहा अमुकदेवाः सपत्नीका नान्दीमुखाः एषपादार्घो वो नमो वृद्धि१श्रियै । एवं सर्वेषां पादार्घं दत्त्वा आचम्य श्राद्धदेशे पूर्ववत् ब्राह्मणानुपवेश्य तानाचाम्य)

स्वदक्षिणभागे कर्मपात्रस्थापनं कुर्यात् । "ॐभूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः" इति भूमिं स्पृष्ट्वा तत्र चन्दनेन शङ्खचक्रे लिखित्वा तदुपरि आसनं दूर्वात्रयम्, आसने पात्रं, पात्रे पवित्रं "पवित्रे स्थो वैष्णव्यौ" इत्यनेन मन्त्रेण क्षिपेत् । तत्पात्रं जलेन "ॐशंनो देवीरभिष्टयऽआपो भवन्तु पीतये । शँय्योरभिस्रवन्तु नः" इति पूरयेत् । तत्र

---

१ य. अ २३ म १८ हे देवते त्व भू सुखाना भावयित्र्यसि, भूमिः पृथिव्यभिमानिनी देवताऽसि, अदितिः देवमाताऽसि, विश्व दधाति पुष्णातीति वा विश्व निहितमस्यामिति वा विश्वधाया ईदृशी त्वमसि, विश्वस्य भुवनस्य सर्वस्य भूतग्रामस्य धर्त्री धारयित्री असि । ईदृशी त्वम् पृथिवीं यच्छ नियतां कुरु, पृथिवीं दृह दृढीकुरु, पृथिवीं मा हिंसी पृथिव्या हिंसा मा कुरु ॥

२ य अ. १ क. १२ हे पवित्र शोधके कुशद्वयरूपे युवां वैष्णव्यौ विष्णुसम्बन्धिनी यज्ञसम्बन्धिनी स्थः भवथ । यज्ञो वै विष्णु रिति श्रुतेः ।

३ य. सं. अ. ३६ मं १२ देवी देव्यः ( वा छन्दसीति पूर्वसवर्णः दीर्घ ) दीप्यमाना आप नः अस्माक अभिष्टये अभिषेकाय अभीष्टाय

"ॐ यवोऽसि यवयास्मद् द्वेषो यवयारातीः" इति, "ॐ यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄँल्लोकान्प्रीणाहि नः स्वाहा" इति च यवान् क्षिप्त्वा गन्धाक्षतपुष्पादि तूष्णीं निक्षिप्य तेन जलेनात्मा-

---

वा पीतये पितॄणां पानाय च शं सुखरूपा भवन्तु । अस्माकं स्नाने पाने च आपः सुखयित्र्यो भवन्त्वित्यर्थः । किंच-आपः शंयोः-रोगाणां शमनं भयानां यवनं पृथक्करणं च अभिस्रवन्तु, नः अस्माकं भयरोगनाशं कुर्वन्तु । शमिति शमनार्थकमव्ययम्, योरिति पृथक्करणार्थकमव्ययम् । यद्वा शंयोरित्येकमेव पदं, कल्याणसंयोगायेति तदर्थः । ( अभिपूर्वकात् ष्टै शब्दसंघातयोरित्यस्माद्धातोः क्विपि स्त्यः प्रपूर्वस्येत्यत्र योगविभागात् संप्रसारणे छान्दसत्वाद्धलइति दीर्घाभावे च अभिष्टिशब्दस्तादर्थ्यचतुर्थ्यन्तः ) ।

१ य. सं. अ. ५ । २६, हे धान्यविशेष त्वं यवोऽसि (यौति पृथक् करोतीति यवः) यस्मात्, अतः द्वेष द्वेष्टॄन् शत्रून् ( द्विषधातोर्विच् ) द्वेषो दौर्भाग्यं वा अस्मत् अस्मत्तः यवय पृथक्कुरु । ( युधातोर्ण्यन्तस्य स्वार्थे णिचि छान्दसो वृद्ध्यभावः ) । तथा अरातीः अदानानि च. ( दानार्थकात् राधातोः क्तिन् ) यवय. पृथक् कुरु । अनेन सौभाग्य धनं च प्रार्थ्यते इति भावः ।

२ यवोसिसोमदेवत्यः-कात्यायनश्राद्धसूत्रे. कं. २. ।

यवस्त्वं सोमदेवत्यो भवसि. सोमो देवताऽस्येति सोमदेवत्यः, किम्भूतः गोसवः गां स्वर्गं सूते इति गोसवः, दत्तो यवः पापक्षयं कुर्वाणः स्वर्गं जनयति । पुनः किम्भूतः देवेन विष्णुना निर्मितः उत्पादितः । पुनः किम्भूतः अद्भिः पृक्तः जलेन मिश्रितः । यतस्त्वम् एवंभूतस्तस्मात् अस्माकम् नान्दीमुखान् पितॄन् प्रत्नं चिरकालं पुष्ट्या प्रीणय ॥ एवं यवं स्तुत्वा अस्माकम् नान्दीमुखान् पितॄन् प्रीतान् कुरु इति प्रार्थना वाक्यार्थः ॥ यद्यपि श्राद्धकल्पे तिलोऽसीतिपाठः पद्ममुत्तरत्र स्वधयेति तथापि आश्वलायनेन नान्दीश्राद्धे तथा विधानात् तथैवात्र व्याख्यातम् प्रकरणानुरोधादिति बोध्यम् ॥

नं नान्दीमुखश्राद्धसामग्रीं च सम्प्रोक्ष्य प्राणायामं विधाय—[1]"अपवित्रः पवित्रो वा सर्व्वावस्था गतोऽपिवा । यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यान्तरः शुचिः" ॥ इति विष्णुं स्मरेत् । ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्वाहायै स्वाहायै नित्यमेव नमोनम ३ इति त्रिवारं पठित्वा—सप्तव्याधा दशार्ण्णेषु मृगाः कालञ्जरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥ श्राद्धकाले गया ध्यात्वा ध्यात्वा देवं गदाधरम् । मनसा च पितृन्ध्यात्वा नान्दीश्राद्धं समारभे इति पठेत् । ॐसोमस्य नीविरसि विष्णोः शर्म्मासि शर्म्म यजमानस्य योनिरसि सुसस्याः कृषीस्कृधि ॥ इति मन्त्रेण दक्षिणकट्यां नीवीमारोप्य दूर्वाभिर्दिग्बन्धनम्—अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् । तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः । विदिशश्च

१ य. स अ-४-म १० हेवस्त्र त्व सोमस्य लतात्मकस्य नीविसंवरणमसि, किञ्च त्व विष्णो व्यापकस्य यज्ञस्य शर्मासि सुखहेतुर्भवसि, अत यजमानस्य शर्म- सुख, कुरु इति शेष । किञ्च इन्द्रस्य पश्वर्यस्य योनि कारणमसि अत सुसस्या शोभनधान्या कृषी कृधि कुरु । आच्छादन विना न किमपि स्वकार्यं निष्पादयितु प्रभवतीति आच्छादनमेव स्तूयते ।

एव वस्त्र स्तुत्वा यवदूर्वात्रयसहिता वस्त्रदशा दक्षिणकट्या बन्धयेत् । नान्दीश्राद्धातिरिक्तश्राद्धे तु वामकट्या सतिलमोदकवस्त्रदशाबन्धनम् । स्पष्ट चद देवयाज्ञिककृतपिण्डपितृयज्ञपद्धतौ, श्राद्धप्रकरण निर्णयसिन्धौच । गदाधरेणच पारस्करगृह्यभाष्ये प्रथमकाण्डे द्वादश्या कण्डिकाया पदार्थक्रमदर्शनावसर सविस्तर नानामतप्रदर्शनपूर्वक निरूपितमिदम् । वामदक्षिणयोश्चाचाराद्व्यवस्थेत्यपि तत्रैवेति ।

"ॐयवोऽसि यवयास्मद् द्वेषो यवयारातीः" इति, "ॐयवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄँल्लोकान्प्रीणाहि नः स्वाहा" इति च यवान् क्षिप्त्वा गन्धाक्षतपुष्पादि तूष्णीं निक्षिप्य तेन जलेनात्मा-

---

वा पीतये पितृणां पानाय च शं सुखरूपा भवन्तु। अस्माकं स्नाने पाने च आपः सुखयित्र्यो भवन्त्वित्यर्थः। किंच–आपः शंयोः–रोगाणां शमनं भयानां यवनं पृथक्करणं च अभिस्रवन्तु, नः अस्माकं भयरोगनाशं कुर्वन्तु। शमिति शमनार्थकमव्ययम्, योरिति पृथक्करणार्थकमव्ययम्। यद्वा शंयोरित्येकमेव पदं, कल्याणसंयोगायेति तदर्थः। (अभिपूर्वकात् ष्ट्यै शब्दसंघातयोरित्यस्माद्धातोः क्विपि स्त्यः प्रपूर्वस्येत्यत्र योगविभागात् संप्रसारणे छान्दसत्वाद्धलइति दीर्घाभावे च अभिष्टिशब्दस्तादर्थ्यचतुर्थ्यन्तः)।

१ य. सं. अ. ५। २६, हे धान्यविशेष त्वं यवोऽसि (यौति पृथक् करोतीति यवः) यस्मात्, अतः द्वेष द्वेष्टॄन् शत्रून् (द्विषधातोर्विच्) द्वेषो दौर्भाग्यं वा अस्मत् अस्मत्तः यवय पृथक्कुरु। (युधातोर्व्यत्ययेन स्वार्थे णिचि छान्दसो वृद्ध्यभावः)। तथा अरातीः अदानानि च. (दानार्थकात् राधातोः क्तिन्) यवय, पृथक् कुरु। अनेन सौभाग्य धनं च प्रार्थ्यते इति भावः।

२ यवोसिसोमदेवत्यः–कात्यायनश्राद्धसूत्रे. कं. २.।

यवस्त्वं सोमदेवत्यो भवसि. सोमो देवताऽस्येति सोमदेवत्यः, किम्भूतः गोसवः गां स्वर्गं सूते इति गोसवः, दत्तो यवः पापक्षयं कुर्वाणः स्वर्गं जनयति। पुनः किम्भूतः देवेन विष्णुना निर्मितः उत्पादितः। पुनः किम्भूतः अद्भिः पृक्तः जलेन मिश्रितः। यतस्त्वम् एवंभूतस्तस्मात् अस्माकम् नान्दीमुखान् पितॄन् प्रत्नं चिरकालं पुष्ट्या प्रीणय॥ एवं यवं स्तुत्वा अस्माकम् नान्दीमुखान् पितॄन् प्रीतान् कुरु इति प्रार्थना वाक्यार्थः॥ यद्यपि श्राद्धकल्पे तिलोऽसीतिपाठः एवमुत्तरत्र स्वधयेति तथापि आश्वलायनेन नान्दीश्राद्धे तथा विधानात् तथैवात्र व्याख्यातम् प्रकरणानुरोधादिति बोध्यम्॥

नं नान्दीमुखश्राद्धसामग्रीं च सम्प्रोक्ष्य प्राणायामं विधाय–"अपवित्रः पवित्रो वा सर्व्वावस्था गतोऽपिवा। यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यान्तरः शुचिः"॥ इति विष्णुं स्मरेत्। ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्य एवच। नमः स्वाहायै स्वाहायै नित्यमेव नमोनमः॥ इति त्रिवार पठित्वा–सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दीर्घमध्वान यूयं किमवसीदथ॥श्राद्धकाले गया ध्यात्वा ध्यात्वा देवं गदाधरम्। मनसा च पितॄन्ध्यात्वा नान्दीश्राद्धं समारभे इति पठेत्। ॐसोमस्य नीविरसि विष्णोः शर्म्मासि शर्म्म यजमानस्य योनिरसि सुसस्याः कृषीस्कृधि॥इति मन्त्रेण दक्षिणकट्या नीवीमारोप्य दूर्वाभिर्दिग्बन्धनम्—अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्। तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः। विदिशश्च

१ य स अ–४–म १० हे वस्त्र त्व सोमस्य लतात्मकस्य नीविसवरणमसि, किञ्च त्व विष्णो व्यापकस्य यज्ञस्य शर्मासि सुखहेतुर्भवसि, अत यजमानस्य शर्म– सुख, कुरु इति शेष। किञ्च इन्द्रस्य वेश्यर्येस्य योनि कारणमसि अत सुसस्या शोभनधान्या कृषी एधि कुरु। आच्छादन विना न किमपि स्वकार्यं निष्पादयितु प्रभवतीति आच्छादनमेव स्तूयते।

एव वस्त्र स्तुत्वा यवदूर्वात्रयसहिता वस्त्रदशा दक्षिणकट्या बन्धयेत्। नान्दीश्राद्धातिरिक्तश्राद्ध तु वामकट्या सतिलमोटकवस्त्रदशाबन्धनम्। स्पष्ट चद देवयाज्ञिककृतपिण्डपितृयज्ञपद्धतौ, श्राद्धप्रकरण निर्णयसिन्धौच। गदाधरेणच पारस्करगृह्यभाष्ये प्रथमकाण्डे द्वादश्या काण्डिकाया पदार्थक्रमदर्शनावसर सविस्तर नानामतप्रदर्शनपूर्वक निरूपितमिदम्। वामदक्षिणयोश्चाचाराद्व्यवस्थेत्यपि तत्रैवेति।

गणाः सर्वे रक्षन्तूर्ध्वमधोऽपिवा ॥ रक्षोभूतपिशाचेभ्यस्तथैवाःसुरदोषतः । सर्व्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥ यवा रक्षन्तु दितिजात् दर्भा रक्षन्तु राक्षसात् । पाङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्व्वरक्षकः ॥ गायत्र्या कर्मपात्रोदकमभिमन्त्र्य तेन जलेन"शूद्रादिदृष्टिनिपातदोषापादामान्नादीनां पवित्रताऽस्तु" इति आमान्नादीन् प्रोक्षेत्।

अथ प्रतिज्ञासंकल्पः-अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्राणाम् अस्मन्मातृपितामहीप्रपितामहीनाम् अमुक देवीनां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखीनां, तथाऽमुकगोत्राणाम् अस्मत्पितृपितामहप्रपितामहानाम् अमुकदेवानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां, तथाऽमुकगोत्राणाम् अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकदेवानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां प्रीतये अमुककर्मनिमित्तकं (अमुककर्माङ्गमिति वा) सत्यवसुसंज्ञकविश्वदेवपूर्वकं संक्षिप्तसंकल्पविधिना नान्दीमुखश्राद्धमहं करिष्ये । ॐकुरुष्व इति प्रतिवचः । ब्राह्मणक्रमेण आसनानि दद्यात्-दूर्वात्रयं गृहीत्वा अद्येह नान्दीमुखामुकगोत्रास्मन्मात्रादित्रयश्राद्धसंबन्धिनां तथाऽमुकगोत्रास्मत्पित्रादित्रयश्राद्धसम्बन्धिनां तथाऽमुकगोत्रास्मन्मातामहादित्रयश्राद्धसम्बन्धिनां सत्यवसुसञ्ज्ञकानां विश्वेषांदेवानाम् इदमासनं वो नमो वृद्धिरश्रियै । तथाऽमुकगोत्राणाम् अस्मन्मातृपितामहीप्रपितामहीनाम् अमुकदेवीनां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखीनाम् इदमासनं वो नमो वृद्धि२ श्रियै । तथाऽमुकगोत्राणाम् अस्मत्पितृपितामहप्रपितामहानाम् अमुकदेवानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानाम् इदमासनं वो नमो वृद्धि २ श्रियै । तथाऽमुकगोत्राणाम् अस्मन्मातामहप्र-

मातामहवृद्धप्रमातामहानाम् अमुकदेवानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानाम् इदमासनं वो नमो वृद्धि २ श्रियै । इत्यासनानि दत्त्वा (सामगानां आसनदाने चतुर्थी कार्या) ततः क्रमेण पूजनम् ॐ*सप्तऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो ऽअस्वप्नजौ सत्रसदौ च देवौ ॥इति,ॐसत्यवसुसञ्ज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नमः ॐमातृपितामहीप्रपितामहीभ्यो नमः ॐपितृपितामहप्रपितामहेभ्यो नमः ॐमातामहप्रमातामहवृद्धप्रमातामहेभ्यो नमः इति च गन्धाक्षतपुष्पधूपदीपनैवेद्यवासोभूषणादिभिः सम्पूज्य सङ्कल्पः–अद्येह अमुकगोत्रास्मन्मात्रादित्रयश्राद्धसंबन्धिनः तथा ऽमुकगोत्रास्मत्-

---

* य. स. अ० ३४–कं–५५ सप्त ऋषयः प्राणाः त्वक्चक्षुःश्रवणरसनघ्राणमनोबुद्धिलक्षणाः शरीरे प्रतिहिताः व्यवस्थिताः, ते एव सप्त *सदं सदाकालम् अप्रमाद सावधानं यथा स्यात्तथा शरीरं रक्षन्ति । ते सप्त स्वपतो नरस्य लोकम् आत्मानम् ईयुः–प्राप्नुवन्ति । लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते । किञ्च ताः सप्त आपः– आप्नुवन्ति व्याप्नुवन्ति देहम् इत्यापः व्यापनाः, मनआदीनां देहव्यापित्व प्रसिद्धमेव । *तत्र तस्याम् ऋषीणां लोकगमनावस्थायां देवौ दीप्यमानौ प्राणापानौ जागृतः जागरणं कुर्वाते । कीदृशौ तौ, अस्वप्नजौ–न स्वप्नो निद्रा जायते ययोस्तौ, अस्वप्नजौ तथा सत्रसदौ– सतां जीवानां त्राणं रक्षणं सत्रं तत्र सीदतः तौ सत्रसदौ– जीवितदातारौ इत्यर्थः । विश्वेषां देवानां वस्वादिपितॄणां च वृद्ध्याद्यधिष्ठातृत्वभावनया अनेन मन्त्रेण तेषां पूजनम् ।

इत्थं भाविताश्च ते अस्माकं रक्षणं कुर्वन्तु इति प्रार्थना वाक्यार्थः ॥

पित्रादित्रयश्राद्धसवन्धिनः तथाऽमुकगोत्रास्मन्मातामहादित्रय-श्राद्धसम्बन्धिनः सत्यवसुसञ्ज्ञका विश्वेदेवा अर्चनविधौ इमानि [illegible] यथाविभागं वो न- [illegible] मातृपितामहीप्रपिता-मह्यः अमुकदेव्यः नान्दीमुख्यः, तथाऽमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकदेवा वसुरुद्रादित्यस्वरूपा नान्दीमुखाः, तथाऽमुकगोत्रा अस्मन्मातामहप्रमातामहवृद्धप्रमातामहा अमुकदेवाः सपत्नीका वसुरुद्रादित्यस्वरूपा नान्दीमुखाः अर्चनविधौ इमानि गन्धाक्षतपुष्पधूपदीपनैवेद्यवासोभूषणादीनि यथाविभागं वो नमो वृद्धि २ श्रियै । अर्चनाविधिः परिपूर्णोऽस्तु, इति यजमानः । अस्तु परिपूर्णः इति ब्राह्मणाः । गन्धादिदानाचमनं कृत्वा आमान्नं दधिघृतादिसहितमष्टधा चतुर्द्धा वा विभज्य ब्राह्मणाग्रे संस्थाप्य सङ्कल्पः– अद्येह अमुकगोत्रास्मन्मात्रादित्रयश्राद्धसंबन्धिभ्यः तथा ऽमुकगोत्रास्मत्पित्रादित्रयश्राद्धसंबन्धिभ्यः तथाऽमुकगोत्रास्मन्मातामहादित्रयश्राद्धसम्बन्धिभ्यः सत्यवसुसंज्ञकेभ्यो विश्वेभ्योदेवेभ्य इदमामान्नं दधिघृतजलसहितं यथांशं वो नमो वृद्धि २ श्रियै । तथाऽमुकगोत्राभ्यः अस्मन्मातृपितामहीप्रपितामहीभ्यः अमुकदेवीभ्यो वसुरुद्रादित्यस्वरूपाभ्यो नान्दीमुखीभ्य इदमामान्नं दधिघृतजलसहितं यथाविभागं वो नमो वृद्धि २ श्रियै । तथाऽमुकगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्यो ऽमुकदेवेभ्यो वसुरुद्रादित्यस्वरूपेभ्यो नान्दीमुखेभ्य इदमामान्नं दधिघृतजलसहितं यथाविभागं वो नमो वृद्धि २ श्रियै । तथाऽमुकगोत्रेभ्योऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यो ऽमुकदेवेभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यो नान्दीमुखेभ्य

इदमामान्नं दधिघृतजलसहितं यथाविभागं वो नमो वृद्धि २ श्रियै इति सङ्कल्प्य अन्नपूजनम्–सप्तऋषयइति मन्त्रेण । ॐयथेमां वाचङ्कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्यांॅ शूद्राय चार्य्यायच स्वाय चारणायच । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यताम् इति पठेत् । इत्यन्नपूजनं कृत्वा दक्षिणासङ्कल्पः–देयद्रव्यं जलेन सम्प्रोक्ष्य गन्धाक्षतपुष्पैः सम्पूज्य अद्येहेत्यादि सङ्कीर्त्य अमुकगोत्राणाम् अस्मन्मातृपितामहीप्रपितामहीनाम् अमुकदेवीनां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखीनां तथाऽमुकगोत्राणाम् अस्मत्पितृपितामहप्रपितामहानाम् अमुकदेवानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां तथाऽमुकगोत्राणाम् अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकदेवानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां प्रीतयेऽमुककर्म्मनिमित्तकसत्यवसुसञ्ज्ञकविश्वदेवपूर्वकनान्दीमुखश्राद्धकर्म्मणः साङ्गफलमाप्तये साद्गुण्यार्थंच मातॄणां पितॄणां मातामहानां विश्वेषांदेवानां च प्रीतये इयं दधिद्राक्षामलकनिष्क्रयिणी दक्षिणा यथाविभागं वो नमो वृद्धिश्श्रियै इति । स्वस्तिलकम्–सत्यानुष्ठानसम्पन्नाः सर्वदा यज्ञबुद्धयः ।पितृमातृपराश्चैव सन्त्वस्मत्कुलजा नराः । विशेषपूजनम्–आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं नृणाम्प्रीताः पितामहाः॥ आयुः पुत्रान् यशः स्वर्गं कीर्त्तिं पुष्टिं बलं श्रियम्।पशून् सुखं धनन्धान्यं प्राप्नुयां पितृपूजनात् ॥ ततः–देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्वाहायै स्वाहायै नित्यमेव नमोनमः ३ इति त्रिः पठित्वा सप्तव्याधा इति च पठित्वा ततः अमुककर्म्मनिमित्तकनान्दीमुखश्राद्धं विसर्जये इति वदेत् । इदं

श्राद्धम् देशहीनं कालहीनं श्रद्धाहीनं भावनाहीनं दक्षिणाहीनं वाक्यहीनं यत्कृतं तत्सुकृतमस्तु यन्नकृतं तत् श्रीविष्णोः प्रसादात् ब्राह्मणानां वचनात् सर्वं परिपूर्णमस्तु इति यजमानप्रार्थना । अस्तु परिपूर्णम् इति विप्रोक्तिः । उत्तिष्ठतेतिब्राह्मणानुत्थाप्य नीर्वीं विस्रंस्य कर्म्मपात्रं भ्रमयित्वा विसृज्य आचम्य यस्यस्मृत्येतिपठित्वा अच्युतायनमः ३ इति त्रिर्वदेत् । ब्राह्मणेभ्यः सम्पूज्य आमान्नं दक्षिणां च दद्यात् । गोत्रादिनिषेध इव तत्सहचरितः संकल्पवाक्ये प्रथमान्तत्वनियमोऽपि कातीयैर्नादर्त्तव्यः॥

इत्याभ्युदयिकश्राद्धम् ॥

## अथ पुण्याहवाचनम् ।

चतुरो ब्राह्मणानुत्तराभिमुखान्स्थापयित्वा संस्थाप्य अर्घं संस्थाप्य सङ्कल्पः—अद्येहेत्यादिदेशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्म्माऽहं अमुककर्म्मणि सर्व्वाभ्युदयप्राप्तये ब्राह्मणद्वारा पुण्याहं वाचयिष्ये, तदङ्गतया चतुर्णां ब्राह्मणानां पूजनं वरणञ्च करिष्ये इति सङ्कल्प्य ब्राह्मणेभ्यो ऽर्घं दद्यात् । तत्र मन्त्रः—भूमिदेवाग्रजन्मासि त्वं विप्र पुरुषोत्तम । प्रत्यक्षो यज्ञपुरुषो ह्यर्घोऽयं प्रतिगृह्यताम् ॥ इत्यर्घं हस्ते दत्त्वा पूजयेत्—गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ नमोऽस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ इति गन्धाक्षतपुष्पादिभिः सम्पूज्य वरणङ्कुर्यात्—एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यैः अमुककर्मणि सर्वाभ्युदयप्राप्तये पुण्याहवाचनार्थं ब्राह्मणं त्वामहं वृणे । वृतोऽस्मि इति प्रत्युक्तिः ब्राह्मणस्य । एवं क्रमेण चतुर्णां ब्राह्मणानां वरणं

कृत्वा सर्वेभ्योऽञ्जलिं बध्वा मन्त्रं पठेत्–ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या ऽउपमा ऽअस्य विष्ठाः स तस्य योनिमसतश्च विवः॥ ॐबृहस्पते अति यदर्य्यो ऽअर्हाद् द्युमद्विभाति क्र-

---

१ यजमानस्य; मन्त्रपाठासम्भवे तत्प्रतिनिधिः पुरोहितोऽन्यो वा मन्त्रं पठेत्। एवमुत्तरत्र सर्वत्र बोध्यम्।

२ य. सं अ. १३–मं–३–ब्रह्म आदित्यरूपम् पुरस्तात् प्राच्यां दिशि प्रथमम् जज्ञानम् जायते इत्यर्थः। जौहोत्यादिकात् जन्धातोः शानचि शपः श्लौ जज्ञानमिति रूपम्। ततः सीमतः मध्यस्थानात् इमान् लोकान् यः वि आवः व्यावृणोति (व्यवहिताश्चेति वेः व्यवहितप्रयोगः) विवृतान् करोति। किम्भूतात् मध्यस्थानात्, सुरुचः रोचमानात्। यद्वा लोकान् इत्यस्य सुरुच इति विशेषणम्। किम्भूतः सूर्यः, वेनः कान्तः मेधावी वा। स आदित्यः बुध्न्याः बुध्नमन्तरिक्षं तत्र भवाः बुध्न्याः दिशः विवः विवृणोति (व्यत्ययो बहुलमिति लुग्विकरणकत्वाच्छपो लुक् वचनलोपश्च) सतो मूर्तस्य घटपटादेः, असतः अमूर्तस्य वाय्वादेश्च योनिं प्रभवं, विवः प्रकाशयति। कीदृशीः बुध्न्याः, उपमाः उप समीपे मान्ति भूतानि यासु ता उपमाः सावकाशा इत्यर्थः। अतएव अस्य जगतो विष्ठाः विविधस्थानभूताः विविधं तिष्ठन्ति यासु ताः। आदित्य एव लोकान् दिशो भूतानि च अभिव्यनक्तीत्यर्थः।

यत्तेजसा प्रकाशित आदित्यः सर्वमिदं प्रकाशयति तद्रूपस्त्वम् इत्येवं ब्राह्मणः प्रार्थ्यते इति भावः॥

३ य. सं. अ. २६ मं. ३– ऋतात् सत्यात् ब्रह्मणः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य सः ऋतप्रजातः हे ऋतप्रजात बृहस्पते बृहतां वेदानां बृहत्याः वाचो वा पते पालक चित्रं नानाविधं तत् द्रविणं अस्मासु यजमानेषु अति अतिशयेन धेहि धारय स्थापय देहीत्यर्थः। तद्धनं किम् अर्यः स्वामी यत् धनं अर्हात् अर्हति पूजयति (लेटोऽडाटौ इति आडागमे इतश्च लोपः इतीकारलोपः) ईश्वरयोग्यं धनं देहीत्यर्थः यद्धनं जनेषु लोकेषु विभाति विविधं

तुमज्जनेषु। यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम्। वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ भोब्राह्मणाः "मम गृहे पुण्याहं भवन्तो ब्रुवन्तु" ३।ब्राह्मणाः-ॐपुण्याहम् ३ ॐपुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ यजमानः-स्वस्तिर्या अविनाशाख्या लोककल्याणसिद्धिदा। विनायकप्रिया नित्यं तां च स्वस्ति ब्रुवन्तु नः। भो ब्राह्मणाः "मम गृहे स्वस्ति भवन्तो ब्रुवन्तु" ३। ब्राह्मणाः-ॐस्वस्ति ३ ॐस्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ यजमानः-सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता। सम्पूर्णा सुप्रभावाच तां च ऋद्धिं ब्रुवन्तु नः ॥ भोब्राह्मणाः "मम गृहे ऋद्धिं भवन्तो ब्रुवन्तु" ३। ब्राह्मणाः—ॐऋद्ध्यताम् ३ ॐसत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम।

---

शोभते। कीदृशं धनं द्युमत् द्यौः कान्तिः अस्यास्तीति द्युमत्। क्रतुमत् क्रतवो यज्ञा विद्यन्ते येन तत्। येन यज्ञाः क्रियन्ते तादृशं धनं देहीत्यर्थः। यद्धनं शवसः शवसा बलेन दीदयत् दापयति धनान्तरं तद्धनं देहीत्यर्थः। (दय दानगत्यादिषु अस्माण्णिजन्तात् लुङि रूपम् अडभाव आर्षः।) ब्राह्मण एव बृहस्पतित्वभावनया प्रार्थ्यते इत्यर्थः ॥

१ पुनन्तु-अ-१९-मं-३९-देवानां जनाः देवजनाः देवानुगामिनो जनाः मा माम् पुनन्तु। मनसा सह धियः बुद्धयः 'कर्माणि वा मां पुनन्तु। विश्वा विश्वानि (शेश्छन्दसीति शेर्लोपः) सर्वाणि भूतानि मा माम् पुनन्तु। हेजातवेदः त्वमपि माम् पुनीहि ॥

२ स्वस्तिनः-अ-२५-मं-१९- व्याख्यातः शान्तिपाठे।

३ सत्रस्य ऋद्धिः-अ-८ मं-५२ हे(साम)सत्रस्य ऋद्धिः समृद्धिः

दिवं पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥ यजमानः–वैधृतौ च व्यतीपाते सङ्क्रान्तौ राहुपर्व्वणि । यादृग्वृद्धिमवाप्नोति तां च वृद्धिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः"मम गृहे वृद्धिं भवन्तो ब्रुवन्तु" ३। ब्राह्मणाः–ॐवृद्ध्यताम्३ ॐज्यैष्ठ्यञ्च मऽआधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे व्वरिमा च मे प्रथिमा च मे व्वर्षिमा च मे द्राघिमा च मे व्वृद्धञ्च मे व्वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥ यजमान–पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सर्वगन्धैस्तत्कल्याणं ब्रुवन्तु नः ॥ भोब्राह्मणाः "मम गृहे कल्याणं भवन्तो ब्रुवन्तु"३। ब्राह्मणाः–ॐकल्याणं३ ॐयथेमांव्वाचं कल्याणी-

---

त्वमसि अतो वय ज्योति–आदित्यलक्षणम् अगन्म–प्राप्ता, तत अमृता अमरणधर्माण अभूम भूता, पृथिव्या सकाशात् दिव द्युलोकम् अध्यारुहाम अध्यारूढा द्युलोकारूढा । ततो देवान् इन्द्रादीन् अविदाम जानीम पश्याम इत्यर्थ (वत्तेर्व्यत्ययेन तुदादित्वे लङि रूपम्)। ज्योति ज्योतीरूप स्व स्वर्गञ्च अविदाम।

ज्यैष्ठ्यञ्चमे अ–१८–म–४ ज्येष्ठस्य भाव ज्यैष्ठ्यम् प्रशस्ततमम्, अधिपतेर्भाव आधिपत्य स्वामित्व, मन्यु मानस कोप, भाम अधिक्षेपादिलिङ्गको बाह्य कोप, न मीयते इत्यम अपरिमेयत्वम् अन्यैरियत्तया परिच्छेत्तुमशक्यत्वम्, अम्भ शीतमधुर जल, जेमा जयस्य भावो जयसामर्थ्यं, (छान्दसत्वादिमनिचि यकारलोपे एते छान्दसो यकारलोप) महतो भाव महिमा महत्त्व सम्पत्त्यादिना, उरोर्भाव वरिमा प्रजादिविशालता, पृथोर्भाव प्रथिमा गृहक्षेत्रादिविस्तार, वृद्धस्य भावो वर्षिमा दीर्घजीवित्व, दीर्घस्य भावो द्राघिमा अविच्छिन्नवशत्वम्, वृद्ध प्रभूतमन्नधनादि, वृद्धि विद्यादिगुणैरुत्कर्ष –एते मे कल्पन्ताम् सम्पद्यन्ताम इत्यर्थ ।

यथेमां वाचम् अ–२६–म–२ इमां कल्याणीम् अनुद्वेगकरीं वाचम्

मावदानि जनेभ्यः ब्रह्मराजन्याभ्याᳬं शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुप माऽदो नमतु ॥ यजमानः–सरित्पतेश्च या कन्या या श्रीर्विष्णुगृहे स्थिता । सर्वसौख्यवती लक्ष्मीस्तां श्रियं च ब्रुवन्तु नः ॥ भोब्राह्मणाः "मम गृहे श्रीरस्त्विति भवन्तो ब्रुवन्तु" ३ ब्राह्मणाः–ॐश्रीरस्तु ३ ॐमनसः काममाकूतिं वाचः सत्यमशीय । पशूनाᳬं रूपमन्नस्य रसो यशः श्रीः श्रयताम् ॥ यजमानः—शङ्खासुरविपत्तौ च यथा शान्तिर्धरातले । यथाच देवदेवानां तां च शान्ति ब्रुवन्तु नः ॥ भो ब्राह्मणाः "मम गृहे शान्तिं भवन्तो ब्रुव-

---

अहं *यथा यतः आवदानि सर्वतो ब्रवीमि "दीयतां" "भुज्यताम्" इति सर्वेभ्यो यचिम–केभ्यः, ब्रह्मराजन्याभ्यां ब्रह्मणे ब्राह्मणाय राजन्याय क्षत्रियाय च शूद्राय अर्याय वैश्याय स्वाय आत्मीयाय अरणाय पराय । अरणोऽपगतोदकः शत्रुः, नास्ति रणः शब्दो येन सह वाक्सम्बन्धरहितः शत्रुरिति वा । प्रियो देवानां मध्ये, तथा इत्यध्याहार्यम् । यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं वदामि तथा ततः अहं देवानां प्रियः भूयासम् । इह संसारे दक्षिणायै दक्षिणाया दातुश्च प्रियः भूयासम् । देवाः दक्षिणादातारश्च मयि प्रीतिं कुर्वन्तु । किञ्च मे ममायं कामः समृध्यताम् सफलो भवतु । अयमिति नामनिर्देशः । धनपुत्रादिलाभकामो मे सम्पद्यताम् । किञ्च अदो मा माम् उपनमतु । अद इति इष्टनामग्रहणम् । देवदत्तादिः माम् प्रीणयतु ॥

मनसः कामम्, अ. ३९—मं—४ अहं मनसः कामम् अभिलाषम्, *आकुञ्चनम् आकूतिं प्रयत्नः तच्च अशीय प्राप्नुयाम्।* वाचः सत्यं च अशीय, मद्वाक् सत्यं वदतु । मयि एतत्सर्वं श्रयतां तिष्ठतु–पशूनां रूपम् पशुसम्बन्धिनी शोभा, अन्नस्य रसः स्वादुत्वं, यशः कीर्तिः, श्रीर्लक्ष्मीश्च ॥

न्तु"३ । ब्राह्मणाः— ॐशान्तिः ३ ॐद्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ॐविश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न ऽआसुव ॥

ब्राह्मणा.–मन्त्रार्था. सफलाः सन्तु पूर्णा' सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ पुण्याहवाचनप्रसादोऽस्तु इति पठित्वा–भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु । रक्षन्तु त्वां सदा देवाः सम्पद. सन्तु सर्वदा ॥

---

द्यौ शान्ति अ–३६–म–१७ द्यौ द्युलोकरूपा या शान्ति अन्तरिक्षरूपा च या शान्ति , पृथिवी भूलोकरूपा च या शान्ति , आपो जलरूपा या शान्ति , ओषधय ओषधिरूपा या शान्ति , वनस्पतय वृक्षरूपा या शान्ति , विश्वेदेवा सर्वदेवरूपा या शान्ति , ब्रह्म त्रयीलक्षण परं वा तद्रूपा या शान्ति , सर्वं सर्वजगद्रूपा या शान्ति , शान्तिरेव शान्ति या स्वरूपत शान्ति सा शान्ति मा माम् प्रति एधि अस्तु । छान्दस पुरुषव्यत्यय ॥

विश्वानि देव सवित अ–३०–म–३ हेदेव सवित विश्वानि सर्वाणि दुरितानि पापानि परासुव दूरे गमय । यद्भद्रं कल्याण तत् न अस्मान् प्रति आसुव आगमय ॥ अत्र' पुनन्तु मा" इत्यादय 'विश्वानि देव' इत्यन्ता वैदिका मन्त्रा ब्राह्मणै यजमानेन च सति सम्भवे पठनीया । आशी प्रार्थनस्य 'दानयाचनान्वारम्भवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात्' (का श्रौ अ १ । क १०) इति सूत्रेण यजमानकर्तृकत्वबोधनात् । तदसम्भवे तत्पुरोहितादिअन्यब्राह्मणै सह मन्त्रान् पठेत् । वृताना च ब्राह्मणाना यजमानेष्टप्राप्त्यर्थमेव मन्त्रपाठात् तत्प्रयोगे सर्वमन्त्रस्थास्मच्छब्दस्य स्वार्थसम्बन्धियजमानपरत्वमूह्यम् ।

सपत्ना दुर्ग्रहाः पापा दुष्टसत्त्वाद्युपद्रवाः । तमालपत्रमालोक्य निष्प्रभावा भवन्तु ते ॥ इति तिलकं कृत्वा यजमानस्य हस्ते आशीर्वादं दद्युः ॥

इति बौधायनाद्यनुसारी पुण्याहवाचनप्रयोगः ॥

अथ आश्वलायनाद्युक्तेतिकर्तव्यतासहितश्चतुर्वेदोक्तमन्त्रघटितः कातीयानुष्ठेयः पुण्याहवाचनप्रयोगः । अतएव यजुर्वेदोक्तानां मन्त्राणाम् अत्र पूर्वं प्रयोगः प्रदर्शितः । "आदौ तत्कर्मशाखिनः" इति वचनात् ।

ॐमही द्यौः पृथिवी चन ऽइमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥ इतिमन्त्रेण भूमिं स्पृष्ट्वा- ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि ॥ इति धान्यं तत्र विकिरेत् । ॐआजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः ॥ इति धान्योपरि कलशं स्थापयेत् ॥ ॐवरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद॥इति कलशं जलेन पूरयेत्॥ॐ अꣳशुना ते ऽअꣳशुः पृच्यताम्परुषा परुः।गन्धस्ते सोममवतु मदाय रसो ऽअच्युतः॥इति,गन्धद्वारामिति वा गन्धं प्रक्षिपेत् ॥ ॐया ऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ इति सर्वौषधीः । ॐकाण्डात्० । इति दूर्वाः । ॐअश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता। गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥

इति पञ्चपल्लवान् । ॐ स्योना पृथिवि नो भवान्नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥ इति सप्तमृदः । ॐ याः फलिनीर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व꣡ꣳहसः । इति पूगीफलम् । ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ इति पञ्चरत्नानि ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ इति हिरण्यम् ॥ ॐ सुजातो ज्योतिषा सह शर्म्म वरूथमासदत् स्वाहा । वासो ऽअग्ने विश्वरूपꣳ संव्ययस्व विभावसो ॥ इति युवासुवासा इति वा युग्मवस्त्रेण–रक्तसूत्रेण वा वेष्टयेत् ॥ ओं पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा ऽइषमूर्जꣳ शतक्रतो ॥ इति पूर्णपात्रं कलशे न्यसेत् ॥ ओं याः फलिनीः इति नारिकेलफलं संस्थापयेदिति केषांचित्संप्रदायः ॥ ओं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न ऽआयुः प्रमोषीः ॥ इति अक्षतान् गृहीत्वा. अस्मिन्कलशे साङ्गं सपरिवारं सायुधं सशक्तिकं वरुणमावाहयामि ॥ ओं मनोजूतिरिति अक्षतैः स्थापयेत् । ओम् अपांपतये वरुणाय नमः इति पञ्चोपचारैर्वरुणं संपूज्य ओं तत्त्वायामीति मन्त्रपुष्पाञ्जलिं समर्पयेत् । अनया पूजया. साङ्ग० वरुणः प्रीयताम् । ततो गङ्गाद्यावाहनम् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ ततः कलशाभिमन्त्रणम् ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले त्वस्य स्थितो ब्रह्मा

---

* कलशस्थापनमन्त्रा अग्रे व्याख्यास्यन्ते ।

मध्ये मातृगणाः स्मृताः ॥ कुक्षौतु सागराः सर्वे सप्तद्वीपा वसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशंतु समाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु मम शान्त्यर्थं दुरितक्षयकारिकाः ॥ अथप्रार्थना ॥ देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वंच प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सांनिध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इतिकलशस्थापनविधिः ॥

अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वा । दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानिच॥ओं त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥१॥ तेनायुष्प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति भवन्तो ब्रुवन्तु इति त्रिवारं यजमानः । द्विजाः पुण्यंपुण्याहं दीर्घमायुरस्तु इति त्रिवारम् । यज० ब्राह्मणानां हस्तेषु सुप्रोक्षितमस्तु । द्वि० अस्तु सुप्रोक्षितम् । अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् । ब्राह्मणानांकरे न्यस्ताः शिवा आपो भवन्तु ते ॥ यज० शिवा आपः सन्तु । द्वि० ओंसन्तु शिवा आपः ॥ यज० लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे । सा मे वसतु वै नित्यं सौमनस्यं तथाऽस्तु नः ॥ द्वि० अस्तु सौ० । य० अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम् । यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥ अक्षतञ्चारिष्टं चास्तु । द्वि० अस्तु. अक्ष० । य० गन्धाः पान्तु-

सुमङ्गल्यं चास्तु इति भवन्तो ब्रुवन्तु । द्वि० ओं गन्धाः पान्तु सुमङ्गल्यश्चास्तु । य० अक्षताः पान्तु आयुष्यमस्तु इति भव० । द्वि० अक्ष० आयु० । य०पुष्पाणि पान्तु सौश्रेयसमस्तु इति० । द्वि० ओं पु० पा० सौ०स्तु. । य० ताम्बूलानि पान्तु ऐश्वर्यमस्तु इति-भ० । द्वि० ओं ता. पा० ऐ० स्तु० । य० दक्षिणाः पान्तु-बहुधनमस्तु इति भ० । द्वि० ओं. द० पा. बहु० स्तु । दीर्घमा-युःश्रेयःशान्तिःपुष्टिस्तुष्टिःश्रीर्यशो विद्या विनयो वित्तं बहुपुत्रत्वं चायुष्यं चास्तु । द्वि० ओंतथाऽस्तु । यज० यं कृत्वा सर्ववेदय-ज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमों-कारमादिं कृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहुऋषिसंमतं संवि-ज्ञातम्भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । द्वि० वाच्यताम् ॥

यजुः।ॐभद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्ष-भिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳪंसस्तनूभिर्व्यशेम देव-हितं यदायुः ॥ १ ॥ देवानां भद्रा सुमतिर्ऋजूयतां दे-वानाᳫं रातिरभि नो निवर्तताम्। देवानाᳫंसख्यमुपसे-दिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ २ ॥ दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥३॥

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ ४ ॥ सविता त्वा सवानाᳪं सु-वतामग्निर्गृहपतीनाᳪं सोमो व्वनस्पतीनाम्।बृहस्पति-र्वाचऽइन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्मपतीनाम् ॥५॥ न तद्रक्षाᳪंसि न पिशाचास्तरन्ति देवानामोजः प्रथमजᳪंह्येतत् । यो बिभर्ति दाक्षायणᳫं हिरण्यᳫंस देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते

दीर्घमायुः॥६॥ उच्चा ते जातमन्धसो दिविसद् भूम्याद॑दे । उग्रꣳ शर्म्म महि श्रवः ॥ ७ ॥

ऋक्। ओम् । द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् । द्रविणोदा वीरवतीमिषन्नो द्रविणोदा रासते दीर्घमायुः ॥१॥ सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताऽधरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ २ ॥ नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ॥ भागं देवेभ्यो विदधात्यायं प्र चन्द्रमास्तिरते दीर्घमायुः ॥ ३ ॥ उच्चा दिवि दक्षिणावन्तो अस्थुर्ये ऽश्वदाः सह ते सूर्येण । हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥ ४ ॥

साम.। ॐदेवो३वो३ द्रविणो दाः पूर्णां विवष्ट्वासिचम् । उद्वा१ सिञ्चा२ध्वमुपवा२पृणध्वम् । आदिद्वो देव२। व ओहते । इडा २.३ भा ३.४.३। ओ २. ३.४.५. इ । डा. ॥ १ ॥

अद्यनो देव सवितः । औ हो वा. । इह श्रुवायि । प्रजावा २.३. त्सा । वीः सौभगम्. । पराद्२.३. ष्वा ३. । हो वा. ३ इ । विश्व सु३.३.४.५. वा ६.५-६ दक्षा३१वा.२-३.४.५. ॥ २ ॥

चन्द्रमाआउवा । सुवान्ताराउवा । सुपर्णोधाउवा. । वतेदिवि । नवोहि राउवा. । वद्नाविमा

याउवा। पर्द विन्दाउवा। तिवियुताः। वित्तमा आउवा। स्वरोदा २.३.सा.३.४.३. यि। ई २.३.४.५. इ। डा॥ ३॥

उच्चाता३ यि जातमन्धसाः दिवा इसा.१दूभूर। मिया. २.३ ददाइ। उग्रꣳ शर्मा। महा. २.३. यि श्रवाउ। वा३। स्तौर्दे. २.३.४.५.॥ ४॥

उवा ५.ऽस्मै। गा३. या. ३. ताना रा:। पा. ३. घामा३. ना। या२. ३. आ। हुम्वायि.। दा३वायि.। अभिदेवाꣳइया२च्तताउ। वा. ३. ४. ५.॥ ५॥

अथर्वा। धातारातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नोऽअग्निः। त्वष्टा विष्णुः प्रजया संरराणो यजमानाय द्रविणं दधातु॥ १॥ येन देवं सवितारं पतिदेवा अधारयन्। तेनेमं ब्रह्मणस्पते परिराष्ट्राय धत्तन॥ २॥ नवोनवो भवसि जायमानोऽह्नां केतुरुषसामेष्यग्रम्। भागं देवेभ्यो विदधास्यायन्प्रचन्द्रमस्तिरसेदीर्घमायुः॥ ३॥ उच्चैर्घोषो दुन्दुभिः सत्त्वनायन्वानस्पत्यसम्भृत उस्रियाभिः॥ वाचं क्षुणुवानो दमयन् त्सपत्नान्त्सिंह इव जेष्यमभिपंस्तनीहि॥ ४॥

इत्येता ऋचः पुण्याहे ब्रूयात्॥

यज० व्रतजपनियमतपःस्वाध्यायक्रतुशमदमदयादानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्। ब्रा० समाहितमनसः स्मः। य. प्रसीदन्तु भवन्तः। ब्रा० प्रसन्नाः स्मः। य. ओं शान्तिरस्तु.। द्वि. अस्तु.। य. ॐपु-

ष्टिरस्तु । द्वि. अस्तु । एवं सर्वत्रोत्तरत्र द्विजैर्वाच्यम् । ॐतुष्टिरस्तु । ओंवृद्धिरस्तु । ओं अविघ्नमस्तु । ओं आयुष्यमस्तु । ओं आरोग्यमस्तु । ओंशिवमस्तु । ओं शिवं कर्मास्तु। ओं कर्मसमृद्धिरस्तु। ओं धर्मस० । ओं वेदस० । ओं शास्त्रस० । ओं धनधान्यस० । ओं पुत्रपौत्रस० । ओं इष्टसंपदस्तु । बहिः अनिष्टनिरसनमस्तु । ओं यत्पापं रोगोऽशुभमकल्याणं तद् दूरे प्रतिहतमस्तु । अन्तः—यच्छ्रेयस्तदस्तु । उत्तरे कर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु। उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु। तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् । तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधिदैवते प्रीयेताम्। दुर्गापाञ्चाल्यौ प्रीयेतां । अग्निपुरोगा विश्वेदेवाः प्री० । इन्द्रपुरोगा मरुद्गणाः प्री० । वसिष्ठपुरोगा ऋषिगणाः प्री० । माहेश्वरीपुरोगा उमामातरः प्री० । अरुन्धतीपुरोगा एकपत्न्यः प्री० । ब्रह्मपुरोगाः सर्वे वेदाः प्री० । विष्णुपुरोगाः सर्वे देवाः प्री० । ब्रह्म च ब्राह्मणाश्च प्री० । श्रीसरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्री० । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्री० । भग० ऋद्धिकरी प्री० । भ० पुष्टिकरी प्री० । भ. तुष्टिक. । भगवन्तौ विघ्नविनायकौ प्रीयेताम् । सर्वाः कुलदेवताः प्रीयन्ताम् । सर्वा ग्रामदेवताः प्रीयन्ताम् । बहिः—हताश्च ब्रह्मद्विषः। हताश्च परिपन्थिनः। हता अस्य कर्मणो विघ्नकर्तारः। शत्रवः पराभवं यान्तु । शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यन्त्वीतयः । अन्तः—शुभानि वर्द्धन्ताम् । शिवा आपः सन्तु । शिवा ऋतवः सन्तु । शिवा ओषधयः स. । शि. वनस्पतयः स. । शि. अग्नयः स. । शि. आहुतयः सन्तु । शिवा

अतिथयः स. । अहोरात्रे शिवे स्याताम् ।

यजुः। निकामेनिकामे नः पर्जन्यो व्वर्षतु फलवत्यो न ऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ १ ॥

ऋक् । शन्नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥ शन्नो द्यावापृथिवी शं प्रजाभ्यः शन्नो अस्तु द्विपदे शं चतुष्पदे ॥ १ ॥

साम। त्वष्टा २.४। नो दै वियम्.। वषाः। पर्जन्यो ब्रह्मणस्पा.२. ३. तीः। पुत्रैर्भ्रातृभिरदिति नूपातू. २.३ नाः। दुष्टारा २३. न्त्रा । मेण धा. २. ३. । चा. ३. ४. ३: ॥ ई २ ३. ४-५. इ। डा. ॥ १ ॥

अथर्वा । गणास्त्वोपगायन्तु मारुताः पर्जन्यघोषिणः पृथक् । स्वर्गा वर्षस्य वर्षतो वर्षन्तु पृथिवीमनु ॥ १ ॥

ब्रा० शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ भगवान् पर्जन्यः प्रीयताम् । भगवान्नारायणः प्री०। भग० स्वामी महासेनः प्रीय० । यज० पुरोनुवाक्यया यत्पुण्यं तदस्तु । याज्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु. । प्रातः सूर्योदये यत्पुण्यं तदस्तु. । एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये । ब्रा० वाच्यताम् । ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ १ ॥ भो ब्रा० मम गृहे ऽद्य करिष्यमाणस्य अमुककर्मणः पुण्याहं भवन्तो ब्रुवन्तु. । ॐ पुण्याहम् । अस्य कर्मणः पु०न्तु । ॐ पुण्याहम् । अस्य कर्म०न्तु । ॐ पुण्याहम् । एवं सर्वत्र त्रिर्वदेत् ॥

यजुः। ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ २ ॥

ऋक्। उद्गातेव शकुने साम गायसि ब्रह्मपुत्रइव सवनेषु शंससि। वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमावद विश्वतो नः शकुने पुण्यमावद ॥ २ ॥

साम। पुनानः सोमा३ धारा. २. ३. ४. या.। आपोवसानो अर्षस्यारत्नधायोनिमृतस्य सा२यिद् सायि। ऊँहा ३. उवा। उत्सो देवोहिरा २. ३. हायि। ऊँहा ३ उवा। ण्यया। ऊँ३हो वा। हो ५. इ। डा॥२॥

अथर्व। पुनन्तु मा देवजनाः पुनन्तु मनसो धिया। पुनन्तु विश्वा भूतानि पवमानः पुनातु मा ॥ २ ॥

पुण्याहसमृद्धिरस्तु। यज० पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम्। ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः॥ भो. कल्याणं. भ. ३। ब्रा. ओं कल्याणम् ३।

यजु.। यथेमां वाचं कल्याणिमावदानि जनेभ्यः ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यताम् ॥ ३ ॥

ऋक्.। अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते। यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ ३ ॥

साम: । का ५ या । नश्रा. २ इत्रा ३ आभुवात् । ऊतीसदावृधः स । खा । ॐ ३ हो हा ई । कया. २३ श चा इ । ष्ठया हो ३। हुम्मा. २। वा२ तों. ३.५. हाइ॥३॥

अथर्वा । विश्वजित्कल्याण्यै मा परिधेहि कल्याणि द्विपाच्च-सर्वं नो रक्ष चतुष्पाद्यच्च न स्वम् ॥ ३ ॥ ब्रा.

कल्याणसमृद्धिरस्तु । यज. सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता । संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः । भो ब्रा. ऋद्धिं. ३ । ओं ऋध्यताम् ३ ।

यजुः । सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता ऽअभूम । दिवं पृथिव्या ऽअध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥ ४ ॥

ऋक् । ऋध्याम स्तोमं सनुयाम वाजमानो मन्त्रं सरथेहोप यातम् । यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ ४ ॥--

साम० । ॐ होवा ॐहोवा ॐहो३वा । अगन्म ज्योतिः । अगन्म ज्योतिः । अगन्म ज्योतिः । अमृता अभूम । अमृता.अभूम। अमृता अभूमा।न्तरिक्षं पृथिव्या अध्यारुहामान्तरिक्षं पृथिव्या अध्यारुहामा।न्तरिक्षं पृथिव्या अध्यारुहामा । दिवमन्तरिक्षादध्यारुहाम । ३ । अविदाम देवान् ।३। समुदेवैरगन्महि ।३। ॐहोवा. ॐहोवा. ॐ३होवा. । ३ । सुवर्ज्योती. २. ३.४.५: ॥ ४ ॥

अथर्वा । अपंङ्मन्त्रोयोनिं य आबभूवामृतासुवर्द्ध-

मानः सुजन्मा ॥ अदब्धासुभ्राजमानोऽहेवाभ्रितोधर्ता दाधार त्रीणि ॥ ४ ॥

ऋद्धिसमृद्धिरस्तु ॥ यज० स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा । विनायकप्रिया नित्यं तां च स्वस्तिब्रुवन्तु नः ॥ भो० अमुककर्मणे स्वस्ति भवन्तो ब्रुवन्तु. ३ आयुष्मते स्वस्ति. ३ ।

यजुः । स्वस्ति न ऽइन्द्रो० दधातु ॥ ५ ॥

ऋक्. स्वस्ति ऋद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ॥ सा नो अमासो अरणे निपातु स्वावेशा भवतु देवगोपा ॥ ५ ॥

साम. । त्रातारमिन्द्रमविता । रमी. २. ३ न्द्राम् । हवेहवे सुहवꣳशू । रमी २.३. न्द्राम् । हुवाइनुशक्रंपुरुहू । तमी. २.३. न्द्राम् । इदꣳ स्वस्तिनो मघवा । धा४.३-३. त्वू २ धा ५ इन्द्राद.५.६. ॥ ५ ॥

अथर्व । स्वस्तिमात्रउतपित्रेनो अस्तु स्वस्ति गोभ्यो जगते पुरुषेभ्यः । विश्वं सुभूतं सुविदत्रं नो अस्तु ज्योगेवदृशेम सूर्यम् ॥ ५ ॥

स्वस्तिसमृद्धिरस्तु । यज० मृकण्डमुनेरायुर्यद् ध्रुवलोमशयोस्तथा । आयुषा तेन संयुक्ता जीवेम शरदः शतम् ॥ ब्रा० जीवन्तु भवन्तः ।

यजुः । तच्चक्षुः० शतात् ॥ ६ ॥

ऋक्. । शतं जीव शरदो वर्द्धमानः शतं हेमन्ताञ्छ

तमु वसन्तान् ॥ शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ ६ ॥

साम । हाउहाउहाउ । यशोहाउ । ३ । वर्चोहाउ । ३ । अस्मिन्हायि २ अस्मिन् हा ३. १ उ । वा. २। तवेदिन्द्रावमं वसुत्वं पुष्यसिमध्यमम् । सत्रा विश्वस्य परमस्य राजसि । नाकिष्ठ्वागोषुवृण्वते । हाउहाउहाउ । यशोहाउ ३ । वर्चोहाउ ३ । अस्मिन्हायि । २ । अस्मिन्हा३-१-उ ।-वा.२ । आयुर्विश्वायुर्विश्वं विश्वमायुरशीमहि प्रजात्वष्टरधिनिधेह्यस्मे शतं जीवेम शरदो वयन्ते ॥ २-३ ४-५ ॥

अथर्व । आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधिनिधेह्यस्मै ॥ रायस्पोषं सवितरासुवास्मै शतं जीवाति शरदस्तवायम् ॥ ६ ॥

यज० शिवगौरीविवाहे या या श्री रामे नृपात्मजे । धनदस्य गृहे या श्रीः अस्माकं साऽस्तु सद्मनि ॥ भो. ब्राह्मणा मम सकुटुम्बस्य सपरिवारस्य गृहे श्रियं भवन्तो ब्रुवन्तु. ३ । ब्रा० अस्तु श्रीः ३ ।

यजुः । दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमनाः शतपयाः । परिगृह्य देवा यज्ञमायन् देवा देवेभ्योऽअध्वर्यन्तोऽअस्थुः ॥ ७ ॥

ऋक् । श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति । श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ॥ ७ ॥

साम। भद्राइन्द्रस्यरा १ तायाः। भद्रा२इन्द्र स्यरा२ तायाः। यो अस्य कामं विधर्त्तः॥ नरोपा१ ता यि। मनादानायचोदयन्। मा२. ३. नाः। दानाया चोहुम्। दया ३ ॐ २. ३. ४. वाश्विवे १॥ ७॥

अथर्वा। एह यातु, वरुणः सोमो अग्निर्बृहस्पतिर्वसु भिरेह यातु॥ अस्य श्रियंमुपसंयातु सर्व उग्रस्य चेतु समनसः सजाताः॥ ७॥

यज. प्रजापतिर्लोकपालो धाता ब्रह्माच देवराट्॥ भगवान् शाश्वतो नित्यं नो रक्षन्तु च सर्वतः॥ १॥ आ. भगवान् प्रजापतिः प्रीयताम्॥

यजुः। प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव॥ यत्कामास्ते जुहुमस्तन्नो अस्त्वयम-मुष्य पिताऽसावस्य पिता वयᳪ स्याम पतयो र-यीणाम्॥ ८॥

ऋक्। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥ ८॥

साम। हाउ। ३। इमाः। ३। प्रजाः। ३। प्रजापते। होइ। २। प्रजापते। हा ३१ उ। वा २। ए। हृदय-म्। २। ए। हृदया ३१ उ। वा २। प्रजारूपमजीजने३। इद् इडा २३४५॥ ८॥

अथर्व. प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य

ज्योतिषा वर्चसाच ॥ जरदष्टिः कृतवीर्योविहायाः सहस्रायुः सुकृतश्चरेयम् ॥ ८ ॥

यज. आयुष्मते स्वस्तिमते यजमानाय दाशुषे। क्रियेरन्ना-शिषः सन्तु ऋत्विग्भिर्वेदपारगैः ॥ ब्रा. आयुष्मते स्वस्ति ॥

यजुः । आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम्। वायो ऽअस्मिन् सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

ऋक्। स्वस्तये वाजिभिश्च प्रणेतः संयन्महीरिष आसत्सि पूर्वीः। रायो वन्तारो बृहतः स्यामास्मे अस्तु भग इन्द्र प्रजावान् ॥ ९ ॥

साम। स्यमूषु वाजिना २. १. ४. ५. म्. देवजूता. २. १४ ५. म्. । सहोवानन्तारुना ३ । रꣳरथाना-म् ॥ अरिष्ठना २. ३. ४. यिमीम् । पृतना २. ३. ४. ५ जमाशुम्। स्वस्तजायि । ताक्ष्यमिहा ३. ४. ३. हु ३ वा. ५. इमा ५. ६ ॥ ९ ॥

अथर्वा। येदः स्वस्ति द्रुघणः स्वस्ति परशुर्वेदिः परशुर्नः स्वस्ति हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो यज्ञमिमं जुषन्ताम् ॥ ९ ॥ पुण्याहवाचनसमृद्धिरस्तु ॥

यजमानो ब्राह्मणेभ्यो दक्षिणां दद्यात् ब्राह्मणाश्च यजमानस्याभि—कं कुर्युः। तत्प्रकारोऽग्रे वक्ष्यते ॥

इति चतुर्वेदोक्तमन्त्रपुण्याहवाचनप्रयोगः ॥

लघुशुभकार्येषु विस्तृतग्रहयागकरणासंभवे "आदौ नवग्रहानर्च्य ततः कर्म समाचरेत् । नवग्रहानर्चने तु न सिद्धिर्विधिचोदिता ॥ " इति शुभकर्मनिर्णयोक्तशातातपवचनेन ग्रहाणां होमरहितपूजनमात्रस्यापि आवश्यकत्वप्रतिपादनेन तावन्मात्रमवश्यमनुष्ठेयम्, गणेशपूजनवत् । तावन्मात्रस्याप्यननुष्ठाने ब्रह्मामुरारिरिति पुष्पाञ्जलिसमर्पणपूर्वकं प्रणामोऽनुष्ठेयः । उपनयनविवाहादिशुभकार्येषु तु वक्ष्यमाणरीत्या होमप्रधानो ग्रहयाग एवानुष्ठातुमुचितः । तत्र पूर्वं पूजनमात्रप्रकार उच्यते ।

तत्र वेद्यां पूगीफलेषु अक्षतपुञ्जेषु वा, कलशे एव वा नवग्रहानावाह्य पूजयेत् । वेद्या असंभवे काष्ठफलकमेव ग्राह्यम् । पूजनं च पदार्थानुसमयेन कर्तव्यम् । तस्यौत्सर्गिकत्वात् । "सर्वेषामेकतन्त्रेण रव्यादीनां यथाविधि । पूजनं तु प्रकर्तव्यं पदार्थोऽनुप्रकीर्तितः ॥" इति संस्कारभास्करे हेमाद्रिनिबन्धोद्धृतभविष्योत्तरवचनाच्च । काण्डानुसमयस्वरूपं च तत्रैव-एकैकस्यावाहनादिपुष्पाञ्जल्यन्तपूजनम् । समाप्यच ततोऽन्यस्य इति काण्डोऽनुकीर्तितः ॥ इति । वेद्यां ग्रहपूजनपक्षेऽपि तस्या ऐशान्यां कलशे वरुणपूजनमनुष्ठेयमेव । मत्स्यपुराणादौ तथैव अभिहितत्वात् ।

### अथ ग्रहपूजाप्रयोगः ।

चतुष्कोणहस्तमात्रस्य वितस्त्युच्छ्रितस्य स्थण्डिलस्येशानकोणे तदभावे तादृशस्यैव काष्ठफलकस्य ईशानकोणे अव्रणं ताम्रादिधातुविनिर्मितं हस्तघटितं मृन्मयं वा वह्निदर्ध्यक्षतचन्दनभूषितं वस्त्राच्छन्नं कलशपात्रं सप्तधान्योपरि स्थापयेत् । तत्र

प्रथमं भूमिस्पर्शः—ॐमही द्यौः पृथिवीचन ऽइमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः॥ अथ यवप्रक्षेपः ॐओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि॥ अथ कलशस्थापनम्—ॐआजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पु-

---

महीद्यौः अ. ८ मं० ३२। मही महती द्यौः द्युलोकः पृथिवी भूलोकश्च नः अस्माकम् इमं यज्ञं मिमिक्षताम् (मिह सेचने इत्यस्मात् सनि लोटि प्रथमद्विवचनम्) सेक्तुमिच्छताम्, स्वैः स्वैर्भागैः पूरयतामित्यर्थः। किञ्च भरीमभिः भरणं हिरण्यपशुधान्यादिभिः स्वैः स्वैर्भागैः नः अस्मदीयं गृहं पिपृताम् पूरयताम्। भूमिं हस्तेन स्पृष्ट्वा कलशस्थापनार्थम् अवकाशदानाय एवं प्रार्थयेत्॥

ओषधयः समवदन्त. अ. १२ म. ९६ राज्ञा स्वस्वामिना सोमेन सह ओषधयः ओषधिदेवताः समवदन्त संवादं कृतवत्यः। संवादमेवाह—ब्राह्मणो यस्मै रुग्णाय कृणोति (छान्दसत्वाद् व्यत्ययेन द्वित्वं) अस्मन्मूलादिना चिकित्सां करोति, हेराजन् स्वामिन् सोम तं रुग्णं नरं वयं पारयामसि पारयामः। (इदन्तो मसि इति मसः स्थाने मस्यादेशः)। इत्थम् ओषधीः व्याधिनाशकत्वेन स्तुत्वा भूमौ निक्षिपेत्, अक्षतान् यवान् वा॥

आजिघ्र कलश. अ. ८. म. ४२. हेमहि. पृथ्वि त्वं कलशं पात्रम् आजिघ्र आभिमुख्येन घ्राणं कुरु धारयेति यावत्। किञ्च इन्दवः सोमाः तत्तुल्याः कलशरसाः त्वा त्वाम् आविशन्तु। किञ्च ऊर्जा विशिष्टरसेन पयोमृतेन सह पुनः अस्मान् प्रति निवर्तस्व। या त्वमेव मया स्तुता सा त्वं नः अस्माकम् सहस्रं धुक्ष्व. सहस्रसंख्यं धनं देहि। किञ्च हेपृथिवि त्वत्प्रसादात् उरुधारा बहुपयोयुक्ता पयस्वती धेनुः रयिः धनमपि मा माम् पुनः आविशतात् आगच्छतु इत्यर्थः। इत्थं पृथ्वीं प्रार्थ्य तत्र कलशं स्थापयेत्॥

लघुशुभकार्येषु विस्तृतग्रहयागकरणासंभवे "आदौ नवग्रहानर्च्य ततः कर्म समाचरेत् । नवग्रहानर्चने तु न सिद्धिर्विधिचोदिता ॥" इति शुभकर्मनिर्णयोक्तशातातपवचनेन ग्रहाणां होमरहितपूजनमात्रस्यापि आवश्यकत्वप्रतिपादनेन तावन्मात्रमवश्यमनुष्ठेयम्, गणेशपूजनवत् । तावन्मात्रस्याप्यननुष्ठाने ब्रह्मामुरारिरिति पुष्पाञ्जलिसमर्पणपूर्वकं प्रणामोऽनुष्ठेयः । उपनयनविवाहादिशुभकार्येषु तु वक्ष्यमाणरीत्या होमप्रधानो ग्रहयाग एवानुष्ठातुमुचितः । तत्र पूर्वं पूजनमात्रप्रकार उच्यते ।

तत्र वेद्यां पूगीफलेषु अक्षतपुञ्जेषु वा, कलशे एकत्र नवग्रहानावाह्य पूजयेत् । वेद्या असंभवे काष्ठफलकमेव ग्राह्यम् । पूजनं च पदार्थानुसमयेन कर्तव्यम् । तस्यौत्सर्गिकत्वात् । "सर्वेषामेकतन्त्रेण रव्यादीनां यथाविधि । पूजनं तु प्रकर्तव्यं पदार्थोऽनुप्रकीर्तितः ॥" इति संस्कारभास्करे हेमाद्रिनिबन्धोद्धृतभविष्योत्तरवचनाच्च । काण्डानुसमयस्वरूपं च तत्रैव-एकैकस्यावाहनादिपुष्पाञ्जल्यन्तपूजनम् । समाप्य च ततोऽन्यस्य इति काण्डोऽनुकीर्तितः ॥ इति । वेद्यां ग्रहपूजनपक्षेऽपि तस्या ऐशान्यां कलशे वरुणपूजनमनुष्ठेयमेव । मत्स्यपुराणादौ तथैव अभिहितत्वात् ।

## अथ ग्रहपूजाप्रयोगः ।

चतुष्कोणहस्तमात्रस्य वितस्त्युच्छ्रितस्य स्थण्डिलस्यैशानकोणे तदभावे तादृशस्यैव काष्ठफलकस्य ईशानकोणे अव्रणं ताम्रादिधातुविनिर्मितं हस्तघटितं मृन्मयं वा दधिदूर्वाक्षतचन्दनभूषितं वस्त्राच्छन्नं कलशपात्रं सप्तधान्योपरि स्थापयेत् । तत्र

प्रथमं भूमिस्पर्शः—ॐमही द्यौः पृथिवीचन ऽइमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः॥ अथ यवप्रक्षेपः ॐओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि॥ अथ कलशस्थापनम्—ॐआजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पु-

---

महीद्यौः अ. ८ मं० ३२। मही महती द्यौः द्युलोकः पृथिवी भूलोकश्च नः अस्माकम् इमं यज्ञं मिमिक्षताम्. (मिह सेचने इत्यस्मात् सनि लोटि प्रथमाद्विवचनम्) सेक्तुमिच्छताम्, स्वैः स्वैर्भोगैः पूरयतामित्यर्थः। किञ्च भरीमभिः भरणैः हिरण्यपशुधान्यादिभिः स्वैः स्वैर्भोगैः नः अस्मदीयं गृहं पिपृताम् पूरयताम्। भूमिं हस्तेन स्पृष्ट्वा कलशस्थापनार्थम् अवकाशदानाय एवं प्रार्थयेत्॥

ओषधयः समवदन्त. अ. १२. मं. ९६ राज्ञा स्वस्वामिना सोमेन सह ओषधयः ओषधिदेवताः समवदन्त संवादं कृतवत्यः। संवादमेवाह—ब्राह्मणो यस्मै रुग्णाय कृणोति (छान्दसत्वाद् व्यत्ययेन ध्नुः) अस्मन्मूलादिना चिकित्सां करोति, हेराजन् स्वामिन् सोम तं रुग्णं नरं वयं पारयामसि पारयामः। (इदन्तो मसि इति मसः स्थाने मस्यादेशः)। इत्थम् ओषधीः व्याधिनाशकत्वेन स्तुत्वा भूमौ निक्षिपेत्, अक्षतान् यवान् वा॥

आजिघ्र कलशं. अ. ८. मं. ४२. हेमहि. पृथ्वि त्वं कलशं पात्रम् आजिघ्र आभिमुख्येन घ्राणं कुरु धारयेति यावत्। किञ्च इन्दवः सोमाः तत्तुल्याः कलशरसाः त्वा त्वाम् आविशन्तु। किञ्च ऊर्जा विशिष्टरसेन पयोभूतेन सह पुनः अस्मान् प्रति निवर्तस्व। या त्वमेवं मया स्तुता सा त्व नः अस्माकम् सहस्रं धुक्ष्व. सहस्रसंख्यं धनं देहि। किञ्च हेपृथिवि त्वत्प्रसादात् उरुधारा बहुपयोयुक्ता पयस्वती धेनुः रयिः धनमपि मा माम् पुनः आविशतात् आगच्छतु इत्यर्थः। इत्थं पृथ्वीं प्रार्थ्य तत्र कलशं स्थापयेत्॥

**नमो विश्वताद्राचिः ॥ अथ जलेनापूरणम्–ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद ॥ अथ कुशब्रह्माणं स्थापयेत्—ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर ऽइषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः । सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्ज्जन्यो वर्षतु**

---

वरुणस्योत्तम्भनमसि. अ ४ मं. ३६. हे जलधारे त्वं वरुणस्य वरुणदेवस्य उत्तम्भनमसि अवलम्बनमसि । वरुणस्य जलाधिष्ठातृत्वात् जलमेवं सम्बोध्यते चेतनत्वारोपेण । किञ्च त्वम् वरुणस्य देवस्य स्कम्भसर्जनी–स्कम्भस्य अवरोधस्य सर्जनी साधनभूता स्थः असि । स्थ इति व्यत्ययेन द्विवचनम् । वरुणस्य जलीयत्वात् जलस्य तदवष्टम्भसाधनत्वम् उत्प्रेक्ष्यते । किञ्च त्वम् वरुणस्य देवस्य ऋताय यज्ञाय सदनी उपवेशनी असि । त्वयि उपविष्टो वरुणः यज्ञभागं गृह्णातीत्यर्थः । किञ्च वरुणस्य देवस्य ऋतसदनं यज्ञार्थम् उत्तरासनमपि त्वमेवासि । अतः वरुणस्य देवस्य ऋतसदनम् यज्ञार्थमासनभूतं कुम्भं व्याप्य आसीद तिष्ठ । एवं जलं स्तुत्वा कुम्भे प्रक्षिपेत् ॥

आब्रह्मन् अ. २२. मं. २२. हे ब्रह्मन् नः अस्माकं ( यजमानस्य ) राष्ट्रे देशे ब्राह्मणः ब्रह्मवर्चसी–ब्रह्मवर्चसं वेदः तदस्यास्तीति ब्रह्मवर्चसी वेदवानित्यर्थः आजायताम् । ( आङो व्यवहिताश्चेति व्यवहितप्रयोगः ) । वेदसाध्याः सर्ववैदिकक्रियाः इति प्रथमं वेदसम्पत्तिरेव प्रार्थ्यते । किञ्च राजन्यः क्षत्रियः शूरः आजायताम्, इषव्यः इषुषु कुशलः अतिव्याधी अतिशयेन विध्यतीति अतिव्याधी अत्यन्तं शत्रुव्यधनशीलः महारथश्च आजायताम् । यः एकः सहस्रं जयति स महारथः । दोग्ध्री दुग्धपूरयित्री धे-

**फलवत्यो न ऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ अथ गन्धान्–गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ अथ दूर्वाम्–ऽअकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च (ध्या० पृ० ११०) ॥ अथ सर्वौषधीः**

---

तु आजायताम् । राष्ट्रे इत्यस्य सर्वत्र सम्बन्ध । अनड्वान् वृषभ वोढा वहनशीलो जायताम् । सप्तिः अश्व आशु शीघ्रगामी जायताम् । योषा स्त्री पुरन्धि पुर शरीर सर्वगुणसम्पन्न दधाति इति पुरन्धि जायताम् । रथे तिष्ठतीति रथेष्ठा (क्विप् सप्तम्या अलुक्) रथे स्थितो युयुत्सुर्नर जिष्णु जयनशीलो जायताम् । युवा अस्य इति पदच्छेद । अस्य यजमानस्य युवा समर्थ सभेय सभाया योग्य (ढश्छन्दसि इति ढ) वीर पुत्रो जायताम् । किञ्च न अस्माक राष्ट्रे पर्जन्य निकामे निकामे नितरां कामनाया सत्या वर्षतु । अभ्यासो वीप्सार्थ । न अस्माकम् ओषधय यवाद्या फलवत्य फलयुक्ता पच्यन्ता स्वयमेव पक्का भवन्तु (कर्मकर्तरि लोट्) । न अस्माक योगक्षेम योगेन युक्त क्षेम योगक्षेम स कल्पताम् क्लृप्तो भवतु । अलब्धलाभो योग, लब्धस्य परिपालन क्षेम । इत्थ ब्रह्माण स्तुत्वा कलशोपरि निदध्यात् ॥ अत्र प्रमाण पूर्वमुपन्यस्तम् ॥ (पृ ९४)

श्रीसूक्ते । इह चन्दने ता श्रियमुपह्वये आह्वयामि । श्रियमेव विशेषयति गन्धद्वाराम् । गन्धो गुण तस्य अनुभवद्वारभूता पृथिवीस्वरूपाम् । पृथिव्याश्रितस्यैव गन्धस्यानुभूयमानत्वात् । किञ्च दुराधर्षाम् अनाधृष्या तेजोविशेषशालित्वात् । नित्यपुष्टा सदा स्फीताम्, करीषिणीं करीषसगन्धिनीम् । सर्वभूताना पञ्चमहाभूतानामीश्वरीम्, पृथिव्या सर्वभूतगुणशालित्वात् । चन्दने श्रियमावाह्य कलशे प्रक्षेप कार्य । एवमावाहनेन मम श्रीर्भवत्विति प्रार्थना वाक्यार्थ ॥

हरिद्रां वा-ॐया ऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामह शतं धामानि सप्त च । अथ पूगीफलम्-ॐयाः फलिनीर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः॥ अथदुग्धम्-ॐपयः पृथिव्यां पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम्॥ अथ दधि-

या ओषधीः, अ. १२-मं-७५. युगशब्दः कालवाची त्रयाणां युगानां समाहारः त्रियुगम् त्रिकालं वसन्ते प्रावृषि शरदि च पुरा सृष्ट्यादौ या ओषधीः ओषधयः ( या छन्दसीति पूर्वसवर्णदीर्घः ) पूर्वाः प्रथमाः आविनीभ्यः ओषधीभ्यः आद्याः जाताः उत्पन्नाः देवेभ्यः ऋतुभ्यः ऋत्वर्थम् । ऋतवो वै देवाः इति श्रुतेः । ऋतवः ओषधियुक्ताः कर्तव्याः एतदर्थम् । बभ्रूणां जगज्जनभरणसमर्थानां, पाकेन पिङ्गलवर्णानां वा तासाम् ओषधीनां शतं सप्त च धामानि अहं मनै नु मन्ये एव अवश्यं जाने । ( मन्यतेर्लोटि आत्मनेपदे उत्तमैकवचने व्यत्ययेन शपि एत ऐ इति ऐकारः ) । इत्थम् ओषधिरूपं ध्यात्वा सर्वौषधीः कलशे प्रक्षिपेत् ॥

याः फलिनी, अ० १२ मं. ८९. याः ओषधयः फलिनीः फलिन्यः ( वाछन्दसीति पूर्वसवर्णदीर्घः ) फलयुक्ताः याश्च अफलाः फलरहिताः याश्च अपुष्पाः पुष्परहिताः याश्च पुष्पिणीः पुष्पिण्यः ( पूर्ववत् साधुः ) पुष्पयुक्ताः ताः सर्वा ओषधयो बृहस्पतिप्रसूताः बृहस्पतिप्रेरिताः सत्यः नः अस्मान् अंहसः पापात् रोगरूपात् मुञ्चन्तु पृथक् कुर्वन्तु ॥ फलवत्त्वेनौषधिस्मरणात्फलप्रक्षेपे ऽस्य विनियोग. ॥

पयः पृथिव्याम् अ. १८ मं. ३६ हे पयः त्वमेव पृथिव्याम् ओषधीषु दिवि अन्तरिक्षेच स्थितान् जीवान् धा. दधासि धारयसि, दुग्धरसाधीनत्वात् प्राणिमात्रजीवनस्य । अन्तरिक्षादिजीवानामपि सूक्ष्मभूतो दुग्धरस एव जीवनहेतुरिति भावः । अतस्त्वदनुग्रहात् मह्यं प्रदिशः सर्वा दिशः पयस्वतीः पयस्वत्यः सन्तु । सर्वत्र मम दुग्धरसप्राप्तिर्भवत्विति प्रार्थना वाक्यार्थः ॥

ॐ दाधिक्राव्णो ऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण ऽआयूᳬषि तारिषत् ॥ अथघृतम्—ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्म्मणा विष्कभिते ऽअजरे भूरिरेतसा ॥ अथ पञ्चपल्लवाः— अश्वत्थे वो निषदनं प-

दधिक्राव्णः अ. २३ मं.३२ क्रामति सर्वमतिक्रम्य तिष्ठतीति क्राथा तस्य, अश्वस्य व्यापिनः वाजयति कम्पयति वैरयानिति वाजिनः जिष्णोः जयशीलस्य विष्णोः,अर्थे इति शेषः, यत् दधि अकारिषं (वचनव्ययेनैकवचन, छान्दस इट्) अकार्ष्म व्यवेदयाम तद्दधि नः अस्माकं मुखामुखानि सुरभि सुरभीणि करत् करोतु णः,नः आयूंषि प्रतारिषत् प्रतारयतु प्रवर्धयतु चेति । इत्थं दध्नः मङ्गलद्रव्यत्वेन प्रार्थ्यमानत्वात्स्तुतिर्वाक्यार्थः ॥ स्मार्तविनियोगबलादित्थ मन्त्रौ व्याख्यातौ इति न भाष्यविरोध उद्भावनीयः ॥

घृतवती. अ. ३४. मं. ४१ ये द्यावापृथिव्यौ घृतवत्यौ घृतशब्देन तेजोभागविशेष उच्यते । तद्वत्वादेव भुवनानामभिश्रिया भूतजातानामभ्याश्रयणीये, उर्वी विस्तीर्णे, पृथ्वी पृथुले, आयामविस्ताराभ्यां महत्वं विशेषणद्वयेनोक्तम्, मधुदुघे मधु उदकं तस्य दोग्ध्र्यौ, सुपेशसा सुरूपे, अजरे जरारहिते, भूरि रेतो ययोस्ते भूरिरेतसौ बहुरेतस्के । सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते । ते वरुणस्य आदित्यस्य धर्मणा धारणेन विष्कभिते दृढीकृते ॥ घृतस्य तेजोविशेषसंपादकत्वादेव स्तुतिः । अतोऽनेन मन्त्रेण कलशे घृतप्रक्षेपः ॥ अत्र मधुशर्करयोरपि प्रक्षेप उचितः ।

अश्वत्थेवो० अ. १२ मं. ७९. हे ओषधयः वः युष्माकम् अश्वत्थे आश्वत्थ्याम् उपभृति स्रुचि निषदनं स्थानं भवति, हविषां तत्र स्थापनात् । किञ्च वः युष्माकं पर्णे पलाशपर्णमय्यां जुह्वां वसतिः स्थितिः कृता । होमार्थं जुह्वाम् अध्वर्युणा स्थापनात् । (अश्वत्थपर्णशब्दाभ्यां तद्धितलोपश्छान्दसः) । हविर्भूता ओषधयः प्रार्थ्यन्ते—किलेति विद्याप्रकर्षे, इत् पदार्थे, हेहविर्भूता ओषध-

र्णं वो व्वसतिष्कृता । गोभाज इत्किलासथ यत्स-नवथ पूरुषम् ॥ अथ सप्तमृदः–ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्रथाः ॥ अथ पञ्चरत्नानि– ॐपरि वाजपतिः कविरग्निर्हव्या-न्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ अथहिरण्यं द्रव्यंवा— ॐहिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पति-

---

यः यूयम् अग्नौ हुताः सत्यः गोभाजः असथ भवथ । गाम् आदित्यं भजन्तीति गोभाजः । "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठ-ते" इतिस्मृतेः । किमर्थमिदमित्यत आह । यत् यस्मात्कारणात् पुरुषं यजमानं सनवथ सेवध्वे अन्नदानेन पोषयथ तस्मात् अ-श्वत्थादिः स्थानमित्यर्थः । ( अस्तेः लटि मध्यमबहुवचने व्यत्ययेन शपि रूपम् असथेति । सनवतिः परिचर्यार्थः ॥

स्योना पृथिवि० अ. ३५. मं. २१ हे पृथिवि त्वं नः अस्माकं स्योना सुखरूपा भव । किम्भूता त्वम्, अनृक्षरा । ऋक्षरः कण्टकः तद्ग्रहणं चोरव्याघ्रादिदुःखनिवृत्त्यर्थम् । न सन्ति ऋक्षराः कण्ट-काः दुःखदायिनो यस्यां सा अनृक्षरा । तथा निवेशनी निविशन्ति जना यस्यां सा निवेशनी साधुप्रतिष्ठाना ( अधिकरणे ल्युट् ) । त-था सप्रथाः प्रथनं प्रथः विस्तारः प्रथसा सह वर्तमाना सप्रथाः सर्वतःपृथुः । किञ्च नः अस्मभ्यं शर्म शरणं यच्छा यच्छ देहि ॥

परि वाजपतिः अ. ११. मं. २५ अयमग्निः हव्यानि नानादेवत्या-नि हवींषि पर्यक्रमीत् परिक्रान्तवान् । परिक्रमणं भक्षणार्थं स्वी-करणम् । कीदृशोऽग्निः वाजपतिः वाजस्य, अन्नस्य पतिः पाल-यिता, कविः क्रान्तदर्शनः । किं कुर्वन् हव्यानि पर्यक्रमीत्, दाशुषे हवींषि दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन् । अनेकार्थत्वात् धाधातुः दानार्थः ॥ यतोऽग्निः रत्नानि प्रयच्छन् हवींषि पर्यक्रमीत अतो रत्नानि श्रेष्ठानि इति । अनेन रत्नानि कलशे प्रक्षिपेत् ।

हिरण्यगर्भः अ. १३. मं. ४ हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे

रेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ अथ वस्त्रम्—ॐयदश्वाय वास ऽउपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै। सन्दानमर्वन्तं पड्वीशं प्रिया देवेष्वायामयन्ति। अथोपरि धान्यपूर्णपात्रम्—ॐपूर्णा दर्वि परा पत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहाऽइषमूर्जꣳ शतक्रतो ॥

---

गर्भरूपेणावस्थितः प्रजापतिः हिरण्यगर्भः भूतस्य प्राणिजातस्य अग्रे समवर्तत। प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव। स च जातः उत्पन्नमात्रः एक एव उत्पत्स्यमानस्य सर्वस्य जगतः पतिः ईश्वरः आसीत्। स एक एव पृथिवीमन्तरिक्षं द्यां द्युलोकम् उत अपि च इमां भूमिं लोकत्रयं दाधार धारयतिस्म। (तुजादीनां दीर्घोऽभ्यासस्येति दीर्घः)। पृथ्वी भूः स्वयम्भूः इति अन्तरिक्षनामसु पठितत्वात् पृथ्वीशब्देन अन्तरिक्षलोकोऽत्र उच्यते। कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः। (विभक्तिव्यत्ययश्छान्दसः)। सूत्रात्मनो ब्रह्माण्डस्य तेजोवित्वसाम्येन हिरण्यशब्देनाभिहितत्वात् तत्रोपमानत्वप्रतीतेः स्तुतिः। एवं हिरण्यं स्तुत्वा कलशे प्रक्षिपेत् ॥

यदश्वाय० अ. २५-म. ३९ प्रिया प्रियाणि एतानि वस्तूनि देवेषु आयामयन्ति आगमयन्ति ऋत्विजः, अश्वस्य एतानि देवेष्वेव प्रापयन्ति इत्यर्थः। कानीत्यत आह। अश्वाय यत् अधीवासम् आच्छादकं वासः वस्त्रम् उपस्तृणन्ति (स्तृञ् आच्छादने स्वादिकः)। तथा या यानि हिरण्यानि सौवर्णशकलानि अस्मै अश्वाय उपस्तृणन्ति, तथा अर्वन्तम् अर्वतः (षष्ठ्यर्थे द्वितीया) अश्वस्य सन्दानं शिरोबन्धनं पड्वीशं पादबन्धनम्। एतानि देवेषु प्रापयन्ति। आच्छादकवस्त्रस्य देवेषु प्राप्यमाणत्वात् वस्त्रस्तुतिर्वाक्यार्थः। एवं वस्त्रं स्तुत्वा तेन कलशं वेष्टयेत् ॥

पूर्णादर्वि० अ ३ मं ४९ हे दर्वि अन्नप्रदानसाधनभूते काष्ठादिनिर्मिते त्वं पूर्णा स्थाल्याः सकाशादन्नं गृहीत्वा पूर्णा भूत्वा परा पूर्णत्वादेव उत्कृष्टा सती पत इन्द्रं प्रति गच्छ। सुपूर्णा

ततो वरुणमावाहयेत्–ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः॥

- अथकलशाभिमन्त्रणम्–कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्थिताः॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः। अङ्गैस्तु सहिताः सर्वे कलशं तु

---

कर्मफलेन सुष्ठु पूर्णा सती पुनरापत भूयः अस्मान् प्रति आगच्छ। एवं दर्वीमुक्त्वा इन्द्रमाह– हेशतक्रतो बहुकर्मन् इन्द्र त्वं चाहंच उभौ वस्नेव वस्नेनेव मूल्येनेव (वस्नशब्देन मूल्यं तृतीयायाः पूर्वसवर्णः) इषमभीष्ट हविःस्वरूपमन्नम् ऊर्जं हविर्दानफलरूपं रसविशेषंच विक्रीणावहै परस्पर द्रव्यविनिमयरूपं विक्रयं करवावहै, अहं तुभ्यं हविर्ददामि त्वं मह्यं फलं देहीत्यर्थः॥ पात्रमपि तण्डुलैः पूर्णं दर्वीरूपेण भावयित्वा स्तूयते इति स्तुतिर्वाक्यार्थः। एवं स्मार्तविनियोगबलेनान्यथा मन्त्रा व्याख्याताः अतो न भाष्यविरोधः उद्भावनीयः॥

तत्त्वायामि.–अ. १८ मं. ४९ हे वरुण यजमान. हविर्भिः दत्तैः यद्धनपुत्रादिकमाशास्ते इच्छति यत्कामः तुभ्यं हविर्दत्ते तद् यजमानेष्ट त्वा त्वाम् अह यामि याचामि तत् त्वया यजमानाय दीयताम् इत्यर्थः। अत्र एकस्तच्छब्दः यच्छब्दार्थः। यामि इति याञ्चाकर्मसु पठितः। कीदृशोऽहं, ब्रह्मणा त्रयीलक्षणेन वेदेन वन्दमानः त्वां स्तुवानः। किञ्च हेउरुशंस शंसन शंस. स्तुतिः उरुः महान् शंसः स्तुतिर्यस्य स उरुशंसः तत्सम्बुद्धौ, हेबहुस्तुत इह अस्मिन् स्थाने अहेडमानः हेडते क्रुध्यति हेडमानः न हेडमानः अहेडमानः अक्रुध्यन् सन् त्व बोधि बुध्यस्व त्वं मत्प्रार्थनां जानीहीत्यर्थः (बा छन्दसीति अपित्त्वनिषेधाद् गुणः श्यनो लुक् धलोपश्च छान्दस)। किञ्च नः अस्माकम् आयुः जीवनं माप्रमोषीः मा चोरय (मुष स्तेये लुङ्) पूर्णमायुश्च देहीत्यर्थः॥

समाश्रिताः ॥ अथ प्रार्थना । देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्व्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ त्वयि तिष्ठन्ति सर्व्वेऽपि यतः कामफलप्रदः। त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्व्वदा । ॐस्थिरो भव वीड्वङ्ग ऽआशुर्भव वाज्यर्व्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥ आदित्यादिनवग्रहाश्च भूर्भुवः स्वः इत्यावाह्य एतन्ते इति प्रतिष्ठा ॐभूर्भुवः स्वः कलशे आवाहिताः ब्रह्मवरुणसहितादित्यादिनवग्रहाः साङ्गाः सपरिवाराः सायुधाः सवाहनाः अधिदेवताप्रत्यधिदेवतासहिताः विनायकादिपञ्चलोकपालसहिताः इन्द्रादिदशदिक्पालसहिताः सुप्रतिष्ठिता वरदा भवन्तु । ततोऽर्घं संस्थाप्य प्राणायामं कृत्वा पूजासंकल्पः—अद्येहेत्यादि अमुकराशिरमुकशर्म्माऽहम् अमुककर्मनिमित्तकं कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणाम् अधिदेवताप्रत्यधिदेवताविनायकादिपञ्चलोकपालेन्द्रादिदशदिक्पालसहितानां पूज-

---

स्थिरोभव० अ. ११ म. ४४ इयर्ति प्राति पदार्थं गच्छतीत्यर्वा कलशः हे अर्वन् स्थिरः चलनरहितः सन् त्व वीड्वङ्गः दृढकायो भव । वीडुशब्दो दृढार्थः । आशुः-वेगवान् सन् वाजी अन्नहेतुर्भव। पृथुः विस्तीर्ण सन् अग्नेः सुषदः सुखासनः स्थानेयो भव । सुखेन सद्यते स्थीयते यस्मिन् स सुषदः । कीदृशस्त्वं, पुरीषवाहणः। पुरीषशब्देन पांसुरूपा मृदुच्यते तां वहतीति पुरीष पशव्यं यत्तस्तं वहतीति वा पुरीषवाहणः ( कव्यपुरीषपुरीष्येषु ञ्युट् इति छन्दसि ञ्युट् प्रत्ययः )। कलशस्य सर्वदेवाधिष्ठानत्वादियं स्तुतिः।

नं करिष्ये । ध्यानम् । नागपाशधरः स्वर्णभूषणः पद्मिनीप्रियः । वरुणोऽम्बुपतिः श्रीमान् श्वेतो मकरवाहनः ॥ इति तत्र वरुणं ध्यात्वा–पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंस्थश्च द्विभुजः स्यात् सदा रविः ॥ श्वेतः श्वेताम्बरधरः श्वेताश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । गदापाणिर्द्विबाहुश्च सिंहस्थो वरदो बुधः ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्यो ऽर्कसुतः सदा ॥ नीलाम्बरो नीलवपुः किरीटी मुकुटोज्ज्वलः । नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ इत्युक्तप्रकारेण ग्रहाणा ध्यानं विधाय अन्ये किरीटिनः कार्या वरदाभयपाणयः इति अन्यांश्च सामान्येन ध्यात्वा–ॐ आकृष्णेनेत्यादिवेदमन्त्रैर्नाममन्त्रैर्वा–ॐब्रह्मणे नमः ॐवरुणाय नमः ॐ आदित्याय नमः ॐ सोमाय नमः ॐ भौमाय नमः ॐबुधाय नमः ॐबृहस्पतये नमः ॐशुक्राय नमः ॐशनैश्चराय नमः ॐराहवे नमः ॐकेतुभ्यो नमः ।

ॐईश्वराय नमः ॐउमायै नमः ॐस्कन्दाय नमः ॐ-ॐविष्णवे नमः ॐब्रह्मणे नमः ॐइन्द्राय नमः ॐयमाय नमः ॐकालाय नमः ॐचित्रगुप्ताय नमः ।

ॐअग्नये नमः ॐअद्भ्यो नमः ॐभूम्यै नमः ॐविष्णवे नमः ॐइन्द्राय नमः ॐइन्द्राण्यै नमः ॐप्रजापतये नमः ॐसर्पेभ्यो नमः ॐब्रह्मणे नमः ।

ॐविनायकाय नमः ॐवायवे नमः ॐदुर्गायै नमः ॐ आकाशाय नमः ॐ अश्विभ्यां नमः।

ॐक्षेत्राधिपतये नमः ॐवास्तोष्पतये नमः।

ॐइन्द्राय नमः ॐअग्नये नमः ॐयमाय नमः ॐनिर्ऋतये नमः ॐवरुणाय नमः ॐवायवे नमः ॐकुबेराय नमः ईशानाय नमः ॐब्रह्मणे नमः ॐअनन्ताय नमः-एभिः पाद्यादिनीराजनान्तं सम्पूज्य पुष्पाञ्जलिः। ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च। गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा भवन्तु॥ सूर्यः शौर्यमथेन्दुरुच्चपदवीं सन्मङ्गलं मङ्गलः, सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः शुभं शं शनिः। राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं, नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः॥ आयुश्च विद्यां च तथा सुखं च धर्मार्थलाभौ बहुपुत्रतां च। शत्रुक्षयं राजसु पूज्यतां च तुष्टा ग्रहाः क्षेमकरा भवन्तु॥ इति पुष्पाञ्जलिं समर्प्य दक्षिणासङ्कल्पः। अद्येह-अमुकशर्म्माऽहम् अमुककर्म्मणि कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणाम् अधिदेवताप्रत्यधिदेवताविनायकादिपञ्चलोकपालेन्द्रादिदशदिक्पालसहितानां पूजायाः साङ्गफलप्राप्तये साद्गुण्यार्थमिमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सन्मम इति। दक्षिणां दत्त्वा अभिषेकतिलकमन्त्रपाठादि कारयेत्। अभिषेकं च छायादर्शनान्ते कलशोदकेन वैदिकैः पौराणिकैश्च मन्त्रैः भद्रासनोपविष्टस्य सपत्नीकस्य सपुत्रस्य यजमानस्य ब्राह्मणाः उत्थाय कुर्युः। तत्र पत्नी वामत उपविशेत् तत्सहचरितः पुत्रोऽपि। मन्त्राश्च द्यौः शान्तिरित्यादयः प्रयोगान्ते वक्ष्यन्ते। इति कलशस्थापनम्, नवग्रहपूजनञ्च॥

## अथ रक्षाविधानम्।

यवान्कुशाँस्तथा दूर्व्वा सर्षपान्गन्धमक्षतान् । गोमयं दधिसंयुक्तं कारयेत्ताम्रभाजने ॥ तत्रैव रक्षासूत्रं संस्थाप्य हस्तेनाभिमृश्य—गणाधिपं नमस्कृत्य नमस्कृत्य पितामहम् । विष्णुं रुद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम् ॥ स्थानक्षेत्रं नमस्कृत्य दिननाथं निशाकरम् । धरणीगर्भसम्भूतं शशिपुत्रं बृहस्पतिम् ॥ दैत्याचार्यं नमस्कृत्य सूर्य्यपुत्रं महाग्रहम् । राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः ॥ शक्राद्या देवताः सर्व्वाः नमस्कृत्य मुनींस्तता। गर्गं मुनिं नमस्कृत्य नारदं मुनिसत्तमम् ॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रं महामुनिम् । व्यासं कविं नमस्कृत्य सर्वशास्त्रविशारदम् ॥ विद्याधिका ये मुनय आचार्य्याश्च तपोधनाः । सर्वे ते मम यज्ञस्य रक्षां कुर्वन्तु विघ्नतः॥ प्राचीं रक्षतु गोविन्द आग्नेयीं गरुडध्वजः । याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋतीम् ॥ केशवो वारुणीं रक्षेद्वायवीं मधुसूदनः । उदीचीं श्रीधरो रक्षेदैशानीं तु गदाधरः ॥ ऊर्ध्वं गोवर्धनधरो ह्यधस्ताद्धरणीधरः । एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ॥ यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे पद्मं तथोत्तमम् । वामपार्श्वे गदा रक्षेद्दक्षिणे तु सुदर्शनः ॥ उपेन्द्रः पातु ब्रह्माणमाचार्य्यं पातु वामनः । अच्युतः पातु ऋग्वेदं यजुर्वेदमधोऽक्षजः ॥ कृष्णो रक्षतु सामानि ह्यथर्वं माधवस्तथा । उपविष्टाश्च ये विप्रास्तेऽनिरुद्धेन रक्षिताः ॥ यजमानं सपत्नीकं पुण्डरीकविलोचनः । रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ॥ वेदमन्त्रैश्च कर्त्तव्या रक्षा शुभ्रैश्च सर्षपैः । कृत्वा पोटलिकां पूर्व्वं बध्नीयाद्दक्षिणे करे ॥

वेदमन्त्राश्च—तत्रादौ गायत्री १ ॐगणानान्त्वा० २

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः ३ ॐ सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो ऽअस्वप्नजौ सत्रसदौ च देवौ४(ऋग्.१२३) ॐ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत् । यो बिभर्त्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः५ यदाबध्नन्दा-

---

ऋ. १।७।७ जातवेदसे जातानामुत्पत्तिमतां सर्वेषां वेदित्रे अग्नये अग्नि पृष्ठ लतारूपं सोमं सुनवाम अभिषुणयाम सोमाभिषवं करवामेत्यर्थः। सोऽग्निः अरातीयतः अराति शत्रुमिवास्मानाचरतः शत्रोर्वेदो धनं निदहाति नितरां दहतु । अपि च सोऽग्निः नः अस्मान् विश्वा विश्वानि सर्वाणि दुर्गाणि दुर्गमनानि भोक्तुमशक्यानि दुःखानि अतिपर्षत् अतिपारयतु अतिक्रमय्य दुःखरहितं सुखं प्रापयतु । तत्र दृष्टान्तः–नावेव सिन्धुम् । यथा कश्चित् कर्णधारो ग्राहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् । तथा दुरिता दुरितानि पापानि अस्मत्तोऽग्निरतिपारयतु–पापादप्यस्मान् पारयत्वित्यर्थः ॥

नतद्रक्षाꣳसि० अ. ३४ म.५१ रक्षांसि पिशाचाश्च तत् हिरण्यं न तरन्ति न हिंसन्ति, हि यस्मात् एतद्धिरण्यं देवानां प्रथमजमोजः प्रथमोत्पन्नं देवानां तेज एव इदम् । अतएव यो हिरण्यं दाक्षायणं बिभर्ति अलङ्कारत्वेन धारयति, दाक्षायणशब्दोऽलङ्कारार्थे, स देवेषु देवलोकेषु दीर्घमायुः कृणुते कुरुते ( व्यत्ययेन श्नुः ) देवलोके चिरं वसतीत्यर्थः । स च मनुष्येषु मनुष्यलोकेषु स्वमायुः दीर्घं कृणुते मनुष्यायुः अतिक्रम्य जीवति ॥

यदाबध्नन्० अ. ३४ म. ५२ दाक्षायणाः दक्षस्यापत्यानि ( नडादित्वात् फक् ) दक्षवंशोत्पन्ना ब्राह्मणाः यत् हिरण्यं शतानीकाय राज्ञे आबध्नन् बबन्धुः–शतं बहूनि अनीकानि सैन्यानि यस्य सः शतानीकः तस्मै । किम्भूता दाक्षायणाः, सुमनस्यमानाः मनसि शोभनं

क्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः । तन्मऽआबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथाऽसम् ६ रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि

---

च्यायन्तः । तद् हिरण्यं मे मयि आबध्नामि-किमर्थं, शतशारदाय शतं शरदो जीवनाय । यथा येन प्रकारेण हिरण्यबन्धनादेन अहं आयुष्मान् दीर्घजीवी जरदष्टिश्च आसम् भूयास तथा आबध्नामि । जराम् अश्नुते व्याप्नोति जरदष्टिः । यद्वा जरन्ती जर्यां प्राप्ता अष्टिः शरीरं यस्य सः जरदष्टिः ॥

रक्षोहणम्० अ. ५ मं. २३ रक्षोहण रक्षांसि हन्तीति रक्षोहा तां रक्षोवधविषयां वाचं, तथा वलगान् हन्तीति वलगहा तां-पराजयं प्राप्य पलायमानै राक्षसैः इन्द्रादिवधार्थम् अभिचाररूपेण भूमौ निखाता अस्थिकेशनखादिपदार्थाः कृत्याविशेषाः वलगाः ते वलगा बाहुमात्रे खाताः तदुद्धारार्थम् उपरवस्य तावन्मात्रखननं "तान् बाहुमात्रान् खनेत्" इति श्रुतिः, तथा वैष्णवीं यज्ञरक्षकस्य विष्णोः सम्बन्धिनीम् ईदृशीं वाचम् इन्द्राय वद इति पूर्वेण सम्बन्धः । नितरां स्त्यायति सङ्घातरूपेण सह वर्तते इति निष्ट्यः, यद्वा निर्गत्य शरीरात् स्त्यायति विस्तीर्णो भवतीति निष्ट्यः पुत्रादिः, यद्वा निर्गतो वर्णाश्रमेभ्यः निष्ट्यः चाण्डालादिः । अमाशब्दो गृहार्थः सहार्थो वा । अमा गृहे सह वा भवोऽमात्यः । धनिकस्य स्वामिनो धनगृहादिनिर्वाहकोऽमात्यः । केनापि निमित्तेन कुपितः पुत्रोऽमात्यो वा मे मह्यं मद्बाधार्थं यं वलगं निचखान निखातवान् त वलगम् अहम् उत्किरामि उद्वपामि उद्धृत्य अन्यत्र परित्यजामि । इदंशब्दः क्रियाविशेषणम् इदं प्रत्यक्ष यथा भवति तथोद्वपामीत्यर्थः । द्वितीयमुत्किरति—समानो धनकुलादिभिः सदृशः असमानो न्यूनोऽधिको वा मद्बाधार्थं य वलग निचखान इत्यादि पूर्ववत् । तृतीयमुत्किरति-सबन्धुः

यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि ७ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा । जनराडसि रक्षोहा सर्वराडस्यमित्रहा ८ रक्षोहणो

---

कुलशीलादिभिः समानो मातुलपैतृष्वसेयादिः तद्विपरीतोऽसब न्धु । अन्यत् पूर्ववत् । चतुर्थमुत्किरति–सजात समानजन्मा भ्राता तद्विपरीतोऽसजात । अन्यत् पूर्ववत् । येय कृत्या शत्रुभि अभिचाराद्वि सम्पादिता वलगरूपा तामुत्किरामि उद्धृत्य दूरे क्षिपामि । पूर्वम् असाधारणै मन्त्रै चतुर्णामुत्किरणे कृते पश्चात् उत्कृत्यां किरामीति साधारणेन मन्त्रेण चतुर्भ्यो गर्तेभ्य उत्किरण विहितम् ॥

स्वराडसि० अ ५ म २४ तत्र अभिमृशति प्रथम–हे प्रथमगर्त त्व स्वराडसि स्वतेन राजते इति स्वराट् स्वयमेव राजमानो भवसि । अत सपत्नहा शत्रुघाती भवेतिशेष । अथ द्वितीय–हे द्वितीयगर्त सत्रराट् सत्रेषु द्वादशाहादिषु राजते इति सत्रराडसि अत अभिमातिहा शत्रुघाती भव । अथ तृतीय–जनराट् जनेषु यजमानेषु राजते इति जनराट् असि अत रक्षोहा यज्ञविनाशकराक्षसघाती भव । अथ चतुर्थ—सर्वराट् सर्वेषु राजते इति सर्वराट् असि अत. अमित्रहा शत्रुघाती भव ॥

रक्षोहणो० अ ५ म २५ वैष्णवान् विष्णुदेवताकान् गर्तान् वो युष्मान् प्रोक्षामि । कीदृशान्–रक्षोहण राक्षसहन्तॄन् वलगहन अभिचारसाधनहन्तॄन् । अवनयामीत्यन्तेन गर्तानाम् अवनयनम् । तच गर्तेषु प्रोक्षणशेषोदकसेचनम् । अवस्तृणामीत्यन्तेन अवस्तरणम् । तच दर्भैराच्छादनम् । रक्षोहणौ इत्यादि उपदधामिवैष्णवी इत्यन्त उपधानमन्त्र. । यौ अधिषवणफलकविशेषौ रक्षोहणौ रक्षसा नाशकौ वलगहनौ कृत्याविनाशकौ वैष्णवी वैष्णव्यौ ( वा छन्दसीति पूर्वसवर्णदीर्घ ) विष्णुदेवताकौ ( लिङ्गव्यत्ययश्छान्दसः ) तौ वां युवाम् उपदधामि । द्वयोर्गर्तयोरुपरि एकैक फलक स्थापयामि । तदुत्तर पर्यूहामिवैष्णवी इत्यन्त पर्यूहणमन्त्र । पर्यूहामि मृदा परितश्छादयामि अन्यत्पूर्ववत् । वैष्णवमसीति. चर्मोपरि न्यसनस्य. मन्त्र । हे चर्म त्व वैष्णवमसि यज्ञरक्षकविष्णुसम्बन्धि भवसि ।

वो व्वलगहनः प्रोक्षामि व्वैष्णवान् रक्षोहणो वो व्वलगहनोऽवनयामि व्वैष्णवान् रक्षोहणो वो व्वलगहनोऽवस्तृणामि व्वैष्णवान् रक्षोहणौ वाँ व्वलगहनाऽउपदधामि व्वैष्णवी रक्षोहणौ वाँ व्वलगहनौ पर्य्यूहामि व्वैष्णवी व्वैष्णवमसि व्वैष्णवास्स्थ ९ मा नः शꣳसो ऽअररुषो धूर्त्तिः प्रणङ् मर्त्यस्य। रक्षा णो ब्रह्मणस्पते १० प्रत्युष्टꣳ रक्षः प्रत्युष्टा ऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ता ऽअरातयः। उर्वन्तरिक्षमन्वे-

---

वैष्णवास्स्थेति चर्मोपरि पाषाणस्थापनमन्त्रः। हेग्रावाणः यूयं वैष्णवाः स्थ यज्ञरक्षकविष्णुसम्बन्धिनो भवथ॥

मा नः शꣳसो० अ. २ मं. ३०। रा दाने इति धातोः क्वसुप्रत्ययस्य षष्ठ्येकवचने ररुष इति रूपम्। ररौ इति ररिवान् तस्य ररुषः, दानं कृतवत इत्यर्थः। तस्य निषेधात् अररुष इति। कदाचिदपि हविर्दानमकृतवत इत्यर्थः। तादृशस्य मर्त्यस्य मनुष्यस्य शंसः धूर्त्तिश्च नः अस्मान् मा प्रणक् प्रकर्षेण मा व्याप्नोतु। नाशिव्याप्त्यर्थः। शंसनं शंसः अनिष्टचिन्तनं धूर्तिर्हिंसा, शत्रुकृतमनिष्टचिन्तनं शत्रुकृता हिंसा च अस्मान् मा व्याप्नोतु इत्यर्थः। किञ्च हेब्रह्मणस्पते वेदस्य पालक हे अग्ने नः अस्मान् रक्षा रक्ष (द्व्यचोऽतस्तिङ इति संहितायां रक्षेरयस्य दीर्घः, नश्च धातुस्थोरुषुभ्य इति णत्वम्)॥

प्रत्युष्टꣳ रक्षः. अ. १ मं. ७ रक्षः राक्षसजातिः प्रत्युष्टं प्रत्येकं दग्धम्। उष दाहे। अरातयोऽपि प्रत्युष्टाः प्रत्येकं दग्धाः। हविषो दक्षिणाया वा दानं रातिः। रा दानाराते: प्रतिबन्धकाः अरातयः। तेऽपि दग्धाः। शूर्पादौ निगूढं रक्षो निष्टप्तं निःशेषेण तप्तं सन्तप्तम्। तप सन्तापे। अरातयश्च निष्टप्ताः। उरु विस्तीर्णम् अन्तरिक्षम् अवकाशम् अन्वेमि अनुसृत्य गच्छामि। गच्छतः पुरुषस्य पार्श्वयोरेव स्थितं रक्षः अनेन मन्त्रेण निराक्रियते इत्यर्थः॥

## अथ घृतच्छायादर्शनम् ।

आज्यपात्रे घृतपूरितं सद्रव्यं कृत्वा चन्दनाक्षतैश्चतुर्षु स्थानेषु सम्पूज्य कुशैर्दूर्वाभिर्वा मन्त्रैरभिमन्त्रयेत् । मन्त्राः-ॐआज्यं परमयज्ञीयमाज्यं तेजोमयो निधिः । आज्यं हि देवदेवानां प्रियमाज्ये स्थितं जगत् ॥ तदाज्यवीक्षणे भक्त्या कृते मङ्गलमाप्नुयात् । दुःस्वप्नो दुर्निमित्तश्च विघ्नौघो नश्यति ध्रुवम् ॥ तेजः प्रज्ञा च शौर्यं च बलं चापि प्रवर्द्धते । पुण्यं सप्ताङ्गराज्यं च भवेदन्यदभीप्सितम् ॥ ज्ञात्वा वाऽज्ञानतो वाऽपि मनोवाक्काय-कर्मभिः । कृतं यत्पातकं तन्मे घृतस्पर्शाद्विनश्यतु ॥ आज्ये चैव मुखं दृष्ट्वा सर्व्वपापैः प्रमुच्यते-इत्यभिमन्त्र्य सङ्कल्पः-अद्येहामुकगोत्रोऽमुकराशिरमुकशर्म्माऽहं सर्वारिष्टविनाशार्थम् आज्यावेक्षणं करिष्ये। (तेजोसीति परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः धामनामेति ऋगुष्णिकूछन्दः आज्यं देवता आज्यावेक्षणे विनियोगः) **ॐतेजोऽसि शुक्रमस्यमृतमसि।धाम नामा।सि प्रियं देवानामनाधृष्टं देवयजनमसि॥**आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम्। आज्येन देवास्तृप्यन्ति आज्ये लोकाः प्रतिष्ठिताः॥ भौमान्तरिक्षं दिव्यं वा यन्मे कल्मषमागतम् । तत्सर्व्वमाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥

---

तेजोऽसि. अ. १ मं. ३१ हे आज्य त्वं तेजोऽसि। शरीरकान्तिहेतुत्वात् तेजस्त्वम् । शुक्रमसि दीप्तमसि । स्निग्धरूपत्वाद् दीप्तिमत्त्वम्।अमृतमसि विनाशरहितमसि।बहुदिवसावस्थाने ऽपि ओदनादिवत् पर्युषितत्वादिदोषाभावात् अविनाशित्वम् । किञ्च त्वं धाम स्थानमसि-धीयते स्थाप्यते चित्तवृत्तिः देवैः इति धाम। तथा *नमयति आत्मानं प्रति सर्वाणि भूतानि इति नाम*—आज्यं दृष्ट्वा सर्वेऽपि अत्तुं नमन्ति । तथा देवानां प्रियमिष्टम्, अनाधृष्टम् अनभिभूतं गतसारत्वदोषेण अतिरस्कृतं, देवयजनं देवा इज्यन्ते अनेनेति *यागसाधनम् ईदृश त्वमसि । इत्थम् आज्यं स्तुत्वा ईक्षेत ॥*

आज्ये चैव मुखं दृष्ट्वा सर्वपापैः प्रमुच्यते। ॐध्रुवासि ध्रुवोऽयँ स्यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात्। घृतेन द्यावापृथिवी पूर्व्येथामिन्द्रस्य च्छदिरसि विश्वजनस्य च्छाया॥ छायादर्शनं पापनाशनम्। इत्थमवलोक्याज्यं सङ्कल्पः—अद्येहामुकराशिरमुकशर्माऽहम् इदमवलोकितमाज्यं ताम्रपात्रस्थितं सद्रव्यं मृत्युञ्जयदैवतं मृत्युञ्जयप्रीतये सर्वारिष्टपरिहारार्थं च अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॐतत्सन्न मम। ब्राह्मणं सम्पूज्य दद्यात्। दानवाक्यं पठेत्–कामधेनोः समुद्भूतं देवानामुत्तमं हविः। आयुर्वृद्धिकरं दातुराज्यं पातु सदैव माम्॥ अथ मृत्युञ्जयं प्रार्थयेत्–ॐत्र्यम्बकँ स्यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥ ब्राह्मणश्च स्वस्तीति गृहीत्वा आशिषं दद्यात्–श्रीमृत्युञ्जयप्रसादोऽस्तु इति॥

इति घृतच्छायादर्शनम्॥

---

ध्रुवासि. अ. ५ मं. २८ किञ्च हे घृत त्वं ध्रुवासि ध्रुव ध्रुवं (विभक्तिलुक्) असि भवसि। त्वमिव अयं यजमानः अस्मिन्नायतने स्वकीये गृहे ध्रुवो भूयात् प्रजया पुत्रादिभिः पशुभिः गवादिभिश्च सह स्थिरोऽस्तु। घृतेन द्यावापृथिवी द्यावापृथिव्यौ पूर्येथां पूरिते भवताम्, इन्द्रस्य छदिरसि तद्दोषाणां निवारकमसि नाशकमसि; अतः त्वं विश्वजनस्य सर्वस्य जनस्य छाया छायेव आश्रयणीयमसि॥

त्र्यम्बकं. अ. ३. मं. ६० वयं सुगन्धिं दिव्यगन्धोपेतं मर्त्यधर्महीनं पुष्टिवर्द्धनं धनधान्यादिपुष्टेर्वर्द्धयितारं त्र्यम्बकं नेत्रत्रयोपेतं रुद्रं यजामहे पूजयामः। ततो रुद्रप्रसादात् मृत्योः अपमृत्योः संसारमृत्योश्च मुक्षीय मुक्तो भूयासम्। अमृतात् स्वर्गरूपात् मुक्तिरूपाच्च मा मुक्षीय मुक्तो मा भूयासम्। एकवचनं बहुर्थम्। अभ्युदयनिःश्रेयसरूपात् फलद्वयात् अस्माकं भ्रंशो माभूदित्यर्थः। मृत्योर्मोचने दृष्टान्तः–उर्वारुकमिव बन्धनादिति.।

इदं च सर्वकर्मान्ते कर्तव्यमपि सर्वकर्मसाधारणत्वादत्र निर्दिष्टम् । अतो रक्षाविधानान्ते निर्दिष्टत्वात्तत्रैव कर्तव्यत्व-भ्रमो माभूत् ॥

अथ कुशकण्डिका ॥

कुशण्डिकेति पाठः शुभकर्मनिर्णयादौ प्राचीनपद्धतिपुस्तके च दृश्यते । युक्तश्चायम् । "कुशण्डी चरुपाकान्ता" इत्यादौ कारिकाकारेण तथैव प्रयोगात् ।

अथातो गृह्यस्थालीपाकानां कर्मेत्यादिसूत्रं पूर्वं व्याख्यातं, तदनुसारी प्रयोगः प्रदर्श्यते । स्थण्डिले कुण्डे वा त्रिभिर्दर्भैः परिसमूहनं २ ( पांसूनामपसारणम्), गोमयोदकेनोपलेपनं३, खादिरेण खड्गाकृतिना स्फ्येन तदभावे स्रुवेण उदक्संस्थाः प्रागग्रास्तिस्रो रेखाः कृत्वा, अनामिकाङ्गुष्ठेन यथोल्लेखनक्रमं रेखाभ्यः पांसूनुदधृत्य—

(उत्करं गृह्य रेखाभ्यो रत्निमात्रे निधापयेत् । द्वार-मेवतु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम् ॥ इति वचनात्) ईशानकोणे निक्षिपेत् । प्रणिकपात्रसत्त्वे तदुदकेन तदभा-वे कमण्डलूदकेनाभ्युक्ष्य इति पञ्च भूसंस्कारान्कृत्वा ताम्र-पात्रस्थमग्निं वेद्यां स्वाभिमुखं स्थापयेत्—ॐ अग्निं दूतं पुरो

---

यथा उर्वारुकं कर्कन्ध्वादेः फलम् अत्यन्तं पक्वं सत् बन्धनात् स्य-स्य वृन्तात् प्रमुच्यते तद्वत् ॥

अग्निन्दूतं. अ. २२. मं. १७ यम् अग्निम् अहं पुरो दधे पुरतः स्थापयामि तं प्रति उपब्रुवे कथयामि । किं, तदाह–हे अग्ने इह यज्ञे त्वं देवान् आसादयात् आसादय (लेटोऽडाटाविति आट्) स्थापय। कीदृशमग्निं–देवानां दूतं, हव्यवाहं हविषां वोढारम्।

दधे द्रव्यवाहमुपब्रुवे । देवाँ२॥ आसादयादिह॥ इत्यग्निं सस्थाप्य अग्नरुत्तरत आचार्यब्रह्मणोर्वरण कुर्यात् ।

( विवाहादिसस्कारकर्मसु यजमानस्यैव कर्तृत्वस्य सू त्रव्याख्यानावसरे पूर्व व्यवस्थापितत्वाचपु आचार्यवर ण कर्मोपदेशनार्थमेव, अतो न सर्वत्रावश्यकम्, किन्तु वि वाहादावेव, कर्मानुष्ठान तु यजमानस्यैव । तदसम्भवे प्रधान मात्र त्यागमात्र वा यजमानेन कर्तव्यम् अन्यत्सर्वमाचार्येणैव कर्तव्यम् । यजमानासान्निध्य तु तदनुमत एव प्रधानानुष्ठानं त्यागं च कुर्यात्–इति भाष्यम् ) ॥

अद्येहामुकोऽहम् अमुकहोमकर्म्मणि आचार्यब्रह्म णा पूजनपूर्वक वरण करिष्ये । भूमिदवाग्रेत्यर्घ दत्वा गन्ध-द्वारेति गन्धविलेपन कृत्वाऽक्षतपुष्पै सम्पूज्य वरणसामग्रीं गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतपुष्पमालावा सोलङ्करणादिभि करिष्यमाणामुकहोमकर्म्मणि आचार्यकर्म कर्त्तुम् आचार्यत्वेन त्वामह वृण । वृतोऽस्मीति प्रत्युक्ति ब्राह्म णस्य । आचार्य प्रार्थयेत्–आचार्यस्तु यथा स्वर्गे शक्रादीना बृहस्पति. । तथा त्व मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ तथा ऽमुकहोमकर्म्मणि कृताकृतावेक्षणादि ब्रह्मकर्म्म कर्त्तुं ब्रह्म त्वेन त्वामह वृण । वृतोऽस्मि। ब्रह्म ण प्रार्थयेत्–यथा चतुर्मुखो ब्रह्मा सर्ववेदधरो विभु । तथा त्व मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम ॥ अस्य यज्ञस्य निष्पत्त्यै भवन्तोऽभ्यर्थिता मया । सुप्रसन्नेन कर्त्तव्य शान्तिक विधिपूर्वकम् ॥ अस्मिन् होम कर्म्मणि त्व मे आचार्यो भव । अह भवानीति प्रत्युक्ति । त्व मे ब्रह्मा भव । अह भवानीति प्र० ।

इति वरण विधाय अग्नः दक्षिणता ब्रह्मासनम् (ब्रह्मोप

वेशनार्थमासनम्) पीठं कुशैराच्छाद्य अग्नेरुत्तरतः पूर्वं हृत ब्रह्माण तत्रोपवेश्य प्रतिनिधिभूत आचार्यः आत्मासनम् अग्नेः पश्चात् यजमानासनं च अग्नेरुत्तरत प्रागग्रकुशैः सम्पाद्य, अग्नेरुत्तरतः पश्चिमभागे एकमासनं पूर्वभागे द्वितीयासन प्रागग्रकुशैः कल्पयित्वा प्रणीतापात्रं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थजलेनापूर्य दर्भैराच्छाद्य ब्रह्ममुखमवलोक्य पश्चिमासने निधाय आलभ्य पूर्वासने निदध्यात्। पूर्वादिदिक्षु प्रागग्रैः उदगग्रैश्च कुशैः परिस्तरणम्। पुरस्तात् दक्षिणत पश्चात् उत्तरतः। तत्र पुरस्तात् पश्चाच्च उदगग्रैः, दक्षिणत उत्तरतश्च प्रागग्रैः। (द्र पृ.२०) अर्थवन्ति वस्तून्यासादयेत्। पवित्रच्छेदनानि त्रीणि कुशतरुणानि, द्वे पवित्रे साग्रे अनन्तर्गर्भे, प्रोक्षणीपात्रम्, आज्यस्थाली, चरुश्चेत् चरुस्थाली, सम्मार्जनकुशाः पञ्च, उपयमनकुशास्त्रिप्रभृतय त्रयोदशपर्यन्ता ग्राह्याः, समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः, स्रुवः खादिरः, गव्यमाज्यम्, चरुश्चेद् व्रीहितण्डुलाः, पूर्णपात्र षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमित वा बहुभो क्तुः पुरुषस्याहारपरिमित वा, कर्मोपयोगिनी दक्षिणा "गौर्ब्राह्मणस्य वर" इत्युक्तो वरो वा। एतानि वस्तूनि अग्ने पश्चात् प्राक्संस्थानि स्थापयेत्। तत्र पात्राणि प्रागविला-युदगग्राणि स्थापयेत्। त्रिभिर्दर्भैर्द्वे(ओषधिमन्तर्धाय)प्रच्छिद्य प्रादेशमात्रे पवित्रे कुर्यात्। अत्र पत्रद्वयात्मकमेकमेव पवित्रमिति निरूपितम् (पृ ३८)। प्रोक्षणीपात्र प्रणीतासंनिधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय (तज्जलमुत्क्षिप्य) पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदक दक्षिणेनोच्छाल्य (दक्षिणहस्तमुत्तान कृत्वा मध्यमाऽनामिकाङ्गुल्यो मध्यपर्वभ्या जलस्योच्छालन कृत्वा)

प्रणीतोदकेन प्रोक्षेदिति प्रोक्षणीसंस्कारः।पवित्राभ्यामाज्यस्थालीं सम्प्रोक्ष्य, तथा चरुश्चेत् चरुस्थालीं, सम्मार्जनकुशान् उपयमनकुशान् समिधः स्रुवम् आज्यम् पूर्णपात्रम् दक्षिणाञ्च सम्प्रोक्ष्य असञ्चरे अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्र स्थापयेत्। निरुप्याज्यम् (आज्यस्थाल्यामाज्यं गृहीत्वा) अधिश्रयेत्—अग्नावारोपयेत्। चरुश्चेदाज्यचर्वोर्युगपदारोपणम्। आज्यं ब्रह्माऽधिश्रयति। तदुत्तरतः चरु स्वयमाचार्य्यो वा। अर्द्धश्रिते चरावाज्ये च ज्वलदुल्मुकं च रोराज्यस्य च समन्ताद् भ्रमयेत्। दक्षिणेन स्रुवमधोमुख प्राञ्च प्रतप्य सव्ये कृत्वा सम्मार्जनकुशाग्रैः मूलतोऽग्रपर्य्यन्त, कुशमूलैरधस्ताद्भागे अग्रमारभ्य मूलपर्य्यन्त सम्मार्ज्य समार्जनकुशान् अग्नौ प्रहरेत् (प्रक्षिपेत्)। तत प्रणीतोदकेन स्रुवमभ्युक्ष्य पुनः प्रतप्य कराभ्या सम्मार्ज्य आत्मनो दक्षिणतः कुशोपरि निदध्यात्। आज्यमुद्वास्य (उतार्य) उत्तरतः स्थापयित्वा अग्नेः पश्चादानयेत्।

चरुसत्वे आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरत स्थापयित्वाऽऽज्यमग्नेः पश्चादानीय चरुश्चानीयाज्यस्योत्तरतो निदध्यात्।

अङ्गुष्ठाभ्यामनामिकाभ्या च धृताभ्यामुदगग्राभ्या पूर्वपवित्राभ्यामाज्यमुत्पूय (उत्क्षिप्य) अवेक्ष्य अपद्रव्यनिरसन कृत्वा प्रोक्षणीश्च पूर्वपवित्राभ्यामुत्पूय (उत्क्षिप्य) तासु पवित्रे निदध्यात्। उपयमनकुशान् दक्षिणेनादाय वामकरे कृत्वा तिष्ठन् तिस्रो घृताक्ताः समिधः अभ्यादध्यात् (प्रक्षिपेत् अग्नौ)।

(ॐ समिधाऽग्निं दुवस्यत घृतैर्बोधयताति-

धिम् । आऽस्मिन्हव्या जुहोतन १ सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे २ तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचा यविष्ठ्य ३ उप त्वाऽग्ने हविष्मतीर्घृताचीर्यन्तु हर्य्यत । जुषस्व समिधो मम ४ स्वाहा) ॥

(अमन्त्रक एव समित्प्रक्षेप उचित इति नि० ३९) ततः प्रोक्षण्युदकेन सपवित्रेण दक्षिणचुलुकगृहीतेन ईशानादि उत्तरपर्य्यन्तं सम्प्रोक्ष्य पवित्रे प्रणीतायां निदध्यात् ॥ आज्यहोमे संस्रवधारणार्थं प्रोक्षणीपात्रं प्रणीताग्न्योर्मध्ये निदध्यात् । (आज्यातिरिक्तहोमद्रव्ये तु चतुर्थीकर्मादौ पात्रान्तरे एव शेषप्रक्षेपः–इति त्रि. पृ. ३८) ततः सङ्कल्पपूर्वकं द्रव्यदेवताभिध्यानं कुर्यात्–अद्येहामुकोऽहममुकहोमकर्म्मणा यक्ष्ये–तत्र प्रजापतिम्,इन्द्रम्,अग्निं, *सोमम्, अग्निं, वायुं,सूर्य्यम्,अग्नीवरुणौ, अग्नीवरुणौ, अग्निं,वरुणं सवितारं विष्णुं विश्वान्मरुतः स्वर्कान्, वरुणमादितिम्, अग्निं प्रजापतिम्, अग्निं स्विष्टकृतंचाज्येनाहं यक्ष्ये । प्रत्याहुतित्यागकरणासम्भवे आदावेव तन्त्रेण एतद्धोमद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तम् ॐतत्सद्यथादैवतमस्तु न ममेत्येवं त्यागः कार्यः । एतन्ते इति अमुकनामाग्ने सुप्रतिष्ठितो वरदो भवेत्येवं प्रतिष्ठाप्य ध्यानम् । (अग्निनामानि द्र०पृ० ५१)

ॐतदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । त-

---

*अत्र सोमानन्तरं प्रधानमुल्लिख्य अग्न्यादय उल्लेखनीयाः । प्रधानस्य द्रव्यान्तरसत्त्वे तु सोमान्ता आघाराज्यभागदेवता उल्लिख्य आज्येनेत्युल्लिख्य प्रधानदेवतां तद्द्रव्यं चोल्लिख्य अग्न्यादय उल्लेखनीया इति बोध्यम् ॥

तदेवाग्निः. अ. ३२. मं. १ विज्ञानात्मा परेणात्मना ऽऽविष्टः अ-

देव शुक्रं तद्ब्रह्म ता ऽआपः स प्रजापतिः १ सर्वे निमिषा जज्ञिरे विद्युतः पुरुषादधि। नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् २ न तस्य प्रतिमा ऽअस्ति यस्य नाम महद्यशः ३ एषो ह देवः प्रदिशो नु सर्वाः पूर्व्वो ह जातः स ऽउ गर्ब्भे ऽअन्तः। स ऽएव जातः स

---

न्यादिषु ओतप्रोतत्वेन उपास्योऽभिधीयते। अग्नि *तदेव कारण ब्रह्मैव,आदित्यस्तदेव, वायुस्तदेव, चन्द्रमा तत् उ तदेव,(उ एवार्थे) शुक्र शुक्र तत् प्रसिद्ध ब्रह्म त्रयीलक्षण तद् ब्रह्मैव, ता प्रसिद्धा आप जलानि स प्रसिद्ध प्रजापतिरपि तदेव ब्रह्म ॥

सर्वे निमेषा अ ३२ म २ सर्वे निमेषा त्रुटिकाष्ठाद्यत्याद य कालविशेषा पुरुषात् अधि पुरुषसकाशात् जज्ञिरे। की दृशात् पुरुषात्, विद्युत विशेषेण द्योतते विद्युत् तस्मात्। किञ्च कश्चिदपि एन पुरुषम् ऊर्ध्वम् उपरिभागे न परिजग्रभत् न परिगृह्णाति। (ग्रहधातोर्लेटि व्यत्ययेन श्लौ लेटोऽडाटौ च हृग्रहोर्भश्छन्दसीति भकारे तिप इकारस्य लोपे च रूपम्)। एन तिर्यञ्च च तुर्दिक्षु मध्ये मध्यदेशेऽपि कश्चित् न गृह्णाति। असौ प्रत्यक्षादी नामविषय इति भाव ॥

न तस्य अ ३२ म ३ तस्य पुरुषस्य प्रतिमा प्रतिमानम् उपमान किञ्चिद्वस्तु नास्ति अतएव यस्य नाम प्रसिद्ध महद्यश अस्ति ॥ सर्वस्य वस्तुन तदुपानकत्वात् तदुपमानर्हत्वामिति भाव ॥

एषोहदेव ० अ ३२ म ४ ह इति प्रसिद्धौ। हेजना एष पूर्व प्रथमो जात उत्पन्न ,एष देव सर्वा प्रदिश अनु तिष्ठति व्याप्य स्थित। गर्भे अन्त गर्भमध्ये स उ स एव तिष्ठति। जातोऽपि स एव। जनिष्यमाण उत्पत्स्यमानोऽपि स एव। प्रत्यङ् प्रति-पदार्थम् अञ्चति गच्छतीति प्रत्यङ्। सर्वतोमुख सर्वतो मुखाद्यवयवा यस्य स अचिन्त्यशक्तिरित्यर्थ। सर्वञ्चैतत्प्रसिद्धमेव सर्वं खल्विदं ब्रह्मेत्यादौ इति भाव ॥

जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्व्वतोमुखः ४ चत्वारि शृङ्गा त्रयो ऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२॥ आविवेश ५

ॐअग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्णवर्णममलं समिद्धं सर्वतोमुखम् ॥ सर्वतःपाणिपादश्च सर्वतोऽक्षिशिरोमुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥ इतिसामान्यतोऽग्निं ध्यात्वा ॐअमुकाग्नये नम इति विशेषतश्च ध्यात्वा आवाहयेत्- ॐवैश्वानरो न ऽऊतयऽआप्रयातु परावतः। अग्निर्नः सुष्टुतीरुप ॥ इत्यावाह्य ॐअग्ने नय

---

चत्वारिशृङ्गा. अ. १७. मं ९१ यो वृषभः कामानां वर्षिता रोरवीति (रु शब्दे यङ्लुगन्तम्)अत्यर्थं शब्दं करोति। सोऽयं महो देवः महते जनैरिति महान् देवः ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनाम् उपजीव्यः मर्त्यान् मनुष्यान् आविवेश आविशति मनुष्यान् व्याप्य तिष्ठति। भूतत्वादिकमविवक्षितम्। अस्य वृषभस्य यज्ञस्य चत्वारि शृङ्गा शृङ्गाणि ब्रह्मोद्गात्रहोत्रध्वर्युलक्षणानि। त्रयः पादाः ऋग्यजुःसामरूपाः। द्वे शीर्षे शिरसी हविर्धानप्रवर्ग्याख्ये। शिर एवास्य हविर्द्धानं ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यः इति श्रुतेः। अस्य वृषभस्य सप्त हस्तासः सप्त होतारः हस्ता इव व्याप्रियन्ते। यश्च त्रिधा त्रिप्रकारैर्बद्धः प्रातःसवनमाध्यन्दिनसवनतृतीयसवनैर्बद्धः। व्याख्यान्तरद्वयं महीधरभाष्ये द्रष्टव्यम् ॥ इत्थं परब्रह्मादिरूपेणाग्निं ध्यात्वा पूजयेत् ॥

वैश्वानर० अ. १८ मं. ७२. वैश्वानरः अग्निः नः अस्माकं सुष्टुतीः शोभनाः स्तुतीः उप उपयातु परावतः दूरदेशात् आगच्छतु नः अस्माकम् ऊतये रक्षणाय इत्यर्थः ॥

अ. ५ मं. ३६ हे अग्ने विश्वानि सर्वाणि वयुनानि मार्गान् ज्ञानानि वा विद्वान् जानानस्त्वम् अस्मान् अनुष्ठातृन् राये धनाय यज्ञफलाय सुपथा शोभनमार्गेण नय प्रापय। किञ्च अस्मत् अस्मत्तः एनः

सुपथा राये ऽअस्मान् विश्वानि देव व्वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिँ विधेम ॥ इति वैदिकमन्त्रेण अमुकाग्नये नम इति नाममन्त्रेण च पाद्यादिनीराजनान्तं *सम्पूज्य रेखाः पूजयेत्—पूर्व्वरेखायाम् ॐब्रह्मणे नमः मध्यरेखायाम् ॐविष्णवे नमः उत्तररेखायाम् ॐरुद्राय नमः। ततोऽग्निजिह्वापूजनम्—ॐकराल्यै नमः ॐधूम्रिन्यै नमः ॐश्वेतायै नमः ॐलोहितायै नमः ॐमहालोहितायै नमः ॐसुवर्णायै नमः ॐपद्मरागायै नमः इति सप्तजिह्वाः सम्पूज्य दक्षिणं जान्वाच्य (भूमौ पातयित्वा) ब्रह्मणाऽन्वारब्धः (दक्षिणे बाहौ कुशेन दक्षिणेन हस्तेन स्पृष्टः) आघारावाज्यभागौ च समिद्धतमेऽग्नौ जुहुयात्—ॐप्रजापतये स्वाहा इति **मनसा ध्यायन् इदं प्रजापतये न ममेतित्यागान्ते त्यागकाले वा अग्नौ हविर्द्रव्यं प्रक्षिप्य हुतशेषं घृतं प्रणीताग्न्योर्मध्ये स्थापिते प्रोक्षणीपात्रे निक्षिपेत्—इति गदाधरादयः। अग्नौ प्रक्षिप्य इदं प्रजापतये न ममेति त्यागं कृत्वा ततः प्रोक्षणीपात्रे निक्षिपेदिति हरिहरादयः। मन्त्रा-

---

पापं युयोधि पृथक्कुरु। किम्भूतमेनः–जुहुराणम् हूर्च्छितुं कुटिलीकर्तुमिच्छतीति जुहुराणम् अभिलषितक्रियाप्रतिबन्धकरहितमित्यर्थः। किञ्च ते तव भूयिष्ठां बहुलतमां नमउक्तिं नमस्कारविषयामुक्तिं विधेम संपादयामेति॥

*अग्निपूजा बहिः प्रोक्तेति वचनात् बहिरेवाग्नेः पूजनमिति केचित्। मध्येऽपि गन्धपुष्पादि दद्यादग्नेर्न संशयः। बहिर्नैवेद्यमात्रं तु दातव्यमिति निश्चयः॥ इति विष्णुधर्मोत्तरवचनात्तथा कर्तव्यमिति शान्तिमयूखे॥

** उपांशु काम्यदेवता इत्युपक्रम्य "प्राजापत्य" इति कात्यायनसूत्रात्। (१।८।१४)

न्ते अग्नौ प्रक्षेपकाले एव इदं प्रजापतये न ममेति *त्यागं कृत्वा ततः प्रोक्षणीपात्रे निक्षिपेदिति तत्त्वम् । एवमुत्तरत्र सर्वत्र बोध्यम् । ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम । ॐ अग्नये स्वाहा । इदमग्नये न मम । ॐ सोमाय स्वाहा । इदꣳसोमाय न मम इति हुत्वा ततः ब्रह्मणाऽनन्वारब्धः प्रकृतहोमं विधाय ब्रह्मणाऽन्वारब्धो भूरादिहोमं कुर्यात्–(व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायुसूर्या देवताः प्रायश्चित्तहोमे विनियोगः) ॐ भूः स्वाहा । इदमग्नये न मम । ॐ भुवः स्वाहा । इदं वायवेन मम । ॐ स्वः स्वाहा । इदꣳ सूर्याय न मम । (त्वन्नोअग्नेइति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवता सर्वप्रायश्चित्तहोमे विनियोगः) ॐ त्वन्नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य

---

*त्यागश्च हविर्द्रव्ये मनसा स्वस्वत्वनिवृत्तिं देवतास्वत्वोत्पत्तिं च सञ्चिन्त्य क्रियमाण. "इदम् अमुकदेवतायै न मम" इत्याकारकः शब्दप्रयोग एव । न तु प्रोक्षणीपात्रादौ शेषप्रक्षेप एव त्याग इति भ्रमितव्यम् । वैश्वदेवादौ सर्वहोमस्थले त्यागस्य सत्त्वेन तथा वक्तुमशक्यत्वात् । एतत्कल्पनायाः सर्वनिबन्धाज्ञानमूलकत्वेन सर्वथा हेयत्वाच्च । क्वचित्तु अग्नौ प्रक्षेपे ऽपि लक्षणया त्यागशब्दः प्रयुज्यते इत्यन्यत् ॥

भवन्ति चास्मिन् भूतानि स्थावराणि चराणि च । तस्माद् भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता ॥ १ ॥ भवन्ति भूयो भूतानि उपभोगक्षये पुनः । कल्पान्ते उपभोगाय भुवस्तस्मात्प्रकीर्तिता ॥ २ ॥ शीतोष्णवृष्टितेजांसि जायन्ते तानि वै सदा । आलयः सुकृतीनां च स्वर्लोकः स उदाहृतः ॥ ३ ॥ इति योगियाज्ञवल्क्यः ॥

त्वन्नोऽग्ने. अ. २१ मं. ३. हे अग्ने त्वं नः अस्मान् प्रति वरुण-

हेडो ऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत्–स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम ॥ (सत्वन्नोऽअग्ने इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवता सर्व्वप्रायश्चित्तहोमे विनियोगः) ॐस त्वन्नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ। अवयक्ष्व नो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवो न ऽएधि–स्वाहा । इदमग्नीवरुणाभ्यां न मम॥ (अयाश्चाग्ने इति प्रजापतिऋषिर्विराट् छन्दोऽग्निर्देवता सर्व्वप्रायश्चित्तहोम विनियोगः ) ( वामदेवऋषिस्त्रिष्टुप्छन्द इति जयरामादयः ) ( अपृथग्विधानान्मन्त्रस्वाहाकारयोः स-

---

स्य देवस्य हेड· क्रोधम् अस्मिन् कर्मणि वैगुण्यजनितम् अवयासिसीष्ठाः निवर्तय। (यसु. उपक्षये. अवपूर्वस्य णिजन्तस्य आशीर्लिङि छान्दसत्वादिडादावपि णिलोपे पत्वाभावे च रूपम्)। किञ्च विश्वा विश्वानि सर्वाणि द्वेषांसि दौर्भाग्यानि अस्मत्.अस्मत्तः प्रमुमुग्धि प्रमुञ्च दूरीकुरु (मुचेर्यंस्ययेन शपः श्लु )। कीदृशस्त्वं–स्वाधिकारं विद्वान् जानन्, यजिष्ठः अतिशयेन यष्टा याजिष्ठः (तुरिष्ठेमेयस्सु इति तृचो लोपः ), वह्नितमः–वहतीति वह्नि' अत्यन्तं वह्निः वह्नितमः हविषाम् अत्यन्तं वोढा, शोशुचान· अतिशयेन दीप्यमानः ( शोचतेर्यङन्ताच्छानच्प्रत्ययः ) ॥

सत्वन्नोऽअग्ने. अ.२१. म.४ हे अग्ने स त्वम् अस्या उषसो व्युष्टौ व्युष्टिकाले प्रभातकाले अस्मिन्नहनि ऊती ऊत्या(छान्दसः पूर्वसवर्णः) अवनेन नः अस्माकम् अवमः रक्षकः नेदिष्ठः आन्तिकतमः समीपतमश्च भव (अवतीत्यवमः अवतेः अमप्रत्ययः)। किञ्च रराणः हविर्ददत् सन् नः अस्माकं वरुणम् अवयक्ष्व अवयज ( अवपूर्वाद् यजतेर्लोटि शपो लुक् )। ततो मृडीक सुखकरं हविः ( मृड सुखने अस्मादौणादिकः कीकन् प्रत्ययः ) वीहि भक्षय। किञ्च नः अस्माकं सुहवः शोभनाह्वानः एधि भव ॥

न्धिः )-ॐअयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया ऽअसि । अया नो यज्ञँव्वहास्यया नो धेहि भेषजँ स्वाहा । इदमग्नये न मम । ( ये ते शतमिति शुनःशेफऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्काश्च देवताः सर्व्वप्रायश्चित्तहोमे विनियोगः ) ॐये ते शतँ व्वरुण ये सहस्रँ यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे

अयाश्चाग्ने० कात्या० श्रौ० सू० अ० २५ कं० १ । हे अग्ने त्वम् अयाः न यातीत्ययाः सर्वत्र बाह्याभ्यन्तरावस्थितः असि भवसि । किम्भूतः-अनभिशस्तिपाः न विद्यते ऽभिशस्तिः अभिशापो येषां ते अनभिशस्तयः तान् पाति आत्मसात् करोति शोधयतीति यावत् । कृतप्रायश्चित्तपालक इत्यर्थः । किञ्च हे अग्ने यत् त्वम् अयाः सर्वत्रान्तर्बहिरवस्थितः अनभिशस्तिपाश्च असि तत् सत्यमित् सत्यमेव । इत् पदार्थे । किञ्च यस्मात् नः अस्माकम् अयाः सुमनाः स्वाश्रयो वा भूत्वा यज्ञ वहासि वहसि (लेट् लेटोऽडाटावित्याट् ), तस्मात् नः अस्मभ्यं भेषजं सुखोत्पादकमौषधम् अदृष्टलक्षणं धेहि देहि धारय वा। अया इति पुनर्वचने न भूयांसमर्थं मन्यते, अग्निर्ज्योतिर्ज्योतिरग्निरित्यादावित्र ॥

येते शतं.कात्या.श्रौ.सू.अ.२५ कं.१। हे वरुण पश्चिपाशपते तव ये शतं पाशाः ये च सहस्रं यज्ञियाः यज्ञप्रत्यूहनिरासाय हिताः विततः महान्तः पाशाः सन्ति तेभिः तैः ( बहुलं छन्दसीत्यैसोऽभावः ) पाशैः सम्बद्धान् नः अस्मान् अद्य अस्मिन्नेव अहनि सविता उत अपिच विष्णुः विश्वेदेवाः तथा मरुतः एकोनपञ्चाशच्च एते देवाः मुञ्चन्तु मोचयन्तु । अन्तर्भावितण्यर्थोऽत्र मुञ्चतिः । मुञ्चन्तु मा शपथ्यादितिवत् । किम्भूता एते-स्वर्काः सुमन्त्राः स्वर्चना वा । यद्वा स्वर्का इति देवतान्तरं ज्ञेयम् । अत एव स्वर्केभ्यश्चेति प्रयोगमाहुर्याज्ञिकाः ॥

विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ( अत्र देवेभ्य इति न वाच्यमिति गदाधरः ) । ( उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः वरुणो देवता सर्व्वप्रायश्चित्तहोमे विनियोगः ) । ॐउदुत्तमँ व्वरुण पाशमस्मदवाधमँ व्वि मध्यमꣳ श्रथाय । अथा व्वयमादित्य व्व्रते तवाना-गसो ऽअदितये स्याम–स्वाहा ॥ इदँ व्वरुणायादित्याय न मम ॥ मनसा ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । ॐअग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम । ( आज्यातिरिक्तहोमद्रव्यसत्त्वे स्विष्टकृद्धोमो महाव्याहृत्यादिहोमात्प्रागेव कर्तव्यः ) ।

ततः बर्हिर्होमं स्वाहेति कुर्यात् । प्रजापतये न ममेति त्यागः । ततः संस्रवस्य प्राशनम् अवघ्राणं वा कृत्वा द्विः आचम्य अग्नौ पवित्रप्रतिपत्तिं स्वाहेति कुर्यात् । ततः कर्मार्थं प्रणीतानामपाम् अग्नेः पश्चिमतो विमोकं कुर्यात् । ब्रह्मणे पूर्णपात्रदानम्–अद्येहामुकोऽहम् अमुकहोमकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यार्थम् अपूर्णपूरणार्थञ्च इदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यं सम्प्रददे

---

उदुत्तमम्.य.सं.अ.१२मं.१२ । हे वरुण उत्तमम् उत्तमाङ्गे शिरसि स्थापितं त्वदीयं पाशम् अस्मत् अस्मत्तः सकाशात् उच्छ्रथाय उच्छ्रथय उत्कृष्य विनाशय (संहितायां छान्दसो दीर्घः शायजथा) । अधमम् अधमाङ्गे पादप्रदेशे स्थापितं त्वत्पाशम् अवश्रयय अवकृष्य अस्मत्तो विनाशय । मध्यमं मध्यप्रदेशे स्थितं पाशं विश्रथय विच्छेदय । (श्रथ बन्धे मित्त्वाण्णिचि ह्रस्वः) । अथा अथ पाशत्रयविनाशानन्तरम् हे आदित्य अदितिपुत्र वरुण अनागसः अनपराधाः निष्पापाः तव व्रते कर्मणि वर्तमानाः सन्तः वयम् अदितये अदीनतायै स्याम अखण्डितत्वाय योग्या भवेम । (अथा इत्यत्र निपातस्य चेति संहितायां दीर्घः ) ॥

ॐतत्सन्नमम इति । दत्त्वा मन्त्रपाठः सति सम्भवे यजमानस्यैव—ॐअक्रन्कर्म्म कर्म्मकृतः सह व्वाचा मयोभुवा। देवेभ्यः कर्म्म कृत्वाऽस्तं प्रेत सचाभुवः ॥ ततः स्रुक्स्रुवयोः संमार्जनं पूर्वोक्तप्रकारेण कृत्वा होमावशिष्टं घृतं स्रुवेण द्वादशधा गृहीत्वा घृतपूर्णया स्रुचा पूर्णाहुतिं जुहुयात् । स्रुचोऽभावेऽवशिष्टघृतपूर्णेन स्रुवेणैव पूर्णाहुतिं जुहुयात् । स्रुवेण होमपक्षे उपविश्यैव होमः । यजमानेनान्वारम्भः कार्य्यः । ब्रह्मणा ऽऽज्यस्थाल्याः स्रुवेण स्रुचि द्वादशधा घृतन्देयम् । तिष्ठन् आचार्य्यो होमं कुर्य्यात् । स्रुचं नारिकेलपूगीफलादिफलवस्त्रसहितां कृत्वा—ॐस्रुचश्च मे चमसाश्च मे व्वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे व्वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाका-

---

अक्रन्कर्म० य० सं० अ० ३ मं० ४७ । ये एते अक्रन् अकार्षुः कृतवन्तः कर्म कर्मकृतः ऋत्विजः मयोभुवा मयः सुखं भवति यया सा मयोभूः तया मन्त्ररूपया वाचा स्तुतिरूपया सह, ताम् अहं ब्रवीमि। हे सचाभुवः ( सचेति सहार्थे अव्ययम् ) सहभवनशीलाः परस्परं यजमानेन पत्न्या वा सह अवस्थिताः हे ऋत्विजः देवेभ्यः देवार्थं कर्म कृत्वा अस्तं गृहान् प्रेत प्रकर्षेण गच्छत इति । यजमानेन मन्त्रपाठः कार्यः । तदसम्भवेऽन्यो ब्राह्मणः कश्चित्पठेत् ॥

स्रुचश्चमे० य० सं० अ० १८ मं० २१ । स्रुचो जुह्वादयः, चमसाः भक्षपात्राणि, वायव्यानि पात्रविशेषाः, अधिषवणे काष्ठफलके, पूतभृदाधवनीयो सोमपात्रविशेषौ, स्वगाकारः शंयुवाकः तेन यथास्वं देवतानां हविरङ्गीकारात् । प्रसिद्धमन्यत् । एते मम यज्ञेन निमित्तेन कल्पन्तां कल्पमानि भवन्तु । यज्ञो मम एतेषां दाता भवत्वित्यर्थः । स्रुचः प्रार्थ्यमानत्वात् स्तुत्यत्वमिति तत्पूजने मन्त्रोऽयं विनियुज्यते ।

रश्च मे यज्ञेन कल्पन्ताम् ॥ इतिमन्त्रेण सम्पूज्य सङ्कल्पः— अद्येह अमुकशर्माऽहम् अमुकहोमकर्म्मणः साङ्गफलप्राप्तये न्यूनातिरिक्तपरिहारार्थं *मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये। ( मूर्द्धानंदिव इति भरद्वाजऋषिस्त्रिष्टुप्छन्दो महावैश्वानरो देवता मृडनामाग्नौ पूर्णाहुतिहोमे विनियोगः) ॐमूर्द्धानं दिवो ऽअरतिम्पृथिव्या व्वैश्वानरमृतऽआजातमग्निम्। कविꣳ सम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः—स्वाहा। इदमग्नये वैश्वानराय न मम। ततः ऋक्त्रयेण अग्निं मेधां प्रार्थयेत— ॐसद-

मूर्धानदिवो.य. सं. अ. ७ मं. २४। वैश्वानरस्यात्र सर्वात्मना स्तूयते। देवाः ईदृशमग्निं जनयन्त अजनयन्त उत्पादितवन्तः। (अडभाव आर्ष)। किम्भूतमग्निम्–दिवो मूर्धानं द्युलोकस्य शिरोवदुन्नतप्रदेशे सूर्यरूपेण अवस्थाय भासकम्। तथा पृथिव्या अरतिम्–रतिरुपरतिस्तद्रहितम्। नहि पृथिव्या उपरि अग्निः कदाचिदुपरमते, किन्तु दाहपाकप्रकाशैः सर्वाननुगृह्णन् सर्वदा वर्ततएव। तथा वैश्वानरं विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितो वैश्वानरः तं, जठराग्निरूपेणान्नपाचकत्वात्। तथा ऋते यज्ञे यज्ञनिमित्तम् आजातम् उत्पन्नम् अरणिद्वयात्। तथा कविं क्रान्तदर्शिनम् स्वभक्तानुग्रहीतुमभिज्ञम् इत्यर्थः। तथा सम्राज सम्यग्दीप्यमानम् ऐश्वर्येण युक्तमित्यर्थः। जनानां यजमानानाम् अतिथिं हविर्भिः सत्कारयोग्यम्, *आसन् आसनि आस्ये मुखे आपात्रम् आभिमुख्येन पिबतऽनेनेत्यापात्रम्–ईदृशमग्निं देवा इन्द्रादयः अजनयन्तेत्यर्थः॥

सदसस्पति० य० स० अ० ३२ मं० १३। इत उत्तरम ऋक्त्रयेण मेधा याच्यते। सदसस्पतिं सदो यज्ञगृहं तस्य पतिः तम्, अद्भु-

* पूर्णाहुतौ मृडा नामेति पूर्वोक्तवचनात्। ( पृ. ५२ ) तल्लक्षणं—पूर्वे प्रज्वलितो वह्निर्हविद्रव्य तु योजितः। तृप्तो निर्धूमनिर्ज्वालो मृडाग्निः परिकीर्तितः॥ इति प्रद्युम्नावल्याम्।

सस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्यम् । सनिम्मेधामयासिषᳬं स्वाहा १ ॐयाम्मेधान्देवगणाः पितरश्चोपासते । तया मामद्य मेधयाऽग्ने मेधाविनं कुरु स्वाहा २ ॐमेधाम्मे व्वरुणो ददातु मेधामग्निः प्रजापतिः । मेधामिन्द्रश्च व्वायुश्च मेधान्धाता ददातु मे स्वाहा३

- (केचित्-ॐपूर्णा दर्व्वि परा पत सुपूर्णा पुनरापत। व्वस्नेव विक्क्रीणावहाऽइषमूर्ज्जᳬं शतक्रतो ॥ अनया स्वाहान्तया पूर्णाहुतिहोममिच्छन्ति)। ततः वायव्याम् उत्तराङ्गभूतम् अग्निपूजनम्-अग्नेनयेति पूर्वोक्तमन्त्रेण, श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं बलं श्रियम्। आयुष्यं द्रव्यमारोग्यं देहि मे हव्य-

---

तं महान्तम् अचिन्त्यशक्तिं, प्रियम् इन्द्रस्य, काम्यं कामसम्पादकं कमनीयं वा-सनिं धनं, मेधां बुद्धिम् अयासिषम् याचे ॥ (लेट् छान्दसोऽडागमः) ॥

यांमेधां० य० सं० अ० ३२ मं० १४ यां मेधां देवगणाः पितरश्च उपासते पूजयन्ति तया मेधया माम् अद्य हे अग्ने मेधाविनं कुरु ॥

य० सं० अ० ३२ मं० १५ । मेधां मे मह्यं वरुणो ददातु मेधाम् अग्निश्च प्रजापतिश्च, मेधाम् इन्द्रश्च वायुश्च-ददात्विति सर्वत्र सम्बध्यते । धाता च मेधां मे मह्यं ददातु ॥

पूर्णादर्वि० य० सं० अ० ३ मं० ४९ हे दर्वि अस्याः स्थालीतोऽन्नं गृहीत्वा पूर्णा सती परा उत्कृष्टा इन्द्रं प्रति पत गच्छ, ततः कर्मफलेन सुष्ठु पूर्णा पुनरापत पुनरागच्छ । एवं दर्वीमुक्त्वा इन्द्रमाह-वस्ना वस्नेन मूल्येनेव आवाम् अध्वर्युयजमानौ (पुरोहितयजमानौ) विक्रीणावहै । किन्तद् द्रव्यम् इत्यत आह-इषम् अन्नम् ऊर्जम् उपसेचनम् । हे शतक्रतो बहुकर्मन् ॥

वाहन ॥ इत्यनेन च कुर्यात्। (केचित् प्रधानहोमान्ते एवाग्निपूजनमाचरन्ति । नवाहुतिहोमान्ते त्वन्ये । तद् यथासम्प्रदायमनुष्ठेयम् । पूर्णाहुत्यन्ते एव संस्रवप्राशनादि केचिद्वदन्ति । पूर्णाहुत्यनन्तरं वसुभ्यः स्वाहेति वसोर्धाराहुतिं च केचिदाचरन्ति । पूर्णाहुतिहोमश्च ग्रहयज्ञादावेव न तु विवाहादिसंस्कारेषु । अतएव हरिहरादिपद्धतिषु तत्र न दृश्यते विशेषविधानाभावात् । तस्मात् तत्र न पूर्णाहुतिहोमोऽनुष्ठेय इति बोध्यम्) ॥ ॐतनूपा ऽअग्नेऽसि तन्वं मे पाहि । ॐआयुर्दा ऽअग्नेऽस्यायुर्म्मे देहि । ॐवर्च्चोदा ऽअग्नेऽसि व्वर्च्चो मे देहि । ॐअग्ने यन्मे तन्वा ऽऊनन्तन्मऽआपृण ॥ ॐमेधाम्मे देवः सविता आदधातु । ॐमेधाम्मे देवी सरस्वती आदधातु । ॐमेधामश्विनौ देवावाधत्ताम्पुष्करस्रजौ (पा.गृ.२।४) इति सप्तभिर्मन्त्रैः प्रतिमन्त्रं ललाटाच्चिबुकपर्यन्तं मुखं पाणिप्रतननपूर्वकं मार्जयेत् (प्रोञ्छेत्) । ॐअङ्गानि च मऽआप्यायन्ताम् इति सर्व्वाङ्गान्युपस्पृशेत् । वाक्च मऽआप्यायताम् इति मुखे । प्राणश्च मऽआप्यायताम् इति नासिकायाम् । चक्षुश्च मऽआप्यायताम् इति नेत्रयोः । श्रोत्रञ्च मऽआप्यायताम् इति श्रोत्रयोः । यशो बलञ्च मऽआप्यायताम् इति

---

तनूपा अग्नेऽसि० य० सं० अ० ३ मं० १७ । हे भगवन्नग्ने यस्त्वं ह्यमायत एष अग्निहोत्रिणां तनूपा असि तनूः शरीरं तस्य शरीरस्य गोपायिता भवसि, स त्वं मे मम तन्व तन्वं पाहि गोपाय (घाच्छन्दसीति पूर्वरूपाभावः) । हे अग्ने त्वम् आयुर्दाः आयुषो दाता असि अतः मे मम आयुः देहि । वर्चोदा असि वर्चो मे देहि । यस्य दर्शनादेव "ब्राह्मणो महानयं विद्वान् तपसा अग्निरिव ज्वलति" इति प्रतिपत्तिः तद् वर्च इत्युच्यते । हे अग्ने मम तन्वाः शरीरस्य यत् ऊनं न्यून तत् मे मम आपृण आपूरय ॥

बाहो: । उदकस्पर्शः । ततस्त्र्यायुषकरणमनामिकया स्रुवलग्नसघृतभस्मना ( पृ. ५१ ) । *ॐत्र्यायुषं जमदग्नेः इति ललाटे । ॐकश्यपस्य त्र्यायुषम् इति ग्रीवायाम् ॐयद्देवेषु त्र्यायुषम् इति दक्षिणस्कन्धे । ॐतन्नो ऽअस्तु त्र्यायुषम् इति हृदि । ॐत्र्यायुषमिति सर्वेण मन्त्रेण सर्वाङ्गमालभेत** । ततो होमाङ्गदक्षिणासङ्कल्पः—अद्येत्यादि अमुकोऽहम् अमुकहोमकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं च इमां सुवर्णदाक्षिणाम् अग्निदैवतां सुवर्णनिष्क्रयीभूतं द्रव्यं वा आचार्याय तुभ्यं सम्प्रददे । (ब्रह्मदक्षिणापेक्षयाऽऽचार्यदक्षिणा द्विगुणा) । तथा भूयसीं दक्षिणाम् अन्येभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् । तथा यथोपपन्नेनान्नेन ब्राह्मणांश्च भोजयिष्ये ।

ततोऽग्निं विसर्ज्जयेत्—गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ भोभो वह्ने महाशक्ते सर्वकर्म्मप्रसाधक । कर्म्मान्तरेऽपि सम्प्राप्ते सान्नि-

---

त्र्यायुषम्० य० सं० अ० ३ मं० ६२ । त्रीणि आयूंषि समाहृतानि बाल्यपौगण्डस्थाविराणि त्र्यायुषम् । यज्जमदग्नेः त्र्यायुषं यच्च कश्यपस्य यच्च देवेषु तद् नः अस्माकमस्तु भवतु ॥

---

* पेशान्या आहरेद्भस्म स्रुचा वाऽथ स्रुवेण वा । अङ्कनं कारयेत्तेन शिरःकण्ठांसहृत्सु च ॥ इति शान्तिकमलाकरस्थवचनात् ।

** तनूपा इत्यादिना पुष्करस्रजौ इत्यन्तेन सप्तमन्त्रात्मकेन सप्तवारं मुखमार्जनं पाणिभ्यां प्रतपनपूर्वकं समिदाधानप्रकरणे ( पा. गृ. का. २ कं. ४ ) सूत्रकारेण उपदिष्टम् । तथैव समाचारात् सूत्रान्तरस्थमपि अङ्गाप्यायनं त्र्यायुषकरणं च भाष्यकारेणानुष्ठेयत्वेनोक्तम् । समाचारादेव होमकर्त्रोऽन्यत्राप्यनुष्ठेयमिति अत्र सामान्यहोमप्रकारनिरूपणे उपन्यस्तमिति बोध्यम् । मेधां मे इत्यादिसौत्रमन्त्राणां व्याख्यानं च तत्रैव प्रदर्शयिष्यते ॥

र्घ्यं कुरु सादरम् ॥ यान्तु देवगणाः सर्व्वे पूजामादाय मामिकाम् । इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ ॐयज्ञ यज्ञङ्गच्छ यज्ञपतिं गच्छ स्वाँ योनिं गच्छ स्वाहा । एष ते यज्ञपते सहसूक्तवाकः सर्व्ववीरस्तं जुषस्व स्वाहा ॥ ॐधामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । सचेतसो विश्वेदेवा यज्ञं प्रावन्तु नः शुभे ॥ इत्यग्निं विसृज्य दक्षिणां दत्त्वा अभिषेकतिलकरक्षाबन्धनघृतच्छायामन्त्रपाठादिकं कारयेत् ॥ (अस्मृत्वाऽथ ऋषिं छन्दो दैवतं विनियोजनम् । होमं करोति मूढात्मा न स होमफलं लभेत् ॥ इत्यादिभिः वचनैः होमादावेव तज्ज्ञानस्यावश्यकत्वबोधनेन न सर्वत्रान्यत्र ऋष्यादिमद्दर्शनम् । कचिन्निषेधश्च पूर्वमुक्त एव श्राद्धादौ । निषिद्धातिरिक्तस्थले तज्ज्ञानं चातिशयसंपादकं भवत्येवेति बोध्यम्)॥

इति कुशकाण्डिका ॥

---

यज्ञयज्ञङ्गच्छ० य० सं० अ० ८ मं० २२ । हे यज्ञ यज्ञमेव त्वं गच्छ, नहि त्वत्तो ऽन्यदस्ति । सर्वात्मना हि त्वमित्यभिप्रायः । यज्ञपतिं यजमानं गच्छ स्वां योनिं च गच्छ । द्रव्यं देवता च यज्ञस्य स्वा योनिः । एष ते यज्ञः अयं ते शरीरभूतो यज्ञः संस्कृतः ऋत्विग्भिः हे यज्ञपते सहसूक्तवाकः सूक्तवाकैः स्तोत्रैः सहितः सर्ववीरः सर्वे वीरा यस्मिन् स तथा । सोमः, पशुः, सवनीयाश्च पुरोडाशा वीरा उच्यन्ते । तं च जुषस्व आसेवस्व ॥ स्वाहा सुहुतमस्तु ।

धामच्छदग्निः ० य० सं० अ० १८ मं० ७६ । धामच्छत् धामशब्दः स्थानवचनः स्थानानि न्यूनानि छादयति पूरयति अतिरिक्तानि समीकरोति यः स धामच्छत् । एवं धामच्छच्छब्दः देवताशब्दश्च सर्वत्र सम्बध्यते । योऽग्निर्देवो धामच्छत्, यश्चेन्द्रः, यश्च ब्रह्मा, यश्च बृहस्पतिः—एते सर्वे सचेतसः समानचेतसः (चेतःशब्दः प्रज्ञावचनः), यज्ञं प्रावन्तु अन्यूनानतिरिक्तं कुर्वन्तु नः अस्माकं शुभे विषये च ॥ यम् ॥

अथ ग्रहयागपद्धतिर्लिख्यते ।

तत्र कर्त्ता पूर्वदिने हविष्याशनादिनियमान्कृत्वा प्रथमं गृहादीशानदिग्भागे भूमिं मार्जनादिसंस्कारैः संशोध्य तस्यां मण्डपादिकं विदध्यात् ।

तत्र पूर्वं गन्धाद्युपचारान् सम्पाद्य देशकालौ सङ्कीर्त्य करिष्यमाणमण्डपादेर्निर्विघ्नत्वसिद्ध्यर्थं गणेशपूजनं करिष्ये, इति सङ्कल्प्य उक्तप्रकारेण गणेशं संपूज्य पुनर्देशकालौ सङ्कीर्त्य करिष्यमाणमण्डपाद्यङ्गत्वेन भूमिकूर्मानन्तानां पूजनं करिष्ये इति सङ्कल्प्य तान् पूजयेत् । तत्र पूर्वं भूमिं—चतुर्भुजां
शूलधरां स्मितवर
णि वसुधे लोकध
वन्दिता ॥ इत्यावाह्य ॐभूरसिइति वैदिकमन्त्रेण, ॐभूम्यै नमः इति नाममन्त्रेण वा गन्धाद्युपचारैरभ्यर्च्य—उपचारानिमांस्तुभ्यं ददामि परमेश्वरि । भक्त्या गृहाण देवेशि त्वामहं शरणं गतः ॥ इति पूजां निवेदयेत् । पूजिते परमाचार्यैर्गन्धमाल्यैरलंकृते । भव भूतिकरी देवि गृहे भार्गवि रम्यताम् ॥ इति प्रार्थयेत् । एवम् ॐकूर्माय नम इत्यनेन कूर्मपूजनं विधाय ॐअनन्ताय नम इत्यनेन अनन्तं पूजयेत् ।

अथ मार्जनादिप्रकारैः भूमिं संशोध्य, पञ्चगव्येनाभ्युक्षेत् । पञ्चगव्यप्रकारश्चेत्थम्—गायत्र्या गोमूत्रं पलमितं माषाष्टकमितं वा गृहीत्वा सुवर्णताम्रादिपात्रे वा पद्मपलाशादिपत्रपुटे वा स्थापयेत् । तदर्धं गोमयं गन्धद्वारामिति मन्त्रेण गृहीत्वा तत्र स्थापयेत् । गोमूत्र-

अथ ग्रहयागपद्धतिर्लिख्यते ॥

तत्र कर्ता पूर्वेदिने हविष्याशनादिनियमान्कृत्वा प्रथमं गृहादीशानदिग्भागे भूमिं मार्जनादिसंस्कारैः संशोध्य तस्यां मण्डपादिकं विदध्यात् ।

तत्र पूर्वं गन्धाद्युपचारान् सम्पाद्य देशकालौ सङ्कीर्त्य करिष्यमाणमण्डपादेर्निर्विघ्नत्वासिद्ध्यर्थं गणेशपूजनं करिष्ये, इति सङ्कल्प्य उक्तप्रकारेण गणेशं संपूज्य पुनर्देशकालौ सङ्कीर्त्य करिष्यमाणमण्डपाद्यङ्गत्वेन भूमिकूर्मानन्तानां पूजनं करिष्ये इति सङ्कल्प्य तान् पूजयेत् । तत्र पूर्वं भूमिं—चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरिस्थिताम् । पद्मशङ्खचक्रशूलधरां स्मितवराननाम् ॥ इति ध्यात्वा—आगच्छ सर्वकल्याणे वसुधे लोकधारिणि । पृथिवि ब्रह्मदत्ताऽसि कश्यपेनाभिनन्दिता ॥ इत्यावाह्य ॐ भूरसिइति वैदिकमन्त्रेण, ॐ भूम्यै नमः इति नाममन्त्रेण वा गन्धाद्युपचारैरभ्यर्च्य—उपचारानिमांस्तुभ्यं ददामि परमेश्वरि । भक्त्या गृहाण देवेशि त्वामहं शरणं गतः ॥ इति पूजां निवेदयेत् । पूजिते परमाचार्यैर्गन्धमाल्यैरलंकृते । भव भूतिकरी देवि गृहे भार्गवि रम्यताम् ॥ इति प्रार्थयेत् । एवम् ॐ कूर्माय नमः इत्यनेन कूर्मपूजनं विधाय ॐ अनन्ताय नमः इत्यनेन अनन्तं पूजयेत् ।

अथ मार्जनादिप्रकारः भूमिं संशोध्य, पञ्चगव्यैरभ्युक्षेत् । पञ्चगव्यप्रकारश्चेत्थम्—गायत्र्या गोमूत्रं पलमितं, माषाष्टकमितं वा गृहीत्वा सुवर्णताम्रादिपात्रे पद्मपलाशादिपत्रपुटे वा स्थापयेत् । तदर्धं गोमयं गन्धद्वारामिति मन्त्रेण गृहीत्वा तत्रैव स्थापयेत् । गोमूत्र-

त्रिगुणं क्षीरम् आप्यायस्वेति मन्त्रेण गृहीत्वा तत्रैव स्थापयेत् । गोमूत्राद् द्विगुणं दधि दधिक्राव्ण इति मन्त्रेण गृ० तत्रैव स्थापयेत्। गोमूत्राद् द्विगुणं घृतं तेजोऽसि शुक्रम् इति मन्त्रेण गृ० तत्रैव स्थापयेत् । गोमूत्रसमं कुशोदकं देवस्यत्वा इत्यादिना गृह्णामीत्यन्तेन मन्त्रेण गृहीत्वा तत्रैव स्थापयेत् । प्रणवेन हस्तेनालोड्य प्रणवेनैव यज्ञियकाष्ठेन निर्मथ्य प्रणवेनैवाभिमन्त्रयेत् । एवंसिद्धेन *पञ्चगव्येन आपो हि ष्ठा इतित्र्यृचेन भूमिमभ्युक्षेत् ।

एवं शोधितायां भूमौ मण्डपादिकं विदध्यात् । रुद्रायतनादौ वा समीकरणपञ्चगव्याभ्युक्षणादिविशेषसंस्कारानपेक्षयैव मण्डपादिकं विदध्यात् । गणेशभूम्यादिपूजनं तु कर्तव्यमेव ।

होमानुसारेण कुण्डमानं स्थण्डिलमानं वा परिकल्प्य तद्द्विगुणं यजमानहस्तेन षोडशहस्तं, द्वादशहस्तं, दशहस्तम् , अष्टहस्तं वा मण्डपं चतुरस्रं चतुर्द्वारं ग्रहवर्णपताकाद्यलंकृतं सुलक्षणं कुर्यात् । तदभावे यजमानहस्तेन विंशतिहस्तदीर्घां दशहस्तायतां पूर्वपश्चिमायतां वा दक्षिणोत्तरायतां वा शालां कुर्यात् । मण्डपादिनिर्माणप्रकारश्च रुद्रकल्पद्रुमादौ द्रष्टव्यः ।

तत्र मध्ये हस्तखातविस्तारं समचतुरस्रं योन्यादियुतं कुण्डं कुर्यात् । तदशक्तौ तावन्मात्रं चतुरङ्गुलोच्छ्रितं *स्थण्डिलं नि-

---

* पञ्चगव्यमन्त्राश्च नामकर्मप्रकरणे व्या० ।

* द्विहस्तस्थण्डिले चतुस्त्रिंशदङ्गुलानि व्यासः । व्यासो विस्तारः । त्रिहस्तस्य एकचत्वारिंशदङ्गुलानि पञ्च यवाश्च । चतुर्हस्तस्य अष्टचत्वारिंशदङ्गुलानि । पञ्चहस्तस्य त्रिपञ्चाशदङ्गुलानि षट्‌ यवाश्च । षड्ढस्तस्य अष्टपञ्चाशदङ्गुलानि षड् यवाश्च । सप्तहस्तस्य त्रिषष्टिरङ्गुलानि चत्वारो यवाश्च । अष्टहस्तस्य सप्तषष्टिरङ्गुलानि सप्त यवाश्च । नवहस्तस्य द्वासप्ततिरङ्गुलानि । दश-

मपि तदीशानदिग्भागे नवग्रहस्थापनाय हस्तविस्तृता वितस्त्युच्छ्रिता वप्रद्वयावृतां समचतुरस्रां उदक्प्रवणां ग्रहवेदिं कुर्यात् । तस्या प्रथमो वप्रो द्व्यङ्गुलोच्छ्रायो, द्वितीयस्त्वङ्गुलोच्छ्रायो, द्वावपि द्व्यङ्गुलविस्तारौ कर्त्तव्यौ ।

तत्र वेदिमध्येऽष्टदलकमलं निर्माय तत्तद्वर्णचूर्णेन* पूरयित्वा कर्णिकायां पत्रेषु च यथोक्तमण्डलेषु प्रतिमासु वा दध्यक्षतपुञ्जेषु वा ग्रहाणामावाहनं कुर्यात् ।

तत्र कर्त्ता कर्म्मदिवसे प्रातरुत्थाय स्नानसन्ध्यादिनित्यकर्म्म समाप्य सर्वां नवग्रहपूजासामग्रीं सम्पाद्य दीपं प्रज्वलय्य प्राङ्मुख उपविश्याचम्य स्वस्तिवाचनं ( शान्तिपाठ ) कृत्वा—गणेशादिपञ्चायतनदेवान् गुरुं च प्रणम्य तेषु पुष्पाञ्जलिं च उक्तप्रकारेण समर्प्य प्रथमं गणेशपूजनं कुर्यात् । अर्घं संस्थाप्य सूर्य्यायार्घं दत्त्वा भूतोत्सादनम् अपसर्पन्त्वित्यादिना विधाय पुनरर्घं संस्थाप्य प्राणायामं विधाय पूजासङ्कल्पं कुर्यात्—ॐ विष्णुः २ देशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्माऽहम् अमुककर्मनिमित्तककरिष्यमाणग्रहयागकर्म्मणो निर्विघ्नतासिद्धये इत्युल्लिख्य तथा

---

हस्तस्य पञ्चसप्ततिरङ्गुलानि सप्त यवाश्च । अष्टाभिर्यवैरङ्गुलं भवति । एकहस्तस्थण्डिलस्य ५७६ अङ्गुलानि क्षेत्रफलं भवति । एवमुक्तं रत्नाव्यूहम् ।

* पञ्चरात्रे—रजांसि पञ्चवर्णानि मण्डलार्थन्तु कारयेत् । शालितण्डुलचूर्णेन शुक्लं वा यवसम्भवम् ॥ रक्तं कुसुम्भसिन्दूरगैरिकादिसमुद्भवम् । हरितालोद्भवं पीतं रजनीसम्भवं तु वा ॥ कृष्णं दग्धयवैश्चापि हरितं पत्रमिश्रितम् । कृष्णपीतमिश्रितं हरितम् । रजनी हरिद्रा । बिल्वादिपत्रजं श्याममित्यन्यत्र ॥

ममास्य कुमारस्य क० चौलसंस्कारे निर्विघ्नतासिद्धये इति वा, क० उपनयनसंस्कारे नि.सि.वा, क० चौलोपनयनयोर्नि.सि.इति वा, क०चौलोपनयनवेदारम्भेषु नि.सि.इति वा, क०चौलोपनयनवेदारम्भसमावर्तनकर्मसु नि.सि.वा.ममास्य पुत्रस्य अस्याः पुत्र्या वा क० विवाहकर्मणि निर्विघ्नतासिद्धये इति वा यथासम्भवमुल्लिख्य

श्रीमद्भगवतो गणेश्वरस्य यथामिलितोपचारैः पूजनं करिष्ये इति सङ्कल्प्य उक्तविधिना गणेशं सम्पूज्य—

प्रधानसङ्कल्पं कुर्यात् । अद्येहेत्यादिसंकीर्त्तनान्ते अमुकगोत्रोऽमुकराशिरमुकशर्म्माऽहम् अमुकराशेरमुकशर्म्मणोऽस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणद्वारा आयुर्वर्चोमेधाभिवृद्धये श्रीपरमेश्वरप्रीतये च अद्य श्वो वा चौलसंस्कारं करिष्ये ।

चौलोपनयनयोः सहकरणपक्षे तथाऽस्य द्विजत्वसिद्ध्या वेदाध्ययनाद्यधिकारसिद्ध्यर्थं श्रीप० प्री० च उपनयनं करिष्ये ।

चौलोपनयनवेदारम्भाणां सहकरणपक्षे तथाऽस्य श्रौतस्मार्त्तकर्म्मानुष्ठानाधिकारसिद्धये श्रीप.प्री. च वेदारम्भं करिष्ये ।

"तद्दिने वा चतुर्थके" इति वचनमाश्रित्य चौलोपनयनवेदारम्भसमावर्तनानां सहकरणपक्षे तथाऽस्य गृहस्थाश्रमार्हतासिद्धिद्वारा श्रीपरमेश्वरप्रीतये समावर्त्तनाख्यं कर्म्म करिष्ये ।

कन्याविवाहे ममास्याः कन्यायाः बीजगर्भसमुद्भवदुरितनिबर्हणपूर्वकं भर्त्रा सह धर्मप्रजोत्पादनद्रव्यपरिग्रहेषु अधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहसंस्कारं करिष्ये ।

पुत्रविवाहे ममास्य पुत्रस्य देवपित्रृणापाकरणहेतुधर्मप्रजोत्पादनसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहसंस्कारं करिष्ये ।

इति अन्यतमसंकल्पं कृत्वा—

तत्पूर्वाङ्गत्वेन तत्तत्कर्मनिमित्तककरिष्यमाणग्रहयागकर्मणश्च

पूर्वाङ्गत्वेन सकलमङ्गलाभिवृद्धये च गौर्य्यादिषोडशमातॄणां पूजनम् आभ्युदयिकश्राद्धं पुण्याहवाचनं च सकृत् करिष्ये इति सङ्कल्प्य मातृपूजानान्दीश्राद्धपुण्याहवाचनानि विधाय—

ग्रहयागसङ्कल्पं कुर्यात् ।

अद्येहेत्यादिसङ्कीर्त्तनान्ते अमुकगोत्रः अमुकराशिरमुकशर्माऽहं मम तथाऽस्य कुमारस्य दशाविदशान्तर्दशास्थितादित्यादिग्रहसूचितदुष्टफलोपशान्तिपूर्वकशुभफलप्राप्तये करिष्यमाणकर्मणि सर्वोपद्रवशान्तिपूर्वकं दीर्घायुरारोग्यहर्षविजयप्राप्तये श्रीपमेश्वरप्रीत्यर्थं च अमुककर्मनिमित्तकं ग्रहयागं करिष्ये । तत्पूर्वाङ्गत्वेन आचार्य्यब्रह्मणोः ऋत्विक्सदस्यद्वारपालादीनां च पूजनपूर्वकं वरणं करिष्ये इतिसङ्कल्प्य—

आचार्य्याय भूमिदेवाग्रेति अर्घं निवेद्य गन्धद्वारामिति गन्धेन, बृहस्पते इति नमोस्त्वनन्तायेति च अक्षतपुष्पैः सम्पूज्य वरणसामग्रीं करे गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यधौतवस्त्रोत्तरीययज्ञोपवीतपुष्पमालादिभिः अस्मिन् ग्रहयागकर्म्मणि आचार्यकर्म्म कर्त्तुम् आचार्य्यत्वेन त्वामहं वृणे इति *वरणसामग्रीम् आचार्य्यहस्ते दद्यात् । वृतोऽस्मीति प्रत्युक्तिः । प्रार्थनायाम् आचार्य्यस्तिवति पठेत् । अस्य ग्रहयागकर्म्मणः प्रतिष्ठापनार्थे त्वं मे आचार्य्यो भव । अहं भवानीति प्रत्युक्तिः ।

---

* भाजनं भाजनाधारं छत्रोपानत्कमण्डलु । आसनं वसनं मुद्रा कर्णभूषोपवीतकम् ॥ एतद्दशविधं देयं पदं वरणसिद्धये । पदाभावे त्रयं देयं पात्रवस्त्राङ्गुलीयकम् ॥ तदभावेऽथ ताम्बूलं दत्त्वा किञ्चित् प्रकल्पयेत् । वरणाक्षापहाराणां पात्राङ्गुलीयवाससाम् ॥ सर्वेषां निष्क्रयद्रव्यं यथोपपन्नमृत्विजः । इति परशुरामकारिकासु ॥

तथैव ब्रह्माणं सम्पूज्य एभिर्गन्धाक्षतादिभिः अस्मिन् ग्रहयागे कृताकृतावेक्षणादि ब्रह्मकर्म्म कर्त्तुं ब्रह्मत्वेन त्वामहं वृणे। वृतोऽस्मीति प्रत्युक्तिः। प्रार्थनायां यथाचतुर्मुखोब्रह्मेति पठेत्। अस्य ग्रहयागकर्म्मणः प्रतिष्ठापनार्थे त्वं मे ब्रह्मा भव। अहं भवानीति प्रत्युक्तिः।

ततश्चतुर्णाम् ऋत्विजां द्वयोरेकस्य वा होमसंख्यानुसारेण वरणम्। तान् सम्पूज्य एभिर्गन्धाक्षतादिभिः अस्मिन्ग्रहयागकर्म्मणि ऋत्विक्कर्म्म कर्त्तुम् ऋत्विक्त्वेन त्वामहं वृणे। वृतोस्मि इति प्रत्युक्तिः॥ प्रत्येकं पृथग्वरणम्। ततः सदस्यं वृणुयात्। एभिर्गन्धाक्षतादिभिः अस्मिन्ग्रहयागकर्म्मणि सदस्यत्वेन त्वामहं वृणे। वृतोऽस्मीति प्रत्युक्तिः॥ सर्वकर्मणामुपद्रष्टा भवेति प्रार्थयेत्।

अथ द्वारपालानां वरणम्। तत्र प्रथमम् ऋग्वेदिनं गन्धाक्षतैः सम्पूज्य एभिर्गन्धाक्षतादिभिः अस्मिन्ग्रहयागकर्म्मणि पूर्वदिग्द्वारे ऋग्वेदपारायणार्थं त्वामहं वृणे। इति द्वयोरेकस्य वा वरणम्। वृतोऽस्मीति प्र०। ॐऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः। अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव॥ ममास्मिन्यज्ञे त्वम् ऋग्वेदी भव। अहं भवानीति प्र०। मन्त्रपाठः ॐ अग्निमीळे०॥ एवं पूजनपूर्वकं दक्षिणद्वारे यजुर्वेदपारायणार्थमस्मिन् ग्रहयागकर्मणि त्वामहं वृणे इति यजुर्वेदिनं वृणुयात्। वृतोऽस्मि०। प्रार्थना—कात्तराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः। काश्यपेयस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव॥ ममास्मिन्यज्ञे त्वं यजुर्वेदी भव। अहंभ०। मन्त्रपाठः ॐइषेत्वा०॥ सामवेदपारायणार्थमित्येवं वृत्वा—सामवेदस्तु पिङ्गाक्षो जागतः शक्रदैवतः। भारद्वाजस्तु विप्रेन्द्र ऋत्विक्त्वं

मे मखे भव ॥ ममास्मिन्यज्ञे त्वं सामवेदी भव । अहं भ० । मन्त्रपाठः—ॐअग्नआयाहि० ॥ अथर्ववेदपारायणार्थम् इत्येवं वृत्वा—वृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः । वैशम्पायनविप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥ ममास्मिन्यज्ञे त्वम् अथर्ववेदी भव । अहं भ० । मन्त्रपाठः ॐशन्नोदेवीरभिष्टयआपो० ॥ ऋग्वेदं स्थापयेत्पूर्वे यजुर्वेदं तु दक्षिणे । पश्चिमे सामवेदं तु उत्तरे च ह्यथर्वणम् ॥ इति ।

ततः गायत्रीजपार्थं गणेशमन्त्रजपार्थं ग्रहमन्त्रजपार्थम् अन्यान्ब्राह्मणाँश्च वृणुयात् । ततः "यथाविहितं कर्म कुरुत" इति सर्वान् प्रति यजमानो ब्रूयात् । ते च करवाम इत्यभ्युपगच्छेयुः ।

इति वरणविधिः ॥

ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः सपत्नीकः साचार्यो यजमानः ऋत्विक्सदस्यसहितः जलपूर्णकलशहस्तो मङ्गलघोषपुरःसरं भद्रंकर्णेभिरितिमन्त्रेण *मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् । तत्र स्वासने प्राङ्मुख उपविश्याचम्य अर्घ्यं संस्थाप्य प्राणानायम्य अपसर्पन्त्विति अपक्रामन्त्विति च गौरसर्षपान् सर्वतो विकीर्य गायत्र्यादीन् रक्षाविधानोक्तान् (पृ. १५८) द्वादश वैदिकमन्त्रान् पठित्वा तालत्रयनादपूर्वकं विघ्नानुत्सार्य ततः पञ्चगव्येन आपोहिष्ठेति त्रिभिर्मन्त्रैः कुशैः सर्वत्र प्रोक्षेत् ।

---

*सिद्धान्तसङ्ग्रहे—पश्चाद्‌ परिक्रम्य प्रक्षाल्य चरणौ करौ । स्वाचान्तो द्वारदेशस्थो गुरुं देवं च दिक्पतीन् ॥ नत्वा पापापनोदार्थं मन्त्रद्वयमुदीरयेत् । इहैव प्राकृतं चित्तं पापाक्रान्तमिदं मम । तन्निःसारय चित्तान्मे पापं फट्फट् च ते नमः ॥ सूर्यः सोमो यमः कालः महाभूतानि पञ्च च । एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥ इति ।

ततो होमवेद्याम् आचार्य्यः पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य प्राङ्मुख उपविश्याचम्य गणेशं विष्णुं च स्मृत्वा प्रधा-नदीपं पूर्वस्यां दिशि पूर्वाभिमुखं संस्थाप्य संपूज्य च ततो वेद्युपरि यथोक्तलक्षणासु सुवर्णादिप्रतिमासु दध्यक्षतपुञ्जेषु वा आदित्यादिनवग्रहाणां स्थापनं कुर्य्यात् । प्रतिमाद्रव्याणि–ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादुभौ । रजतादयसः सीसात्कांस्यात्कार्य्या ग्रहाः क्रमात्–इति याज्ञवल्क्यः। अन्य-द्रव्याभावे सुवर्णमेव ग्राह्यम् । "सुवर्णमेकमेव वा सर्वेषाम्" । इति आश्वलायनपरिशिष्टात् ( अ. २ । खं. ३ ) । स्थाप-नप्रकारश्च–मध्ये स्थाप्यो रवी रक्तः सोमः श्वेतोऽग्निकोणके । दक्षिणेऽङ्गारको रक्तः पीत ईशानके बुधः ॥ बृहस्पतिरुदक्पीतः शुक्रः श्वेतस्तु पूर्वके। पश्चिमे तु शनिः कृष्णो राहुः कालश्च नै-र्ऋते ॥ वायव्ये केतवो धूम्रा एतच्च ग्रहवर्णकम् ॥ सर्व्वे आ-दित्याभिमुखा आदित्यश्च प्राङ्मुखः स्थाप्यः ॥ तत्र पूर्वं प्रतिमानाम् अग्न्युत्तारणं कुर्य्यात् । प्रतिमाभेदे मन्त्रावृत्तिः । तत्र मन्त्रः–ॐहिमस्य त्वा जरायुणाऽग्ने परिव्ययामसि । पावको ऽअस्मभ्य॑ शिवो भव ॥ इति प्रतिमानामग्न्यु-त्तारणं विधाय पञ्चामृतेन क्षालयेत् । ॐपयः पृथिव्यां पय-ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ इति पयसा स्नापयेत् । ॐदधिक्रा-

---

हिमस्यत्वा. अ. १७ मं. ५ हे अग्ने त्वा त्वां जरायुणा जरायुवत् उत्पत्तिस्थानीयेन शैवालेन परिव्ययामसि. परिव्ययामः परिवेष्टयामः ( इदन्तोमसीति मसः स्थाने मसिरादेशः ) । सः त्वम् परिवीतः सन् अस्मभ्यं पावकः शोधकः शिवश्च शान्तश्च भव ॥ इति, अग्निं ध्या-त्वा अभितसेन जलेन प्रतिमानां शोधनं कुर्यात् ॥

ण्णो ऽअकारिषञ्जिष्णोरश्वस्य व्वाजिनः । सुरभि नो मुखा करत्प्र ण ऽआयूᳬषि तारिषत् ॥ इति दध्ना० । ॐघृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा । द्यावापृथिवी व्वरुणस्य धर्मणा विष्कभिते ऽअजरे भूरिरेतसा । इति घृतेन० । ॐमधु व्वाता ऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ इति मधुना० । ॐआप्यायस्व समेतु ते व्विश्वतः सोम व्वृष्ण्यम् । भवा व्वाजस्य सङ्गथे ॥ इति शर्करया० । ॐआपो हि ष्ठा मयोभुवस्ता न ऽऊर्ज्जे दधातन । महे रणाय चक्षसे ॥१॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥२॥ तस्मा ऽअरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ३ ॥ इति शीतलोदकेन च प्रतिमाः संस्नाप्य कर्णिकायाम् अष्टसु दलेषु च निहितेषु दारुमयेषु कौशेषु वास्त्रेषु पौष्पेषु वा पीठेषु वक्ष्यमाणरीत्या स्थापयेत् ।

तत्र संकल्पः—ॐअद्येहामुकोऽहं ग्रहयागकर्मणो यथोक्तफलावाप्तये ताम्रादिप्रतिमासु सुवर्णप्रतिमासु वा आदित्यादिनवग्रहाणां, दध्यक्षतपुञ्जेषु अधिदेवताप्रत्यधिदेवतादीनां, सर्वेषां वा दध्यक्षतपुञ्जेषु स्थापनं करिष्ये इति । ( ॐकारस्य ब्रह्मा ऋषिर्गायत्री छन्दः परमात्मा देवता, व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजा ऋषयः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः सूर्यादिनवग्रहावाहने* विनियोगः) ॥

* आवाहयेद् व्याहृतिभिः इति ( पृ० ७७ ) मत्स्यपुराणवचनात् । सिद्धान्तसारे—पुष्पाञ्जलिं समादाय मुद्रया च त्रिदण्डया । यथोक्तां देवतां ध्यात्वा मूलमन्त्रं समुच्चरन् ॥ संबुद्ध्यन्तं देवनामा-

तत्रायं क्रमः—मध्ये कर्णिकायां *द्वादशाङ्गुले वर्तुले रक्तमण्डले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः—ॐभूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र रक्तवर्ण सूर्य्य इहागच्छ इत्यावाह्य—ॐआकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥ इति मन्त्रेण सूर्य इह तिष्ठेति स्थापयेत्॥ १॥

तत आग्नेयदले चतुरस्रे श्वेतमण्डले चतुरङ्गुले अधोदृष्टिं सूर्याभिमुखं सोमं श्वेतपुष्पाक्षतैः—ॐभूर्भुवः स्वः यमुनातीरोद्भव आत्रेयसगोत्र शुक्लवर्ण सोम इहागच्छ इत्यावाह्य— ॐ इमं देवा ऽअसपत्न५ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममुष्य पुत्रममुष्यै पुत्रमस्यै विश ऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणाना५ राजा॥ इति मन्त्रेण सोम इह तिष्ठेति स्थापयेत्॥ २॥

---

त्रागच्छागच्छेत्यपि। देवस्य तेजस्तन्मूर्तौ भावाह्न्याख्यमुद्रया॥ स्थापयेदुधरन्मूलमेतदावाहनं मतम्। तत संस्थापनं कुर्यादिह तिष्ठेह तिष्ठ च॥ संस्थापनीयमुद्रां च दर्शयित्वा विभावयेत्। जात स्थिरो देव इति पश्चात् संस्थापयेदिति॥ इति। लक्षणसंग्रहे—हस्ताभ्यामञ्जलिं बध्वा ऽनामिकामूलपर्वणि। अङ्गुष्ठौ निक्षिपेत् सेय मुद्रा त्वावाहनी मता॥ अधोमुखी त्वियं चैव स्थापनीति निगद्यते। इति। अनेन आवहनस्थापनयोः प्रकारभेदः स्पष्टमेव दर्शितः।

* ग्रहरत्नावल्यां-मण्डलव्यासः कथित सूर्यस्य द्वादशाङ्गुलः। चतुरङ्गुल सोमस्य त्र्यङ्गुलो लोहितस्य च॥ चतुरङ्गुल सौम्यस्य गुरोश्चैव षडङ्गुल। नवाङ्गुलस्तु शुक्रस्य अर्कपुत्रस्य द्व्यङ्गुल॥ द्वादशाङ्गुलो राहोश्च केतोश्चैव षडङ्गुल इति।

ततो दक्षिणे त्रिकोणे त्र्यङ्गुले रक्तमण्डले दक्षिणदृष्टिं सूर्याभिमुखं भौमं रक्तपुष्पाक्षतैः—ॐभूर्भुवः स्वः अवन्तिदेशोद्भव भारद्वाजसगोत्र रक्तवर्ण भौम इहागच्छ इत्यावाह्य—ॐअग्निर्मूर्द्धा दिवः ककुत् पतिः पृथिव्या ऽअयम्। अपाᳬं रेताᳬंसि जिन्वति ॥ इति मन्त्रेण भौम इह तिष्ठेति स्थापयेत् ॥ ३ ॥

ईशाने वाणाकारे चतुरङ्गुले पीतमण्डले पीतं बुधं वामदृष्टिं सूर्याभिमुखं पीतपुष्पाक्षतैः-ॐभूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र पीतवर्ण बुध इहागच्छ इत्यावाह्य-ॐउद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सᳬंसृजेथामयं च । अस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥ इतिमन्त्रेण बुध इह तिष्ठेति स्थापयेत् ॥ ४ ॥

उत्तरे दीर्घचतुरस्रे षडङ्गुले पीतमण्डले वामदृष्टिं सूर्याभिमुखं पीतं गुरुं पीतपुष्पाक्षतैः—ॐभूर्भुवः स्वः सिन्धुदेशोद्भव आङ्गिरससगोत्र पीतवर्ण गुरो इहागच्छ इत्यावाह्य—ॐबृहस्पते ऽअति यदर्यो ऽअर्हाद् द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ इति मन्त्रेण बृहस्पते इह तिष्ठेति स्थापयेत् ॥ ५ ॥

ततः पूर्वे पञ्चकोणे नवाङ्गुले श्वेतमण्डले ऊर्ध्वदृष्टिं सूर्याभिमुखं श्वेतं शुक्रं श्वेतपुष्पाक्षतैः—ॐभूर्भुवः स्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्रवर्ण शुक्र इहागच्छ इत्यावाह्य—ॐअन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियँविपानᳬं शुक्रमन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतम्मधु ॥ इति मन्त्रेण शुक्र इह तिष्ठेति स्थापयेत् ॥ ६ ॥

ततः पश्चिमे धनुराकारे द्व्यङ्गुले कृष्णमण्डले अधोदृष्टिं सूर्याभिमुखं कृष्णं शनिं कृष्णपुष्पाक्षतैः—ॐभूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र कृष्णवर्ण शनैश्चर इहागच्छेत्यावाह्य—ॐशन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शँय्योरभिस्रवन्तु नः॥ इति मन्त्रेण शनैश्चर इह तिष्ठेति स्थापयेत्॥७॥

ततो नैर्ऋते शूर्पाकारे द्वादशाङ्गुले कृष्णमण्डले दक्षिणदृष्टिं सूर्याभिमुखं राहुं कृष्णपुष्पाक्षतैः-ॐभूर्भुवः स्वः वैराटिनपुरोद्भव पैठीनसिसगोत्र कृष्णवर्ण राहो इहागच्छ इत्यावाह्य-ॐकयानश्चित्र ऽआभुवदूती सदावृधः सखा। कया शचिष्ठया वृता॥ इति मन्त्रेण राहो इह तिष्ठेति स्थापयेत्॥८॥

वायव्यां ध्वजाकारे धूम्रे षडङ्गुलमण्डले दक्षिणदृष्टिं सूर्याभिमुखं धूम्रं केतुं धूम्रपुष्पाक्षतैः-ॐभूर्भुवः स्वः अन्तर्वेदीसमुद्भव जैमिनिसगोत्र धूम्रवर्ण केतो इहागच्छ इत्यावाह्य—ॐकेतुं कृण्वन्नकेतवे पेशो मर्या ऽअपेशसे। समुषद्भिरजायथाः॥ इति मन्त्रेण केतो इह तिष्ठेति स्थापयेत्॥९॥

अथाधिदेवतावाहनं शुक्लपुष्पा०॥ दध्यक्षतपुञ्जेषु सूर्यदक्षिणपार्श्वेॐभूर्भुवः स्वः ईश्वर इहागच्छ इत्यावाह्य-ॐ*त्र्यम्बकंय्यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृ-

---

* ईश्वरं त्र्यम्बकं चेति श्रीश्चते इति पार्वतीम्। यदक्रन्देतिच स्कन्दं विष्णुं विष्णोरराडिति॥ आब्रह्मन्निति ब्रह्माणं सजोषा इति वासवम्। यमायत्वेति च यमं कालं कार्षिरसीति च॥ चित्रावसवितिमन्त्रेण चित्रगुप्तं निधापयेत्। इति स्कान्दे स्थापनमन्त्रा उक्ताः। अत्र आब्रह्मन्नित्यस्य स्थाने ब्रह्मजज्ञेति, यमायत्वेत्यस्य स्थाने असियमोऽसीति पाठः मन्त्रार्थदीपिकाकारादिसमतः।

त्योर्मुक्षीय माऽमृतात् ॥ इति मन्त्रेण ईश्वर इह तिष्ठेति स्थापयेत् ॥ १ ॥ ॐभूर्भुवःस्वः इति मन्त्रः सर्वत्रोच्चार्यः। सोमस्य दक्षिणपार्श्वे—ॐभू. उमे इहागच्छ इत्यावाह्य–ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं मऽइषाण सर्वलोकं मऽइषाण ॥ इति मन्त्रेण उमे इह तिष्ठेति स्थापयेत्॥२॥ भौमदक्षिणपार्श्वे—ॐभू. स्कन्द इहागच्छ इत्यावाह्य–ॐयदक्रन्दः प्रथमं जायमान ऽउद्यन्त्समुद्रादुतवा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू ऽउपस्तुत्यं महि जातं ते ऽअर्वन् ॥ इति मन्त्रेण स्कन्द इह तिष्ठेति स्थापयेत् ॥३॥ बुधस्य दक्षिणपार्श्वे—ॐभू. विष्णो इहागच्छ इत्यावाह्य–ॐविष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा॥ इति मन्त्रेण विष्णो इह तिष्ठेति स्थापयेत्॥४॥गुरुदक्षिणपार्श्वे–ॐभू० ब्रह्मन् इहागच्छ इत्यावाह्य–ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेन ऽआवः। स बुध्न्या ऽउपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ इति मन्त्रेण ब्रह्मन् इह तिष्ठेति स्थापयेत् ॥ ५ ॥ शुक्रदक्षिणपार्श्वे–ॐभू. इन्द्र इहागच्छ इत्यावाह्य–ॐसजोषा ऽइन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ॥ जहि शत्रूँ २॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ इति मन्त्रेण इन्द्र इह तिष्ठेति स्थापयेत् ॥६॥ शनिदक्षिणपार्श्वे–ॐभू.यम इहागच्छ इत्यावाह्य–ॐअसि यमो ऽअस्यादित्यो ऽअर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त ऽआहुस्ते त्रीणि दिवि बन्धनानि ॥ इति मन्त्रेण यम इह तिष्ठेति स्थापयेत् ।

राहुदक्षिणपार्श्वे-ॐभू० काल इहागच्छ इत्यावाह्य— ॐका· पिरसि समुद्रस्य त्वा ऽक्षित्याऽउन्नयामि । समापो ऽआद्भिरग्मत समोषधीभिरोषधीः ॥ इति मन्त्रेण काल इह तिष्ठेति स्थापयेत् ॥८॥ केतोर्दक्षिणपार्श्वे—ॐभू चित्रगुप्त इहागच्छ इत्यावाह्य ॐचित्रावसो स्वस्ति ते पारमशीय ॥ इति मन्त्रेण चित्रगुप्त इह तिष्ठेति स्थापयेत् ॥ ९ ॥

अथ प्रत्यधिदेवतावाहनम् ॥ सूर्यवामपार्श्वे—ॐभूर्भुवः स्वः अग्ने इहागच्छ इत्यावाह्य—ॐअग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ२॥ आसादयादिह ॥ इति मन्त्रेण अग्ने इह तिष्ठेति स्थापयेत् ॥१॥ सोमवामपार्श्वे—ॐभू.आप इहागच्छत इत्यावाह्य–ॐ*अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः। देवीरापो यो व ऽऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजꣳ सेत् ॥ इति मन्त्रेण आप इह तिष्ठतेति स्थापयेत् ॥२॥ भौमवामपार्श्वे–ॐभू भूमे इहागच्छ इत्यावाह्य–ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः॥इति मन्त्रेण भूमे इह तिष्ठेति स्थापयेत् ॥ ३ ॥ बुधवामपार्श्वे–ॐभू.विष्णो इहागच्छ इत्यावाह्य—ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥ इति मन्त्रेण विष्णो इह तिष्ठेति स्थापयेत् ॥४॥ गुरोर्वामपार्श्वे–ॐभू. इन्द्र इहागच्छ इत्यावाह्य-

---

* मन्त्रार्थदीपिकादौ अयमेव मन्त्र अपां स्थापने उक्त । अत्र बीज तु अपां सोमप्रत्यधिदेवत्वेन 'सोमायाप्स्वन्तरित्यपि' इति स्कान्द वचनमेव । सोमस्य इमदेवा इतियाज्ञवल्क्याद्युक्त मन्त्रस्वीकारात् । रुद्रकल्पद्रुमे आपोहिष्ठेति उक्त । वरुणदेवताया प्रत्यधिदेवतात्वाभिप्रायेण उक्तमिति मन्त्रोऽपि सोमप्रत्यधिदेवतायाम् क्वचित् उक्त ।

ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ इति मन्त्रेण इन्द्र इह तिष्ठेति स्थापयेत् ॥ ५ ॥ शुक्रवामपार्श्वे–ॐभू.इन्द्राणि इहागच्छ इत्यावाह्य–ॐअदित्यै रास्नाऽसीन्द्राण्या ऽउष्णीषः पूषाऽसि घर्माय दीष्व॥इति मन्त्रेण इन्द्राणि इह तिष्ठेति स्थापयेत्॥६॥शनेर्वामपार्श्वे–ॐभू.प्रजापते इहागच्छ इत्यावाह्य–ॐप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो ऽअस्तु (अयममुष्य पिता ऽसावस्य पिता) वयꣳ स्याम पतयो रयीणाम् ॥ इति मन्त्रेण प्रजापते इह तिष्ठेति स्थापयेत् ॥ ७ ॥ राहोर्वामपार्श्वे—ॐभू.सर्पाः इहागच्छत इत्यावाह्य–ॐनमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये ऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ इति मन्त्रेण सर्पाः इह तिष्ठतेति स्थापयेत् ॥८॥ केतोर्वामपार्श्वे ॐभू.ब्रह्मन् इहागच्छ इत्यावाह्य–ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन ऽआवः । स बुध्न्या ऽउपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ इति मन्त्रेण ब्रह्मन् इह तिष्ठेति स्थापयेत् ॥ ९ ॥

ततो विनायकादीन्पञ्चलोकपालानावाहयेत् ॥ राहोरुत्तरे–

---

१ रुद्रक. द्रु. संस्कारभा. अयमेव मन्त्रः गुरुप्रत्यधिदेवताभूतस्येन्द्रस्योक्तः । अन्यत्रान्योऽप्युक्तः । एवमुत्तरत्र इन्द्राण्या अपि अन्यत्र अन्य एवोक्तः ।

२ ( ) एतन्मध्यस्थं यजुः मन्त्रार्थदीपिकायामेव दृश्यते ।

३ संस्कारभा. रुद्रक. द्रु. अयमेव मन्त्र उक्तः । अन्यत्रान्योऽपि ।

४ संग्रहे–राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम् । गणेशदु-

ॐभूर्भुवःस्वः विनायक इहागच्छ इत्यावाह्य–ॐगणानां त्वेति मन्त्रेण विनायक इह तिष्ठेति स्थापयेत् ॥१॥शनेरुत्तरे–ॐभू.दुर्गे इहागच्छ इत्यावाह्य–ॐअम्बे ऽअम्बिके ऽअम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पील वासिनीम् ॥ इति मन्त्रेण दुर्गे इह तिष्ठेति स्थापयेत् ॥२॥रवे· रुत्तरपार्श्वे॥ ॐभू. वायो इहागच्छ इत्यावाह्य ॐवातो वा मनो वा गन्धर्वाः सप्तविंशतिः। ते ऽअग्रेऽश्वमयुञ्जं-स्ते ऽअस्मिन्नवमादधुः॥ इति मन्त्रेण वायो इह तिष्ठेति स्थापयेत् ॥ ३ ॥ राहोर्दक्षिणे–ॐभू. आकाश इहागच्छ इत्यावाह्य–ॐऊर्ध्वा ऽअस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः। द्युमत्तमा सुप्रतीकस्य सूनोः ॥ इति मन्त्रेण आकाश इह तिष्ठेति स्थापयेत् ॥ ४ ॥ केतोर्दक्षिणे–ॐभू. अश्विनौ इहागच्छतम् इत्यावाह्य–ॐया वां कशा मधुमत्य-श्विना सूनृतावती। तया यज्ञं मिमिक्षतम् ॥ इति मन्त्रेण अश्विनौ इह तिष्ठतम् इति स्थापयेत् ॥ ५ ॥

---

गायायुश्च राहुकेत्वोश्च दक्षिणे ॥ आकाशमश्विनौ देवौ स्थापयित्वा क्रमेण तु । वास्तोष्पतिं क्षेत्रपालं स्थापयेत्तु गुरूत्तरे ॥ एता सदैव संस्थाप्या कर्मसाद्गुण्यदेवता । इन्द्राग्नियमनैर्ऋत्या वरुणो वायुरेव च । कुबेरेशानावित्यष्टौ प्रागादिर्मादेशाधिपा ॥ ब्रह्माणं च ततः स्थाप्य पूर्वेशान्योस्तु मध्यम। प्रतीचीनैर्ऋतीमध्ये अनन्तं स्थापयेदिति ॥

१ रुद्रकल्पद्रुमादावयमेवोक्तः । अन्यत्र त्वन्य ।
२ मन्त्रार्थदीपिकायामयमेवोक्त । रुद्रकल्पद्रुमादौ त्वन्य ।
३ मन्त्रार्थदीपिकायामयमुक्त । रु. द्रुमादौत्वन्य ।
४ रुद्रकल्पद्रुमादावयमुक्त । म अन्य ।

गुरूत्तरे–ॐभू. वास्तोष्पते इहागच्छ इत्यावाह्य–ॐवास्तोष्पते प्रतिजानीह्यस्मान् त्स्वावेशो ऽअनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ इति मन्त्रेण वास्तोष्पते इह तिष्ठेति स्थापयेत्। गुरूत्तरे एव वास्तोष्पत्युत्तरे–ॐभू. क्षेत्राधिपते इहागच्छ इत्यावाह्य–ॐक्षेत्राधिपते इह तिष्ठेति स्थापयेत् ॥ २ ॥

अथ क्रतुसंरक्षकान् इन्द्रादिदिक्पालानावाहयेत् शुक्लपुष्पाक्षतैरेव प्रागादितः पीठसमन्तात्–

पूर्वे–ॐभूर्भुवःस्वः इन्द्र इहागच्छ इत्यावाह्य–ॐत्रातारमिन्द्रम्(१९९)इति पूर्वोक्तमन्त्रेण इन्द्र इह तिष्ठेति स्थापयेत् ॥१॥

एवं सर्वत्र। आग्नेये–ॐभू. अग्ने इहागच्छ इत्यावाह्य–अग्निंदूतम् (१९८) इतिपूर्वोक्तमन्त्रेण अग्ने इह तिष्ठेति स्थापयेत् ॥ २ ॥ दक्षिणे—ॐभू. यम इहागच्छ इत्यावाह्य—असियमोऽअस्यादित्यः (१९७) इति पूर्वोक्तमन्त्रेण यम इह तिष्ठेति स्थापयेत् ॥ ३ ॥ नैर्ऋते—ॐभू० निर्ऋते इहागच्छ इत्यावाह्य–ॐएष ते निर्ऋते भागस्तं जुषस्व इति मन्त्रेण निर्ऋते इह तिष्ठेति स्थापयेत् ॥ ४ ॥ पश्चिमे–ॐभू. वरुण इहागच्छ इत्यावाह्य–ॐइमं मे ऽवरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥इति मन्त्रेण वरुण इह तिष्ठेति स्थापयेत्॥५॥वायव्याम्–ॐभू.वायो इहागच्छ इत्यावाह्य–ऽवातोवा (२००) इति पूर्वोक्तमन्त्रेण वायो इह तिष्ठेति स्था. ॥ ६ ॥ उत्तरे–ॐभू. कुबेर इहागच्छ इत्यावाह्य–ॐवयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि ॥ इति मन्त्रेण कुबेर इह तिष्ठेति स्था. ॥ ७ ॥ संस्कारभा. सोमावाहनमुक्तम्। ईशाने–ॐभू. ईश इहागच्छ इत्यावाह्य–ॐ-

तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥ इति मन्त्रेण ईश इह तिष्ठेति स्था.॥ ८॥ ऊर्ध्वे पूर्वैशानयोः मध्ये ब्रह्मन् इहागच्छ इत्यावाह्य-ॐब्रह्म जज्ञानम्(१९७)इति पूर्वोक्तमन्त्रेण ब्रह्मन् इह तिष्ठेति स्था.॥९॥ ॐभू. अधः पश्चिमनैर्ऋतमध्ये अनन्त इहागच्छ इत्यावाह्य-ॐनमोऽस्तु सर्पेभ्य इति मन्त्रेण(१९९)अनन्त इह तिष्ठेति स्था.॥१०॥

एवं संस्थाप्य अक्षतान् गृहीत्वा-ॐएतन्तेदेवसवितः इति मन्त्रौ पठित्वा ॐभूर्भुवः स्वः आदित्यादिनवग्रहाः साङ्गाः सवाहनाः सपरिवारा अधिदेवताप्रत्यधिदेवताविनायकादिपञ्चलोकपालवास्तोष्पतिक्षेत्राधिपतीन्द्रादिदशदिक्पालसहिताः सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य—

ग्रहवेदीशाने चतुर्विंशतिदलम् अष्टदलं वा कर्णिकासहितं पद्ममुल्लिख्य तत्र वरुणावाहनार्थं पूर्वोक्तकलशस्थापनविधिना कलशं संस्थाप्य तत्र तीर्थानि वरुणश्चावाह्य स्थापयेत् प्रतिष्ठां च कुर्यात्। ततो रक्षाविधानोक्तप्रकारेण रक्षासूत्रमभिमन्त्र्य कलशे स्थापयेत्। ततो विधिना अर्घं संस्थाप्य प्राणानायम्य कुशतिलयवजलपाणिः ग्रहपूजनसङ्कल्पं कुर्यात्-अद्येहेत्यादि सङ्कीर्त्य अमुकोऽहम् अमुककामः ग्रहवेद्युपरि स्थापितासु सुवर्णप्रतिमासु आवाहितानाम् आदित्यादिनवग्रहाणाम्, दध्यक्षतपुञ्जेषु आवाहितानाम् अधिदेवताप्रत्यधिदेवताविनायकादिपञ्चलोकपालानाम् इन्द्रादिदशदिक्पालानां वास्तोष्पतेः क्षेत्रपालस्य कलशे वरुणदेवस्य च यथामिलितोपचारैः पूजनं करिष्ये इति सङ्कल्प्य सूर्यादीन् ध्यायेत्—

पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरङ्गवाहनः। दि-

धारूरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः॥१॥ श्वेताम्बरः श्वेतविभूषणश्च श्वेतद्युतिर्दण्डधरो द्विबाहुः। चन्द्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं विदधातु देवः॥२॥ रक्ताम्बरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत्। धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशान्तः ॥३॥ पीताम्बरः पीतवपुः किरीटी चतुर्भुजो दण्डधरश्च हारी। चर्मासिभृत्सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधोऽस्तु ॥ ४ ॥ पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः। दधाति दण्डं च कमण्डलुं च तथाऽक्षसूत्रं वरदोऽस्तु मह्यम्॥५॥ श्वेताम्बरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशान्तः। तथाऽक्षसूत्रं च कमण्डलुञ्च दण्डं च बिभ्रद्वरदोऽस्तु मह्यम् ॥६॥ नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान्। चतुर्भुजः सूर्यसुतः प्रशान्तः सदाऽस्तु मह्यं वरमन्दगामी॥७॥ नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली। चतुर्भुजश्चर्मधरश्च राहुः सिंहाधिरूढो वरदोऽस्तु मह्यम् ॥८॥ धूम्रो द्विबाहुर्वरदो गदाभृत् गृध्रासनस्थो विकृताननश्च। किरीटकेयूरविभूषिताङ्गः सदाऽस्तु मे केतुगणः प्रशान्तः ॥ ९ ॥ इति नवग्रहान् ध्यात्वा, अन्ये किरिटिनः कार्या वरदाभयपाणयः। इति सामान्येन अधिदेवतादींश्च ध्यात्वा, वरुणं च–नागपाशधरः स्वर्णभूषणः पद्मिनीप्रियः। वरुणोऽम्बुपतिः श्रीमान् श्वेतो मकरवाहनः॥ इति ध्यात्वा वैदिकमन्त्रैर्नाममन्त्रैर्वा पूजां कुर्यात्। (अधिदेवतादीनां विशेषरूपेण ध्यानं रुद्रकल्पद्रुमादौ प्रदर्शितम्)। वैदिकमन्त्राः आकृष्णेनेत्यादय उक्ताः। नाममन्त्रा यथा–ॐआदित्याय नमः। ॐसोमाय नमः। ॐभौमाय नमः। ॐबुधाय नमः। ॐबृहस्पतये नमः। ॐशुक्राय नमः।

ॐशनैश्चराय नमः । ॐराहवे नमः । ॐकेतवे* नमः ॥ ९ ॥

ॐईश्वराय नमः । ॐउमायै नमः । ॐस्कन्दाय नमः । ॐविष्णवे नमः । ॐब्रह्मणे नमः । ॐइन्द्राय नमः । ॐयमाय नमः ॐकालाय नमः । ॐचित्रगुप्ताय नमः ॥ ९ ॥

ॐअग्नये नमः । ॐअद्भ्यो नमः । ॐभूम्यै नमः । ॐविष्णवे नमः । ॐइन्द्राय नमः । ॐइन्द्राण्यै नमः । ॐप्रजापतये नमः । ॐसर्पेभ्यो नमः । ॐब्रह्मणे नमः ॥ ९ ॥

ॐविनायकाय नमः । ॐदुर्गायै नमः । ॐवायवे नमः । ॐआकाशाय नमः । ॐअश्विभ्यां नमः ॥ ५ ॥

ॐवास्तोष्पतये नमः । ॐक्षेत्राधिपतये नमः ॥ २ ॥

ॐइन्द्राय नमः । ॐअग्नये नमः । ॐयमाय नमः । ॐनिर्ऋतये नमः । ॐवरुणाय नमः । ॐवायवे नमः । ॐकुबेराय (सोमाय) नमः । ॐईशानाय नमः । ॐब्रह्मणे नमः ॐअनन्ताय नमः ॥ १० ॥ कलशे ॐवरुणाय नमः ॥ १ ॥

इतिनाममन्त्रैर्वा आवाहनासनपाद्यार्घस्नानाचमनवस्त्रयज्ञोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यफलताम्बूलभूषणनीराजनान्तोपचारैर्यथासम्भवं सम्पूजयेत् । ॐआवाहितादित्यादिदेवताभ्यो नम इति वा सर्वान् पूजयेत् ।

( पूजनं तु काण्डानुसमयेन पदार्थानुसमयेन वा कर्तव्यम् । तयोः स्वरूपं होमरहितग्रहपूजाप्रयोगे उक्तम् । सूर्यादीनां पूजा पदार्थानुसमयेनैवेति मदनरत्नादौ । अत्र पूजैव पदार्थो न त्वेकैकपदार्थसमर्पणं पदार्थः तस्य पुरोडाशवत् पदार्थावयवत्वादिति रुद्रकल्पद्रुमः । तन्मते सम्पूर्णपूजने एकवारमेव मन्त्रप्रयोगो न्याय्यः । )

*केतूनां बहुत्वेऽपि गणत्वेन देवतात्वात् पूजादावेकवचनमेव ।

(रक्तचन्दनादीनि नवानुलेपनानि मलयज एव वा (श्रीखण्डः) सर्वेषाम्। रक्तपद्मादीनि पुष्पाणि रक्तकरवीरं वा ग्रहवर्णानि वा। वस्त्राणि च यथासम्भवं ग्रहवर्णानि। अक्षताः पुष्पवर्णाः। गुग्गुलुर्धूपः। दीपः सर्पिषा तिलतैलेन वा। नैवेद्यं पायसादिकं त्रिमधुरं वा। दक्षिणा माणिक्यादिरूपा वा माणिक्यमेव वा निष्क्रयद्रव्यमेववा—इत्यादिविशेष आश्व० प० द्रष्टव्यः। अपूपादिकमपि नैवेद्यमिति रुद्रकल्पद्रुमे)।

पुष्पाञ्जलिः—ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च। गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा भवन्तु ॥ १ ॥ सूर्यः शौर्यमथेन्दुरुच्चपदवीं सन्मङ्गलं मङ्गलः, सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः शुभं शं शनिः। राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिं, नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥ २ ॥ इति पुष्पाञ्जलिं समर्प्य—आयुश्च वित्तञ्च तथा सुखं च धर्मार्थलाभौ बहुपुत्रतां च। शत्रुक्षयं राजसु पूज्यतां च तुष्टा ग्रहाः क्षेमकरा भवन्तु ॥ इति प्रार्थ्य-वेद्युपरि फलपुष्पोपशोभितं वितानं दत्त्वा—वेदीसमीपे पूजान्ते होमान्ते एव वा यथोक्तबलीन् दद्यात् (द्र. पृ. ७७)। यथोक्तबल्यभावे पायसबलिं तदभावे दध्यक्षतबलिं दद्यात्। *अथाचार्यो ग्रहोपवेशनादिपर्युक्षणान्तं कर्म कृत्वा संस्रवधारणार्थं प्रोक्षणीपात्रं

---

*पूर्वोत्तरतन्त्रमाचार्यःकुर्यादिति आश्वलायनपरिशिष्टवचनात्। अत्र पदार्थासादने आज्याक्ता यवसमन्विताः कृष्णतिलाः अर्कादिसमिधश्च आसादनीयाः।

प्रणीताग्न्योर्मध्ये निदध्यात्। (अत्र चरोः स्रुवेण होमे एव संस्रवस्थापनं, हस्तेन होमे तु न। पाकयज्ञेष्ववत्तस्यासर्वहोम इति श्रौतसूत्रे स्रुचि स्रुवे वाऽवत्तस्य असर्वहोम इति भाष्यकारैः कर्कादिभिर्व्याख्यानादिति भाष्यानुयायिनः। परशुरामस्तु हस्तहोमेऽपि संस्रवं स्वीकृतवानिति निरूपितम्(३९)। तस्मात् भाष्यानुयायिनां न पात्रान्तरस्थापनमिति)। ततः सङ्कल्पपूर्वकं द्रव्यदेवताऽभिध्यानं कुर्यात्–अद्येह नवग्रहयागेनाहं यक्ष्ये। तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमम्, आज्येन–अत्र प्रधानानि सूर्यं, सोमं, भौमं, बुधं, गुरुं, शुक्रं, शनिं, राहुं, केतुञ्च, प्रत्येकमष्टसंख्याहुतिभिः समिच्चर्वाज्ययवमिश्राज्याक्तकृष्णतिलद्रव्यैः[2] ईश्वरम्, उमां, स्कन्दं विष्णुं, ब्रह्माणम्, इन्द्रं, यमं, कालं, चित्रगुप्तम्, अग्निम्, अपो, भूमिं, विष्णुम्, इन्द्रम्, इन्द्राणीं, प्रजापतिं, सर्पान्, ब्रह्माणं च तैरेव द्रव्यैः प्रत्येकं चतुःसंख्या० विनायकं, दुर्गां, वायुम्, आकाशम्, अश्विनौ, इन्द्रम्, अग्निं, यमं, निर्ऋतिं, वरुणं, वायुं, कुबेरम् (सोमम्), ईशानं, ब्रह्माणम्, अनन्तं च तैरेव द्रव्यैः प्रत्येकं द्विसंख्याहुतिभ्यां शेषेण स्विष्टकृतम्—अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निम्, वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान्, वैरुणम्, प्रजापतिं चाज्येनाहं यक्ष्ये इति।

---

१ इदमेवान्वाधानशब्देनोच्यते। यद्यपि याज्ञुषाणामन्वाधानं गदाधरादीनां न सम्मतं तथापि स्मार्तोल्लासादीनां बहूनां पद्धतिकाराणां च संमतत्वादुच्यते।

२ तिलाः कृष्णा घृताभ्यक्ताः किंचिद्यवसमन्विताः—इति शान्तिरत्ने वचनात् घृताक्ता यवमिश्रास्तिला ग्राह्याः।

३ अत्र शुद्धवरुणस्यैव देवतात्वं गदाधरहरिहरादिसंमतम्। सर्वानुक्रमसूत्रस्वरसात्। उदुत्तमं शुनःशेपो वारुणी त्रिष्टुमम्

(अष्टादिसंख्याश्च केवलग्रहयागे। अयुतलक्षकोटिहोमेषु तु क्रमेण अष्टाविंशत्यष्टोत्तरशताष्टोत्तरसहस्रसंख्या ग्रहाणाम्, अष्टाष्टाविंशत्यष्टोत्तरशतसंख्याः पार्श्वदेवतानाम्, चतुरष्टाष्टाविंशतिसंख्याश्च विनायकादीनां सर्वेषाम्। संस्कारभास्करस्थसंग्रहवचनादिति बोध्यम्। अयुतादिसंख्याश्च व्याहृतीभिस्तिलाज्यहोमेन पूरणीया नृसिंहपुराणवचनादिति संस्कारभास्करे। एतत्संख्यातः पृथगेव व्याहृतिहोमेन अयुतादिसंख्याः सम्पादनीया इत्यन्ये। आश्वलायनपरिशिष्टे प्रकारान्तरमप्युक्तं तत्तत्रैव द्रष्टव्यम्)।

(आचार्यादीनां होमकर्तृत्वे यजमानकर्तृकस्य प्रत्याहुतिपयोक्तत्यागस्याशक्यत्वात् पूर्वमेव यजमानः सर्वा देवता उद्दिश्य त्यागं कुर्यात्—एतावत्सम्पादितमिदं समिद्वर्ज्यतिलद्रव्यम् आदित्याय सोमाय भौमाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतवे ईश्वराय उमायै स्कन्दाय विष्णवे ब्रह्मणे इन्द्राय यमाय कालाय चित्रगुप्ताय अग्नये अद्भ्यः पृथिव्यै विष्णवे इन्द्राय इन्द्राण्यै प्रजापतये सर्पेभ्यः ब्रह्मणे विनायकाय दुर्गायै वायवे आकाशाय अश्विभ्याम् इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे कुबेराय (सोमाय) ईशानाय ब्रह्मणे अनन्ताय च मया परित्यक्तं यथादैवतमस्तु न ममेति। इति द्रव्यत्यागान्ते वरदनामानमग्निम् एतं ते इत्यनेन प्रतिष्ठाप्य तदेवाग्निरित्यादिना

---

इति तत्सूत्रम्। एतेन आदित्यत्वविशिष्टस्य वा आदितित्वविशिष्टस्य वा आदित्यत्वादितित्वोभयविशिष्टस्य वा एतन्मन्त्रदेवतात्वं कल्पयन्तः परास्ताः। एवमुत्तरत्र अग्निं प्रजापतिम् इत्युल्लेखेऽपि मूलं मृग्यम्। यद्यपि अग्निरेव प्रजापतिस्तथापि देवतात्वं प्रजापतित्वेनैव नाग्नित्वेन तथाविध्यभावादिति बोध्यम्।

चत्वारिशृङ्गा इति च ध्यात्वा वैश्वानरोनइति आवाह्य अग्नेनयेति सम्पूज्य तिस्रो रेखाः सप्तजिह्वाश्च सम्पूज्य आचार्यः शङ्खमुद्रया ( ४८ ) स्रुवं धारयित्वा जुहुयात् ।

होमार्थे समिधः । अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ एताः समिधः सूर्यादीनां क्रमाद्भवन्ति न तु सर्वेषाम् । अर्काद्यभावे पालाश्य एव । शम्यभावे खदिरो ग्राह्यः । उदुम्बराभावे तिलोदुम्बरो ग्राह्यः । तिलोदुम्बराभावे काकोदुम्बरो ग्राह्यः । अधिदेवतादीनां तु पालाश्य एव । दूर्वासमित्तु दूर्वाङ्कुरत्रयपरिमिता ग्राह्या । कुशसमिदपि कुशपत्रत्रयात्मिका । चरुश्च—अन्वर्थः श्रपितः स्विन्नो ह्यदग्धोऽकठिनः शुभः। नचातिशिथिलः पाच्यो न चरुश्चारसस्तथा ॥ इति कारिकोक्तप्रकारेण सम्पाद्यः । श्रौतानां चरुधर्माणां होमेतिकर्तव्यतासूत्रे पारस्करेणानुक्तत्वात् सूर्यायत्वा जुष्टंनिर्वपामीत्यादयो निर्वापधर्माः कात्यायनीयानां न भवन्तीति बोध्यम् । नवग्रहाणां क्रमेणाग्नयः—कपिलः पिङ्गलो धूम्रकेतुर्जठरनामकः । शिखी च हाटकश्चैव महातेजा हुताशनः ॥ रोहितश्चैव विज्ञेया रव्यादीनां हुताशना इति । राहुकेत्वोरुभयोरपि हुताशनमेव अन्ये वदन्ति ।

ब्रह्मणाऽन्वारब्धः कुशकण्डिकोक्तप्रकारेण प्राक्संस्थौ आघारौ हुत्वा समिद्धतमे आज्यभागौ च हुत्वा, अनन्वारब्धः ऋत्विक्सहित आचार्यः यथोक्तघृताक्तसमिदादिहोमं मृगीमुद्रया (९१)कुर्यात् । यथोक्तसमिदभावे पालाश्य एव ग्राह्याः । तदभावे च घृताक्तैस्तिलैर्होमं कुर्यात् । तत्र होममन्त्राः—

( आकृष्णेनेति हिरण्यस्तूपऋषिस्त्रिष्टुप्छन्दः सविता दे-

वता सूर्यप्रीतये कपिलाग्नौ *अर्कसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐआकृष्णेन रजसा व्वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्-स्वाहा। (इदं सवित्रे) इतित्यागः यजमानस्य स्वयं होमकर्तृत्वे। आचार्यादीनामृत्विजां होमकर्तृत्वे तु आदावेव युगपत् त्यागप्रकार उक्तः। पक्षद्वयमपि आश्वला० प० स्पष्टम्। ॥ १ ॥

(इमन्देवाइति वरुण ऋषिःअत्यष्टिश्छन्दः सोमो देवता सोमप्रीतये पिङ्गलाग्नौ पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)।ॐइमं देवा ऽअसपत्न१ꣳसुवध्वं महते क्षत्राय महते

---

*होतव्यं च पृथग्द्रव्यमथवा होतुरिच्छया। इति अण्डदीक्षितकृतशान्तिपद्धतिस्थसंग्रहकारिकावचनमाश्रित्य प्रचलितयुगपत्सर्वद्रव्यहोमानुष्ठानपक्षे (यथोक्तद्रव्यहोमे विनियोगः) इत्येव वाच्यम्। एवमुत्तरत्र सर्वत्र बोध्यम्।

आकृष्णेन अ० ३३ मं. ४३। सविता देवः हिरण्ययेन हिरण्मयेन (ऋत्व्येत्यादिहिरण्ययानिच्छन्दसीत्यन्तेन मयटो मशब्दस्य लोपो निपात्यते) रथेन कृष्णेन रजसा रात्रिलक्षणेन सह आवर्तमानः (छन्दस्याङो व्यवहितः प्रयोगः) पुनः पुनर्भ्रमणं कुर्वन् अमृतं देवादिकं मर्त्यं मनुष्यादिकं च निवेशयन् स्वस्वप्रदेशेषु स्थापयन्, भुवनानि पश्यन् 'कानि साधु कुर्वन्ति कानि असाधु' इति विचारयन् आयाति आगच्छति॥

इमं देवाः अ० ९-मं० ४० अत्र प्रकृतत्वादिदंशब्देन सोमः परामृश्यते। हेदेवाः इमं सोमम् असपत्नं सपत्नः शत्रुः तेन रहितं सौम्यत्वेन सर्वप्रियत्वात् सुवध्वं जनयत। एतज्जननस्य किं प्रयोजनमित्याकाङ्क्षायामाह-महते क्षत्राय-क्षत्रत्वाय राजभावाय लोकपालत्वायेति यावत्, ज्यैष्ठ्याय ज्येष्ठभावाय सर्वोत्तमत्वाय। किम्भू-

ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणाना॑ राजा-स्वाहा। (इदं सोमाय)॥२॥

(अग्निर्मूर्द्धेति विरूपाक्ष ऋषिः गायत्री छन्दः भौमो देवता भौमप्रीतये धूम्रकेतवग्नौ खादिरसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐअग्निर्मूर्द्धा दिवः ककुत् पतिः पृथिव्या

---

तय ज्येष्ठ्याय-महते-सातिशयाय। महते जानराज्याय जनसम्बद्धराज्याय, इन्द्रस्यात्मनः इन्द्रियाय वीर्याय च। सोमं कीदृशम्-इमं नित्यापरोक्षम् अपरोक्षपरब्रह्मस्वरूपम्, अमुष्य सूर्यस्य पुत्रम् पुत्रत्वं प्राप्तम्। सुषुम्णाभिधानसूर्यरश्मेः सोमत्वात्। अमुष्या दिशः पुत्रम्, अत्रिमहर्षेः चक्षुर्निःसृतं तेजो दिशा धृतं सोमोऽजायत इति पुराणेषु श्रुतत्वात्। किमर्थमयं दिशा धृतः इत्यत आह-अस्यै विशे-अस्यै प्रजायै (तादर्थ्ये चतुर्थी), आप्यायनप्रकाशादिभिः प्रजानामनुग्रहायेत्यर्थः। एतस्यासपत्नजननस्य हेतुमाह—एषः अपरोक्षः अमी असौ (छान्दसं बहुवचनं) देहाभिमानिनां नित्यपरोक्षब्रह्मस्वरूपः सोमः यः देवानाम् अस्माकं ब्राह्मणानां च राजा पालकः। तस्माल्लोकानां पालनाय श्रेष्ठत्वाय आप्यायनप्रकाशादिभिः लोकानुग्रहाय च अयमेव सोमो देवैर्जन्यते इति सोमस्तुतिर्वाक्यार्थः॥ 'अथ राजसूयः वरुणस्यार्षम्' इतिसर्वानुक्रमसूत्रस्वरसात् वरुणस्यैव एतन्मन्त्रऋषित्वं युक्तम्। गौतमस्य ऋषित्वे मूलं मृग्यम्॥

अग्निर्मूर्धा० अ० ३मं०१८। अस्य मन्त्रस्य याज्ञवल्क्यस्मृतिमत्स्यपुराणादौ भौमपूजायां विनियोगात् भौमप्रकाशकत्वं वक्तव्यमिति अयमिति पदेन भौमोऽभिधीयते। अयं भौमः अग्निर्मूर्धा अत्यन्ततेजोरूपतया नितान्तलोहितत्वात् अग्निमूर्द्धत्वमेव संलक्ष्यते। (अग्निरिति षष्ठ्यर्थे प्रथमा)। दिवः आकाशस्य ककुत् चिन्हं भूषणमित्यर्थः। वृष्टिकर्तृत्वादपां जलानां पतिः अतः पृथिव्याः रेतांसि बीजानि धान्योत्पत्त्या जिन्वति प्रीणाति सफलीकरोतीत्यर्थः॥

ऽअयम् । अपाᳬं रेताᳬंसि जिन्वति–स्वाहा । ( इदं भौमाय ) ॥ ३ ॥

(उद्बुध्यस्वेति परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः बुधो देवता बुधप्रीतये जाठराग्नौ अपामार्गसमिद्धोमे(यथोक्तद्रव्यहोमे) विनियोगः)॥ ॐउद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सᳬंसृजेथामयं च ॥ अस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत–स्वाहा ॥ ( इदं बुधाय ) ॥ ४ ॥

बृहस्पतइतिगृत्समद ऋषिस्त्रिष्टुप्छन्दः बृहस्पतिर्देवता बृहस्पतिप्रीतये शिख्यग्नौ अश्वत्थसमिद्धोमे ( यथोक्तद्रव्यहोमे ) विनियोगः ) । ॐबृहस्पते ऽअतियदर्यो ऽअर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्–स्वाहा ॥ ( इदं बृहस्पतये ) ॥ ५ ॥

---

४ उद्बुध्यस्व० य० सं० अ० १५ म० ५४ । याज्ञवल्क्यस्वरसादत्र अग्निपदेन अग्निसादृश्यात् बुध एवाभिधीयते । हे अग्ने हे बुध उद्बुध्यस्व उद्बुद्धो भव क्रियमाणे कर्मणि सावहितो भव । किञ्च त्वम् एन यजमान प्रतिजागृहि प्रतिदिन जागरूक सावधान कुरु । तेन इष्टापूर्ते श्रौतस्मार्ते कर्मणी सᳬंसृजेथाम् ( संसृज्येथाम् ) यजमानेन सह संसृष्टे भवताम् । अथ यजमानश्च त्वत्प्रसादादिष्टापूर्ताभ्यां संसृज्यताम् । किञ्च हे विश्वेदेवा यूयम् एतेष्टापूर्तौ निष्पाद्यो यजमानश्च सधस्थे देवैः सह स्थितियोग्ये अस्मिन्नुत्तरस्मिन् सर्वोत्कृष्टे द्युलोके अधि अधिकं चिरं सीदत तिष्ठत । विश्वैर्देवैः सह सालोक्यं यजमानस्य बुधं प्रति प्रार्थ्यते । ( सहोपपदस्य छान्दसिनिरुक्ताविरयस्य सधस्थे इति रूपम् । सध मादस्थयोरिति सहस्थाने सधादेशः ) ॥

५ बृहस्पते० अयं मन्त्रः पुण्याहवाचने व्याख्यातः ।

अन्नात्परिस्रुत इति *प्रजापत्यश्विसरस्वतीन्द्रा ऋषयः अतिजगती छन्दः शुक्रो देवता शुक्रप्रीतये हाटकाग्नौ उदुम्बरसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः )॥ ॐअन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु-स्वाहा॥ ( इदं शुक्राय )॥६॥

शन्नोदेवीरिति दध्यङ्ङाथर्वण ऋषिः गायत्री छन्दः शनिर्देवता शनिप्रीतये महातेजोऽग्नौ शमीसमिद्धोमे (यथोक्तद्रव्यहोमे)

---

* 'प्रजापतेरार्षमश्विनोः सरस्वत्याश्च' इति सर्वानुक्रमसूत्रात् सर्वेषां सौत्रामणीमन्त्राणां प्रजापत्यादय ऋषयः। 'सोमोराजाऽष्टर्चमश्विसरस्वतीन्द्रा अपश्यन्' इति सूत्रात् सोमोराजा इत्यादीनामष्टानामश्व्यादयऋषयः। ततश्च चतुर्थ्यां अन्नात्परिस्रुत इति ऋचः सौत्रामणीमन्त्रघटकत्वात् सोमोराजेत्यष्टर्चघटकत्वाच्च प्रजापत्यादिऋषिचतुष्टयद्रष्टृकत्वं सिध्यति। क्वचित् प्रजापतेरनुल्लेखश्च उपक्रमोक्तश्रुत्यपर्यालोचननिमित्तक एवेति बोध्यम्।

अन्नात्परिस्रुतः ०-य० सं० अ० १९, म० ७५। प्रजापतिः ब्रह्मा अन्नाद्धविषः परिस्रुतः परिस्रुतम् ( द्वितीयार्थे प्रथमा ) परि सर्वतोभावेन स्रुतं गलितं रसं सारं व्यपिबत् पीतवान्। कीदृशम्, क्षत्रम्-ओजस्वि। किञ्च पयः क्षीरम् सोमम् सोमरसम् प्रजापतिर्व्यपिबदिति तेनैव सम्बन्धः। केन साधनेन व्यपिबत, ब्रह्मणा-वेदेन। किंभूतेन, ऋतेन-प्रपञ्चास्पृष्टेन मन्त्रस्वरूपेणेत्यर्थः। इदम् अन्नरसं पयः सोमस्वरूपम्, अन्धस. अन्नात्सम्भूतं,विपानं प्रजापतेर्विसृष्टं पानं, शुक्रं बीजम्-अभवदित्यध्याहार्यम्। किम्भूतं-सत्यम्-अविनाशि, इन्द्रियम् सकलसंसारकारणम्,विपानं विशिष्टं पानम्। पुनः किम्भूतम्-इन्द्रस्य देवराजस्य इन्द्रियं वीर्यं, पयः क्षीरम्, अमृतम् अमरत्वकारणं मधु पितॄणां तृप्तिकारणम्॥ प्रजापतिमुक्तानां परिणामभूतं शुक्रं सकलसंसारोत्पत्तिस्थितिकारणमिति शुक्रस्तुतिर्वाक्यार्थः॥

विनियोगः) ॥ ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीत-
ये ॥ शंय्योरभिस्रवन्तु नः-स्वाहा ॥ ( इदं शनये ) ॥७॥

कयानश्चित्रइति वामदेव ऋषिः गायत्री छन्दः राहुर्देवता
राहुप्रीतये हुताशनाग्नौ दूर्वासमिद्धोमे (यथोक्तद्रव्यहोमे) विनि-
योगः ॥ ॐ कयानश्चित्र ऽआभुवदूती सदा वृधः सखा।
कया शचिष्ठया वृता-स्वाहा ॥ ( इदं राहवे ) ॥ ८ ॥

केतुंकृण्वन्निति मधुच्छन्दा ऋषिः गायत्री छन्दः केतुर्देवता
केतुप्रीतये रोहिताग्नौ कुशसमिद्धोमे ( यथोक्तद्रव्यहोमे ) विनि-
योगः ) ॥ ॐ केतुं कृण्वन्नकेतवे पेशो मर्य्या ऽअपेशसे ।

---

शन्नोदेवी० य० सं० अ० ३६ मं० १८ । अस्य मन्त्रस्य मत्स्य पुराणादौ शनैश्चरपूजायां विनियोगकथनादादित्यप्रभवत्वेनापां शनैश्चरस्याभेदोपचाराद् आप इति पदेन शनैश्चर एव गृह्यते । तेनायमर्थः-आपो देव्यः शनैश्चरो देवः नः अस्माकं शङ्कल्याणं भवन्तु। किमर्थम्-अभिष्टये उपचयाय, पीतये वृष्टिद्वारेण तृप्तिहेतवे पानाय (च) भवन्तु । किञ्च शंय्योः शङ्कल्याणं तस्य योगाय अभिस्रवन्तु अभिमुखं गच्छन्तु । अत्र एकस्मिन्नपि शनैश्चरे वाच्ये अप्शब्दस्य नित्यबहुवचनान्तत्वाद् बहुवचनम् । तदनुगुणतयैव भवन्तु अभिस्रवन्तु इत्यत्रापि बहुवचनम् ॥

कयान० य० सं० अ० २७ मं० ३९ । मत्स्यपुराणादौ राहुपूजायामस्य मन्त्रस्य विनियोगादनेन मन्त्रेण राहुरेव स्तूयते अनुषकेन्द्रपदेन । तथाचायमर्थः-इन्द्रः राहुः कया ऊती ऊत्या ( सुपां सुलुगिति पूर्वसवर्णः ) अवनेन तर्पणेन केन तर्पणेन नः अस्माकं सखा सहायः आभुवत् आभिमुख्येन भवति । तया वृता व-र्तत इति वृत् तया वृता वर्तमानया शचिष्ठया अतिशयवत्या यागक्रियया ( शचीशब्दः कर्मनाम तत इष्ठन् प्रत्ययः ) अस्माकं सखा भवति । कीदृश इन्द्र -चित्र-पूज्यः सदावृधः-सदावर्धमानः ॥

९ केतुं कृण्वन् ० य० सं० अ० २९ मं० ३७। हे केतो ध्वज-

समुषद्भिरजायथाः-स्वाहा। ( इदं केतवे ) ॥ ९ ॥

एभिर्मन्त्रैः स्वाहान्तैः समिद्धोमं विधाय एतैरेव मन्त्रैः संस्कृतेनाज्येन हुत्वा ततश्चरुणा जुहुयात्। समिदाज्यचरुद्रव्यैः प्रत्येकं जुहुयात्तत इतिवचनात्। समिदाज्यचरून् हुवेदितिच। युगपत् सर्वद्रव्यहोमानुष्ठाने बीजं तूक्तम्।

अथाधिदेवतानां पलाशसमिद्भिः तदभावे घृताक्तातिलैर्होमः कार्य्यः। यथा-( त्र्यम्बकमिति वसिष्ठऋषिः अनुष्टुप्छन्दः रुद्रो देवता रुद्रप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः )। ॐत्र्यम्बकँयजामहे सुगन्धिम्पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्-स्वाहा। ( इदं रुद्राय ) ॥ १ ॥

श्रीश्चतेइत्युत्तरनारायण ऋषिस्त्रिष्टुप्छन्दः उमा देवता उमाप्रीतये पलाशसमिद्धोमे ( यथोक्तद्रव्यहोमे ) विनियोगः। ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि

---

रूप त्वम् उषद्भिः वसद्भिर्यजमानै (छान्दसत्वादादादिकत्वम्) कृत्वा अजायथाः उत्पन्नोऽसि। कीदृशस्त्वम्-अकेतवे-अज्ञानाय मर्या। मर्याय मनुष्याय ( चतुर्थीस्थाने सु दीर्घश्च ) केतुं ज्ञानं कृण्वन् कुर्वन्। कीदृशाय मर्याय-अपेशसे-नास्ति पेशः सुवर्णम् यस्य तस्मै॥

त्र्यम्बकं,य.सं.अ.३ मं ६० घृतच्छायाप्रयोगेऽयं मन्त्रो व्याख्यातः।

श्रीश्चते० य० सं० अ० ३१ मं० २२। हे पुरुषोत्तम ते तव श्रीश्च लक्ष्मीश्च-श्रीर्धान्यं यद्वशात्पुरुषोऽनुजीवति अनुजीविनां चाश्रयणीयो भवति, लक्ष्मीर्धनं यद्वशात्पुरुषः सर्वलोकस्य लक्ष्यः लक्षणीयो दर्शनीयो भवति ते श्रीलक्ष्म्यौ ते तव पत्न्यौ सहचारिण्यौ त्वां न त्यजत इत्यर्थः। एकेनैव चकारेण समुच्चये प्राप्ते चकारद्वयग्रहणेन तुल्यप्रधानता प्रतिपादिता। अहोरात्रे अहश्च रात्रिश्च ते

रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण–स्वाहा ( इदमुमायै ) ॥ २ ॥

यदक्रन्दइति भार्गवजमदग्निदीर्घतमस ऋषयस्त्रिष्टुप्छन्दः स्कन्दो देवता स्कन्दप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः । ॐ यदक्रन्दः प्रथमं जायमान ऽउद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू ऽउपस्तुत्यं महि जातं ते ऽअर्वन्–स्वाहा । ( इदं स्कन्दाय ) ॥ ३ ॥

---

तव पार्श्वे पार्श्वद्वयम् । अहःशब्दः परब्रह्मपरः तस्य विद्यात्मकत्वेन प्रकाशरूपत्वात् । रात्रिशब्दः संसारपरः तस्याविद्यात्मकत्वेन अप्रकाशरूपत्वात् । तेन धर्मार्थकामात्मकः संसारः मोक्षात्मकश्च ब्रह्म पुरुषोत्तमपार्श्वद्वयमित्युक्तं भवति । नक्षत्राणि तारागणः रूपं तव मूर्तिरित्यर्थः । अश्विनौ, द्यावापृथिव्यौ एतद्भूम्यन्तरं व्याप्तं विवृत मुखमित्यर्थः । एवंभूतं पुरुषोत्तमं त्वां याचे इष्णन् कर्मफलमिच्छन् सन् । इषाण इच्छ । (इष इच्छायां विकरणव्यत्ययः) । किमेषणीयं–तत्राह अमुं परलोकं मे मम इषाण, मम परलोकः समीचीनोऽस्त्वितीच्छ । अमो घेरुष्ठत्वात्स्वादिष्टं भवत्येवेत्यर्थः । सर्वलोकं मे मम इषाण, सर्वलोकात्मकोऽहं भवेयम् इतीच्छेत्यर्थः । मुक्तो भवेयमिति यावत् । सर्वं खल्विदं ब्रह्मेति श्रुतेः । उमाऽपि चैतन्यशक्तिरूपैवेत्यभिप्रायः ॥

यदक्रन्दः अ० २९ मं० १२ । स्कान्द स्कन्दपूजायामस्य विनियोगोक्तेः अर्वन्शब्दस्य वेगवद्गतिशालित्वात्स्कन्दपरत्वं बोध्यम् । (हे अर्वन् हे स्कन्द ) यद् यदा त्वमक्रन्दः तारकासुरसङ्ग्रामे शब्दमकार्षीः तदा ते तव महि माहात्म्यम् उपस्तुत्यम् स्तोतुं योग्यं जातम् । कथं स्तुत्यं–तदाह श्येनस्य पक्षौ हरिणस्य बाहू, अनेन क्रन्दनेन जितावित शेषः । श्येनपक्षौ शौर्येण हरिणबाहू वेगेनेत्यर्थः । कीदृशस्त्वं–समुद्रात् सर्वविद्यानिधेर्महादेवात् प्रथमं जायमानः उतवाऽनन्तरं पुरीषात् पालकत्वात् शान्तस्वभावादुत्पद्यमानः ॥

सजोषा इन्द्र० य० स० अ० ७ मं० ३७ । हे इन्द्र हे शूर त्वं-

विष्णोरराटमिति प्रजापतिर्ऋषिः यजुश्छन्दः विष्णुर्देवता विष्णुप्रीतये पलाशसमिद्धोमे ( यथोक्तद्रव्यहोमे ) विनियोगः ।
**ॐविष्णो रराटमसि व्विष्णोः श्नप्त्रे स्थो व्विष्णोः स्यूरसि व्विष्णोर्ध्रुवोऽसि व्वैष्णवमसि व्विष्णवे त्वा-स्वाहा । ( इदं विष्णवे ) ॥ ४ ॥**

ब्रह्मजज्ञानमिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः। **ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेन ऽआवः । स बुध्न्या ऽउपमा ऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः—स्वाहा । ( इदं ब्रह्मणे ) ॥ ५ ॥**

सजोषाऽइन्द्रइति विश्वामित्र ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः ।
**ॐसजोषा ऽइन्द्र सगणो मरुद्भिः सोमं पिब व्वृत्रहा**

---

विष्णोरराटमसि० य० सं० अ० ५ मं० २१ । हे विष्णो विष्णुदेवते त्वं विष्णोः व्यापकस्य परमात्मनः रराट ललाटमसि प्रधानमसि इति यावत् । ललाटस्य सर्वेष्वङ्गेषु प्राधान्यात्तेन प्राधान्यं लक्ष्यते । किञ्च त्वमेव विष्णोः परमात्मनः श्नप्त्रे सन्धी अर्थात् द्वारे तिष्ठसि-त्वद्द्वारैव परमात्मप्राप्तिरिति भावः । किञ्च विष्णोः स्यूः सूचीरूपाऽसि भक्तानां पापरूपकण्टकनिवारकत्वात् । किञ्च त्वं ध्रुवोऽसि स्थिरोऽसि । किञ्च त्वं वैष्णवं विष्णुसम्बन्धि परमात्मसम्बन्ध्यसि । अत एव विष्णवे परमात्मप्राप्त्यर्थं त्वा त्वां नमामीति शेषः ॥

ब्रह्मजज्ञानं० पुण्याहवाचनप्रयोगे व्याख्यातः।एतत्स्थाने संस्कारभास्करादौ दृश्यमानः आब्रह्मन्नित्यपि मन्त्रः कलशस्थापनप्रयोगे व्याख्यातः।

शूर विद्वान्। जहि शत्रूँ२॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो न॰-स्वाहा (इदमिन्द्राय)॥ ६॥

(असियम इति भार्गवजमदग्निदीर्घतमस ऋषयस्त्रिष्टुप्छन्दः यमो देवता यमप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोग)। ॐअसि यमो ऽअस्यादित्यो ऽअर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त ऽआहुस्ते त्रीणि दिवि बन्धनानि-स्वाहा। (इदं यमाय)॥७॥ उदकस्पर्शः।

---

सजोषा ऽइन्द्र॰ य॰ स॰ अ॰ ७। म॰ ३७। हे इन्द्र हे शूर त्व सोम पिब। किम्भूतस्त्व-सजोषा-जोषण जोष प्रीति 'जुषी प्रीति सेवनयो' इत्यस्मादसुन् प्रत्यय। तेन सह वर्तमान सजोषा सन्तुष्ट, मरुद्भि त्वया समण सपरिवार मरुद्गणसहित इत्यर्थ, वृत्रहा वृत्र दैत्य हन्ति—अनन सोमपानेन वृत्र हनिष्यसीत्यर्थ। विद्वान् एतम् अर्थं जानाम अत सोम पीत्वा शत्रून् वृत्रादीन् जहि मारय। किञ्च मृध सग्रामात् अपनुदस्व, युद्ध निवर्तयेत्यर्थ। (दीर्घादटीति शत्रूनिति नकारस्य रुत्व पूर्वस्य चानुनासिकत्वम्)। अथ अनन्तर न अस्माक विश्वत सर्वत अभय कृणुहि कुरु। (छान्दस वाह्विकरणव्यत्यय)।

'इन्द्रमरुत्वश्चतस्रो विश्वामित्र ऐन्द्रामारुतीस्त्रिष्टुभ' इति कात्यायनीयसर्वानुक्रमसूत्रात् अस्या ऋच विश्वामित्रऋषिकत्वमेव युक्तम्॥

असियम ॰ य॰ स॰ अ॰ २९ म॰ १४। हे अर्वन् त्व यमो ऽसि आदित्यश्चासि गुह्येन गोप्येन व्रतेन कर्मणा त्रित त्रिस्थान इन्द्रो ऽसि। सोमेन समया-सह विपृक्त सपृक्त एकीभूतोऽसि। एवम् आदित्यादिभि सायुज्य प्राप्तस्य तव दिवि नभसि आदित्यादिरूपेण यस्थितस्य त्रीणि बन्धनानि बुधा आहु। ऋग्यजु सामरूपाणि मण्डलान्तरपुरुषार्चीषि त्रीणि बन्धनानि स्वरूपाणि। यदेतन्मण्डल॰ न्तपतीत्यादिश्रुते।

(कार्षिरसीति प्रजापतिः ऋषिः (अथर्वेतिहेमाद्रौ) अनुष्टुप्छन्दः कालो देवता कालप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐकार्षिरसि समुद्रस्य त्वाऽक्षित्याऽउन्नयामि। समापो ऽअद्भिरग्मत समोषधीभिरोषधीः—स्वाहा। (इदं कालाय)॥ ८॥

(चित्रावसोऽइति ऋषय* ऋषयः जगती छन्दः चित्रगुप्तो देवता चित्रगुप्तप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐचित्रावसो स्वस्ति ते पारमशीय—स्वाहा। (इदं चित्रगुप्ताय)॥ ९॥

अथ प्रत्यधिदेवतानाम्। (अग्निंदूतमिति विरूपाक्ष ऋषिः गायत्री छन्दः अग्निर्देवता अग्निप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐअग्निं दूतम्पुरो दधे हव्यवाहमुपब्रुवे। देवाँ२॥ आसादयादिह—स्वाहा। (इदमग्नये)।

---

कार्षिरसि० य० सं० अ० ६ मं० २८। हे काल त्वं कर्षतीति कार्षिः चालकः संसारसमुद्रस्य असि अतः अक्षित्यै अक्षीणतायै त्वा त्वाम् उन्नयामि प्रार्थये–आपः अद्भिः समग्मत सङ्गच्छन्ताम् ओषधीः ओषधयः ओषधीभिः सङ्गच्छताम्। अग्निष्टोमः प्रजापतेरार्षम् इति सर्वानुक्रमसूत्रात् अस्य मन्त्रस्य प्रजापतिऋषित्वं युक्तम्।

*चित्रावसो रात्रिदैवत्यमृषयोऽपश्यन् इतिकात्यायनीयसर्वानुक्रमसूत्रात् अस्य मन्त्रस्य ऋषिबहुत्वमेव॥

चित्रावसो० य० सं० अ० ३ मं० १८। (पं० ४) हे चित्रावसो हे चित्रगुप्त ते तव प्रसादात् स्वस्ति क्षेमं यथा स्यात् तथा आपदः पारं समाप्तिमशीय व्याप्नवानि। (अशू व्याप्तौ अस्मालिङि उत्तमैकवचने व्यत्ययेन विकरणलुक्)।

अग्निं दूतं० व्याख्यातः ग्रहाकण्डिकाप्रकरणे।

(अप्स्वन्तरिति *बृहस्पतिर्ऋषिः उष्णिक्छन्दः आपो देवता अपाम्प्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐअप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः। देवीरापो यो व ऽऊर्मिः प्रतूर्त्तिः ककुन्मान् वाजसास्तेनायँव्वाजँसेत्–स्वाहा। (इदमद्भ्यः) ॥ २ ॥

(स्योनापृथिवीति मेधातिथिर्ऋषिः गायत्री छन्दः पृथिवी देवता पृथिवीप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे) विनियोगः)। ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः–स्वाहा। (इदं पृथिव्यै) ॥ ३ ॥

(इदंविष्णुरिति मेधातिथिर्ऋषिः गायत्री छन्दः विष्णुर्देवता विष्णुप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य

---

*बृहस्पतेरार्षम् इन्द्रस्य वा इति पाठमनुसृत्य बृहस्पतिमात्रऋषिकत्वमुक्तम्। इन्द्रस्य चेति पाठे उभयऋषिकत्वं बोध्यम्।

अप्स्वन्तः ० य० स० अ० ९ म० ६। हे आपोदेवीः अब्देवताः अप्सु उदकेषु अन्तः मध्ये अमृतमवस्थितम् किञ्च अप्सु भेषजम् आरोग्यपुष्टिकरम् औषधञ्चावस्थितम् अतः यूयम् अपां प्रशस्तिषु प्रशस्तेषु भागेषु अश्वा. व्यापनशीलाः. सत्यः वाजिनः वाजिन्यः अन्नवत्य भवत। व. युष्माकं य ऊर्मिः कल्लोलः, किम्भूतः–प्रतूर्तिः–प्रकृष्टवेगः तथा ककुन्मान्–ककुच्छब्देन वृषस्कन्धे उन्नतप्रदेश उच्यते तत्सादृश्यादुदकनिचयैः सयुक्तो बहुलोदकसद्भावान् ककुन्मान इत्युच्यते, तथा वाजसा –वाजम् अन्न सनोति इति वाजसाः (जनसनेत्यादिना विट्) अन्नस्य दाता। वाजम् अन्नं सेत् सनुयात्।

स्योनापृथिवि० कलशस्थापनायां व्याख्यातः।

इद विष्णु य० सं० अ० ५ म० १५। विष्णुः त्रिविक्रमावतारं

पा॑सुरे स्वाहा । ( इदं विष्णवे ) ॥ ४ ॥

(त्रातारमिन्द्रमिति गर्ग ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः )। ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः–स्वाहा । ( इदमिन्द्राय ) ॥ ५ ॥

(अदित्यै रास्नासीति दध्यङ्ङाथर्वण ऋषिः यजुः छन्दः इन्द्राणी देवता इन्द्राणीप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः )। ॐअदित्यै रास्नासीन्द्राण्या ऽउष्णीषः

---

कृत्वा इदं विश्वं विचक्रमे विभज्य क्रमते स्म । त्रेधा पदं निदधे भूमौ एकं पदम् अन्तरिक्षे द्वितीयं दिवि तृतीयमिति क्रमात् अग्निवायुसूर्यरूपेणेत्यर्थः । पांसवो भूम्यादिलोकरूपा विद्यन्ते यस्य तत् पांसुरं तस्मिन् पांसुरे अस्य विष्णोः पदे समूढं सम्यक् अन्तर्भूतं, विश्वमिति शेषः । यद्वा अस्य विष्णोः पदं पद्यते ज्ञायते इति पदम् अद्वैतात्मस्वरूपं समूढम् अन्तर्हितम् अज्ञातम् अकृतात्मभिः । कस्मिन्निव–पांसुरे इव–लुप्तोपमानमेतत् । पांसुरे रजस्वले प्रदेशे निहितं पदं यथा न ज्ञायते तद्वत् । स्वाहा तस्मै विष्णवे हविर्दत्तम् ।

त्रातारमिन्द्रम्० य० स० अ० २० म० ५० । त्रातारं रक्षितारम् इन्द्रम् अवितारं प्रीणयितारम् इन्द्रं हवे हवे आह्वाने आह्वाने यज्ञे यज्ञे वा सुहवं सुखेन आहूयते तं शूरं विक्रान्तं शक्रं शक्नोति इति शक्रस्तं समर्थम् पुरुहूतं पुरुभिः बहुभिर्हूयतेऽसौ पुरुहूतः तम् ईदृशम् इन्द्रं ह्वयामि आह्वयामि । मघवा धनवान् इन्द्रः आहूतः सन् नः अस्माकं स्वस्ति अविनाशं धातु करोतु । ( विकरणव्यत्ययः ) इन्द्रपदावृत्तिरादरार्था ।

अदित्यैरास्नासि० य० स० अ० ३८ म० ३ । हे रज्जुपाश त्वम् अदित्यै अदित्या गा रास्ना रशना असि, इन्द्राण्यै इन्द्राण्या उष्णीषः शिरोवेष्टनमसि । अत्र रज्जुपाशस्य इन्द्राणीसम्बन्धित्वेनोत्कर्ष

पूषाऽसि घर्माय दीष्व-स्वाहा। (इदमिन्द्राण्यै) ॥ ६ ॥

(प्रजापते इति हिरण्यगर्भ ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापतिप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो ऽअस्त्वयममुष्य पिता ऽसावस्य पिता व्वयᳬ स्याम पतयो रयीणाᳬ स्वाहा। (इदं प्रजापतये) ॥ ७ ॥

(नमोऽस्तुसर्पेभ्य इति प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सर्पा देवताः सर्पाणां प्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐनमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये

---

प्रतीतेः इन्द्राण्याम् उत्कृष्टतरत्वपर्यवसानात् स्तुत्यर्थेनैतन्मन्त्रदेवतात्वम् ॥

प्रजापते० य० सं० अ० १० मं० २० । हे प्रजापते त्वत् त्वत्तः अन्यो देवताविशेषः ता तानि एतानि विश्वानि सर्वाणि रूपाणि नानाजातीयानि वर्तमानभूतभविष्यत्कालविषयाणि न परिबभूव परिभवितुं समर्थो नाभूत्। परिभवः सृष्टेरप्युपलक्षणम्। अतो वयं यत्कामास्ते जुहुमः—यः कामो येषान्ते यत्कामाः येन कामेन त्वां जुहुमः तत् कामरूपं फलम् अस्माकमस्तु। अयममुष्य पिता इति पुत्रं पितरं कृत्य तयोर्नाम गृह्णाति, यथा अय रामोऽमुष्य दशरथस्य पितेति। असौ अस्य पितेति यथायथमेव नामग्रह, यथा असौ दशरथ एतस्य रामस्य पितेति। सर्वथा सपुत्रा वय रयीणां धनानां पतयः स्याम भवेम। अयं दशमाध्यायस्थो मन्त्र एव अयममुष्यपितेत्यादियजुर्मध्यः। त्रयोविंशत्यध्यायान्तस्तु यजुरहित एवेति बोध्यम्।

नमोऽस्तुसर्पेभ्यः० य० सं० अ० १३ मं० ६। ये के च ये केचित् सर्पन्तिरति सर्पाः पृथिवीमनु व्यवस्थिताः येचान्तरिक्षे येच दिवि तेभ्यः सर्पेभ्यः नमोऽस्तु।

ऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः-स्वाहा । (इदं सर्पेभ्यः) ॥ ८ ॥

(ब्रह्मजज्ञानमिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे)विनियोगः)। ॐब्रह्मजज्ञानम्०(१९९) स्वाहा । (इदं ब्रह्मणे) ॥ ९ ॥

अथ विनायकादीनाम् । (गणानान्त्वेति प्रजापतिर्ऋषिः यजुश्छन्दः गणपतिर्देवता गणपतिप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)। ॐगणानान्त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ हवामहे व्वसो मम । आऽहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम्-स्वाहा । (इदं गणपतये)॥ १ ॥

(अम्बे ऽअम्बिके इति प्रजापतिर्ऋषिःअनुष्टुप्छन्दः दुर्गा देवता दुर्गाप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे विनियोगः)। ॐअम्बे ऽअम्बिके ऽअम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्-स्वाहा । ( इदं दुर्गायै ) ॥ २ ॥

(वातोवेति बृहस्पतिर्ऋषिः उष्णिक्छन्दः वातो देवता वायुप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः ) । ॐवातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः । ते

---

ब्रह्मजज्ञानं० व्याख्यातः पुण्याहवाचनप्रकरणे ।

गणानांत्वा० व्याख्यातः गणपतिपूजने ।

अम्बेऽअम्बिकेऽअम्बालिके० व्याख्यातः मातृपूजायाम् ।

वातोवा० य० सं अ० ९ म० ७ । वा-शब्दौ समुच्चयार्थौ । वातो वायुः, मनः इन्द्रियम्, सप्तविंशतिः नक्षत्राणि, गन्धर्वाः गाम्भूमिं धरन्ति धारयन्ति इति गन्धर्वाः भूमेर्धर्तारः । एते वातादयः अग्रे

ऽअग्नेऽइवमयुञ्जँस्ते ऽआस्मिन् जवमादधुः-स्वाहा । ( इदं वायवे ) ॥ ३ ॥

( ऊर्ध्वा ऽअस्येति प्रजापतिर्ऋषिः उष्णिक्छन्दः आकाशो देवता आकाशप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे)विनियोगः ) । ॐऊर्ध्वा ऽअस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीँष्यग्नेः । द्युमत्तमा सुप्रतीकस्य सूनोः-स्वाहा । ( इदमाकाशाय ) ॥ ४ ॥

(यावां कशेति मेधातिथिर्ऋषिः गायत्री छन्दः अश्विनौ देवते अश्विनोः प्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे) विनियोगः)। ॐया वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्— स्वाहा । ( इदमश्विभ्याम् ) ॥ ५ ॥

---

पूर्वम् अश्वम् अयुञ्जन् रथे योजितवन्त । ते एव च वातादय' अस्मिन्नश्वे जव वेगम् आदधुः स्थापितवन्त' । जवाधानस्य मुख्यत्वेन वाताधीनत्वाद्वातस्तुतिर्वाक्यार्थ ।

ऊर्ध्वा अस्य० य० स० अ० २७ म० ११ । अग्निः प्रजापतित्वेन स्तूयते । अस्य अग्ने समिध ऊर्ध्वा देवगामिन्यो भवन्ति, शोचींषि तेजांस्यपि ऊर्ध्वा ऊर्ध्वानि भवन्ति । कीदृशानि शोचींषि-शुक्रा-शुक्राणि शुद्धानि । द्युमत्तमा द्युमत्तमानि अत्यन्तं द्युमन्ति दीप्तिमन्ति प्रकाशकानीत्यर्थः । कीदृशस्याग्ने सुप्रतीकस्य-सुष्ठु प्रतीकं मुख यस्य शोभनमुखस्य । तथा सूनो यजमानपुत्रस्य । स यदेन जनयति तेनास्यैव सूनुरितिश्रुते । य ईदृशस्त स्तुम इति शेष. ।

या वां कशा० य० स० अ० ७ म० ११ । हे अश्विना अश्विनौ आश्विदेवौ वां युवयोः या कशा वाक् प्रकाशकत्वात्सवैधाद्रूमयस्य । किम्भूता—मधुमती-मधु ब्रह्म तद्वती मधुब्राह्मणोपनिषत्प्रशंसायुता, तथा सूनृतावती—प्रिय सत्य वच. सूनृत तद्वती, सत्यप्रियवचनोपेता तया वाचा अस्मदीय यज्ञ मिमिक्षत मेढुं सेक्तुम् इच्छत निष्पादयतमित्यर्थ ।

(अथेन्द्रादित्रयस्य*। (त्रातारमिन्द्रमिति गर्ग ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रप्रीतये पलाशसमिद्धोमे ( यथोक्तद्रव्यहोमे ) विनियोगः । ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः–स्वाहा । (इदमिन्द्राय)॥१॥

(अवतत्यधनुरिति परमेष्ठी ऋषिः(प्रजापतिर्वा देवा वा ऋषयः) अनुष्टुप्छन्दः रुद्रो देवता रुद्रप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे)विनियोगः) । ॐअवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे । निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव–स्वाहा । (इदमिन्द्राय) ॥ २ ॥ उदकस्पर्शः ।

(मरुतोयस्येति गौतम ऋषिः गायत्री छन्दः मरुतो देवताः मरुत्प्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे) विनियोगः ) । ॐमरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः–स्वाहा । ( इदं मरुद्भ्यः ) ॥ ३ ॥)

---

* अस्मिन्नवसरे इन्द्रादित्रयहोमो बहुषु पद्धतिषु न दृश्यते । तदनुष्ठाने मूलमन्वेषणीयम् ।

१ त्रातारमिन्द्र० व्याख्यातः ।

२ अवतत्य धनुः०य०सं०अ०१६ । मं.१३ सहस्रम् अक्षीणि यस्य हे सहस्राक्ष शतम् इषुधयो यस्य हे शतेषुधे त्वं नः अस्मान् प्रति शिवः–शान्तः सुमनाः–शोभनचित्तश्च भव । अनुगृहाणेत्यर्थः । किंकृत्वा–धनुः अवतत्य—अवज्याकं कृत्वा । शल्यानां मुखा मुखानि बाणफलाग्राणि निशीर्य शीर्णानि कृत्वा ।

३ *मरुतो यस्य हि क्षये० य० सं० अ० ८ मं० ३१ । हे विमो विमहसः* विशिष्टं महो येषान्ते द्युलोकसम्बन्धिना विशिष्टेन तेजसा युक्ताः हे मरुतः यस्य यजमानस्य क्षये यज्ञगृहे यूयं पाथ पिबथ (छान्दसः पिबादेशाभावो दीर्घश्च) । हि निश्चितं स जनः यजमानाख्यः सुगोपातमः गोपायतीति गोपा रक्षकः अत्यन्तं शोभनो गो·

अथेन्द्रादिलोकपालमन्त्राः । ( त्रातारमिन्द्रमिति गर्ग ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे)विनियोगः ) । ॐत्रातारमिन्द्रमिति पूर्ववत् ॥ १ ॥

(अग्निं दूतमिति विरूपाक्ष ऋषिः गायत्री छन्दः अग्निर्देवता अग्निप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे) विनियोगः ) । ॐअग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ२॥ आसादयादिह-स्वाहा । ( इदमग्नये ) ॥ २ ॥

(असियमइति भार्गवजमदग्निर्दीर्घतमस ऋषयः त्रिष्टुप्छन्दः यमो देवता यमप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे) विनियोगः) । ॐअसि यमो ऽअस्यादित्यो ऽअर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त ऽआहुस्ते त्रीणि दिवि बन्धनानि-स्वाहा। (इदं यमाय)॥३॥ उदकस्प.

(एषतेनिर्ऋतेइति वरुण ऋषिः यजुश्छन्दः निर्ऋतिर्देवता निर्ऋतिप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे विनियोगः)॥ॐएष ते निर्ऋते भागस्तं जुषस्व स्वाहा॥(इदं निर्ऋतये)॥४॥ उदकस्प.

(इमं मे वरुण इति शुनःशेप ऋषिः गायत्री छन्दः वरुणो देवता वरुणप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे)विनियोगः)॥ ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके-स्वाहा ॥ (इदं वरुणाय) ॥ ५ ॥

---

या यस्य स सुगोपातमः । युष्मद्गुप्तानां भयं नास्तीत्यर्थः ।

त्रातारमिन्द्र० अग्निं दूत० असियम० एते व्याख्याताः ।

एष ते निर्ऋते० य० सं० अ० ९ मं० ३५ । हे निर्ऋते एष ते तव भागः तं जुषस्व सेवस्व । स्वाहा सुहुतमस्तु ।

इमंमेवरुण० य० अ० २१ मं० १ । हे वरुण त्वं मे मम इमं हवम्

(ॐ वातो वा मनोवेति बृहस्पतिर्ऋषिः उष्णिक्छन्दः वातो देवता वायुप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)॥ ॐ वातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः । ते ऽअग्रेऽश्वमयुञ्जँस्ते ऽअस्मिन् जवमादधुः—स्वाहा ॥ (इदं वायवे) ॥ ६ ॥

(वयꣳसोमेति बन्धुर्ऋषिः गायत्री छन्दः कुबेरो देवता कुबेरप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः) ॥ ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि—स्वाहा ॥ (इदं कुबेराय) ॥ ७ ॥

(तमीशानमिति गौतम ऋषिः जगती छन्दः ईशो देवता ईशप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः) ॥ ॐ तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये—स्वाहा ॥ (इदमीशाय) ॥ ८ ॥

---

आह्वानं श्रुधी (श्रुधि) शृणु । छान्दसो दीर्घः । च पुनः अद्य दिने अस्मान् मृडय सुखय-यतः अहं त्वाम् आचके कामये । कीदृशः अहम्—अवस्युः-अवनम् अवः पालनम् । (अवतेरसुन्) । तदिच्छति इत्यवस्युः । (क्यजन्तात्क्याच्छन्दसीत्युप्रत्ययः) । आत्मनो रक्षणमिच्छन् त्वामिच्छामीत्यर्थः ।

वातो वा० व्याख्यातः ।

वयꣳ सोम० य० सं० अ० ३ मं० ५६ । हे सोम । अत्र सोमशब्देन दिक्पालत्वेन परिगृहीतः कुबेर उच्यते । वयं यजमानाः तव व्रते कर्मणि वर्तमानाः तनूषु भवच्छरीरेषु मनो बिभ्रत स्वकीयं चित्तं धारयन्तः त्वत्कारुण्यात्प्रजावन्तः पुत्रपौत्रादिसम्पन्नाः सन्तः सचेमहि सेवेमहि—सेवितव्यानि वस्तूनीति शेषः । यद्वा षच सम्बन्धे—सर्वदा त्वत्सम्बद्धा भवेमेति ।

तमीशानं० व्याख्यातः शान्तिपाठे ।

( ब्रह्मजज्ञानमिति प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिद्धोमे (यथोक्तद्रव्यहोमे) विनियोगः)॥ ॐ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो व्वेन ऽआवः। स बुध्न्या ऽउपमा ऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः-स्वाहा( इदं ब्रह्मणे ) ॥ ९ ॥

(नमोऽस्तुसर्पेभ्य इति प्रजापतिर्ऋषिःअनुष्टुप्छन्दः सर्पा देवताः सर्पप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे)विनियोगः) ॥ ॐनमो ऽस्तु सर्पेभ्यो ये केच पृथिवीमनु । ये ऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः-स्वाहा ॥ (इदं सर्पेभ्यः) ॥ १० ॥

( विश्वकर्मन्निति भारद्वाजः शास ऋषिः त्रिष्टुप्छन्दःविश्वकर्मा देवता विश्वकर्मप्रीतये पलाशसमिद्धोमे(यथोक्तद्रव्यहोमे) विनियोगः) । ॐव्विश्वकर्मन्हविषा व्वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मै व्विशः समनमन्त पूर्वीरयमुग्रो व्विहव्यो यथाऽसत्-स्वाहा ॥ (इदं विश्वकर्मणे )॥

(वास्तोष्पते इति वासिष्ठ ऋषिः त्रिष्टुप्छन्दः वास्तोष्पतिर्देवता वास्तोष्पतिप्रीतये पलाशसमिद्धोमे ( यथोक्तद्रव्यहो-

---

ब्रह्मजज्ञानं० नमोऽस्तुसर्पेभ्यः०व्याख्यातौ ।

विश्वकर्मन् हविषा० य० सं० अ० ८ मं० ४६ । हे विश्वकर्मन् वर्द्धनेन वर्द्धमानेन वर्द्धयित्रा वा हविषा त्वम् इन्द्रं त्रातारं जगतो रक्षकम् अवध्यं हन्तुमशक्यम् अप्रतिभटं च अकृणोः अकरोः कृतवानसि । तस्मै तादृशाय इन्द्राय पूर्वीः पूर्व्यः विशः प्रजाः पूर्वे वसिष्ठादयो मनुष्याः समनमन्त सम्यङ्नताः । यथा यतः कारणात् (पञ्चम्यर्थे थाल्प्रत्ययः) अयमिन्द्रः उग्रः उद्गूर्णवज्रः विहव्यः विविधेषु कार्येषु हूयते इति विहव्यश्च असत् अभूत्, तस्माद्विशः तस्मै नता इत्यर्थः । हे विश्वकर्मन्

मे) विनियोगः ) । ॐवास्तोष्पते प्रतिजानीह्यस्मान् त्स्वावेशो ऽअनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा॥ ( इदं वास्तोष्पतये ) । ॐक्षेत्राधिपतये स्वाहा ॥ (इदं क्षेत्राधिपतये ) ॥ वास्तोष्पतिक्षेत्राधिपत्योर्बलिदानमेव न होम इति केचिद्वदन्ति। एभिरेव मन्त्रैराज्यचरू जुहुयात् ॥ ततः कामानुसारेण सर्पि-

---

स्यद्धविःसामर्थ्यादिन्द्रस्यायं प्रभाव इति। अन्ते इयमाहुतिः विश्वकर्मत्वेन सर्वात्मने परमात्मने हूयते । तस्य सर्वकर्माधिष्ठातृत्वात् । परमात्मप्रसादं विना इन्द्रादीनां विलक्षणप्रभावशालित्वस्यासंभवात् स पद्यानेन मन्त्रेण स्तूयते। मन्त्रार्थदीपिकायांचायं मन्त्रोऽस्मिन्नवसरे दृश्यते। शासो भारद्वाजः, त्रिष्टुभमित्यस्यचानुवृत्तौ "विश्वकर्मण्यैन्द्रीं वैश्वकर्मणीम्" इतिस० सूत्रात् अस्य मन्त्रस्य भारद्वाजः शास ऋषिर्बोध्यः।

पारस्करगृ. कां. ३ कं. ४। वास्तुर्गृहं तस्य पते हेइन्द्र अस्मान् रक्षितुं प्रतिजानीहि प्रतिज्ञां कुरु । कथं–स्वावेशः–सुष्ठुप्रवेशो नोऽस्माकं भवा भव। दीर्घश्छान्दसः। अस्मानुत्तमान् विधाय सर्वत्र प्रवेशयेत्यर्थः । किञ्च अमीवं पापं रोगो, वा तद्विरोधी अनमीवो भव। किञ्च यत्किञ्चिद्वयं त्वा त्वाम् ईमहे प्रार्थयामहे तद्वस्तुजातं प्रापय्य नोऽस्मान् जुषस्व प्रीणयस्व। किञ्च नः अस्माकं द्विपदे मनुष्यवर्गाय चतुष्पदे पशुवर्गाय च क्रमेण शं सुमङ्गलस्वरूपः सुखस्वरूपश्च भव॥ यद्यप्ययं परशाखीयः तथापि यकारादिस्थाने जकाराद्युच्चारणरूपेण यजुर्धर्मेणैव पठनीयः स्वशाखीये पारस्करगृह्ये पाठात् । एवमेव अयाश्चाग्ने, ये ते शतम् इत्यनयोरपि बोध्यम्। अत्र सर्वत्र स्वररहितानामेव मन्त्राणां सूत्रकारेण पाठात् परशाखीयमन्त्राणामेकश्रुत्यैव पाठः कर्तव्य इति ध्वन्यते । अयमेव न्यायः सुर्यश्मा इत्यादिष्वपि मन्त्रेषु योजनीयः । परं तु तत्र यकारादिस्थाने जकाराद्युच्चारणं न कर्तव्यम् । स्वशाखायां क्वाप्यपाठादिति बोध्यम्।

र्यवव्रीहितिलाद्यन्यतमश्च जुहुयात् । ततः—अग्नये स्विष्टकृते स्वाहा॥ (इदमग्नये स्विष्टकृते) इति हुत्वा आज्येन भूराद्या नवाहुतीर्हुत्वा(१७४) ततो बर्हिर्होमं संस्रवप्राशनादि प्रणीताविमोकान्तं च कृत्वा ब्रह्मणे पूर्णपात्रं सहिरण्यं सदक्षिणं दत्त्वा अक्रन् कर्मेति मन्त्रपाठः । ततः वेदीसमीपे उत्तरतः यथोक्तद्रव्यैः गुडौदनादिभिः(७१) बौधायनोक्तपायसेन वा बलिदानं कुर्यात् ॥ पायसाभावे दध्यक्षतैर्बलिदानं कार्यम्॥ तच्च उत्तरसंस्थं प्राक्संस्थपङ्क्त्या कार्यम् । तत्र प्रथमा पङ्क्तिः ग्रहाणाम् । ततः पूर्वस्यामधिदेवतानाम्, ततः पू० प्रत्यधिदेवतानामित्यादूह्यम् । ग्रहाणां बलिदानप्रकारः—

ॐसूर्याय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एष सदीपो गुडौदनबलिः पायसबलिर्दध्यक्षतबलिर्वा नमः—

इति बलिं समर्प्य, हस्ते जलं गृहीत्वा—भोभोः सूर्य एतं सदीपं गुडौदनबलिं पायसबलिं दध्यक्षतबलिं वा गृहाण सपरिवारस्य मम यजमानस्य वा आयुष्कर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव—इति बल्युपरि जलं विसृजेत् ॥ १ ॥ एवमुत्तरत्र सर्वत्र बोध्यम् । ॐसोमाय साङ्गाय० एष सदीपः घृतपायस० पायस० दध्य० वा नमः इति स० भोभोः सोम एतं सदीपं घृतपायसबलिं पायस. दध्य.वा गृहाण सपरिवारस्य मम य० वा आयुष्कर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव इति बल्युपरि जलं विसृजेत् ॥ २ ॥ ॐभौमाय सा० एष सदीपो मसूरान्न० पायस० दध्य० वा नमः इति स० भोभोः भौम एतं सदीपं मसूरान्नबलिं पायस० दध्य०वा गृहाण सपरिवारस्य मम य.वा आयु. क्षे. शा. तु. पु. ॥ ३ ॥ ॐबुधाय सा०

एष सदीपः क्षीरौदन० पाय० दध्य० वा नमः इति स० भोभो बुध एतं सदीपं क्षीरौदनबलिं पाय.दध्य.वा गृहाण सपरिवारस्य मम य० वा आयु. क्षे. शा. तु. पु. ॥ ४ ॥ ॐगुरवे सा. एष सदी० दध्योदन०पाय०दध्य० वा नमः भोभो गुरो एतं सदीपं दध्योदनबलिं पाय० दध्य० वा गृहाण सपरिवारस्य मम य० वा आयु० क्षे. शा. तु.पु. ॥ ५ ॥ ॐशुक्राय सा० एष सदीपो गुडौदनबलिः पाय० दध्य० वा नमः भोभोः शुक्र एतं स· दीपं गुडौदनबलिं पायसब० दध्य० वा गृहाण सपरिवारस्य मम यजमानस्य वा आयु.क्षे.शा.तु.पु. भव ॥६॥ ॐशनैश्चराय सा. एष सदी.कृसर.पाय.दध्य.वा नमः भोभोः शनैश्चर एतं सदीपं कृसरबलिं पाय० दध्य० वा गृहाण सपरिवारस्य मम य० वा आयुष्कर्ता०क्षे०शा०तु०पु० भव ॥७॥ ॐराहवे सा० एष सदी. *अजामांस. पाय. दध्य. वा. नमः भोभोः राहो एतं सदीपम् अजामांसबलिं पाय० दध्य०वा गृहाण सपरिवारस्य मम य. वा आयु. क्षेम. शां. तु. पु. भव ॥ ८ ॥ ॐकेतवे सा० एष सदी० चित्रौदन० पाय० दध्य० वा नमः भोभोः केतो एतं सदीपं चित्रौदनबलिं पाय० दध्य० वा गृहाण सपरिवारस्य मम य० वा आयु० क्षेम० शा० तु० पु० भव ॥ ९ ॥

अधिदेवतादिभ्यः सर्वेभ्यः पायसबलिन्दध्यक्षतबलिं वा दद्यात् । ॐईश्वराय सा०एष सदी०पाय०दध्य०वा नमः भोभो ईश्वर एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आयु. क्षे. शा. तु. पु. भव॥१॥ ॐउमायै साङ्गायै. एष सदी० पाय० दध्य० वा नमः भोभो उमे एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ-

* कलौ मांसदानानिषेधात् माषभक्तबलिर्देयः ।

युष्कर्त्री क्षेम. शा. तु. पु. भव ॥ २ ॥ ॐस्कन्दाय सा० एप सदी. पाय. दध्य. वा नमः भोभोः स्कन्द एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ ३ ॥ ॐविष्णवे सा० एप सदी० पाय० दध्य० नमः भोभो विष्णो एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ ४ ॥ ॐब्रह्मणे सा० एप सदी० पाय० दध्य०वा नमः भोभो ब्रह्मन् एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ ५ ॥ ॐइन्द्राय सा० एप सदी० पाय० दध्य.वा नमः भोभो इन्द्र एतं सदीपं पायसबलिं दध्य.वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ ६ ॥ ॐयमाय सा० एप सदी० पाय०दध्य०वा नमः भोभो यम एतं सदीपम्पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ.क्षे.शा.तु.पु.भव ॥७॥ उ. स्प. ॐकालाय सा० एप सदी० पाय.दध्य वा नमः भोभोः काल एतं सदीपं पायसबलिं दध्य. वा गृहाण सपरिवारस्य मम य. वा आ. क्षे० शा. तु. पु. भव॥८॥ ॐचित्रगुप्ताय सा० एप सदी० पाय० दध्य० वा नमः भोभोः चित्रगुप्त एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ० क्षे० शा० तु० पु० भव ॥ ९ ॥

ॐअग्नये सा० एप सदी० पाय० दध्य० वा नमः भोभो अग्ने एतं सदीपं पायसबलिं दध्य. वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ १ ॥ ॐअद्भ्यः साङ्गाभ्यः० एप सदी० पाय० दध्य० वा नमः भोभोः आपः एतं सदीपं पायसबलिं दध्य० वा गृह्णीत सपरिवारस्य मम य० वा आयुष्कर्त्र्यः क्षेमकर्त्र्यः शा० तु० पु० भवत ॥ २ ॥ ॐभूम्यै

साङ्गायै. एप सदी. पाय. दध्य.वा नमः भोभो भूमे एतं सदीपं पायसवलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आयुष्कर्त्री क्षे. शा. तु. पु. भव ॥ ३ ॥ ॐविष्णवे सा० एप सदी० पाय. दध्य.वा नमः भोभो विष्णो एतं सदीपं पायसवलिं दध्य. वा गृहाण सपरिवारस्य मम य. वा आ.क्षे.शा.तु.पु. भव ॥४॥ ॐइन्द्राय सा. एप सदी. पाय. दध्य. वा नमः भोभो इन्द्र एतं सदीपं पायसवलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ ५ ॥ ॐइन्द्राण्यै साङ्गायै एप सदी० पाय० दध्य०वा नमः भोभो इन्द्राणि एतं सदीपं पायसवलिं दध्य. वा गृहाण सपरिवारस्य मम य. वा आयुष्कर्त्री क्षे.शा.तु.पु. भव ॥ ६ ॥ ॐप्रजापतये सा० एप सदीपः पायस० दध्य० वा नमः भोभोः प्रजापते एतं सदीपं पाय० दध्य० वा गृहाण सपरिवारस्य मम य० वा आ० क्षे० शा० तु० पु० भव ॥७॥ ॐसर्पेभ्यः साङ्गेभ्यः० एप सदी० पाय० दध्य० वा नमः भोभोः सर्पाः एतं सदीपं पायसवलिं दध्य०वा गृह्णीत सपरिवारस्य मम य० वा आयुष्कर्तारः क्षेमकर्तारः शा. तु. पु. भवत ॥८॥ ॐब्रह्मणे सा० एप सदी० पाय० दध्य० वा नमः भोभो ब्रह्मन् एतं सदीपं पायसवलिं दध्य०वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ ९ ॥

ॐविनायकाय सा० एप सदी० पाय० दध्य० वा नमः भोभो विनायक एतं सदीपं पायसवलिं० दध्य० वा गृहाण सपरिवारस्य मम य. वा. आ. क्षे. शा. तु. पु. भव ॥ १ ॥

ॐदुर्गायै साङ्गायै एप सदी० पाय० दध्य० वा नमः भोभो दुर्गे एतं सदीपं पायसवलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आयुष्कर्त्री क्षेमकर्त्री शा. तु. पु. भव ॥ २ ॥

ॐवायवे सा० एष सदी० पाय० दध्य० वा नमः भोभो वायो एतं सदीपं पायसबलिं दध्य०वा गृहाण सपरिवारस्य मम य० वा. आ. क्षे. शा. तु. पु. भव ॥ ३ ॥

ॐआकाशाय सा. एष सदी. पाय० दध्य० वा नमः भोभो आकाश एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य. वा. आ. से. शा. तु. पु. भव ॥४॥ ॐअश्विभ्यां साङ्गाभ्यां० एष सदी० पाय० दध्य० वा नमः भोभो अश्विनौ एतं सदीपं पायसबलिं दध्य० वा गृह्णीतम् सपरिवारस्य मम य० वा आयुष्कर्तारौ क्षेमकर्तारौ शा. तु. पु. भवतम् ॥ ५ ॥

ॐइन्द्राय सा. एष सदी. पाय. दध्य०वा नमः भोभो इन्द्र एतं सदीपं पायसबलिं. दध्य.वा गृहाण सपरिवारस्य मम य. वा आ. क्षे. शा. तु. पु. भव ॥ १ ॥ ॐअग्नये सा० एष सदी० पाय. दध्य. वा नमः भोभो अग्ने एतं सदीपं पायसबलिं दध्य. वा गृहाण सपरिवारस्य मम य. वा आ.क्षे. शा.तु.पु. भव ॥२॥ ॐयमाय सा० एष सदी०पाय०दध्य०वा नमः भोभो यम एतं सदीपं पायसबलिं दध्य.वा गृहाण सरिवारस्य मम य.वा आ.क्षे. शा.तु.पु. भव उ.स्प.॥३॥ॐनिर्ऋतये सा०एष सदी.पाय.दध्य० वा नमः भोभो निर्ऋते एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य. वा आ.क्षे.शा.तु.पु.भव ॥४॥उ.स्प.ॐवरुणाय सा० एष सदी० पाय० दध्य०वा नमः भोभो वरुण एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ. क्षे. शा. तु. पु. भव ॥ ५ ॥

ॐवायवे सा० एष सदी० पाय० दध्य० वा नमः भोभो वायो एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा० आ. क्षे. शा. तु. पु. भव ॥ ६ ॥

ॐकुबेराय सा० एष सदी० पाय० दध्य० वा नमः भोभोः कुबेर एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ० क्षे० शा० तु० पु० भव० ॥ ७ ॥

ॐईशाय सा० एष सदीपः पाय० दध्य० वा नमः भोभो ईश एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा० आ० क्षे० शा० तु० पुष्टिकर्ता भव ॥ ८ ॥

ॐब्रह्मणे सा० एष सदीपः पाय० दध्य० वा नमः भोभो ब्रह्मन् एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा० आ० क्षे० शा० तु० पु० भव ॥ ९ ॥

ॐअनन्ताय सा० एष सदी० पाय० दध्य० वा नमः भोभो अनन्त एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा आ० क्षे० शा० तु० पु० भव ॥ १० ॥ केचित् इन्द्रादिदिक्पालबलीन् होमवेदेः भागादिक्रमेणाचरन्ति ।

ॐवास्तोष्पतये सा० एष सदी० पाय० दध्य० वा नमः भोभो वास्तोष्पते एतं सदीपं पायसबलिं दध्य० वा गृहाण सपरिवारस्य मम य० वा० आ० क्षे० शा० तु० पु० भव ॥ १ ॥

एवं सर्वेभ्यः पायसबलिं दध्यक्षतबलिं वा दत्त्वा क्षेत्रपालाय सचतुर्वर्तिकादीपं सद्रव्यं सताम्बूलं कृसरबलिं दद्यात् । कृसरस्तु तिलौदन इति परिभाषया तिलमिश्र ओदनः कृसरपदेनाभिधीयते । तत्र माषमिश्रणमपि समाचारात् कुर्वन्ति । अद्येहेत्यादिदेशकालौ संकीर्त्य अमुकोऽहं कृतस्यामुकहोमस्योत्तराङ्गत्वेन सर्वारिष्टनिवृत्त्यर्थं क्षेत्रपालाय बलिदानं करिष्ये तदङ्गत्वेन पूजनं च करिष्ये इति सङ्कल्प्य कृसरबल्युपरि चतुर्वर्तिसंयुक्तं दीपं प्रज्वाल्य बलिं संप्रोक्ष्य रक्तचन्दनादिभिः संपूजयेत् ॥ तत्र ध्यानम्–भ्राजद्वक्रजटाधरं त्रिनयनं नीलाञ्जना-

द्विपभं, दोर्दण्डान्तगदाकपोलमरुणस्रग्गन्धवस्त्रावृतम् । घण्टाघुर्घुरमेखलाध्वनिमिळद्धुंकारभीम विभुं, वन्दे सहितसर्पकुण्डलधरं श्रीक्षेत्रपालं सदा ॥ इति ध्यात्वा रक्तचन्दनादिभिः सम्पूज्य पुटकोपरि ताम्बूलं दक्षिणां च निधाय—क्षौँ क्षेत्रपालाय भूतप्रेतपिशाचडाकिनीशाकिनीवेतालादिपरिवारयुताय एष सदीपः सताम्बूलः सदक्षिणः कृसरबलिर्नमः इति समर्प्य भोभोः क्षेत्रपाल दिशो रक्ष बलिं भक्षय मम यजमानस्य वा सपुत्रसपरिवारस्य आयुष्कर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिकर्ता भव इत्युक्त्वा हस्तस्थजलं तदुपरि विसृज्य इमं बलिं दुर्ब्राह्मणेन शूद्रेण वा चतुष्पथे प्रक्षेपयेत् । ततः आचम्य द्यौः शान्तिरिति तत्स्थानं संप्रोक्षेत् । इति क्षेत्रपालबलिः ॥

ततः पूर्णाहुतिहोमः । अद्येह अमुकोऽहम् अमुकस्य मम सर्वाभ्युदयप्राप्तये एतद्धोमकर्मणो न्यूनातिरिक्तपरिहारार्थं च मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये इति सङ्कल्प्य पूर्वोक्तप्रकारेण ( १७८ ) मूर्द्धानन्दिवइतिमन्त्रेण, पूर्णादर्वीति मन्त्रेण, ॐपुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तन्वँवर्धयस्व

१ यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मणो नाम सर्वकर्मसु गर्हितः ॥ इति ।

२ पूर्णादर्वीति मन्त्रो व्याख्यातः ( १८० ) । ( अस्य मन्त्रस्य और्णनाभ ऋषिः अनुष्टुप्छन्दः शतक्रतुर्देवता पूर्णाहुतिहोमे विनियोगः ) इदं शतक्रतवे इतित्यागः ।

३ पुनस्त्वेत्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता पूर्णा० विनियोगः । इदमग्नय इतित्यागः । व्याख्यास्यते चायं मन्त्रः अग्रे आशीर्वादप्रकरणे ।

सत्याः सन्तु यजमानस्य कामाः ॥ इतिमन्त्रेण, ॐसप्त ते ऽअग्ने समिधः सप्त जिह्वाः सप्त ऽऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥ इति मन्त्रेण वा, एतच्चतुष्टयेन वा पूर्णाहुतिं जुहुयात् ।

(तत्र मूर्धानमिति मन्त्रो मात्स्यादावुक्तः । सप्तत इति कातीये श्रौतसूत्रे ( अ. १८ कं. ४ सू. ९ ) चयनप्रकरणे "सप्तते इति पूर्णाहुतिरिति" इत्युक्तः । आपस्तम्बीये हिरण्यकेशीये च श्रौ. अयमुक्तः । पूर्णादर्वीति पुरश्चर्यार्णवे मेरुतन्त्रे उक्तः । पुनस्त्वेति शान्तिकमलाकरादौ दृश्यते । समुच्चयस्य विनियोगानुक्तेः एतन्मन्त्रसमुच्चयेन एतद्धोमानुष्ठानमप्रमाणमेवेति रुद्रकल्पद्रुमः । दद्यादुत्थाय पूर्णां तु इति स्मृतेः समाचाराच्च "द्वादशगृहीतेन स्रुचं पूरयित्वा इति आपस्तम्बा-

---

१ सप्तते इत्यस्य सप्तऋषय ऋषयः त्रिष्टुप्छन्दः अग्निर्देवता पूर्णा० विनियोगः । इदं सप्तवतेऽग्नये इति त्यागः ।

य० सं० अ० १७ म० ७९ अस्यार्थः—हे अग्ने ते तव सप्त समिधः समिन्धनाः प्राणाः शीर्षण्याः सन्ति । प्राणा वै समिध इति श्रुतेः । किञ्च तव सप्त जिह्वाः हिरण्याद्या आगमोक्ताः, आथर्वणिकोक्ताः काल्याद्यो वा । तथा सप्त ऋषयः मरीच्यादयस्तव द्रष्टारः सन्ति । तथा सप्त प्रियाणि धाम धामानि छन्दांसि गायत्र्यादीनि तव सन्ति । किञ्च हे अग्ने सप्त होत्रा होत्रादय ऋत्विजः सप्तधा सप्तप्रकारैरग्निष्टोमादिसप्तसोमसंस्थाभिः त्वा त्वां यजन्ति । हे अग्ने त्वं सप्त योनीः चितीः घृतेन आपृणस्व तर्पय । ( पृण प्रीतौ तुदादिः ) । स्वाहा सुहुतमस्तु ॥

युक्तः सत्थाय पूर्णाहुतिहोम एव माध्यन्दिनैरपि स्मार्ते कर्मणि अनुष्ठेय इति मुरारिमिश्रादयः। इदानींतनाः शिष्टाश्च तथैवाचरन्ति। चतुर्गृहीतेन, स्रुवेणैव वा होमे तु उपविश्यैवानुष्ठानं कातीयानां युक्तमित्यपि शिष्टाः, तथैव स्वशाखोक्तेः।)

ततः तनूपाऽग्ने इत्यादिभिः सप्तभिर्मन्त्रैः ललाटाच्चिबुकपर्यन्तं सप्तवारं पाणिभ्यां प्रतपनपूर्वकं मुखमार्जनम् (१८१) । ततः " अङ्गानि च मे" इत्यादिना अङ्गालम्भनम् (१८१)। उदकस्पर्शः । ततस्त्र्यायुषाणि कुरुते भस्मना (१८२) । ॐ त्र्यायुषं जमदग्नेः इति ललाटे। कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । यद्देवेषु त्र्यायुषम् इति दक्षिणांसे। तन्नो ऽस्तु त्र्यायुषमिति हृदि । इति त्र्यायुषधारणं कृत्वा पुनरावाहितदेवानग्निं च सम्पूज्य आचार्यादिभ्यो दक्षिणान्दद्यात्। आदित्याय कपिलाम्, सोमाय शङ्खम्, भौमाय रक्तं वृषम्, बुधाय सुवर्णम्, बृहस्पतये पीतवस्त्रयुगम्, शुक्राय श्वेताश्वम्, शनये कृष्णां गाम्, राहवे खड्गं, केतवे छागम्–इति यथोक्तदक्षिणां सुवर्णसहितां दद्यात्(८१) । यथोक्तालाभे सर्वेषां गां सुवर्णं वा दद्यात्(८२) । कपिलादिदानवाक्यानि(८२)पृ.द्रष्टव्यानि। अद्येह अमुकोऽहम् अमुककर्मनिमित्तकस्य अमुककामनया. कृतस्य वाऽस्य ग्रहयागकर्मणः साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं ग्रहाणां प्रीतये च इदं सुवर्णम् इमां दक्षिणां च आचार्याय ब्रह्मणे ऋत्विग्भ्यो जापकेभ्यो द्वारपालेभ्यः सदस्याय च यथांशेन विभज्य दास्ये ॐतत्सन्न मम इति–सङ्कल्प्य आचार्यब्रह्मभ्याम् अन्येभ्यश्च दद्यात् । वायवीयसंहितायां—मण्डपं गुरवे दद्यात् यागोपकरणैः सह। इति वचनात् उपकरणसहितमण्डपं तन्निष्क्रयद्रव्यं वा आचार्याय दद्यात् । तथा कर्मान्ते विहिताम्

एकां गां दत्वा भूयसीं सङ्कल्पयेत् । अद्येत्यादि अमुकोऽहं कृतस्यास्य ग्रहयागकर्मणः साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं न्यूनातिरिक्तदोषपरिहारार्थंच–इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये। ॐतत्सत्। तथा एतद्ग्रहयागकर्मणः साद्गुण्यार्थं ग्रहाणां प्रीत्यै च सिद्धान्तेन यथासंख्याकान् ब्राह्मणांश्च भोजयिष्ये इति सङ्कल्पयेत्। तत्रैकाहुतौ दशाहुतौ वा एको ब्राह्मण इति उत्तमः कल्पः। शताहुतौ एक इति मध्यमः। सहस्राहुतौ एक इति अधम इति शान्तिकमलाकरः। ततः घृतच्छायादर्शनं कुर्यात् (१६४)। ततः सपत्नीकं सपुत्रं भद्रासनेपविष्टं यजमानम् आचार्यादयः उत्थाय कलशोदकेन वैदिकैः पौराणिकैश्च मन्त्रैरभिषिक्तं कुर्युः(८०)। तत्र वैदिकमन्त्राः–ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै व्वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥१॥ ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां

देवस्यत्वा० सरस्वत्यैव्वाचो० य० सं० अ० १८ मं० ३७। हे जल सवितुः देवस्य प्रसवे प्रेरणे सति अश्विनोः बाहुभ्यां पूष्णो हस्ताभ्यां च त्वा त्वां, गृह्णामि इति शेषः। अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः। पञ्चाङ्गुलियुक्तोऽग्रभागो हस्तः। अश्विनौ हि देवानामध्वर्यू, पूषा हि देवानां भागधुक्–अतो ग्रहणसाधनयोः स्वस्य बाह्वोः अश्विबाहुभावना कार्या, हस्तयोस्तु पूषहस्तभावनेति भावः। सरस्वत्यै सरस्वत्याः। षष्ठ्यर्थे चतुर्थी। तत्सम्बन्धिन्या वाचः वाण्याः, यन्तुः नियन्तुः प्रजापतेः यन्त्रेण नियमेन, अग्नेश्च साम्राज्येन चक्रवर्तित्वेन हे यजमान त्वाम् अभिषिञ्चामि। मन्त्राभिषेकेण वाक्सिद्धिः ऐश्वर्यं साम्राज्यं च तव सम्पद्यन्तामित्यर्थः॥

देवस्यत्वा० अश्विनोर्भैषज्येन० य० सं० अ० २० मं० ३। हे यजमान अश्विनोः भैषज्येन वैद्यकर्मणा (भिषजः कर्म भैषज्यम्) तेजसे कान्त्यै ब्रह्मवर्चसाय–सर्वशास्त्राध्ययनवेदवेदाङ्ग-

पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि॥ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामि ॥ ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥ २ ॥ ॐस्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ३ ॥ ॐपयः पृथिव्यां पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ४ ॥ ॐविष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा ॥ ५ ॥ ॐअग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता ऽऽदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो

---

ता कीर्तिर्ब्रह्मवर्चसं तस्मै अभिषिञ्चामि ॥ सरस्वत्यै सरस्वत्या भैषज्येन भिषक्कर्मणा(च) भवन्त देवं वीर्यायान्नाद्याय(च), वीर्यं सामर्थ्यम् अन्नाद्यम् अन्नभक्षणसामर्थ्यं तस्मै अभिषिञ्चामि ॥ इन्द्रस्येन्द्रियेण इन्द्रियपाटवेन सामर्थ्येन (च) त्वां बलाय सामर्थ्याय श्रियै सर्वसमृद्ध्यै यशसे कीर्त्यै (च) अभिषिञ्चामि ॥

स्वस्ति न इन्द्र-० पयः पृथिव्याम्० व्याख्यातौ । विष्णोरराटमसीत्यपि ॥

अग्निर्देवता० य० सं० अ० १४ मं० २० । अनयाऽपि, वातादयः देवताः त्वामभिषिञ्चन्तु ॥

देवता ॥ ६ ॥ ॐप्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रꣳ हुवेम ॥ ७ ॥ ॐभग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः । भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥८॥ ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ ९ ॥ ॐवरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद ॥ १० ॥ ॐमूर्द्धाऽसि राड् ध्रुवाऽसि धरुणा

---

प्रातरग्निं० अ० ३४ मं० ३४ । प्रातःशब्दो वीप्सावचनः। वयं प्रातः प्रातः पुनः पुनः अग्निम् इन्द्रं मित्रावरुणा मित्रावरुणौ अश्विना अश्विनौ भगं पूषणं ब्रह्मणस्पतिं (च) हवामहे आह्वयामः । सोमम् उत—अपि च रुद्रं हुवेम आह्वयाम ॥

भगप्रणेतः० अ० ३४ मं० ३६ । हे भग हे प्रणेतः—प्रकर्षेण नयति-प्रापयति धनमिति प्रणेता तस्य सम्बोधने हे प्रणेतः । आदरार्थे पुनः सम्बोधनम् । हे भग हे सत्यराधः—सत्यम् अनश्वरं राधो धनं यस्य स सत्यराधाः तत्सम्बुद्धौ हे सत्यराधः हेभग त्वं ददत् धनं प्रयच्छन् सन् नः अस्माकम् इमां धियं प्रज्ञाम् उदव उद्गमय-यथा सूक्ष्मार्थान् पश्याम तथा कुरु इति भावः । किञ्च हेभग नः अस्मान् गोभिरश्वैः प्रजनय प्रवर्धय । किञ्च हे भग वयं नृभिः पुत्रादिभिः नृवन्तः मनुष्यवन्तः प्रकर्षेण स्याम भवाम ॥

समुद्राय त्वा वाताय० अ० ३८ मं० ७ । अयं मन्त्रोऽपि क्वचिदभिषेके विनियुक्तो दृश्यते ॥

त्रातारम्० वरुणस्य० व्याख्यातौ ॥

मूर्द्धासिराट्० य० सं० अ० १४ मं २१ । हे अग्नेयतं त्वं मू-

धर्त्र्यासि धरणी। आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥ ११ ॥ ॐ द्यौः शान्तिरन्तरिक्ष१ँ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः र्व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व१ँ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥१२॥ सुशान्तिर्भवतु। ॐ विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न ऽआसुव ॥ १३ ॥ आपोहिष्ठेत्यादयस्तिस्र ऋचः, सति सम्भवे समुद्रज्येष्ठा इत्यादय ऋग्वेदोक्ताश्च पठनीयाः।

समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः ॥ इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥ १ ॥ या आपो दिव्या उत

---

त्वं मूर्द्धवदुत्तमा राट् राजमाना चासि, त्वं ध्रुवा स्थिरा धरुणा जीवानां प्राणधारणहेतुश्चासि। किञ्च त्वं धर्त्री धारणं कुर्वती धरणी भूमिरूपा चासि। त्वा त्वां यजमानस्यायुषे आयुर्वृद्ध्यर्थं, वर्चसे कान्त्यर्थं, कृष्यै सस्यनिष्पत्तये, क्षेमाय सम्पादितधनरक्षणाय च प्रार्थये। त्वेत्यस्य अभ्यास आदरार्थः॥

द्यौः शान्तिः० व्याख्यातः। विश्वानि देव० व्याख्यातः।

समुद्रज्येष्ठा० ऋ०सं० अ०५ अध्या०४ वर्ग १६ मं० १ समुद्रोऽर्णवः ज्येष्ठः प्रशस्यतमो यासामपां ताः सलिलस्य अन्तरिक्षस्य (सलिलशब्दस्य अन्तरिक्षनामसु पठितत्वात्) मध्यात् माध्यमिकस्थानात् यन्ति गच्छन्ति। कीदृश्यः आपः-पुनानाः-विश्वं शोधयन्त्यः अनिविशमानाः सर्वदा गच्छन्त्यः। वज्री वज्रभृत् वृषभः कामानां वर्षिता इन्द्रः याः निरुद्धा अपः रराद लिखति भिनत्ति, देवीः देव्यः ताः आपः इहास्मिन्देशे स्थिताः माम् अवन्तु रक्षन्तु॥

या आपः० ऋ०सं० अ० ५ अ० ४ व० १६ मं० २ या आपः

या स्रवंन्ति खनित्रिमा उत वा याः स्वयंजाः ॥ समुद्रार्थां याः शुचंयः पावकास्ता आपो देवीरिह मामंवन्तु ॥ २ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अंवपश्यञ्जनानाम् ॥ मधुश्चुतः शुचंयो याः पावकास्ता आपो देवीरिह मामंवन्तु ॥ ३ ॥ यासु राजा वरुणो यासु सोमो विश्वेदेवा यासूर्जं मदन्ति ॥ वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामंवन्तु ॥ ४ ॥

अथ पौराणिकमन्त्राः ।ॐसर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।आयान्तु यजमानस्य दुरितक्षयकारकाः॥ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः। वासुदेवो जगन्नाथस्तथा सङ्कर्षणो

---

दिव्याः अन्तरिक्षभवाः सन्ति, उतवा–अपिच या आपः नद्यादिगताः सत्यः स्रवन्ति गच्छन्ति, याश्च खनित्रिमा खननेन निर्वृत्ताः,उतवा-अपिच याः स्वयञ्जाः स्वयमेव प्रादुर्भवन्त्यः, समुद्र एव अर्थो गन्तव्यो यासान्ताः समुद्रार्थाः शुचयो दीप्तियुक्ताः पावकाः शोधयिन्यश्च या भवन्ति ता आपो मामवन्त्विति ॥

यासां॰ ऋ॰ सं॰ अ॰ ५ अ॰ ४ व॰ १६ म॰ ३ वरुणः यासामपां राजा स्वामी मध्ये मध्यमलोके याति गच्छति । किं कुर्वन्–जनानां प्रजानां सत्यानृते सत्यं चानृतं च अवपश्यन् जानन् इत्यर्थः। या आपः मधुश्चुतः रसं क्षरन्त्यः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यः ता आपो देव्यो मामवन्तु रक्षन्त्विति ॥

यासु॰ ऋ॰ सं॰ अ॰ ५ अ॰ ४ व॰ १६ म॰ ४ अपां राजा वरुणः यास्वप्सु वर्तते, सकलः सोमः यास्वप्सु वर्तते, यासु अप्सु स्थिताः विश्वे सर्वे देवाः ऊर्जम् अन्नं मदन्ति, वैश्वानरोऽग्निः यासु प्रविष्टः–ता आपो देव्यः इह स्थितं माम् अवन्तु ॥

विभुः। प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते॥ आखण्डलोऽग्नि-र्भगवान् यमो वै निर्ऋतिस्तथा । वरुणः पवनश्चैव धनाध्यक्ष-स्तथा शिवः। ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा-वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः । एतास्त्वामभिषिञ्च-न्तु धर्मपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसि-तार्कजाः। ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च पूजिताः ॥ देव-दानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः। अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ औष-धानि च रत्नानि कालस्यावयवाश्च ये । सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु सर्वका-मार्थसिद्धये ॥ इति । ततः—

ॐकोऽसि कतमोऽसि कस्मै त्वा काय त्वा । सु-श्लोक सुमङ्गल सत्यराजन् ॥ इत्यनेन, अभिषिक्तं यज-मानमाचार्यः प्रशंसति । अथ यजमानः प्रार्थयमानः अङ्गा-न्यालभते— ॐशिरो मे श्रीर्यशो मुखं त्विषिः

कोऽसि कतमोऽसि० य० सं० अ० २० मं० ४। हे यजमान किंच सुश्लोक सुकीर्ते सुमङ्गल सुभद्र सत्यराजन् त्वं कः प्रजापतिरसि। अत्यन्तं कः कतमः श्रेष्ठः प्रजापतिरसि। प्रजापतयो बहवः तत्र उत्तमोऽसि । कस्मै प्रजापतिपदप्राप्तये काय प्रजापतिभावाय च त्वा त्वाम्, अभिषिक्तवान् इति शेषः॥

शिरो मे० य० सं० अ० २० मं० ५। अभिषिक्तो यजमानः इन्द्ररूपतां प्राप्तः आत्मनः सर्वात्मकतां पश्यन्नाह । हे मम शिरः श्रीः शोभा अस्तु। मे मुखं यशो ऽस्तु। केशाः श्मश्रूणि मुखलोमानि च त्विषिः दीप्तिरस्तु । राजा-दीप्यमानः मे मम

केशाश्च श्मश्रूणि । राजा मे प्राणो ऽअमृत१ꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥ १ ॥ जिह्वा मे भद्रँ्वाङ् महो मनो मन्युः स्वराड् भामः । मोदाः प्रमोदा ऽअङ्गुलीरङ्गानि मित्रं मे सहः ॥ २ ॥ बाहू मे बलमिन्द्रिय१ꣳ हस्तौ मे कर्म्म र्व्वीर्य्यम् । आत्मा क्षत्रमुरो मम ॥ ३ ॥ पृष्ठीर्म्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी । ऊरू ऽअरत्नी जानुनी र्व्विशो मेऽङ्गानि सर्व्वतः ॥४॥ नाभिर्म्मे चित्तं विज्ञानं पायुर्म्मेऽपचितिर्भसत् । आन-

---

प्राणः मुखवायुः अमृतमस्तु । चक्षुः इन्द्रियं सम्राट् अस्तु । सम्यक् राजते इति सम्राट् । श्रोत्रमिन्द्रियं विराट् विविधं राजमानमस्तु ॥

जिह्वा० अ०२० मं०६ जिह्वा मे भद्रमस्तु । वाक् महः पूजाकारिणी अस्तु । मनः मन्युः क्रोधरूपमस्तु । भाम· क्रोधः स्वराट् स्वराज्यक्षमोऽस्तु । अङ्गुलीः अङ्गुलयः मोदाः आनन्दरूपाः सन्तु । अङ्गानि प्रमोदाः प्रकृष्टहर्षाः सन्तु । मे मम मित्रं सहः रिपुनाशकमस्तु ॥

बाहू मे० अ० २०–मं० ७ । मे बाहू बलमस्तु बलवन्तौ स्तामित्यर्थः । इन्द्रियं (च) बलं स्वकार्यक्षममस्तु । मे हस्तौ कर्म चास्तु स्वकर्मकुशलौ सामर्थ्यवन्तौ च स्तामित्यर्थः । मम आत्मा अन्तरात्मा उरः हृदयं (च) क्षत्रं क्षतात् त्राणकरमस्तु ॥

पृष्ठीर्मे० अ० २० मं० ८ । मे मम पृष्ठीः पृष्ठदेशः राष्ट्रं देशः देशवासवाधारोऽस्तु । मे मम उदरम्, अंसौ स्कन्धौ, ग्रीवाः कण्ठदेशाः, श्रोणी कटिदेशौ, ऊरू सक्थिनी, अरत्नी हस्तदेशौ, जानुनी च, सर्वतोऽन्यान्यङ्गानि च विशः प्रजाः सन्तु–प्रजावत्पोष्याः सन्तु ॥

*नाभिर्मे० अ० २० म० ९ । मे नाभिः चित्तं ज्ञानरूपमस्तु । पायुर्मे* गुदेन्द्रियं विज्ञानं ज्ञानजनितसंस्काराधारोऽस्तु । भसत् स्त्रीप्रजननम् अपचितिः प्रजारूपमस्तु सुभगमस्तु । पत्नीविषयमेतत् । मे मम आण्डौ वृषणौ आनन्दनन्दौ स्ताम्—आनन्देन सम्भोगजनितसुखेन नन्दतः तौ तत्सुखभोक्तारौ भवतामित्यर्थः । पसः

न्दनन्द्यावाण्डौ मे भगः सौभाग्यं पसः । जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः ॥ ५ ॥ उदकस्पर्शं कृत्वा मार्ष्टि—

प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्प्रति प्राणेषु प्रतितिष्ठामि पुष्टे प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ॥ ६ ॥ त्रया देवा ऽएकादश त्रयस्त्रिꣳशाः सुराधसः । बृहस्पतिपुरोहिता देवस्य सवितुः सवे । देवा देवैर-

---

लिङ्गम् । पसः पसतेः स्पृशतिकर्मण इति यास्कोक्तेः । तत् भग ऐश्वर्यं सौभाग्यं सम्पत्तिश्चास्तु । सर्वदा भोगासक्तमस्त्वित्यर्थः । जङ्घाभ्यां पद्भ्यां चाहं धर्मोऽस्मि । उपलक्षणमेतत् । सर्वाङ्गैर्धर्मरूपोऽस्मि । धर्मरूपत्वादेव विशि-प्रजायां राजा प्रतिष्ठितोऽस्मि ॥

प्रति क्षत्रे० अ० २० म० १० । अहं क्षत्रे प्रतितिष्ठामि । क्षत्रियजातौ प्रतिष्ठायुक्तो भवामि । राष्ट्रे देशे, अश्वेषु, गोषु, अङ्गेषु करपादाद्यवयवेषु, आत्मन्—आत्मनि चित्ते, प्राणेषु पञ्चसु, पुष्टे पुष्टौ समृद्धौ, द्यावापृथिव्योः स्वर्गे इह लोके च, यज्ञे ज्योतिष्टोमादौ च प्रतितिष्ठामि । क्रियापदावृत्तिः फलातिशयद्योतनार्था । क्षत्रियदेशयोः प्रतिष्ठा वशीकरणम्, गवाश्वयोः प्रतिष्ठा तत्प्राप्तिः, प्राणाङ्गप्रतिष्ठा नीरोगत्वम्, आत्मप्रतिष्ठा निराधित्वं, पुष्टे प्रतिष्ठा धनसमृद्धिः, द्यावापृथिव्योः प्रतिष्ठा उभयलोककीर्तिः, यज्ञे प्रतिष्ठा यज्ञकरणम् । वश्यविश्वः पशुमान् निराधिव्याधिः श्रीमान् कीर्तिमान् यज्ञकर्ता च भवेयमिति भावः ॥

त्रया देवा० अ० २० मं० ११ । एकादश देवाः त्रयाः त्र्यवयवकाः त्रिगुणा इत्यर्थः । तस्मात्त्रयस्त्रिंशाः—त्रयस्त्रिंशत्संख्याका इत्यर्थः । सुराधसः शोभनधनाः, तथा बृहस्पतिपुरोहिताः, तथा सवितुः देवस्य सवे आज्ञायां वर्तमानाः, देवा दीप्यमानाः वक्ष्यमाणैः देवैः सह मा माम् अवन्तु रक्षन्तु ॥

यन्तु मा ॥ ७ ॥ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यँय्यज्ञेन यज्ञो यजुर्भिर्यजूँषि सामभिः सामान्यृग्भिर्ऋचः पुरोऽनुवाक्याभिः पुरोनुवाक्या याज्याभिर्याज्या वषट्कारैर्वषट्कारा ऽआहुतिभिराहुतयो मे कामान्त्समर्द्धयन्तु ॥ ८ ॥ इति ।

ग्रा० शान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु यच्छ्रेयस्तदस्तु, यत्पापं रोगः शोकः कष्टं दुःखं दारिद्र्यं तत् दूरे प्रतिहतमस्तु बहिः जलं क्षिपेयुः, ॐभूर्भुवःस्वः अमृताभिषेकोऽस्तु सुशान्तिर्भवतु इत्यन्तः । इत्यभिषेकः ।

(अत्र यजमानस्य वामतः पत्न्याः, तस्या वामतः पुत्रादेरुपवेशनं बोध्यम् । यजमानादयश्च प्राङ्मुखाः । ब्राह्मणाश्चोदङ्मुखाः इति रुद्रकल्पद्रुमः । प्रत्यङ्मुखा इत्याश्वलायनः । दूर्वायुक्तपल्लवानि चाभिषेकसाधनानि । मङ्गलघोषपुरःसरमभिषेकः कार्य इति रुद्रकल्पद्रुमः । अभिषेकानन्तरं दक्षिणादानं मात्स्ये उक्तम् । दक्षिणादानानन्तरमभिषेको वासिष्ठयामुक्तः । मान्त्राभिषेकानन्तरं सति सम्भवे उद्वर्तनपूर्वकं स्नात्वा स्नानवस्त्राणि आचार्याय दत्वा वस्त्रान्तरपरिधानं कृत्वा ऽऽचामेयुः) ।

---

[1] प्रथमा द्वितीयैः० अ० २० मं० १२ कथमवन्तु, तत्राह–प्रथमा देयाः द्वितीयैः सहिताः मामवन्तु, द्वितीयाः तृतीयैः सह, तृतीयाः सत्येन सह, सत्यं यज्ञेन सह, यज्ञो यजुर्भिः सह, यजूंषि सामभिः सह, सामानि ऋग्भिः सह, ऋचः पुरोऽनुवाक्याभिः सह, पुरोऽनुवाक्या याज्याभिः सह, याज्या वषट्कारैः सह, वषट्कारा आहुतिभि [illegible] एवं त्रिप्रकारैः एकादशसंख्याभिर्देवैः उत्तरोत्तरं [illegible] मम कामान् अभिलाषान् समर्धयन्तु

ततः तिलककरणं— भद्रमस्तु शिवञ्चास्तु महालक्ष्मीः प्रसीदतु । रक्षन्तु त्वां सदा देवाः सम्पदः सन्तु सर्वदा ॥ सपत्ना दुर्ग्रहाः पापाः दुष्टसत्त्वाद्युपद्रवाः । तमालपत्रमालोक्य निष्प्रभावा भवन्तु ते ॥ आभ्यां मन्त्राभ्यान्तिलकं यजमानादेः कृत्वाऽक्षतारोपणम्–ॐयुञ्जन्ति ब्रध्नमरुपं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ इत्यनेन विधाय, रक्षाबन्धनम्–येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामभिबध्नामि रक्षे मा चल मा चल ॥ त्वँय्यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ आभ्यां मन्त्राभ्यां पुंसां दक्षिणकरे स्त्रीणां वामकरे रक्षासूत्रं बध्नीयादाचार्यः ॥

तत आशीर्मन्त्रपाठः ॥ ॐगणानान्त्वा गणपतिँ हवामहे प्रि० गर्भधम् ॥ १ ॥ ॐआकृष्णेनेत्यादीन्नव मन्त्रान्पठित्वा ॥ १० ॥ ॐकामं कामदुघे धुक्ष्व मित्राय

---

युञ्जन्ति ब्रध्नम्० य० स० अ० २३ मं० ५ तस्थुषः तस्थिवांसः (विभक्तिव्यत्ययः) कर्मार्थं स्थिता ऋत्विजः ब्रध्नमादित्यं युञ्जन्ति रथे योजयन्ति । अस्य आदित्यत्वेन स्तूयते । किम्भूतं ब्रध्नम्, अरुषम्–रोषति कुष्यतीति रुषः न रुषः अरुषः तं क्रोधरहितम् परिचरन्तम् (छन्दसि परेऽपीति परेः परः प्रयोगः) वैदिककर्मसिद्ध्यर्थं सर्वत्र गच्छन्तम् । यस्य ब्रध्नस्य भासा रोचना रोचनानि दीप्तानि चन्द्रग्रहतारकादीनि दिवि रोचन्ते ॥ तान्येव इमेऽक्षता इति अक्षतेषु चन्द्रादिबुद्ध्या ते स्तूयन्ते इति तदारोपणे एतन्मन्त्रविनियोगः ॥

त्वँय्यविष्ठ० व्याख्यातः कुशकण्डिकाप्रयोगे ।

कामं कामदुघे० य० स० अ० १२ मं० ७२ । हे कामदुघे कामपूरणि–मित्राय, वरुणाय, इन्द्राय, अश्विभ्यां, पूष्णे, प्रजाभ्यः, ओ·

ऽवरुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ऽओषधीभ्यः ॥११॥ ॐऋतं च मेऽमृतंच मे ऽयक्ष्मञ्च मेऽनामयच्च मे जीवातुश्च मेदीर्घायुत्वं च मे ऽनमित्रं च मे ऽभयं च मे सुखं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥ १२ ॥ ॐतीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूँ १॥ रनपव्ययन्तः ॥ १३ ॥ ॐआ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पु-

---

षधीभ्यः–ओषधिभ्यः ओषधिनिष्पत्त्यर्थं च कामम् अपेक्षितं भोगं धुक्ष्व संपादय ॥

ऋतं च मे० य० सं० अ० १८ मं० ६ । ऋतं यज्ञादिकर्म, अमृतं तत्फलभूतं स्वर्गादि, यक्ष्मणोऽभावोऽयक्ष्मम् धातुक्षयादिरोगाभावः, अनामयत् आमयति पीडयतीत्यामयत् न आमयत् अनामयत् सामान्यव्याध्यादिराहित्यम्, जीवातुर्व्याधिनाशकमौषधं, दीर्घायुत्वं दीर्घायुष्ट्वं ( पृषोदरादित्वात्सलोपः ), अमित्राणाम् अभावोऽनमित्रं शत्रुराहित्य, भयाभावोऽभयं भीतिराहित्य, शयनं संस्कृता शय्या, सूषाः शोभन उषाः स्नानसन्ध्यादियुक्तः प्रातःकालः, सुदिनं यज्ञदानाध्ययनादियुक्तं सर्वं दिनम्–एते मे यज्ञेन सिध्यन्तु ॥

तीव्रान् घोषान्० य० सं० अ० २९ मं० ४४ वृषाः अश्वाः पाणौ हस्ते येषान्ते वृषपाणयः अश्ववाराः तीव्रान् घोषान् जयजयेति शब्दान् कृण्वते कुर्वन्ति । अश्वा अपि रथेभिः रथैः सह वाजयन्तः गच्छन्तः सन्तः तीव्रान् घोषान् शब्दान् कुर्वन्ति, शत्रून् क्षिणन्ति नाशयन्ति च । कीदृशा अश्वाः—प्रपदैः पादाग्रैः खुरैः अमित्रान् रिपून् अवक्रामन्तः आक्रामन्तः, अनपव्ययन्तः अनश्यन्तः समर्थाः ॥

आब्रह्मन्० व्याख्यातः ।

रंधिर्योधा जिष्णू रथेष्ठाः । सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलवत्यो न ऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥१४॥ ॐदीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥ १५ ॥ ॐसहस्रस्य प्रमाऽसि सहस्रस्य प्रतिमाऽसि सहस्रस्योन्माऽसि साहस्रोऽसि सहस्राय त्वा ॥ १६ ॥ ॐपुनस्त्वाऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वं तन्वँ वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥१७॥ ॐयुव-

---

दीर्घायुस्तऽओषधे० य० सं० अ १२ मं० १०० हे ओषध ते तव खनिता खननकर्ता दीर्घायुः, भूयादिति शेषः । यस्मै च आतुराय नराय अहं त्वा त्वां खनामि सोऽपि दीर्घायुरस्तु । अथो-अपि च त्वं दीर्घायुः अखण्डितजीवना भूत्वा शतवल्शा बह्वङ्कुरा सती विरोहतात्—विरोह-बह्वङ्कुरा उत्पद्यस्व । वल्शशब्दोऽङ्कुरवाची ॥

सहस्रस्य प्रमा० य० सं० अ० १५ मं० ६५ । हे अग्ने सहस्रस्य इष्टकानां प्रमा प्रमाणं त्वमसि । सहस्रस्य प्रतिमा प्रतिनिधिरसि सहस्रस्य उन्मा उन्मानं तुला असि । साहस्रः सहस्रार्होऽसि यतः अतः सहस्राय अनन्तफलाप्त्यै त्वा त्वां प्रार्थये इति शेषः॥

पुनस्त्वाऽऽदित्याः० य० सं० अ० १२ मं० ४४ । हे अग्ने आदित्याः रुद्राः वसवश्च त्वा त्वां पुनः समिन्धताम् दीपयन्तु । हे वसुनीथ-वसु धनं तन्निमित्ता नीथा स्तुतिर्यस्य, अथवा वसूनि नयतीति वसुनीथः तत्सम्बुद्धौ हे धननेतः—ब्रह्माणः ब्राह्मणा ऋत्विग्यजमानाः यज्ञैः यज्ञान् कृत्वा त्वां पुनः समिन्धताम्, त्वञ्च तन्वं स्वशरीरं घृतेन अस्मद्दत्तेन वर्धयस्व । त्वयि वृद्धे सति यजमानस्य कामाः सत्याः सन्तु ॥

युवꣳसुराम० य० सं० अ० १० मं० ३३ । हे अश्विना—अश्विनौ युवम्-युवां कर्मसु निमित्तेषु इन्द्रम् आवतम्

५ सुराममश्विना नमुचावासुरे सचा ॥ विपि- पाना शुभस्पती ऽइन्द्रं कर्मस्वावतम् ॥१८॥ ॐपुत्रमि- व पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः । य- त्सुरामँव्यपिबः शचीभिः सरस्वती त्वा मघवन्नभि- ष्णक् ॥ १९ ॥

ऋग्वशाखीयौ—ॐशतं जीव शरदो वर्द्धमानः

---

अपालयतम् । स्वकर्मक्षममकुरुतमित्यर्थः । किम्भूतौ युवाम्—असुर एवासुरस्तस्मिन् नमुचौ नमुचिसञ्ज्ञके दैत्ये स्थितं, सुरामं सुष्ठु रमयतीति सुरामम् सुष्ठु रमणीयं सोमं, सचा-सह एकीभूय विपिपाना-विपिपानौ विविधं पिबन्तौ (विकरणव्यत्ययः छान्दसः), पुनः कीदृशौ, शुभस्पती-शुभः शोभनस्य कर्मणः पती पालकौ ( षष्ठ्याः पतिपुत्रेत्यादिना विसर्गस्य सकारः ) अत्रार्थे इतिहासो महीधरभाष्ये द्रष्टव्यः ॥

पुत्रमिव पितरा० यसं० अ० १० मं० ३४ । हे इन्द्र, उभा अश्विना-उभौ अश्विनौ त्वाम् आवथुः ( अवतेर्लिटि मध्यमद्विवचनम् पुरुषव्यत्ययः ) पालितवन्तौ । कैः, काव्यैः-कवीनां मन्त्रद्रष्टॄणां सम्बन्धिभिः मन्त्रैः, तथा दंसनाभिः दंससः कर्मणः करणैः ( दंसशब्दात् णिजन्ताद्युच् )। दृष्टान्तमाह-पुत्रमिव पितरौ । यथा मातापितरौ पुत्रं पालयतः तथा अश्विनौ त्वाम् आवथुः । अश्विनाविन्द्रस्य रक्षणं कृतवन्त इति कथम् अवगम्यते, तत्राह यदिति। यद् यस्मात् कारणात् हे इन्द्र त्वं शचीभिः-कर्मभिः नमुचिवधादिकर्म कृत्वेत्यर्थः, सुरामं सुष्ठु रमणीयं सोमं व्यपिब- पीतवानसि । हे मघवन् धनवन् इन्द्र यस्माच्च सरस्वती देवी त्वा त्वाम् अभिष्णक् उपसेवते। रक्षत्कृतसोमपानेन सरस्वतीकृतत्वत्सेवनेन च अश्विनौ त्वाम् आवथुरिति ज्ञायते इत्यर्थः । ( भिष्णज् उपसेवायां कण्ड्वादौ पठिता- ल्लङि प्राप्तस्य यको व्यत्ययेन लुकि हल्ङ्यादिलोपेऽडागमे च रूपम् )॥

शतञ्जीव० ऋ० सं०अष्टक०८ अ०८ वर्ग०२० मं० १ । हे यक्ष्मादि- विमुक्त वर्द्धमानः अहरहः अभिवृद्धिं प्राप्नुवन् त्वं शतं शरदः

शतं हेमन्ताञ्छतमु वसन्तान् ॥ शतमिन्द्राग्नी संविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः॥१॥ ॐआहार्षं त्वा ऽविदं त्वा पुनरागाः पुनर्नव ॥ सर्वाङ्ग सर्वं ते चक्षु सर्वमायुश्च ते ऽविदम् ॥ २ ॥

मन्त्रार्थाः सफला सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ चिरजीवी शतायुर्भव इति ।

स्त्रीणां तु विशेषः—ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥ आयुष्मती पुत्रवती धनवती सौभाग्यवती भव इति ।

इत्याशिषो गृहीत्वा, अग्निं देवांश्च प्रदक्षिणीकृत्य—यान्तु देवगणाः सर्वे पूजामादाय मामिकाम् । इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ इति देवान्विसृज्य—

---

शतसङ्ख्याकान् शरदृतून् जीव प्राणान् धारय । (अत्यन्तसंयोगे द्वितीया) । शतं हेमन्तर्तूंश्च जीव,शतं वसन्तांश्च । उशब्दः समुच्चये । अपि च इन्द्राग्नी—इन्द्रश्चाग्निश्च सविता—प्रेरको देवश्च, बृहस्पतिः—बृहतां देवानां पालयिता देवश्च शतायुषा—शतसंवत्सरपरिमितस्यायुषः हेतुभूतेन हविषा तर्प्यमाणाः सन्तः इमं जनं पुनः दुः पुनरस्मभ्यं प्रादुः । (अडभावः छान्दसः) ॥

आहार्षं० ऋ० सं० अष्ट०८ अ०८ वर्ग० २० मं० २ । हे व्याधिगृहीत त्वा—त्वाम् अविदम्—अलप्सि, त्वा—त्वाम् आहार्षम्—रोगादनैषम् । हे पुनर्नव—पुनः अभिनवः यथा स्यात् तथा उत्पन्न पुनरागाः—पुनरस्मत्समीपमागच्छ । हे सर्वाङ्ग—सर्वैरविकलैरङ्गैरुपेत ते—तव सर्वं चक्षुः—उपलक्षणत्वादिन्द्रियवर्गं सकलम् अविदं—लब्धवान् अस्मि । ते—तव आयुः—जीवनं च सर्वं—सम्पूर्णम् अविदम् ॥

श्रीश्च ते लक्ष्मीश्च० य० सं० अ० ३१ मं० २२ व्याख्यातं ॥

गच्छगच्छ सुरश्रेष्ठ स्वस्थाने त्वं सुरेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ भोभो वह्ने महाशक्ते सर्वकर्मप्रसाधक । कर्मान्तरेऽपि संप्राप्ते सांनिध्यं कुरु सादरम् ॥ इत्यनेन, यज्ञ यज्ञं गच्छेत्यादिना च (१८३) अग्निं विसृज्य, यस्य स्मृत्या च नामोक्त्या० प्रमादात्कुर्वतां० कायेन वाचा० चतुर्भिश्च० ब्रह्मार्पणम्० इति चोक्त्वा, मया यत् ग्रहयागकर्म यथाकालं यथादेशं यथाज्ञानं यथाशक्ति च कृतं तेन श्रीपरमेश्वरः प्रीयताम् ॐतत्सत् ब्रह्मार्पणमस्तु (कृष्णार्पणमस्तु) इति कुशजलाक्षतप्रक्षेपेण कर्म ब्रह्मार्पणं कुर्यात् । ततः सर्वान् आचार्यादीन् अञ्जलिं बध्वा प्रार्थयेत-"मया इदं ग्रहयागकर्म विधिहीनं कालहीनं देशहीनं भक्तिहीनं श्रद्धाहीनं शक्तिहीनं च यत् कृतं तत् श्रीमहाविष्णोः प्रसादात् भवतां ब्राह्मणानां वचनाच्च सर्वं परिपूर्णमच्छिद्रं चास्तु" इति । ततः संपूर्णमच्छिद्रं चास्त्विति आचार्यादयः सर्वे वदेयुः । अस्मिन्नवसरे मन्त्राशिषां ग्रहणमिति रुद्रकल्पद्रुमः । ततस्तान् परितोष्य ब्राह्मणान् भोजयित्वा दीनानाथांश्चान्नादिना सन्तोष्य स्वयं सुहृदादिभिः सह हविष्यं भुञ्जीत ॥

इति ग्रहयागप्रयोगः । शम् ।

---

अथ संक्षेपेण प्रतिज्ञासूत्रं व्याख्यायते–

**अथ प्रतिज्ञा** ॥ १ ॥ अथ–श्रौतस्मार्तसूत्रकथनानन्तरं प्रातिशाख्यसूत्रकथनानन्तरञ्च प्रतिज्ञा–व्यवहारजन्यज्ञानविषयोऽर्थः, विधास्यते इति शेषः । स्वरसंस्कारयोश्छन्दसि नियमात्तज्ज्ञानार्थं लक्षणमाह–

**मन्त्रब्राह्मणयोर्वेदनामधेयम्** ॥ २ ॥ मन्त्रश्च इषेत्वादिः । ब्राह्मणं च व्रतमुपैष्यन्नित्यादि । तयोर्वेदसंज्ञेत्यर्थः ।

**तस्मिञ् शुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया** ॥ ३ ॥ 'तस्मिन्' एतावन्मात्रोक्तौ अन्यशाखायामतिप्रसङ्गः स्यादत आह *शुक्ले इत्यादि । कृष्णयजुषो व्यावृत्त्यर्थं शुक्लग्रहणम् । यजुर्वेदोक्तानामृचामपि वक्ष्यमाणस्वरसंस्कारसिद्ध्यर्थमाम्नायपदोपादानम् । अन्यथा यजुर्लक्षणाक्रान्तानाम् नियतपरिमाणानामेव इषेत्वादिमन्त्राणां ग्रहणं स्यात्, न तु पादसम्बद्धानामग्निर्मूर्धेत्यादीनाम् । कण्वशाखाव्यावृत्त्यर्थमाह—

*माध्यन्दिनीयके इति । कण्वशाखा हि न माध्यन्दिनप्रोक्तेति न तत्रातिप्रसङ्गः । "ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ" इत्यनेन ब्राह्मणे विशेषरूपेण स्वरस्य वक्ष्यमाणत्वात् *मन्त्रे इति । स्वरप्रक्रिया—स्वराणामुदात्तादीनां प्रक्रिया प्रयोगः, कथ्यते इति शेषः ।

" उच्चैरुदात्तः " इत्यादिभिर्लक्षणोक्तौ "हस्तेन ते" इत्यनेन प्रदर्शनोक्तावपि हृदयाद्यङ्गविशेषे स्वरप्रदर्शनार्थं पुनरारम्भः ।

स्थानस्याभ्यर्हितत्वेन अनुदात्ताधिकरणं पूर्वमाह–

**हृद्यनुदात्तः** ॥ ४ ॥ सामीप्ये सप्तमी । हृदयसमीपे

हस्तेनानुदात्तः प्रदर्शनीयः । अनुदात्तोच्चारणवेलायां हृदयसमीपे हस्तस्थापनं कर्तव्यम् इति यावत् । यद्यपि प्रातिशाख्ये "हस्तेन ते" इति सामान्येनोक्तं तथापि स दक्षिण एव ग्राह्यः । " दिशायनुक्तौ प्राची स्यात्तथा हस्तस्तु दक्षिणः" इति परिभाषणात् ।

मूर्ध्न्युदात्तः ॥ ५ ॥ मूर्ध्नि मुखप्रदेशे उदात्तः प्रदर्शनीयः । मुखस्यापि मस्तकावयवत्वप्रसिद्धेः । निष्कृष्टार्थः पूर्ववत् ।

श्रुतिमूले स्वरितः ॥ ६ ॥ दक्षिणकर्णमूले स्वरितः प्रदर्शनीय इत्यर्थः । क्रमेणैषामुदाहरणानि--वायवस्थेत्यत्र पूर्ववकारोत्तराकारोऽनुदात्तः, यकारोत्तराकार उदात्तः, उत्तरवकारोत्तराकारः स्वरितः ।

एवं जात्यादयो ऽभिहिताः ॥ ७ ॥ यथा प्रचयस्य स्वरितभेदस्य प्रातिशाख्येऽभिधानम् एवं जात्यादयोऽपि स्वरितभेदास्तत्रैवाभिहिताः उक्ताः, अतोऽत्र नोच्यन्ते इति भावः ।

ब्राह्मणेतूदात्तानुदात्तौ भाषिकस्वारौ ॥ ८ ॥ ब्राह्मणे पूर्वोक्ते व्रतमुपैष्यमित्यादिभागे तु उदात्तानुदात्तौ भाषिकलक्षणलक्षितौ-स्वरावेव स्वारौ स्वार्थे अण्, तेन स्वरितस्य व्यावृत्तिः-हृदि मूर्ध्नि च भवत इति अनुवृत्त्या लभ्यते ।

तानस्वराणि च्छन्दोवत्सूत्राणि ॥ ९ ॥ सूत्राणि-कल्पाः "अथातोऽधिकार" इत्यादयः । शूद्रप्रादिकान्यायेन अन्यान्यपि शिक्षादीनि वेदाङ्गानि छन्दोवत् छन्दसा तुल्यानि, भवन्ति स्वरसंस्कारनियमे इति शेषः । उदात्तादिस्वरवापनार्थं *तानस्वराणीति । तान एकश्रुतिः स्वरो येषां तानि । तथा च तत्र नोदात्तादिप्रवृत्तिरिति भावः । कं० ॥ १ ॥

अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य, संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणम् ॥१॥

अथ–स्वरनिरूपणानन्तरम्, संस्कारप्रक्रिया उच्यते इति शेषः। अन्तस्थानां–यरलवानाम् आद्यस्य–यकारस्य पदादौ विद्यमानस्य–जकारोच्चारणम् इत्युत्तरेणान्वयः,कर्तव्यमिति शेषः। यथा"युञ्जानः प्रथमम्"इत्यादौ। पदादिस्थस्येत्युक्त्या धिय इत्यादौ नातिप्रसङ्गः। तस्माद्यज्ञादित्यादावतिप्रसङ्गवारणायाह–*अन्ये-इति। अन्येन हला असंयुक्तस्य संयोगमप्राप्तस्येत्यर्थः। घृताचीर्यन्तु हर्यतेत्यादौ पदादिस्थत्वाभावाज्जकारोच्चारणं न स्यादतस्तत् पुनर्विशिनष्टि *संयुक्तस्यापीति। रेफो रकारः, ऊष्मणामन्त्यो हकारः ताभ्यां युक्तस्यापि जकारोच्चारणम्। तथा च पूर्वोदाहरणेऽपि तत्सिद्धिः। अत्रापि "अविशेषेण आदिमध्यावसानेषु" इति सम्बद्ध्यते। तेन–घृताचीर्यन्तु हर्यत, सूर्ये वडा इत्यादिषु सर्वत्र जकारोच्चारणं भवति। कृणुह्यध्वरं, गेह्यायच, मह्यंवेदोभूया इत्यादीनि हकारयोगोदाहरणानि ज्ञेयानि। अन्यहलसंयुक्तस्येति काकाक्षिगोलकन्यायेन अत्रापि सम्बध्यते। तेन अग्निर्ज्योतिरित्यादौ नातिप्रसङ्गः। ऋकारेण संयुक्तस्यापि जकारोच्चारणमविशेषेण। अत्र अन्यहलसंयुक्तस्येति न सम्बध्यते, रेफोष्मान्त्याभ्यां पृथक्पाठसामर्थ्यात्। तेन सदोऽस्यृतस्येत्यत्र सकारयोगेऽपि जकारोच्चारणं सिद्ध्यति।

द्विर्भावेऽप्येवम् ॥ २ ॥ यय्या इत्यादौ जकारोच्चारणसिद्धये इदम्।

अथापरान्तस्थस्यायुक्तान्यहलः संयुक्तस्योष्मऋकारैकारसहितोच्चारणम् ॥ ३ ॥

अथ—आद्यान्तस्थादेशकथनानन्तरम् अपरान्तस्थस्य—रेफस्य,अयुक्तः योगमप्राप्तः अन्यद्धल् यस्मिन् तादृशस्य,ऊष्मभिः ऋकारेण वा युक्तस्य एकारसहितोच्चारणं, कर्तव्यमिति शेषः पूर्ववत् । यथा दर्शतमित्यत्र दरेशतमिति पाठः, न तु रेफमात्रघटितः । एवं वर्षो, वर्षीयसि, बर्हिरासि, इत्यादावपि बोध्यम् । वर्ष्यायच, यज्ञपतिर्ह्वार्षीत्, इत्यादावन्यहलः यकारस्य वकारस्य वा संयोगात्र एकारसहितोच्चारणम् ।

एवं तृतीयान्तस्थस्य क्वचित् ॥ ४ ॥ तृतीयान्तस्थस्य लकारस्यापि क्वचिल्लक्ष्यानुरोधेन एकारसहितोच्चारणम् । यथा—"शतवल्शाविरोहतात्" इत्यादौ "शतवलेशा"इति पाठः ॥

ऋकारस्य तु संयुक्तासंयुक्तस्याविशेषेण सर्वत्रैवम् ॥ ५ ॥ एकारसहितोच्चारणादेशप्रसङ्गादिदम् । संयुक्तासंयुक्तस्य अविशेषेण सर्वत्र—आदिमध्यावसानेषु एकारसहितोच्चारणम् । ऋतावाद्, सृज मशस्त, कृणुहि, सामान्यृग्भिरित्यादीन्युदाहरणानि बोध्यानि ॥

अथान्त्यस्यान्तस्थानां पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणम् ॥ ६ ॥

अथ-तृतीयान्तस्थादेशकथनानन्तरम् अन्तस्थानामन्त्यस्य—वकारस्य त्रिविधं—त्रिप्रकारं गुरुमध्यमलघुवृत्तिभिरुच्चारणं कर्तव्यमित्युच्यते । एतच्च पदादिक्रमेण ज्ञेयम् । तदुक्तमन्यत्र—वकारास्त्रिविधो ज्ञेयो गुरुर्लघुर्लघुतरः । आदिर्गुरुर्लघुर्मध्ये पदान्ते च लघुतरः ॥ इति । यथा—वायवस्थ, सविता, देवः, इत्यादि ॥

अथो मूर्धन्योष्मणोऽसंयुक्तस्य द्रुस्वते संयुक्तस्य च खकारोच्चारणम् ॥ ७ ॥

अथो—अन्तस्थादेशकथनानन्तरम् मूर्धन्योष्मणः—षकारस्य असंयुक्तस्य, टुं टवर्गयोगं विना संयुक्तस्य च खकारोच्चारणं कर्तव्यमित्युपदिश्यते । यथा—सहस्रशीर्षा पुरुषः, विभर्ष्यस्तवे, शष्प्यायचेत्यादौ । टवर्गयोगे मत्युष्टम्,कृष्णोऽसि, श्रेष्ठतमायेत्यादौ तु न भवति ।

अध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या ॥ ८ ॥ एते पूर्वोक्ताः स्वराः संस्काराश्च अध्ययनादिकर्मस्वेवेति नियम्यते । अध्यनादीति आदिना यजनयाजनाध्यापनादिपरिग्रहः। मन्त्रार्थवेलायान्तु प्रकृत्या प्रकृतिरूपेणैवोच्चारणम् । कं० ॥ २ ॥

अथानुस्वारस्य ँ इत्यादेशः शषसहरेफेषु, तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैः, दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः,परसवर्णेषत्प्रकृत्याचान्यत्र॥१॥अथ-ऊष्मादेशोपदेशानन्तरं शषसहरेफेषु वर्णेषु परेषु अनुस्वारस्य स्थाने ँ इत्यादेशः । तस्य ँकारस्य त्रैविध्यं ह्रस्वदीर्घगुरुभेदैः। ह्रस्वात्–एकमात्रिकात्परो दीर्घो, दीर्घाद्–द्विमात्रिकात्परो ह्रस्वः, गुरौ–संयुक्ताक्षरे परे गुरुर्बोध्यः । यद्यपि दीर्घोऽपि गुरुर्भवति तथापि संयोगे परे ह्रस्वस्यापि गुरुसंज्ञाविधानात् ह्रस्वात्परस्यापि संयोगे परे गुरुत्वविधानात्ततो विशेषः । यथा—त्रिंशद्धामेत्यादौ ह्रस्वात्परो दीर्घः, पृथिव्याँशतेन पार्शैरित्यादौ दीर्घात्परो ह्रस्वः, कल्पन्ताँश्रोत्रम्, सोमानँस्वरणम् इत्यादौ संयोगे परे ह्रस्वादीर्घाच्च परो गुरुः ।

अन्यत्र शषसहरेफपरत्वाभावे परा अनुस्वारात्परा तत्सवर्णा या ईषत्प्रकृतिः तथा उच्चारणम् । अर्थात् परत्र विद्यमानवर्णवर्गीयपञ्चमवर्णसदृशमुच्चारणं कर्तव्यमिति फलति ॥

# प्रसिद्धिपत्र ।

संस्कारदीपक का प्रथम भाग समाप्त होगया । इस भाग का मूल्य १।) नियत किया गया है । २५ या इस से अधिक पुस्तक एक साथ जो लेंगे उन को १) रु० में एक पुस्तक मिलेगा । डांक खर्चे सभों को पृथक् देना पडेगा । अतः पर विजया दशमी से ( आश्विन शु० १० भौमवार स० १९७१ ) सपूर्ण संस्कारदीपक का अग्रिम मूल्य ४) रु० लिया जावेगा । शम् ।

पुस्तकप्राप्तिस्थान चौखम्या विद्याविलास प्रेस या पर्वतीयनित्यानन्द पन्त, दुर्गाघाट काशी ।

निवेदक
गोपीवल्लभपन्त
दूधविनायक काशी ।

# संस्कारदीपकस्य द्वितीयो भागः ।

विवाहगर्भाधानादिकेशान्तान्तसंस्कार-
निरूपणात्मकः ।

पन्तोपनामक–नित्यानन्दपर्वतीयेन
विरचितः शोधितश्च ।

तेनैव काश्यां विद्याविलासयन्त्रे मुद्रितः ।
संवत् १९७४

---

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
*Benares*

---



1917

# संस्कारदीपकः।

साङ्गसोपस्कर-

विवाहगर्भाधानादिकेशान्तान्तसंस्कार-
निरूपणात्मकः।

पन्तोपनामक-नित्यानन्दपर्वतीयेन
विरचितः शोधितश्च।

तेनैव काश्यां,विद्याविलासयन्त्रे मुद्रितः।
संवत् १९७४

*Printed by Jai Krishna Das Gupta,
at the Vidya Vilas Press,
Benares*



1917.

## प्रथमभागस्य शुद्धिपत्रम् ।

| पृष्ठम्. | पङ्क्ति. | अशुद्धं | शुद्धम् . |
|---|---|---|---|
| २९ | १२ | भागग्रं कुशै | भागग्रकुशै |
| ५२ | ७ | प्रायश्चित्ते विधिश्चैव पाकयज्ञेषु साहसः । | |

अनन्तरं देवानां हव्यवाहश्च पितॄणां कव्यवाहनः ॥

इति कारिकाऽपेक्षिता ।

| पृष्ठम्. | पङ्क्ति. | अशुद्धं | शुद्धम् . |
|---|---|---|---|
| १०८ | १९ | 'पत्युरिति शेषः' | इत्यनपेक्षितम् |
| ,, | २१ | क्षिपेत्यस्याग्रे | 'प्रेरयेत्यर्थः' इत्यपेक्षितम् । |
| १२७ | ३ | स तस्य | सतश्च |
| १७० | १६ | वरुणमदितिम्, अग्निं | वरुणं, |
| १७६ | ३-४ | शुनःशेफ | वामदेव |
| ,, | ६ | वरुणँ स्ये | वरुण ये |
| १७७ | ३ | देवेता | देवता |
| ,, | ६ | वरुणायादित्याय | वरुणाय |
| १९५ | ११ | अद्युत्तरस्मिन् | अध्युत्तरस्मिन् |
| ,, | २० | मूर्भुवः | भूर्भुवः |
| १९७ | २५ | स्थापयेदित्यस्याग्रे | 'उदकस्पर्शः'इत्यपेक्षितम् |
| २०० | १३ | यां वां | या वां |
| २२१ | ४ | प्रजापये | प्रजापते |
| २४९ | ८ | पुनस्त्वा | पुनस्त्वा |

## द्वितीयभागस्य शुद्धिपत्रम् ।

| पृष्ठम्. | पङ्क्ति. | अशुद्धं | शुद्धम् . |
|---|---|---|---|
| ८ | १८ | वच्छश्रैक्ये | वच्छिश्रैक्ये |
| ३९ | २० | स्त्रीइत्यस्याग्रे | (श०कां० ८।४।४।११) अत्रत्या टिप्पणी नापेक्षिता। |
| ४० | ११ | वृद्धानां वचनं | ग्रामवचनं |
| ,, | १२ | च वृद्धानां | च ग्रामस्य वृद्धानां |

| पृष्ठम्. | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ४९ | २० | गाथिनः | गाथिनी |
| ,, | २१ | ऽन्यो | ऽस्यन्यो |
| ५० | २० | पीवरि | पीवरीं* |
| ७२ | १ | अशानीति | अश्नानीति |
| ,, | ६ | अशानि | अश्नानि |
| ८५ | १८ | चत्वारिंशकम् | चत्वारिंश्शकम् |
| ९० | २० | स्तवर्गेण | स्तरवर्गेण |
| १४१ | २३ | स्वरुणं | स्वरुण |
| १४५ | ४ | आपोऽप्सरस | आपोऽअप्सरस |
| १७६ | ७ | स्वरुणं | स्वरुण |
| २०८ | २५ | फलानी | फलिनी |
| २३८ | १७ | यक्षर | न्त्याक्षर |
| ,, | १८ | प्रत्ययान्तमदीर्घ | प्रत्ययान्तं दीर्घ- |
| २५९ | १३ | ह्यनभिशस्तिपा | ऽस्यनभिशस्तिपा |
| ,, | १९ | स्वरुणं | स्वरुण |
| २६० | ४ | ॐअग्नये प्रजापतये | ॐप्रजापतये |
| ,, | ५ | इदमग्नये प्रजापतये | इदं प्रजापतये |
| २८९ | ५ | स्वरुणं | स्वरुण |
| ३०४ | १८ | ह्यनभिशस्तिपा | ऽस्यनभिशस्तिपा |
| ,, | २३ | स्वरुणं | स्वरुण |
| ३१२ | २२ | जन्यो | राजन्यो |
| ३१७ | १९ | ह्यनभि | ऽस्यनभि |
| ३१८ | ४ | स्वरुणं | स्वरुण |
| ३२७ | ४ | ह्यनभि | ऽस्यनभि |
| ३२७ | ९ | स्वरुणं | स्वरुण |

* हे पीवरि ईम् इति च्छेदः । 'ईम्' इति निपातोऽनर्थकः ।

श्रीगणेशाय नमः ।

# संस्कारदीपकस्य द्वितीयो भागः ।

---

गणेशपूजादिग्रहयागान्तपूर्वाङ्गाणि निरूप्य, तत्प्रयोगांश्च सम्यक् प्रदर्श्य, अधुना संस्कारनिरूपणमारभ्यते ।

तत्र संस्कारो नाम आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्यो ऽतिशयविशेषः । गर्भाधानादौ संस्कारपदं च लाक्षणिकम् ।

स च द्विविधः । एकस्तावत्–कर्मान्तराधिकारे ऽनुकूलः । यथा उपनयनजन्यो वेदाध्ययनाधिकारापादकः । अपरस्तु उत्पन्नदुरितमात्रनाशकः, यथा बीजगर्भसमुद्भवैनोनिबर्हणो जातकर्मादिजन्यः ।

पुनश्च संस्कारो द्विविधः–ब्राह्मो दैवश्च । तथा च हारीतः–

"द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्च । गर्भाधानादिः स्मार्तो ब्राह्मः, पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवः" इति ।

सौम्याः सोमयागा अग्निष्टोमादयः । तत्र ब्राह्माः संस्काराः षोडश । तथा च जातूकर्ण्यः—

आधानपुंससीमन्तजातनामान्नचौलकाः ।
मौञ्जी व्रतानि गोदानसमावर्तविवाहकाः ॥
अन्त्यं चैतानि कर्माणि प्रोच्यन्ते षोडशैव तु ।
शूद्राणांश्चैव भवति विवाहश्चान्त्यकर्म च ॥ इति ।

अङ्गिरास्तु पूर्वोक्तानेव गर्भाधानादीन् षोडशसंस्कारा-

मुक्त्वा-आग्रयणम्, अष्टकाः, श्रावणीकर्म, आश्वयुजीकर्म, मत्यवरोहणम्, दर्शश्राद्धम्, वेदारम्भः, वेदोत्सर्जनम्, प्रत्यहं क्रियमाणाः पञ्च महायज्ञा इत्येवं नवान्यानुक्त्वा पञ्चविंशतिसंस्कारानाह । जातूकर्ण्यवचनोक्तगोदानान्त्यकर्मणी अनुक्त्वा तत्स्थाने बालिकर्मनिष्क्रमणे न्यवेशयत् ।

गौतमस्तु गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम्, चत्वारि वेदव्रतानि, स्नानम्, सहधर्मचारिणीसंयोगः, पञ्चानां यज्ञानामनुष्ठानम्, अष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः; अग्न्याधेयम्, अग्निहोत्रम्, दर्शपूर्णमासौ, चातुर्मास्यानि, आग्रयणेष्टिः, निरूढपशुबन्धः, सौत्रामणीति सप्त हविर्यज्ञसंस्थाः; अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्र आप्तोर्याम इति सप्त सोमयज्ञसंस्थाः इत्येते चत्वारिंशत्संस्कारा इति, अथाष्टावात्मगुणाः—दया सर्वभूतेषु, क्षान्तिरनसूया शौचमनायासः मङ्गलमकार्पण्यमस्पृहेति* आत्मगुणैः सह अष्टाचत्वारिंशत्संस्कारानाह ।

वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥

इति मन्वादिष्टेन 'दीक्षायां कुण्डली भवति' इतिश्रुतिविहितेन च कुण्डलधारणेन आक्षिप्तः कर्णवेधाख्यः संस्कार आवश्यको ऽपि न षोडशादिसंस्कारान्तर्गतः । तन्मध्ये तस्य पाठाभावात् ।

गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ इति—

मनुना सर्वेषां संस्काराणां पापक्षयरूपफलप्रतिपादना-

* एतेषां लक्षणानि गृह्यपरिशिष्टानि प्र०भा० १३८ पत्रे प्रदर्शितानि ।

यद्यपि काम्यत्वं प्रतीयते तथाऽपि विवाहो नित्योऽपि। आवश्यकप्रजोत्पादनार्थत्वात्। आवश्यकत्वं च प्रजायाः "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः"इति तैत्तिरीयशाखायां श्रूयते। "तस्मात्सर्वप्रयत्नेन कर्तव्यो दारसङ्ग्रहः" इतिवचनाच।

उपनयनमपि नित्यम्। "पतितसावित्रीकेषु उपपातकम्" इत्यादिबहुनिन्दाश्रवणात्।

चूडाकर्मापि नित्यम्। आवश्यकशिखाधारणार्थत्वात्।

नामकरणमपि नित्यम्। आवश्यककर्मार्थत्वात्। अत एव यथोचितकाले ऽकृतचूडानामकरणयोरुपनयनाव्यवहितपूर्वकाले शिष्टानामनुष्ठानं न तु गर्भाधानादीनामिति शुभकर्मनिर्णये मुरारिमिश्रः।

याज्ञवल्क्यः—

ब्रह्मक्षत्रविशः शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः॥
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः। इति।

उपनयनभिन्नसंस्कारानुवृत्तौ यमः—

शूद्रो ऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।
न केनचित्समसृजच्छन्दसा तं प्रजापतिः॥

केनचिच्छन्दसेत्यन्वयः। उपनयनं शूद्रस्यामन्त्रकमपि निषिद्धम्। अशूद्राणामपर्युदसितानामित्यापस्तम्बीयपर्युदासात्।

याज्ञवल्क्यः—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः।
तूष्णीम्—मन्त्रशून्यम्। एताः क्रियाः—निषेकादिक्रियाः

मनुः—

वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थो ऽग्निपरिक्रिया ॥

औपनायनिकः–उपनयनकार्यकारी । स्त्रीणामुपनयनस्थाने विवाह एव । गुरुशुश्रूषणस्थाने पतिसेवा । अग्निपरिचरणस्थाने गृहकार्यम् । अतः स्त्रीशूद्रयोर्विवाह एव वरः, उपनयनस्थाने विधानात् । "विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा" इत्यत्र संस्कारमित्यभिधानाच्च ।

वाचस्पतिमिश्रादयस्तु त्रैवर्णिकपुरुषस्याप्याद्यो विवाहःसंस्कार एवेत्याहुः ।

केचित्तु त्रैवर्णिकस्योपनयनान्त एव संस्कारो न्यायात् । "अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् । पिता कुर्यात्" इत्याद्यवधृतश्रवणाच्च । न तु विवाहोऽपि वचनाभावात्, न्यायविरोधाच्च । "स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु । पिण्डानोद्वाहनात्तेषाम्" इत्यत्रोद्वाहनपदसार्थकत्वानुरोधाच्च । अन्यथा सुतसंस्कारकर्मत्वेनैव तस्यापि सङ्ग्रहे तदुपादानस्य व्यर्थत्वापत्तेः । अत एव स्त्रीणामेव पुनर्विवाहो निन्दितो न पुंसाम् । तासां विवाहकर्मत्वेन तत्संस्कार्यत्वात् । ननु अन्नप्राशने पुमान् कर्तैव, अतः कथं तत्र न न्यायविरोध इति चेन्न । तत्रापि प्रेरणात्मकस्य प्राशनस्यान्यकर्तृकस्य संस्कारत्वादित्याहुः ।

प्रथमविवाहेनैव स्त्रीषु संस्कारे उत्पन्ने संस्कारवति पुनः सजातीयसंस्कारानुपपत्त्या स्त्रीणां पुनर्विवाहस्य असंगतत्वं निन्दितत्वं निषिद्धत्वं चान्यत्र स्पष्टम् ।

यद्यपि षोडशसंस्काराणां मध्ये गर्भाधानस्यैव प्राधान्यं बहुषु वाक्येषु श्रूयते तथाऽपि दारपरिग्रहं विना गर्भा-

धानादेरशक्यत्वात् गृह्यस्थालीपाकानां च असंभवात् पारस्करेण विवाह एव पूर्वमुपदिष्ट इति स एवादौ निरूप्यते।

तत्र तावत् "वहनं वाहः विशिष्टो वाहो विवाहः" इतिव्युत्पत्त्या निष्पन्नस्य विवाहशब्दस्य विशिष्टवहनार्थत्वं सिध्यति। वैशिष्ट्यं च प्रतिग्रहाद्यन्यतमोपायेन स्वीकृतायां होमादिसप्तपदगमनान्तकर्मभिः संस्कृतत्वम्। तथाच स्वीकृता ऽपि असंस्कृता, संस्कृता ऽप्यस्वीकृता वा भार्या न भवतीति निर्धीयते, विशिष्टस्य विवाहपदार्थत्वात्।

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता।

इतियाज्ञवल्क्यवचनस्य "ब्राह्माभिधानो विवाहो यस्मिन्ग्रहणे आहूय यथाशक्त्यलङ्कृता वराय कन्या दीयते" इत्यर्थः।

आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः।

इति मन्वादिवचने ऽपि दानपदं दीयते यस्मै ग्रहणायेति सम्प्रदानार्थकल्युटा ग्रहणपरमेव नतु भावल्युडन्तम्। तथात्वे दातुरेव विवाहकर्तृत्वापत्तेः। स्वीकारपर एव विवाहशब्दइति गदाधरकृते उद्वाहवादे स्पष्टम्। ननु उद्वहेत द्विजो भार्यामित्यत्र द्वितीयया भार्याया एव संस्कार्यत्वाभिधानात्

नोदकेन विना चापि कन्यायाः पतिरुच्यते।

पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे॥

इति यमवाक्ये पत्यौ संस्कार्यत्वाभिधानमयुक्तम्, तस्य द्विज इत्यादिपदेन संस्कारकर्तृत्वप्रतीत्या एकस्य कर्तृकर्मभावविरोधेन संस्कारकर्मत्वायोगात्—इतिचेन्मैवम्। पतित्वस्य विवाहविधिभाव्यभार्यात्वनान्तरीयकत्वेन तद्बोधकपतित्वशब्दोपादानेऽपि बाधकाभावात्—इत्यादि विस्तरेण प्रपञ्चितं वीरमित्रोदयस्य संस्कारप्रकाशे।

कुलपरीक्षा च तत्रैवोक्ता तत एवावगन्तव्या ।

अथ गोत्रप्रवरविचारः ॥

तत्र "अगस्त्याष्टमसप्तर्षन्यतमापत्यं साक्षात्परम्पराजातं गोत्रम्" इति गोत्रलक्षणमाह मिश्रमिश्रः ।

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ।

इतिस्मृतिं च व्यलिखत् । गोत्रकारिणो गोत्रप्रवर्तकाः । तत्र गोत्रपदमपत्यसामान्यपरमेव न तु पौत्रप्रभृतिपरमेव । तथा-ग्रहणे ऽत्र मानाभावात् । वसिष्ठादिषु गोत्रव्यवहारः संसारस्यानादित्वात्पूर्वपूर्ववसिष्ठाद्यपत्यत्वेन मुख्यः, औपचारिको वा । केवलभृग्वङ्गिरोगणेषु वत्सगोत्रा वयं हारितगोत्रा वयमिति व्यवहारस्तु गोत्रभूतभृग्वङ्गिरोगणसादृश्यादेव । तेन केवलेषु तेषु अविवाहप्रयोजकं समानप्रवरत्वमेव । तत्र एकगणान्तःपातिषु सगोत्रत्वमेकगोत्रत्वरूपं, भिन्नगणान्तःपातिषु तु सदृशगोत्रत्वरूपं तदिति सङ्क्षेपः ।

प्रवरस्तु गोत्रव्यावर्तक ऋषिविशेष एव । दर्शपूर्णमासादिषु प्रव्रियमाणत्वाचस्य प्रवरसंज्ञा ।

असमानार्षगोत्रजामित्यत्र—

समानगोत्रत्वं समानप्रवरत्वञ्च पृथक् पृथग् विवाहनिषेधे-प्रयोजकम् । प्रत्येकं नञः सम्बन्धात् । असमानप्रवरैरित्यादि-वाक्यान्तरस्वारस्यात् ।

परिणीय सगोत्रां च समानप्रवरां तथा ।
त्यागं कृत्वा ततस्तस्यास्ततश्चान्द्रायणं चरेत् ॥

इति पृथक् प्रायश्चित्तदर्शनाच ।

समानप्रवरत्वं च संख्यासंज्ञयोः साम्याद्भवति । यत्र तु प्रवरनामसाम्ये ऽपि न संख्यातुल्यत्वं संख्यासाम्ये नामभेदो वा तत्राप्यसमानप्रवरतैव । तथैव श्रवणादिति मुरारिमिश्रः ।

अत्र श्राद्धरत्नावलीकारः—"तत्र बौधायनः—

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥

इत्यादिना इध्मवाहादशेत्यन्तेन गोत्राणि प्रवरांश्च सङ्क्षेपेण निर्दिश्य एतेषां वंशपरम्परया ऽवान्तरभेदेन बहुकुलानि जातानि तेषां क्वापि प्रदेशे गोत्रप्रवरैक्ये ऽपि स्थानभेदाद् गोत्रप्रवरयोः सङ्कोचं कृत्वा विवाहो भवति ।

यथाह चतुर्विंशतिमते—

यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।
नित्यं स व्यवहार्यः स्याद्वेदाश्चैवत्प्रतीयते ॥

तथैव भृगुः—

यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरे ऽपि वा ।
यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत् ॥

पुनश्चतुर्विंशतिमते—

यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां चैव सर्वेषां स सदाचार उच्यते ॥ इति ।

एवं सरयूपारिणां स्थानभेदेन विवाहे ऽपि न क्षतिः । एतर्हीनां संदृष्टीतश्लोको ऽपि सांप्रतिकानाम् ।

पिण्डी पिपासी सपरारचौरा
ग्रीवा धतूरा पिठरा कुठारा ।
राढीति वासीतिच मार्जनी च

पैरी भदोली किरमा मलोरा ॥ इत्यादि ।

एतत्स्थानस्थितानां तदुद्भवानां च प्रायशः सर्ववेदाध्ययनाभावे ऽपि भोजनादौ नियमाद् ब्राह्मण्यं सुस्थमेवेति स्थापयाञ्चकार ।

अन्नदमाहृतम्—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।

इत्यादौ गोत्रशब्दो न अगस्त्याष्टमसप्तर्ष्यपत्यत्वरूपगोत्रत्वावच्छिन्नमात्रस्य वाचकः किन्तु ज्ञायमानैककुलोद्भवत्वविशिष्टतद्वाचकः । ततश्च यावदेककुलोद्भवत्वं ज्ञायते ऽभियुक्तोक्त्या तावच्छतपुरुषव्यवधाने ऽपि न विवाहसम्बन्धः । उक्तसगोत्रत्वात् । स्थानादिभेदे तु एककुलोद्भवत्वापरिज्ञानान्नोक्तसगोत्रत्वम् इति तत्र विवाहसम्बन्धकरणे न दोषः । समाचारात् ।

यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।

नित्यं स व्यवहार्यः स्याद्वेदाचैतत्प्रतीयते ॥ इति—

चतुर्विंशतिमतधृतवचनेन समाचारस्य विवाहादिसम्बन्धे प्रामाण्यबोधनात् । अत एव येषाम् अगस्त्याष्टमसप्तर्ष्यपत्यत्वरूपगोत्रत्वावच्छेदैक्ये एककुलोद्भवत्वापरिज्ञानेऽपि कन्यायाः परित्यागसमाचारस्तैस्तत्र सम्बन्धकरणे प्रायश्चित्तार्हं तैः । सदाचाराभावाद् ।

अत एव धर्मसिन्धौ "कौस्तुभे तु" इत्युपक्रम्य—

उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ।
पञ्चमीं तदभावे तु पितृपक्षे ऽप्ययं विधिः ॥
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च ।
एवमुद्वाहयेत् कन्यां न दोषः शाकटायनः ॥

तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्यो यमो ऽङ्गिराः ॥
यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।
नित्यं स व्यवहार्यः स्याद्विद्वाचैतत्प्रतीयते ॥

इत्यादिवचनानां चतुर्विंशतिमतषट्त्रिंशन्मतादिषु उपलभ्यमानत्वात् सापिण्ड्यसङ्कोचेन विवाहस्य बहुदेशेषु दर्शनाच्च येषां कुले देशे च अनुकूलत्वेन सापिण्ड्यसङ्कोचः परम्परया समागतस्तेषां सापिण्ड्यसङ्कोचेन विवाहो न दोषाय । स्वकुलदेशविरुद्धेन सापिण्ड्यसङ्कोचेन विवाहे दोषो भवत्येव । "अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात्" ।

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति ॥

इत्यादिवाक्यैः स्वकुलदेशाचाराविरुद्धस्यैव शास्त्रस्य विवाहे ऽनुसर्तव्यत्वात् ।

एवं मातुलकन्यापरिणयने ऽपि ।
मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

इत्यादिस्मृतीनां "तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव" इति मन्त्रलिङ्गैर्बाधाद्येषां कुले मातुलकन्यापरिणयः परम्पराप्राप्तस्तैः स कार्यः ।

गोत्रान्न मातुः सपिण्डाच्च विवाहो गोवधस्तथा ।

इति मातुलकन्याविवाहस्य कलिवर्ज्यत्ववचनमपि येषां कुले देशे मातुलकन्याविवाहो नास्ति तत्परम् । मातुलकन्यापरिणयनस्य अनेकश्रुतिस्मृतिसिद्धत्वात् । अत एव मातुलकन्योद्वाहिनां श्राद्धे निमन्त्रणनिषेधो ऽपि स्वकुलाचा

रादिविरोधेन सदुद्वाहादिपरः । उक्तविधसापिण्ड्यसङ्कोचेन विवाहं कुर्वतां शिष्टैः श्राद्धादौ भोजनाद्याचारात् इत्यादि "बहूपपादितम्"इत्यन्तेन सदाचारानुरोधेन सापिण्ड्यसङ्कोच उक्तः।

केचित्तु एकनाम्नां बहूनां लोके दर्शनाद् भारद्वाजादिगोत्रकारिणो मुनयो ऽपि भारद्वाजादिनामानो ऽनेके विद्यन्ते । ततश्चैकनामतया भिन्नस्थानवर्तिनां पाण्डेयादिकुलोद्भवानां सगोत्रत्वावभासे ऽपि प्रवरभेदाद्वस्तुतो न सगोत्रत्वम् । प्रवरभेदेन गोत्रभेदस्य कल्पनात् । अतएव प्रवरदर्पणे "अतएव नामैकत्वेऽपि गणभेदे प्रवरभेदे च ऋषीणां भेदात् भवत्येव विवाहः, लोके एकनाम्नामप्यनेकेषां पुंसां दर्शनादित्युक्तं प्रवरमञ्जर्याम्" इति कमलाकरः । यद्यपि केषांचित्प्रवरैक्यमप्यवभासते तथाऽपि तत्र प्रवराणां कचित्सङ्ख्याभेदः कचिच्च नामभेदो बोध्यः । तावताऽपि असमानप्रवरत्वस्य मुरारिमिश्रादिग्रन्थसम्मतत्वात् । येषां च प्रवरसङ्ख्यासाम्यं प्रवरनामसाम्यं च भिन्नकुलोद्भवानां दृश्यते तेषां पूर्वजानां प्रवरज्ञानांशे प्रमाद एव । प्रवरैक्ये गोत्रैक्ये च विवाहस्य निषिद्धत्वात् इत्याहुः ।

अन्ये तु–

असपिण्डा च या मातुरसगोत्रा च या पितुः ।

इत्यादिमन्वादिवाक्येषु गोत्रपदस्यागस्त्याष्टमसप्तर्ष्यपत्यत्वावच्छिन्नमात्रबोधकत्वे ऽपि 'परिणीय सगोत्रां च' इत्यादौ,

आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥

इत्यादौ च सगोत्रादिपदस्यैककुलोद्भवत्वादिविशिष्टसगो-

त्रादिबोधकत्वम् । समाचारानुरोधात् । अन्यत्र तु परित्यागे प्रशस्तत्वमपरित्यागे किञ्चिद्दोषावहत्वम् । नतु पातित्यप्रयोजकत्वम् । अत एव मनुवाक्ये 'सा प्रशस्ता द्विजातीनाम्'इत्युत्तरार्द्धे प्रशस्तपदोपादानम् । गोत्रपदं च कुले "सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तेत चतुर्दशे ॥ जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते" । इति मत्स्यपुराणेन ( नि. सि. ) परिभाषितम् । अत एव "त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः" । इत्यादौ बृहस्पत्यादिवाक्ये गोत्रपदेन कुलरूपार्थस्यैव ग्रहणम् इति न क्वचिदपि देशे भिन्नकुलोद्भवानां भारद्वाजादिगोत्रिणां कस्यचिन्मरणे स्नानसमाचारः । वस्तुतस्तु कात्यायनलौगाक्षिभ्यां मत्स्यपुराणे च एकैकं गणं निर्दिश्य 'एतेषामविवाहः' इत्युक्तेः भिन्नगणान्तःपातिनां विवाह इष्यते इति ध्वन्यते । अन्यथा सर्वानेव गणान् निर्दिश्य अन्ते बौधायन इव "एषां सर्वेषामविवाहः" इत्येवावक्ष्यन् । तस्मात् कात्यायनाद्यनुयायिनां माध्यन्दिनादीनां स्वस्वगणं हित्वा अन्यत्र संबन्धकरणे न दोषः । गणभेदपरिज्ञानं च प्रवरभेदात् । आत्रेयायन्यादीनाम् आङ्गिरसबार्हस्पत्यभारद्वाजेति त्रिप्रवराणां भरद्वाजापत्यानां, कात्यायनादीनाम् आङ्गिरसबार्हस्पत्यसैन्यगार्ग्येतिपञ्चप्रवराणां भरद्वाजानां च परस्परं विवाहसंम्बन्धो भवत्येव, त्रिप्रवरसाम्येऽपि संख्यासाम्याभावादिति पूर्वमेवोक्तम् । क्वचिच्च गणभेदः प्रवरभेदश्च स्थानभेदादेव कल्प्यः । यथा गोत्रभूतभारद्वाजर्ष्यपेक्षया प्रवरभूतभारद्वाजर्षिः अभेदे 'भारद्वाजगोत्रस्य त्रयः प्रवरा' इति पद्धत्याद्यनुपपत्त्या भिन्नत्वेन प्रवरदर्पणे कल्पितस्तद्वत् इत्याहुः । शेषमग्रे निरूपयिष्यते ।

## अथ सापिण्ड्यविचारः—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ इति-

याज्ञवल्क्यवचनेन विवाहे सपिण्डाया निषेधो गम्यते ।

तत्र सापिण्ड्यमेकशरीरावयवान्वयित्वरूपं विज्ञानेश्वरादिभिरुक्तम् । एकशरीरावयवान्वयित्वं च परम्परया अतिप्रसक्तं स्याद्, अतस्तदवधिं याज्ञवल्क्य आह-

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । इति ।

अत्र मातृतः पितृत इति पञ्चम्यन्तात्सार्वविभक्तिकस्तसिः । सन्ताने निवर्तत इति च शेषः । पञ्चमत्वसप्तमत्वयोरवध्याकाङ्क्षायां सन्तानमूलभूतः, स्वो वा अवधित्वेनान्वेति । तथा च मातृसंताने मूलपुरुषात् स्वस्माद्वा पञ्चमादूर्ध्वं सापिण्ड्यं निवर्तते, पितृसन्ताने च ततः सप्तमादूर्ध्वं निवर्तते इति वाक्यार्थः । योगार्थस्य उत्तरत्र संभवेऽपि रूढ्याश्रयणान्न तत्र सपिण्डशब्दप्रवृत्तिरिति भावः । मूलपुरुषात् षष्ठः मातृसन्ताने मूलपुरुषस्य सपिण्डो न भवति, तुल्यन्यायात् षष्ठस्य मातृसन्ताने मूलपुरुषोऽपि सपिण्डो न भवति । एवं पितृसंताने मूलपुरुषाद् अष्टमः तस्य सपिण्डो न भवति मूलपुरुषश्च अष्टमस्य सापिण्डो न भवति इति सिद्धम् ।

वधूवरयोश्च सापिण्ड्यं मूलपुरुषद्वारकम् । तमनन्तर्भाव्य तयोः परस्परं सापिण्ड्यसम्बन्धस्य वक्तुमशक्यत्वात् । मूलपुरुषे वध्वा वरस्य वा सापिण्ड्ये निवृत्ते तद्द्वारकं सापिण्ड्यं शाखान्तरीये तदपत्ये निवर्तत एव । यथा अष्टमस्य मूलपुरुषे सापिण्ड्ये निवृत्ते शाखान्तरीये तदपत्ये अष्टमस्य सा-

पिण्ड्यं निवर्तते। अत एव "मूलपुरुषादष्टमः मूलपुरुषदौहित्रीमुद्वहेत्" इति गौतमीयवृत्तौ हरदत्त आह। तुल्यन्यायात् मूलपुरुषदौहित्रोऽपि मूलपुरुषादष्टमीमुद्वोढुमर्हति। मूलपुरुषसापिण्ड्यस्यैव अष्टम्यां निवृत्तौ शाखान्तरीयतदपत्यसापिण्ड्यस्य सुतरां निवृत्तेः। मातृसन्ताने तु षष्ठस्य मूलपुरुषे सापिण्ड्यनिवृत्तौ शाखान्तरीये तदपत्ये तन्निवृत्तिः सुलभा। अतः षष्ठो द्वितीयादिका, द्वितीयादिको वा षष्ठीमुद्वहेत्॥

ननु पितृसन्ताने द्वितीयादेः सप्तमपर्यन्तस्य सापिण्ड्यस्य मूलपुरुषे सत्त्वात् तत्सन्ततिस्थत्वाच्च षष्ठ्यादेः कथमुद्वाहः। पूर्वोक्तमूलपुरुषदौहित्रोऽपि कथमष्टमीमुद्वहेत्, तस्या अपि सपिण्डसन्ततिस्थत्वात्। किञ्च मातृसन्ताने षष्ठो द्वितीयादिकाम्, पितृसन्तानेऽष्टमो दौहित्र्यादिकां च नोद्वोढुमर्हति। वरस्य कन्यासपिण्डसन्ततिस्थत्वात्, तस्यापि "एभिरेव गुणैर्युक्तः" इति वचनेन कन्याऽसपिण्डत्वापेक्षणात्। इति चेत्,

अत्रोच्यते। सपिण्डसन्ततिस्थत्वं न विवाहनिषेधप्रयोजकम्। वचने असपिण्डामित्येतावन्मात्रश्रवणेन सपिण्डत्वस्यैवोद्देश्यतावच्छेदकत्वप्रतीत्या तस्यैव तत्प्रयोजकत्वात्। स्वसपिण्डमूलपुरुषसन्ततिस्थत्वमेव कन्यायां वरस्य सापिण्ड्यमिति तु न युक्तिसहम्। कन्यायां मूलपुरुषसापिण्ड्ये निवृत्ते तदपरशाखीयसापिण्ड्यानुवृत्तेर्वक्तुमशक्यत्वात्। कन्याया मूलपुरुषे सापिण्ड्यस्य निवृत्तौ वरस्य कन्यासपिण्डसन्ततिस्थत्वाभावेन तत्र कन्यासापिण्ड्यस्य निवृत्त्या 'अस्या असपिण्डोऽयम्' इति व्यवहारे 'इयमस्य सपिण्डा' इति व्यवहारस्य सर्वथाऽनुचितत्वात्। स्वपितुः मूलपुरुषाद् अष्टमे सोदके 'नायं पितुः मूलपुरुषस्य सपिण्डः' इति व्यवहृते स्वसापिण्ड्यस्य

'ममायं सपिण्डः' इति व्यवहारस्य च दशाहाशौचप्रयोजकस्यापत्तेश्च । तस्मात् मातृसन्ताने मूलपुरुषस्य पञ्चमादूर्ध्वत्वे तद्द्वारकं वरकन्ययोः साापिण्ड्यम् एकतो निवृत्तं चेदुभयतो निवर्तते, पितृसन्ताने च सप्तमादूर्ध्वत्वे ।

मातृद्वारकञ्च सापिण्ड्यं मूलपुरुषात् पञ्चमीपुत्रयोर्निवृत्तं चेद् मण्डूकप्लुतेः नोत्तरत्रानुवर्तते । मानाभावात् । ननु उत्तरयोः सापिण्ड्यस्य पितृद्वारकत्वात् तस्य सप्तमपर्यन्तानुवृत्तेरुक्तिरेव मानमिति चेत्त । असमानलिङ्गकत्वेन पञ्चमान् मातृत इत्यनन्वयात् मातुः संताने पञ्चमादूर्ध्वत्वे निवृत्तिरित्येतावन्मात्रार्थस्यैव प्रतीत्या पितृतः सप्तमादूर्ध्वमित्यस्य 'च समानगोत्रे' चारितार्थ्यात् मण्डूकानुवृत्तिबोधनेऽसामर्थ्यात् ।

"सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी" । इति–

शङ्खवचनेन एकगोत्रे एव साप्तपौरुष्याः सपिण्डताया बोधनेन लाघवेन मूलैक्यस्य न्याय्यत्वेन तथैव कल्पयितुमुचितत्वात् । पितुरुद्वहनीयां पितृद्वारैव सम्बन्धिनीं पुत्रो नोद्वहेदित्यस्य अत्यन्तानुचितत्वाच्च ।

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥

इति सङ्ग्रहवाक्ये मातृशब्दो न जननीमात्रवाचकोऽपितु–

"तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।

इत्येता मातरः पूज्याः" इत्यादौ पितामह्यादिष्वपि मातृशब्दप्रयोगात् पितामह्यादिसाधारणः। तथाच मातरि कूटस्थात् पञ्चम्यां पितामह्यां चतुर्थ्यां प्रपितामह्यां तृतीयायां वृद्धप्रपितामह्यां द्वितीयायामपि कूटस्थसापिण्ड्यं निवर्तते इति तदर्थः । अतो न कश्चिद्विरोधः । एवं च मध्ये यत्र स्त्रीव्यक्तेर्न प्रवे-

षस्तत्रैव कूटस्थेन साप्तपौरुषं सापिण्ड्यमिति एकगोत्रे एव तत् फलितम्।

अत एव—

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी।

इति पूर्वोक्तं शङ्खवचनं,

सगोत्रे खलु सापिण्ड्यं विज्ञेयं साप्तपौरुषम्।

विगोत्रे तु सर्वत्र विज्ञेयं पाञ्चपौरुषम्॥

इत्यापस्तम्बवचनं च—

सङ्गच्छते। वधूवरयोस्तु परस्परं सापिण्ड्यस्य मूलपुरुषद्वारकत्वादन्यतरस्य मूलपुरुषेण सापिण्ड्ये निवृत्ते तयोः परस्परं सापिण्ड्यं निवर्तते एवेति पूर्वोक्तं न विस्मर्तव्यम्।

यद्यपि एकगोत्रे सगोत्रत्वादेव विवाहनिषेधः सिद्ध इति एकगोत्रे साप्तपौरुषसापिण्ड्यकथनस्य विवाहनिषेधोपयोगो न स्पष्टं प्रतिभासते तथाऽपि दूरदर्शिनां हृदये "मूलपुरुषात् षष्ठः सप्तमश्च मूलपुरुषसगोत्रः मूलपुरुषात् तृतीयादिकां पञ्चमीपर्यन्तां मूलपुरुषभिन्नगोत्रां नोद्वहेत्, मूलपुरुषात् तृतीयादिः पञ्चमपर्यन्तो मूलपुरुषभिन्नगोत्रः मूलपुरुषात् षष्ठीं सप्तमीं च मूलपुरुषसगोत्रां नोद्वहेत्" इत्युपयोगः स्फुरत्येव। उभयत्र मूलपुरुषेण सह सापिण्ड्यस्यैकतोऽप्यनिवृत्तेरुभयतो निवृत्तेर्वक्तुमशक्यत्वात्। मूलपुरुषेण सह साप्तपौरुषसापिण्ड्यानङ्गीकारे तु न पूर्वोक्तस्थलेषु विवाहनिषेधः सिध्येत्।

आशौचे तु स्पष्ट एवोपयोगः। एवं द्विजेतरेष्वपि, तेषां गोत्राभावेन सगोत्रत्वप्रयुक्तनिषेधाभावात् इत्यपि कश्चित्॥

वधूवरयोः मूलपुरुषेण सापिण्ड्यनिरूपिका माता ऽपि से-

त्‌ तपोः स मातृसम्बन्धः, पितैव चेत्‌ पितृसम्बन्धः । भिन्नगोत्रे तु मातुरवश्यं मध्ये प्रवेशात्‌ मातृसम्बन्ध एव तयोर्वक्तव्यः, एकगोत्रे एव तु पितृसम्बन्धः । मूलपुरुषस्य वरेण पितृसम्बन्धित्वेऽपि मूलपुरुषभिन्नगोत्रायाः कन्याया मूलपुरुषेण मातृसम्बन्धित्वात्‌ मातृसम्बन्धित्वमेव । एवं कन्यया मूलपुरुषस्य पितृसम्बन्धित्वेऽपि मूलपुरुषभिन्नगोत्रस्य तेन सह मातृसम्बन्धित्वान्मातृसम्बन्धित्वमेव ।

वरस्य मूलपुरुषेण पितृसापिण्ड्येऽनिवृत्ते तेनैव कन्याया मातृसापिण्ड्येऽनिवृत्ते, वरस्य मूलपुरुषेण मातृसापिण्ड्येऽनिवृत्ते तेनैव कन्यायाः पितृसापिण्ड्येऽनिवृत्ते च एकतो ऽपि निवृत्तेरभावान्न तत्र विवाहः । एवं च स्वसापिण्डमूलपुरुषसपिण्डात्वमेव कन्यायां स्वसापिण्ड्यं विवाहनिषेधप्रयोजकम्‌ ।

चतुर्थीमुद्वहेत्‌ कन्यां चतुर्थः पञ्चमो वरः ।
पराशरमते षष्ठीं पञ्चमो न तु पञ्चमीम्‌ ॥

इति पराशरवचने चतुर्थीमुद्वहेदित्यत्र षष्ठादिरिति शेषः । चतुर्थः पञ्चमो वा वरः षष्ठीमुद्वहेदित्यन्वयः । तथा षष्ठादिर्वरः चतुर्थीमित्यस्योपलक्षणतया द्वितीयादिकामुद्वहेत्‌ । चतुर्थः पञ्चमो वेत्यस्याप्युपलक्षणतया द्वितीयादिः षष्ठ्यादिकामुद्वहेत्‌ । पञ्चमः पञ्चमीम्‌ इत्यनयोरपि उपलक्षणतया पञ्चमपर्यन्तः पञ्चमीपर्यन्तां नोद्वहेत्‌ इति वाक्यार्थः । इत्थं च आञ्जस्येन असपिण्डामुद्वहेदिति वचनेनैकवाक्यत्वसंभवे पराशरवचनस्य निर्मूलत्वकल्पनं दत्तकाद्यनुप्रवेशेन लापनं चानुचितमेव । स्पष्टं चैतत्‌ सर्वं मिताक्षराव्याख्यायां बालंभट्टकृतायाम्‌, नागेशभट्टकृते सापिण्ड्यनिर्णये, सापिण्ड्यकल्पलतायां च ।
"शिष्टाचारानुगृहीतश्चायमर्थः" इत्येवं सम्मानितश्चायमर्थो गुरुचरणै-

( महामहोपाध्यायगदाधरशास्त्रिभिः ) ।

अत एव "उद्वोढुः पितरौ" इत्यादिप्राचीनोक्तवर्ज्यकन्यासङ्कलनं परित्यज्य हरदत्तनागेशभट्टादिसंमतरीत्या वर्ज्यकन्याः सङ्कलय्य कोष्ठकेषु सम्बन्धप्रदर्शनपूर्वकं स्थापिताः प्रतिपत्तिसौकर्यार्थम् । यद्यपि कासांचित् सगोत्रत्वेनापि निषेधः सिध्यति, तथाऽपि सपिण्डत्वस्यापि निषेधप्रयोजकरूपस्य तत्र सद्भावात्तदाक्रान्तानां सर्वासां परिगणय्य प्रदर्शनं कृतमिति न वैयर्थ्यं शुङ्कावनीयम् । विरुद्धसम्बन्धत्वादिना निषिद्धाः पितृव्यपत्नीस्वस्रादयस्तु न सपिण्डत्वाक्रान्ता इति न ता अत्र प्रदर्शिता इति न न्यूनत्वशङ्कावकाशः ।

सङ्कलिताश्च कन्याः २८९ । तत्र ३६ कन्याः सगोत्रत्वात्सपिण्डत्वाच उद्वाहे निषिद्धाः । अवशिष्टाः २५३ पुनः सपिण्डत्वेनैवेति सङ्क्षेपः ।

अथ विवाहाद्युपयोगिपारस्करगृह्यसूत्रव्याख्या ।

तत्रादौ मधुपर्कसूत्रव्याख्या ।

षडर्घ्या भवन्ति ॥ १ ॥

षट् पुरुषा अर्घ्या अर्घार्हा भवन्ति, पूजार्हा इति यावत् ॥ तानेव सूत्रकार आह—

आचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति॥२॥

आचार्यः, उपनयनपूर्वं वेदाध्यापकः ।

उपनीय दद्द्वेदमाचार्यः स उदाहृतः ।

इति याज्ञवल्क्योक्तेः । ऋत्विक् श्रौतस्मार्तादिकर्मार्थं वृतो ब्रह्मादिः । वैवाह्यो विवाह्यः वरः स्वार्थेऽण् । राजा अभिषेकादिगुणवान् प्रजापालने अधिकृतः क्षत्रियः । प्रियः उ-

स्कृष्टजातिः समानजातिर्वा सखा। स्नातको ब्रह्मचर्यात्समावृत्तः।
तस्य चार्हणमाचार्यकर्तृकं स्मृतं मनुना—

तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः।

स्रग्विणं तल्प आसीनमर्चयेत्प्रथमं गवा॥ इति॥

**प्रतिसंवत्सरानर्हयेयुः॥ ३॥**

प्रतिसंवत्सरमागतानेवानाचार्यादीन् अर्हयेयुः पूजयेयुः, न संवत्सरादर्वाक्। अत्यर्थः प्रतिशब्दः॥

ऋत्विग्विषये विशेषमाह—

**यक्ष्यमाणास्त्वृत्विजः॥ ४॥**

यक्ष्यमाणा यज्ञं करिष्यन्तो यजमानाः ऋत्विजस्तु याजकांस्तु अर्हयेयुः। न प्रतिसंवत्सरं नियमः॥

अर्चनविधिमाह—

**आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति॥ ५॥**

आसनं वारणादिदारुमयं पीठादि आहार्य अनुचरैरानाय्य अर्चक आह ब्रवीति "भवान् पूज्यः साधु सुखं यथा भवति तथा ऽऽस्तां तिष्ठतु, यावद् भवन्तमर्चयिष्यामः पूजयिष्यामः"। अर्चयिष्याम इति बहुवचनं भार्यापुत्रादिसर्वगृह्यापेक्षम्। "यत्र वा अर्हन्नागच्छति सर्वगृह्या वै तत्र चेष्टन्ते" इति श्रुतेः॥

**आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन॥६॥**

आहरन्ति आनयन्ति यजमानपुरुषाः विष्टरादिमधुपर्कपर्यन्ताभ्यर्हणोपकरणानि। तत्र विष्टरं पञ्चविंशतिदर्भमयं कूर्चम्।

पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता।

विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्तितम्॥

पद्यं पद्भ्यामाक्रमणीयमुक्तलक्षणं द्वितीयं विष्टरम् । पादार्थमुदकं पादप्रक्षालनार्थं ताम्रादिपात्रस्थं जलं सुखोष्णम् । अर्घं गन्धपुष्पाक्षतकुशतिलयवश्वेतसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकम् । आचमनीयम् आचमनार्थं कमण्डलुसंभृतं जलम् । मधुपर्कं कांस्यपात्रस्थं दधिमधुघृतम् आधारभूतकांस्यपात्रापेक्षया बृहता कांस्यपात्रेणाच्छादितम् ॥

अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ॥ ७ ॥

अन्यो ऽर्घकादपरः प्राह विष्टरो विष्टरो विष्टर इत्येकैकं त्रिस्त्रिः त्रीन् त्रीन् वारान् ब्रूयात् विष्टरादीनि विष्टरप्रभृतीन् पद्यपादार्घोदकाचमनीयमधुपर्कान् ॥

विष्टरं प्रतिगृह्णाति ॥ ८ ॥

प्रत्यङ्मुखेन यजमानेन तिष्ठता दत्तमासनात्पश्चिमे प्राङ्मुखस्तिष्ठन् अर्घ्यः पूर्वोक्तलक्षणं विष्टरं तूष्णीं पाणिभ्यामुदगग्रमादत्ते । पाणिभ्यामादानं हरिहरस्य संमतं, न गदाधरस्य ॥

"वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ।

इमं तमभितिष्ठामि यो मा कश्चाभिदासति" इत्येनमभ्युपविशति ॥ ९ ॥

'वर्ष्मोऽस्मि' इत्येतन्मन्त्रान्ते एनं विष्टरमुदगग्रम् आसने निधाय अभ्युपविशति ॥

पादयोरन्यं विष्टर आसीनाय ॥ १० ॥

विष्टरे आसीनायार्घ्यायान्यं विष्टरं यजमानः पूर्ववद्ददाति । स च तं पूर्ववत् प्रतिगृह्य प्रक्षालितयोः पादयोरधस्ताद्वर्ष्मोऽस्मीत्यनेन मन्त्रेण निदधाति ॥

सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति, ब्राह्मणश्चेद्दक्षिणं प्रथमम् । "विराजो दोहोऽसि विराजो

दोहमशीय मयि पाद्यायै विराजो दोहः" इति ॥११॥

ततोऽन्येन पाद्यमिति त्रिरुक्ते यजमानार्पितं पाद्योदकमादाय वामचरणं प्रक्षालयेतरं प्रक्षालयति क्षत्रियादिरर्घ्यः। यदि ब्राह्मणो ऽर्घ्यः स्यात्ततो दक्षिणं प्रथमं प्रक्षाल्य ततो वामं प्रक्षालयति।

पादयोरधस्तान्निधानार्थम् अन्यविष्टरदानं यद्यपि पादप्रक्षालनात्पूर्वमुपदिष्टं तथाऽपि पादप्रक्षालनोत्तरं द्रष्टव्यम्। दृष्टार्थत्वानुरोधात्। प्रक्षाल्य हि पादौ विष्टरे क्रियेते। तेनार्थेन क्रमेण पाठक्रमबाधः॥

अर्घं प्रतिगृह्णाति "आपः स्थ युष्माभिः सर्वान् कामानवाप्नवानि" इति ॥ १२ ॥

ततो ऽर्घ इति त्रिरुक्ते यजमानदत्तमर्घम् 'आपः स्थ' इति मन्त्रेण प्रतिगृह्णाति॥

निनयन्नभिमन्त्रयते "समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टास्माकं वीरा मा परासेचि मत् पयः" इति ॥ १३ ॥

प्रतिगृहीतमर्घं शिरसा ऽभिवन्द्य भूमौ निनयन् अभिमन्त्रयते 'समुद्रंवः' इति मन्त्रेण। अभिमन्त्रणम् अनामिकाग्रेण स्पर्शनम् आलोकनं वा॥

आचामति "आ माऽगन्यशसा सꣳसृज वर्चसा तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्" इति ॥ १४ ॥

तत आचमनीयमिति त्रिरन्योक्ते यजमानदत्तमाचमनीयं प्रतिगृह्य "आमागन्यशसा" इति मन्त्रेणाचामति। सकृत् माश्नाति जलम्। ततः स्मार्तमाचमनं करोति। एवं सर्वत्र॥

मित्रस्य त्वेति मधुपर्कं प्रतीक्षते ॥ १५ ॥

ततो मधुपर्क इति त्रिरन्येनोक्ते यजमानहस्तगतम् उद्घाटितं मधुपर्कं मित्रस्यत्वेति मन्त्रेणार्घ्यः प्रतीक्षते पश्यति ॥

देवस्य त्वेति प्रतिगृह्णाति ॥ १६ ॥

देवस्यत्वेति मन्त्रेण यजमानदत्तं मधुपर्कं दक्षिणहस्तेन प्रतिगृह्णाति ॥

सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति "नमः श्यावास्यायान्नशने यत्तआविद्धं तत्ते निष्कृन्तामि" इति ॥ १७ ॥

तं मधुपर्कं वामहस्ते निधाय दक्षिणस्य पाणेरनामिकयाऽङ्गुल्या त्रिः त्रिवारं प्रयौति आलोडयति "नमः श्यावास्याय" इति मन्त्रेण ॥

अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ॥ १८ ॥

अनामिका चाङ्गुष्ठश्चानयोः समाहारो ऽनामिकाङ्गुष्ठम् । तेन त्रिवारं पात्राद्बहिर्निरुक्षयति निस्सारयति । चकारात् प्रतिसंयवनं निरुक्षणम् । प्रतिसंयवनं च मन्त्रावृत्तिः ॥

तस्य त्रिः प्राश्नाति "यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि" इति ॥ १९ ॥

तस्य मधुपर्कस्यैकदेशमादाय "यन्मधुनो मधव्यम्" इत्यादिना मन्त्रेण सकृत्प्राश्य पुनरनेनैव मन्त्रेणोच्छिष्ट एव द्वितीयं प्राश्य तथैव तृतीयं प्राश्नाति । उच्छिष्टस्यैव मन्त्रोच्चारणम् ।

ताम्बूलेक्षुफले चैव भुक्ते स्नेहानुलेपने ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥ इति स्मरणात् ॥

मधुमतीभिर्वा प्रत्यृचम् ॥ २० ॥

"मधुव्वाता" इति तिसृभिर्ऋग्भिः प्रत्यृचं प्रतिमन्त्रं वा

पूर्ववत्प्राश्नाति ॥

मधुपर्कशेषप्रतिपत्तिमाह-

पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात्, सर्वं वा प्राश्नीयात्, प्राग्वाऽसञ्चरे निनयेत्॥२१॥

पुत्राय सूनवे, अन्तेवासिने उपनयनप्रभृति विद्यार्थित्वेनाचार्यकुलवासिने शिष्याय वोत्तरत आसीनायोच्छिष्टं प्राशितशेषं मधुपर्कं प्रयच्छेत् । अथवा सर्वं भक्षयेत् । अथवा प्राक् पूर्वस्यां दिशि असञ्चरे जनसञ्चाररहितदेशे त्यजेत् ॥

आचम्य प्राणान्त्सम्मृशति "वाङ्मऽआस्ये, नसोः प्राणो,ऽक्ष्णोश्चक्षुः, कर्णयोः श्रोत्रं, बाह्वोर्बलं, मूर्वोरोजो,ऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह" इति ॥२२॥

आचम्य प्राणान्त्सम्मृशति "वाङ्म"इत्यादिभिर्मन्त्रैः । आचमनं सकृन्मन्त्रेण । ततस्त्रिराचम्य स्मार्तमाचमनं कृत्वा प्राणानिन्द्रियाणि सम्मृशति सजलमालभते । सजलालम्भश्च न गदाधरसम्मतः । सर्वत्र अस्तित्वध्याहारः अङ्गानीत्यत्र सन्त्विति ॥

आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह॥२३॥

आचान्तमुदकं येन स आचान्तोदकः तस्मै अर्घ्याय शासं खड्गं गृहीत्वा यजमानो गौर्गौर्गौरालभ्यतामिति प्राह ब्रवीति ॥

प्रत्याह "माता रुद्राणां दुहिता वसूनाꣳस्वसाऽऽदित्यामृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । मम चामुष्य च पाप्मानं हनोमि"इति यद्यालभेत ॥ २४ ॥

ततो ऽर्घ्यः "माता रुद्राणाम्"इत्यादि वधिष्ट-

स्यन्तं मन्त्रं पठित्वा "मम चामुष्य च पाप्मानं हनोमि"इति पठति, यदि गामालभेत। अत्र अमुष्येत्यस्य स्थाने अर्घयितुर्नामग्रहणं कार्यम्॥

अथ यद्युत्सिसृक्षेत् "मम चामुष्य च पाप्मा हतः ओ३म्, उत्सृजत तृणान्यत्तु"इति ब्रूयात् ॥ २८ ॥

अथ यदि अर्घ्यो गामुत्स्रष्टुमिच्छेत्तदा "मम चामुकशर्मणो यजमानस्य च पाप्मा हतः ओ३म् उत्सृजत तृणान्यत्तु"इति ब्रूयात्। ओमित्यन्तमुपांशु पठित्वा उत्सृजत तृणान्यत्तु इति उच्चैः पठेत्॥

एवं गवालम्भस्य सर्वत्र विकल्पे प्राप्ते कचिन्नियममाह—

न त्वेवामांसोऽर्घः स्यात् अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ॥ २६ ॥

तु-शब्दः पक्षव्यावृत्तौ। यज्ञविवाहयोरमांसो ऽर्घो न भवति, यज्ञमधिकृत्य कुरुतेत्येव प्रयोगः। अतश्चालम्भानियमो यज्ञविवाहयोः। गोरालम्भश्च कलिवर्जिते काले भवति।

यज्ञाधानं गवालम्भं संन्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥ इति–

पराशरस्मृतेः। अतश्च गवालम्भस्य कलौ निषिद्धत्वादुत्सर्गस्य यज्ञविवाहयोरप्राप्तत्वाद्गोरित्युच्चारणादि यज्ञविवाहयोः कलौ न प्रवर्तते। यज्ञविवाहयोरन्यत्र तु उत्सर्गपक्ष एव कलौ इति गदाधरः।

यद्यप्येवं मधुपर्के गवालम्भ आचार्येणोक्तः तथाऽपि अस्वर्ग्यत्वाल्लोकविद्विष्टत्वाच्च कलौ न विधेयः।

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु।

इतियाज्ञवल्क्यादिस्मृतिषु दर्शनात् इति हरिहरः॥ सर्व-

आलम्भाभावे ऽपि उत्सर्ग एवेति कारिकायाम् ।

गोरालम्भनिषेधात्स्यात्सर्वत्रोत्सर्जनं कलौ-

इति प्रयोगलेखनसमये कारिकाकारमतत्वेन विवाहयज्ञयोरप्युत्सर्जनपक्षमुवाच गदाधरः । युक्तश्च सर्वत्रोत्सर्गपक्षः । शाखान्तरे हिरण्यकेशिगृह्यादौ सामान्यत एव विकल्पविधानात् आलम्भपक्षस्य कलिनिषिद्धत्वेन पक्षान्तरस्य ग्रहीतुमुचितत्वात् ॥

यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्था एवैनं याजयेयुर्नाकृतार्था इति, श्रुतेः ॥ २७ ॥

यद्यपि असकृत्संवत्सरस्य संवत्सरे पुनः पुनः सोमेन ज्योतिष्टोमादिना यजेत तथाऽपि एनं सोमयाजिनं कृतोऽर्थो येषान्ते कृतार्थाः एवं सन्तो याजयेयुर्यज्ञं कारयेयुः नाकृतार्था याजयेयुः इति । श्रुतिवचनात् ॥

अथ विवाहसूत्रव्याख्या ।

चत्वारः पाकयज्ञाः ॥ १ ॥

पाकयज्ञा इति कर्मणां नामधेयानि । चतुष्प्रकारा भवन्ति ॥

के ते—

हुतो ऽहुतः प्रहुतः प्राशित इति ॥ २ ॥

हुतो होममात्रम्, यथा सायं प्रातर्होमः । अहुतो यत्र न हूयते, यथा स्रस्तरारोहणम् । प्रहुतो यत्र हूयते बलिहरणं च, यथा पक्षादिः। प्राशितो यत्र प्राश्यत एव न होमो न बलिहरणम्, यथा "सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयन्ति" ॥

पञ्चसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ ३ ॥

अस्यार्थः—विवाहादिषु पञ्चसु संस्कारकर्मसु बहिः बाह्यः

अगृह्यः लौकिको ऽग्निर्भवतीत्यर्थः । शालायां मण्डपे, कर्म कर्तव्यमिति शेषः । यद्वा बहिःशालायामित्येकं पदम् । गृहाद्बहिर्वा या शाला तस्यां बहिःशालायाम्। मण्डपे इति यावत्। अत्राप्यग्निर्लौकिक एव । बहिःशालाविधानसामर्थ्यात् । नहि कर्मार्थं वचनमन्तरेणावसथाद्गृहाद्बहिरावसथ्याग्निप्रणयनं संभवति । "औपासनमरण्यं हृत्वा" इति शूलगवपशौ सूत्रारम्भसामर्थ्यात् । किञ्च आवसथ्यो गृह्यः शालाग्निरिति अन्वर्थसंज्ञाकरणादप्ययमर्थो लभ्यते—यदयमावसथ्याग्निर्विना वचनमन्यत्र न प्रणेतव्य इति ।

ननु "अग्निमादधीत" इत्यत्रादधीतेत्यात्मनेपदादात्मगामिक्रियाफलकानामेव कर्मणामाधानसम्पाद्याग्निसाध्यत्वावगमादर्थादन्यगामिक्रियाफलककर्मणां स्वाहिते ऽग्नौ निषेधप्रतीतेः,

यस्याग्नावन्यहोमः स्यात्स वैश्वानरदैवतम् ।

चरुं निरुप्य जुहुयात्प्रायश्चित्तं तु तस्य तद् ॥ इति—

छन्दोगपरिशिष्टे कात्यायनेन प्रायश्चित्तविधानाच्च—

एतानि संस्कारकर्माणि लौकिकाग्नावेव भविष्यन्तीति पुनर्विधानं किमर्थमिति चेत्—

अत्रोच्यते । गृह्यस्थालीपाकानां कर्मेत्युपक्रमबलात्सुतसंस्कारहोमाः स्वेऽग्नावेव स्युस्तन्मा भूदेतदर्थम् । अन्यथा पुत्रानुत्पाद्य संस्कुर्यादित्यनेन सुतसंस्काराणां स्वाधिकारिकत्वावगमाज् जातेष्ट्यन्यायाद्गृह्यस्थालीपाकानां कर्मेत्युपक्रमाच्च सुतसंस्कारहोमाः स्वेऽग्नावेवापद्येरन् । तथा ऽनग्निमतो ऽग्निसम्बद्धगृह्यसूत्रविहितान्यकर्मव्युदासार्थं च—पञ्चस्वेवाग्निसम्बद्धेषु अनग्निरधिक्रियते नान्यत्रेति । एवं च सति द्वितीयविवाहो ऽग्निमतो ऽपि लौकिकाग्नावेव । बहिःशालाविधानसामर्थ्यादेव ।

नहि बहिःशालायामावसथ्याग्निप्रणयनं सम्भवतीत्युक्तम्। नच स्वस्थानस्थिते गृह्ये ऽग्नावेव विवाहहोमः स्यादिति वाच्यम्। बहिःशालाविधिविरोधात्-इति रुद्रकल्पद्रुमप्रथमपरिच्छेदे विस्तरः। तस्माद्विवाहसीमन्तोन्नयनादिकं सर्वं कृतावसथ्यैरपि वाजसनेयिभिर्लौकिकाग्नावेव कार्यमिति निष्कर्षः। इत्यलं प्रसङ्गागतचिन्तया।

प्रकृतमनुसरामः। मण्डपश्च वसिष्ठेनोक्तः-

षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम्।
मण्डपं तोरणैर्युक्तं तत्र वेदीं प्रकल्पयेत्॥
अष्टहस्तं तु रचयेन्मण्डपं वा द्विषट्करम्। इति।

द्विगुणिताः षट् करा यस्य तं, द्वादशहस्तमित्यर्थः। उत्तमा षोडशहस्तो, मध्यमो द्वादशहस्तो,ऽधमो ऽष्टहस्तः।

अयं च वैकल्पिको मण्डपो गृहमानत एव कार्यो न तु स्वेच्छया।

मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः।
कार्यः षोडशहस्तो वा द्विषड्ढस्तो दशावधिः॥ इति-
सप्तर्षिमतस्मरणात्।

अत्र वेदिरुक्ता नारदेन-

हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनः॥
समां तथा चतुर्दिक्षु सोपानैरतिशोभिताम्।
प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः॥
एवंविधामारुरुक्षेन्मिथुनं साग्नि वेदिकाम्। इति।

साग्नीति भिन्नं पदं मिथुनस्य विशेषणम्।
व्रतबन्धे संस्कार्यत्वाद्बटुहस्तेनैव वेदिनिर्माणम्। विवाहे तु कन्या गृहे एव वरपूजनस्योक्तत्वाद् गृहस्थाश्रमस्य तदापत्तत्वाच्च क-

न्याहरतेनैव वेदिनिर्माणमित्युक्तं स्मृतिकौस्तुभे।
गृह्यासंग्रहे, उपलिप्ते महीपृष्ठे चतुर्विंशाङ्गुलायता।
वेदी वैवाहिकी कार्या चतुरङ्गुलमुच्छ्रिता॥
तां शूद्रो नोपलिम्पेत न वन्ध्याविधवे स्त्रियौ।
पतिपुत्रवती नारी सैव तामुपलेपयेत्॥ इति।
मण्डपप्रतिष्ठाविधिरुक्तो रेणुकारिकायाम्—
मण्डपस्थापनं कुर्यात्स्वस्तिवाचनपूर्वकम्।
चतुरो ब्राह्मणांस्तत्र पूजयेद्दक्षिणादिभिः॥
नन्दिनी नलिनी मैत्रा उमा च पशुवर्धिनी।
मण्डपस्थापने योज्याः स्तम्भे मात्राः प्रकीर्तिताः॥ इति।

उपलिप्त उद्धतावोक्षिते ऽग्निमुपसमाधाय॥ ४॥

उपलिप्ते गोमयोदकेन, उद्धते स्फ्यनोल्लिखिते तिसृभी रेखाभिः, अवोक्षिते उदकेनाभ्युक्षिते बहिःशालागृहयोरन्यतरस्मिन् प्रदेशे ऽग्निं लौकिकम् उपसमाधाय स्थापयित्वा। उपलिप्त उद्धतावोक्षित इत्यनेन पञ्चाग्निसंस्कारा लक्ष्यन्ते।

ननु परिसमूहनादेरुक्तत्वात्किमर्थमुपलेपनादिकमुच्यते। सत्यम्। यत्र क्वचिद्धोम इत्यनेन परिसमूहनादीनामप्राप्तिस्तेषामभ्यर्थत्वात्—यत्र यत्राग्नेः स्थापनं तत्रैते कर्तव्या इति। तथा च लिङ्गम् "उद्धते चावोक्षिते ऽग्निमादधाति" इति। तस्मादेष एव विधिर्यत्र क्वचिद्धोम इत्यनेन स्थालीपाकादिषु परिसमूहनादेरप्राप्तिप्रसक्त्यर्थमिदमुपलिप्तउद्धतावोक्षित इति जयरामः॥

निर्मन्थ्यमेके विवाहे॥ ५॥

विवाह इति कर्मणो नामधेयम्। एके विवाहकर्मणि निर्मन्थ्यमग्निमिच्छन्ति। अन्ये लौकिकमिच्छन्ति। निर्मन्थ्यो ऽचि-

रनिर्मथितो ग्राह्यः ॥

**उदगयन आपूर्यमाणपक्षे पुण्याहे ॥ ६ ॥**

उदगयने उत्तरायणे आपूर्यमाणपक्षे शुक्लपक्षे पुण्याहे शोभने विष्ट्यादिराहितकाले ॥

**कुमार्याः पाणिं गृह्णीयात् ॥ ७ ॥**

कुमार्या अनन्यपूर्विकाया अक्षतयोन्याः पाणिं गृह्णीयायात्, वक्ष्यमाणेन विधिना विवाहं कुर्यात् । *विंशतिप्रसूताव्युदासार्थं कुमारीग्रहणम् । स्मर्यते हि तस्याः पुनर्विवाहः । अयं च न शास्त्रसंमत इति मनुस्मृत्यादौ स्पष्टम् ॥

**त्रिषुत्रिपूत्तरादिषु ॥ ८ ॥**

उत्तरा आदिर्येषान्तानि उत्तरादीनि तेषु त्रिषु त्रिषु । *अयमर्थः*–उत्तरफल्गुन्योर्हस्ते चित्रायां च, एवमुत्तराषाढासु श्रवणे धनिष्ठासु च, एवमुत्तरभाद्रपदासु रेवत्यामश्विन्योश्च ॥

**स्वातौ मृगशिरसि रोहिण्यां वा ॥ ९ ॥**

एतेषामन्यतमे नक्षत्रे विवाहो भवतीत्यर्थः ॥

कुमार्याः पाणिं गृह्णीयादिति सामान्येनोक्तं तत्र विशेषमाह–

**तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण द्वे राजन्यस्यैका वैश्यस्य ॥ १० ॥**

ब्राह्मणस्य द्विजाग्र्यस्य वर्णानुपूर्व्येण वर्णक्रमेण तिस्रो-ब्राह्मणी–क्षत्रिया–वैश्या विवाह्या भवन्ति । द्वे क्षत्रियावैश्ये राजन्यस्य विवाह्ये भवतः । एका वैश्यैव वैश्यस्य विवाह्या भवति । वर्णानुपूर्व्यग्रहणाद् व्युत्क्रमो निषिद्धः ॥

---

* अत्र प्रसूतशब्दो जातमात्रार्थकः । "तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः" इति रघुवंशे "तच्च भीष्मप्रसूतं मे" इति महाभारते च तथा दर्शनात् ।

सर्वेषां शूद्रामप्येके मन्त्रवर्जम् ॥ ११ ॥

सर्वेषां ब्राह्मणक्षत्रियविशां शूद्रामप्येके विवाह्यां मन्यन्ते। तत्र विशेषः–मन्त्रवर्जम् मन्त्ररहितं यथा भवति तथा। अत्र द्विजातीनामपि शूद्रापरिणयने आचार्येण मन्त्रवत्क्रियानिषेधाच्छूद्रस्य शूद्रापरिणयने मन्त्रवत् क्रिया नास्ति किन्तु मन्त्ररहितं क्रियामात्रमिति गम्यते। ततश्च यच्छूद्रस्य शूद्रापरिणयने मन्त्रवद्धोमादिकं कुर्वन्ति तदशास्त्रीयम्। एके न मन्यन्ते शूद्राविवाहं तस्या धर्मकार्येष्वनधिकारात्। "रामा रमणायोपेयते न धर्माय कृष्णजातीया" इति यास्काचार्यवचनात्। अतो रमणार्थं शूद्रापरिणयनं पक्षे। एवं सति षण्मासदीक्षाद्यनन्तरम् "अग्निं चित्वा प्रथमं न रामामुपेयात्" इति निषेध उपपद्यते। प्राप्तं हि प्रतिषेधस्य विषयः, यद्यग्निचितो रामोढा न स्यात्, कथं तत्प्रथमगमनप्रतिषेध उपपद्येत। तस्माच्छूद्रापरिणयनमुपभोगार्थमिच्छया कुर्वतो न शास्त्रातिक्रमः। विवाहस्य धर्मप्रजारत्यर्थत्वात् ॥

अथैनां वासः परिधापयति—

"जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा ॥

शतंच जीव शरदः सुवर्चा रयिञ्च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः" इति ॥ १२ ॥

अथ अग्निस्थापनानन्तरम् एनां कुमारीं वासः आचारात् अहतं सदशं वस्त्रं परिधापयति परिहितङ्कारयति "जरां गच्छ" इति मन्त्रं पठित्वा। वर इति शेषः। कुमारी च स्वयं परिधत्ते ॥

अथोत्तरीयम् "या अकृन्तन्नवयन्या अतन्वत।

याश्च देवीस्तन्तूनभितो ततन्थ। तास्त्वा देवीर्जि-

रसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः" इति॥१३॥

अथ वस्त्रपरिधानानन्तरमुत्तरीयं वासः "याअकृन्तन्" इति मन्त्रमुक्त्वा परिधापयति वरः। अत्र परिधापयतीति णिजन्तस्य कारितार्थत्वात् 'परिधत्स्व वास' इति मन्त्रस्यापि तदर्थत्वात् परिधापयिता अन्य इत्यवगम्यते। स चात्र वर एव नाध्वर्युः। स्मार्तेषु कर्मसु अध्वर्योः कर्तृत्वयोगाभावात् इति प्रपञ्चितं भाष्ये। अत्र वरोऽपि समाचारात् वाससी परिधत्ते "परिधास्यै" "यशसामा" इति समावर्तनसूत्रोक्ताभ्यां मन्त्राभ्याम्॥

अथैनौ समञ्जयति "समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ॥

संमातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ" इति॥१४॥

अथ वस्त्रपरिधानानन्तरं "युवां परस्परं *समञ्जेथाम्" इति प्रैषेण कन्यापिता एनौ वधूवरौ समञ्जयति संमुखौ वरकुमार्यौ करोति।

अत्र विशेषमाह ऋष्यशृङ्गः-

वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम्।

नाम संकीर्तयेद् विद्वान् कन्यायाश्चैवमेव हि॥ इति।

मन्त्रलिङ्गाद् वर एव "समञ्जन्तु विश्वेदेवा" इत्यादिकं मन्त्रं कन्यासम्मुखीभूतः पठति। उत्तरत्र "पित्रा प्रत्ताम्" इति सूत्रदर्शनात् अत्रैव कन्यादानम्। तत्प्रयोगश्चाग्रे वक्ष्यते॥

---

* अत्र यद्यपि बहुषु पुस्तकेषु समञ्जेथाम् इत्येव पाठो दृश्यते तथापि तत्रात्मनेपदं चिन्त्यम्। समञ्जयेथामिति तु चौरादिकस्य अञ्जिधातोः स्वार्थणिजन्तस्य रूपम्। तत्र णिचश्चेति आत्मनेपदमुपपद्यते। समञ्ज्येथाम् इति कर्मणि लोडन्तं वा कल्प्यम्॥

पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति "यदैषि मनसा दूरं दिशोऽनु पवमानो वा ॥
हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्विति असौ"इति ॥ १५ ॥

पित्रा जनकेन तदभावे पितामहादिना वा प्रत्तां संकल्प्य दत्ताम् आदाय प्रतिग्रहविधिना प्रतिगृह्य गृहीत्वा हस्ते धृत्वा गृहमध्यादग्निसमीपं गन्तुं निष्क्रामति "यदैषि" इति मन्त्रं पठन् ॥

अथैनौ समीक्षयति—

"अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः।
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे॥
सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥
सोमो ऽददद्गन्धर्वाय गन्धर्वो ऽददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥
सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर।
यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै ॥ इति ॥ १६ ॥

अथ निष्क्रमणानन्तरम् एनौ वधूवरौ "परस्परं समीक्षेयाम्"इति प्रैषेण कन्यापिता समीक्षयति समीक्षणं कारयति। तत्र समीक्षमाणो वरः अघोरचक्षुरित्यादीन् निविष्ट्यै-इत्यन्तान्मन्त्रान् पठति ॥

चतुर्थकण्डिका समाप्ता ॥

**प्रदक्षिणमग्निं पर्याणीयैके ॥ १ ॥**

एक आचार्या अग्नेः प्रदक्षिणं कारयित्वा वासःपरिधानं समञ्जनं समीक्षणञ्च मन्यन्ते। एके न मन्यन्ते, अतश्च विकल्पः ॥

**पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति ॥ २ ॥**

समीक्षणानन्तरमग्निं प्रदक्षिणीकृत्य अग्नेः पश्चिमतः प्राङ्मुख उपविशति वरः, वरस्य दक्षिणतो वधूः दक्षिणपादेन तेजनीं तृणपूलिकां, कटं तृणमयं स्रस्तरं वा प्रवृत्य प्रक्रम्य उल्लङ्घ्येत्यर्थः ॥

**अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्चैतन्नित्यꣳसर्वत्र ॥३॥**

अत्र वैवाहिकहोमप्रसङ्गेन सर्वकर्मसाधारणीं परिभाषां करोत्याचार्यः–अन्वारब्ध इति । एतच्च पूर्वमेव व्याख्यातम् ॥(४०)

**प्राङ् महाव्याहृतिभ्यः स्विष्टकृत् अन्यच्चेदाज्याद्धविः॥४॥**

यदि आज्यात्सकाशादन्यदपि चरुप्रभृति हविर्भवति तदा महाव्याहृतिभ्यः प्राक् पूर्वं स्विष्टकृद्धोमो भवति, केवलाज्ययागे सर्वाहुतिशेषे भवति ॥

**सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानं विवाहे॥ ५ ॥**

सर्वप्रायश्चित्तं "त्वन्नोअग्ने" "सत्वन्नो अग्ने" "अयाश्चाग्ने" "ये ते शतम्" "उदुत्तमम्"इत्याहुतिपञ्चकम्, प्राजापत्यः प्राजापत्याहुतिः एतयोरन्तरम् मध्यं विवाहकर्मणि आवापस्थानम् । आवापश्च अन्यत्र विहितस्य होमजपादेः कर्मणः कर्मान्तरप्रक्षेपः। आवापस्य 'आगन्तूनामन्ते निवेश' इति न्यायेन अन्ते निवेशः प्राप्तः, तन्निवृत्त्यर्थमेतद्वचनम् ॥

राष्ट्रभृत इच्छन् । जयाभ्यातानांश्च जानन्येन कर्मणेत्संत् इति वचनात् ॥

"चित्तं च, चित्तिश्चा, कूतं चा,कूतिश्च, विज्ञातं च, विज्ञातिश्च, मनश्च, शक्करीश्च, दर्शश्च, पौर्णमासश्च, बृहच्च, रथन्तरं च । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहा" इति ॥

"अग्निर्भूतानामधिपतिः स माऽवतु, इन्द्रो ज्येष्ठानाम्, यमः पृथिव्या, वायुरन्तरिक्षस्य, सूर्यो दिवः, चन्द्रमा नक्षत्राणां, बृहस्पतिर्ब्रह्मणो, मित्रः सत्यानाम्, वरुणोऽपाम्, समुद्रः स्रोत्यानाम्, अन्नᳪ साम्राज्यानामधिपति तन्माऽवतु, सोम ओषधीनाᳪ, सविता प्रसवानाᳪ, रुद्रः पशूनाम्, त्वष्टा रूपाणाम्, विष्णुः पर्वतानाम्, मरुतो गणानामधिपतयस्ते माऽवन्तु, पितरः पितामहाः परेवरे ततास्ततामहाः । इह माऽवन्तु, अस्मिन् ब्रह्मण्यस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳪ स्वाहा" इति सर्वत्रानुषजति ॥ ६ ॥

इच्छन् इच्छया विवाहे राष्ट्रभृतः तत्संज्ञका आहुतीः, आवपेदित्यध्याहारः । ऋताषाड्ऋतधामाग्निर्गन्धर्व इत्यादिभिर्मन्त्रैः आग्निका द्वादश होमा राष्ट्रभृत' ।

चित्तञ्चेत्यादयस्त्रयोदश मन्त्रा जया इत्युच्यन्ते । अग्निर्भूतानामित्यादयः अष्टादश मन्त्रा अभ्यातानसञ्ज्ञकाः । येन कर्मणा ऋद्धिमिच्छेत्तत्र जयान् जुहोतीति वचनम् । अनेन

ऋद्धिमिच्छता जयाहोमोऽन्यत्रापि कार्य इति ज्ञायते, ततश्च वचनार्थं जानन् अत्रापि तानावपेदित्यर्थः। एवमभ्यातानानपि। अग्निर्भूतानाम्, इन्द्रो ज्येष्ठानामित्यादिषु नपुंसकप्रथमान्तं, प्रथमाबहुवचनान्तं च वर्जयित्वा सर्वेषु 'अधिपतिः स मावतु' इति वाक्यैकदेशमनुपजति संयुनक्ति। अस्मिन् ब्रह्मणीत्यादिकं स्वाहेत्यन्तं च अष्टादशस्वपि मन्त्रेषु अनुपज्यते॥

अग्निरैतु प्रथमो देवतानाᳬं सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयᳬं राजा व्वरुणो ऽनुमन्यतां यथे-यᳬं स्त्री पौत्रमघं न रोदात् स्वाहा१ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि विबुध्यतामियᳬं-स्वाहा२स्वस्ति नो ऽअग्ने दिव ऽआपृथिव्या विश्वानि धेह्ययथा यजत्र। यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रᳬं स्वाहा ३ सुगं नु पन्थाम् प्रदिशन्न ऽएहि ज्योतिष्मद् धेह्यजरन्न ऽआयुः। अपै-तु मृत्युरमृतन्न ऽआगाद्वैवस्वतो नो ऽअभयं कृणोतु स्वाहा ४ इति।

*परं मृत्यविति च। एके प्राशनान्ते॥ ७॥*

अग्निरैत्वित्यादयः चत्वारो मन्त्राः, तैश्च जुहुयात्। 'परं मृत्यो' इत्यनेन मन्त्रेण च जुहुयात्। संस्रवप्राशनान्ते अनेन मन्त्रेण जुहुयादित्येके वदन्ति॥ इति पञ्चमकण्डिका॥

कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलि-नाऽञ्जलावावपति, ताञ् जुहोति संहतेन तिष्ठती—

"अर्यमणं देवं कन्या ऽअग्निमयक्षत। स नो ऽअर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा १

इयं नार्युपब्रूते लाजानावपन्तिका। आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा २ इमाल्ँ लाजानावपाम्यग्नौ समृद्धिकरणं तव। मम तुभ्य च संवननं तदग्निरनुमन्यतामियँ स्वाहा ३ इति ॥ १ ॥

कुमार्याः कन्याया भ्राता शमीपलाशमिश्रान् शमीपत्रयुक्तान् लाजान् भृष्टान् व्रीहीन् अञ्जलिना स्वकीयेन वध्वा. अञ्जलौ आवपति प्रक्षिपति। सा च तानञ्जलिस्थान् लाजान् तिष्ठती–तिष्ठन्ती ऊर्ध्वा सतीति यावत्। नुमभाव आर्षः। संहतेन मिलितेन अञ्जलिना जुहोति विवाहाग्नौ प्रक्षिपति–

अर्यमणमित्यादिभिर्मन्त्रैः। तत्र अर्यमणमिति प्रथमेन मन्त्रेण प्रथमं भागम्, इयमिति द्वितीयेन द्वितीयम्, इमानिति तृतीयेन तृतीयम्।

अत्र गोभिलगृह्ये विशेषः–"अनुपृष्ठं पतिः परिक्रम्य दक्षिणत उदङ्मुखो ऽवतिष्ठते वध्वञ्जलिं गृहीत्वा"इति। वध्वाः पृष्ठं लक्षीकृत्य वध्वाः पृष्ठतः पश्चिमया दिशा पतिः परिक्रम्य वध्वा दक्षिणतः उदङ्मुखोऽवतिष्ठते ऊर्ध्वस्तिष्ठति। अवपूर्वकस्थाधातोरूर्ध्वस्थित्यर्थकत्वात्। वध्वञ्जलिं गृहीत्वेत्यत्र स्वेन अञ्जलिना इति भट्टनारायणादयो व्याचख्युः। रघुनन्दनस्तु वध्वञ्जलिं दक्षिणेन पाणिना गृहीत्वा इति व्याचख्यौ ॥

अथास्यै दक्षिणं हस्तं गृह्णाति साङ्गुष्ठम्—

"गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽऽसः ॥ भगो ऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः॥ अमोऽहमस्मि सा त्वꣳ सा त्वमस्यमो ऽअहम्॥सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी

त्वम् ॥ तावेव विवहावहै सह रेतो दधावहै। प्रजां प्रजनयावहै पुत्रान्विन्दावहै बहून् । ते सन्तु जरदष्टयः। संप्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्"इति ॥२॥

अथ लाजहोमानन्तरम् अस्यै-अस्याः कुमार्याः (षष्ठ्यर्थे चतुर्थी) दक्षिणं हस्तं साङ्गुष्ठं अङ्गुष्ठेन सहितं "गृह्णामि ते सौभगत्वाय" इत्यादिशतामित्यन्तं मन्त्रं पठित्वा गृह्णाति स्वदक्षिणहस्तेन आदत्ते ॥ इति षष्ठी कण्डिका ॥

अथैनामश्मानमारोहयति उत्तरतोऽग्नेर्दक्षिणपादेन-

"आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव। अभितिष्ठ पृतन्यतोऽववाधस्व पृतनायतः॥ इति ॥१॥

*अथ पाणिग्रहणानन्तरम् एनां वधूम् अश्मानं दृषदम् अग्रेरुत्तरतो विद्यमानं दक्षिणपादेन आरोहयति आरोहेमम् इत्यादिना पृतनायत इत्यन्तेन मन्त्रेण ॥

अथ गाथां गायति-

"सरस्वति प्रेदमव सुभगे वाजिनीवति। यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः॥ यस्यां भूतꣳ समभवद्यस्यां विश्वमिदं जगत् । तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः" ॥ इति ॥ २ ॥

अथ अश्मारोहणानन्तरम् सरस्वतिप्रेदमित्यादिकां गाथां गायति ॥

अथ परिक्रामतः-

"तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतु ना सह।

पुनः पतिभ्यो जायां दाग्ने प्रजया सह"॥ इति ॥३॥

अथ गाथायां समाप्तायां तुभ्यमग्रे इति मन्त्रेण धृतकरा-चेव वधूवरौ परिक्रामतः अग्निं प्रदक्षिणीकुरुतः ॥

एवन्द्विरपरं लाजादि ॥ ४ ॥

एवम् उक्तप्रकारेण द्विः वारद्वयम् अपरं पुनरपि लाजादि कुमार्यभ्रातेत्यारभ्य परिक्रमान्तं कर्म भवति ॥

चतुर्थᳪ शूर्पकुष्टया सर्वान् लाजानावपति "भगाय स्वाहा"इति ॥ ५ ॥

ततः तृतीयपरिक्रमणानन्तरम् कुमार्याः भ्राता शूर्पकुष्टया शूर्पस्य कोणेन सर्वान् यावच्छूर्पे अवशिष्टान् लाजान् कुमार्या अञ्जलौ आवपति प्रक्षिपति। तान् लाजान् तिष्ठन्ती कुमारी'भगाय स्वाहा'इति मन्त्रेण चतुर्थं जुहोति। ततः समाचारात् तूष्णीं परिक्रमणं वधूवरौ कुरुतः। परिक्रमणं कुर्वन्तौ वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छेतामिति हरिहरः। ब्रह्माग्न्योर्मध्ये गच्छेतामिति गदाधरः। "प्राजग्राहमुदग्राहं तथा ब्रह्माणमृत्विजम्। एतानि बाह्यतः कृत्वा शेषाणां तु प्रदक्षिणम्"॥ इति गृह्यासंग्रहवचनात्,

"दक्षिणां दिशमाश्रित्य यमो मृत्युश्च तिष्ठतः। तयोः संरक्षणार्थाय तस्माद् ब्रह्मा बहिर्भवेत्"॥ इति (शु. क.) वचनान्तराच्च मध्ये गच्छेतामित्येव युक्तम्॥

त्रिः परिणीतां प्राजापत्यᳪ हुत्वा ॥ ६ ॥

पूर्ववदुपविश्य 'प्रजापतये स्वाहा'इति मनसा ब्रह्मणा ऽन्वारब्धो हुत्वा। इति सप्तमी कण्डिका ॥

अथैनामुदीचीᳪ सप्त पदानि प्रक्रामयति "एकमिषे, द्वे ऽऊर्जे, त्रीणि रायस्पोषाय, चत्वारि मायोभवाय, पञ्च

पशुभ्यः, षड् ऋतुभ्यः, सखे सप्तपदा भव सा मामनुव्रता भव । "विष्णुस्त्वा नयतु"इति सर्वत्रानुषजति ॥ १ ॥

अथ प्राजापत्यहोमानन्तरम् एनां वधूम् उदीचीम् उदङ्मुखीं सप्त पदानि प्रक्रामयति सप्त प्रक्रमान् दक्षिणपादेन कारयति । उत्तरोत्तरं वरः । कारितत्वात् 'सप्त पदानि प्रक्रमस्व'इत्यध्येषणेति केचित् । कुमार्या दक्षिणपादं गृहीत्वा ऽग्रे ऽग्रे स्थापयतीत्यन्ये । 'विष्णुस्त्वा नयतु'इति सर्वत्र षड्मन्त्रेषु अनुषङ्गः, न तु सप्तमे मन्त्रे, तुल्ययोगित्वात्साकाङ्क्षत्वाच्च पूर्वमन्त्राणाम्' इति कर्काचार्याः । अन्येषां भाष्यकाराणां पद्धतिकाराणां च मते सर्वमन्त्रेष्वनुषङ्गः ॥

निष्क्रमणप्रभृत्युदकुम्भꣳ स्कन्धे कृत्वा दक्षिणतो ऽग्नेर्वाग्यतः स्थितो भवत्युत्तरत एकेषाम् ॥ २ ॥

निष्क्रमणप्रभृति पित्रा मत्तामादाय निष्क्रामतीत्यादित आरभ्य कश्चित्पुरुषो जलपूर्णं कलशं स्कन्धे निधाय वधूवरयोः पृष्ठत आगत्याग्नेर्दक्षिणस्यां दिशि मौनी स्थित आस्ते । केषांचिन्मते उत्तरतः स्थित आस्ते ॥

तत एनां मूर्द्धन्यभिषिञ्चति—

"आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्"इति,आपोहिष्ठेति च तिसृभिः॥३॥

ततः तस्मात्स्कन्धस्थितादुदकुम्भादाचारादाम्रादिपल्लवसहितेन हस्तेन जलमादाय एनां वधूं मूर्द्धनि शिरसि वरः 'आपः शिवाः'इत्यादिना भेषजमित्यन्तेन मन्त्रेणाभिषिञ्चति । पुनस्तथैवोदकमाहृत्य 'आपोहिष्ठा'इत्यादिभिः 'आपो जनयथा च नः'इत्यन्ताभिस्तिसृभिर्ऋग्भिश्चाभिषिञ्चति ॥

अथैनाᳫँ सूर्यमुदीक्षयति तच्चक्षुरिति ॥ ४ ॥

अथाभिषेकादुपरि सूर्यमुदीक्षस्वेति प्रैषेण सूर्यम् एनां वधूं वरः उदीक्षयति सूर्यनिरीक्षणं कारयतीत्यर्थः । सा च वरप्रेषिता सती तच्चक्षुरिति मन्त्रेण स्वयं पठितेन सूर्यं निरीक्षते । एतच्च दिवाविवाहपक्षे इति रेणुदीक्षितहरिहरौ । सूर्यावेक्षणान्यथानुपपत्त्या 'अस्तमिते ध्रुवं दर्शयति' इत्यत्रास्तमितग्रहणाच्च पारस्करगृह्यानुसारिणां दिवैव विवाह इति गदाधरः ॥

अथास्यै दक्षिणाᳫँसमधि हृदयमालभते—

"मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं तेऽअस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्" ॥ इति ॥ ५ ॥

अथ सूर्येक्षणानन्तरम् अस्यै—अस्या वध्वाः । षष्ठ्यर्थे चतुर्थी । दक्षिणांसमधि दक्षिणस्य स्कन्धस्योपरि हस्तं नीत्वा तस्या हृदयमालभते स्पृशति वरः ॥

अथैनामभिमन्त्रयते—

सुमङ्गलीरियं वधूरिमाᳫँ समेत पश्यत ।

सौभाग्यमस्यै दत्त्वा याथास्तं विपरेत न॥इति॥६॥

अथ हृदयालम्भानन्तरम् एनां वधूं वरो ऽभिमन्त्रयते सुमङ्गलीरित्यादिना मन्त्रेण ।

*अत्र शिष्टसमाचाराद् "उत्तरतआयतना हि स्त्री" इति श्रुतिलिङ्गाच्च वधूं वरस्य वामभागे उपवेशयन्ति, तस्याः सीमन्ते वरेण सिन्दूरं दापयन्ति च" इति हरिहरव्याख्यायाम् ॥

* शतपथब्राह्मणे कां० १ अ० १ क० २० "उत्तरतो हि स्त्री पुमांसमुपशेते" इति श्रुतिः पत्नसमानार्थिकोपलभ्यते । उत्तरशब्दो वामवचनः ॥

तां दृढपुरुष उन्मथ्य प्राग्वोदग्वा ऽनुगुप्त आगार आनडुहे रोहिते चर्मण्युपवेशयति—

"इह गावो निषीदन्त्विहाश्वा ऽइह पूरुषाः ॥
इहो सहस्रदक्षिणो यज्ञ ऽइह पूषा निषीदतु"॥इति॥७॥

तां वधूं दृढपुरुषः बलवान् कश्चित् पुमान् उन्मथ्योत्थाप्य प्राक् पूर्वस्यां दिशि उदग् उदीच्यां वा दिशि पूर्वकल्पिते ऽनुगुप्ते सर्वतः परिवृते आगारे गृहे, तत्र च पूर्वमास्तीर्णे आनडुहे आर्षभे रोहिते लोहितवर्णे चर्मणि अजिने प्राग्ग्रीवे उत्तरलोम्नि उपवेशयति 'इह गाव' इत्यादिना निषीदत्वित्यन्तेन मन्त्रेण । केचन जामातेव दृढपुरुष इत्याहुः ॥

वृद्धानां वचनं च कुर्युर्विवाहश्मशानयोः ॥ ८ ॥

विवाहे श्मशाने च वृद्धानां स्त्रीणां वचनं वाक्यं कुर्युः । सूत्रे ऽनुपनिबद्धमपि वधूवरयोर्मङ्गलसूत्रम्, गले मालाधारणम्, उभयोर्वस्त्रान्ते ग्रन्थिकरणम्, करग्रहणे न्यग्रोधपुटिकाधारणम्, वरागमने नासिकाधारणम्, वरहृदये दध्यादिलापनादि ताश्च यत्स्मरन्ति तदपि कर्तव्यमित्यर्थः । चशब्दाद् देशाचारो ऽन्योऽपि । ग्रामशब्देन स्वकुलवृद्धाः स्त्रियो ऽभिधीयन्ते । ता हि पूर्वपुरुषैरनुष्ठीयमानं सदाचारं स्मरन्ति ॥

वृद्धानां स्त्रीणां वचनं कार्यमित्यत्र प्रमाणमाह—

ग्रामं प्रविशतादिति वचनात् । तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेः ॥ ९ ॥

ग्रामं वृद्धानां स्त्रीणामाचारं प्रविशतात् इतिस्मृतिवचनाद् । ननु ग्रामं प्रविशतादिति स्मृतिवचनाद् हरिद्रालापनादौ अस्तु प्रामाण्यं, यत्र तु अथैनमश्मानमारोहयतीत्येतदनन्तरं तूर्णीं वरस्य पाषाणावरोहणं कारयित्वा कुमार्या भ्राता वराङ्गुष्ठोपरि

उपले निधाय वराद्रूप्यादि गृह्णाति इति वा: स्मरन्ति तदप्रमाणम्, लोभमूलत्वेन वैसर्जनीयवस्त्रग्रहणवत्, इत्यत आह–तयोर्ग्रामः प्रमाणमिति श्रुतिवचनादिति । श्रुतिवचनाच्चाभियेऽस्मर्यते रूप्यग्रहणादि तदपि प्रमाणं प्रत्यक्षश्रुतिमूलत्वात् ॥

आचार्याय वरं ददाति ॥ १० ॥

वरः स्वकीयायाचार्याय वरं ददाति ॥

वरशब्दार्थमाह—

गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्येति ॥ ११ ॥

स्पष्टम् ॥

अस्तमिते ध्रुवं दर्शयति—

"ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वाऽदाद् बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शतम्" ॥ इति ॥ १२ ॥

दिवा विवाहश्चेत्तदा ऽस्तमिते सूर्ये ध्रुवमीक्षस्वेति मंत्रेण वधूं ध्रुवं तारकाविशेषं दर्शयति, रात्रौ विवाहश्चेत्तदा वरदानानन्तरमेव । ध्रुवमसीत्यादिना मन्त्रेण वधूर्ध्रुवमीक्षते । वरस्यैव मन्त्रपाठ इति गदाधरः । तदा पश्यामीत्यत्र ण्यर्थान्तर्भावः ॥

अधिरथᳲ शतं दुहितृमते ॥ १३ ॥

ददातीत्यनुवर्तते । दुहितृमांश्च यस्य दुहितर एव न पुत्राः, तस्मै दुहितृमते रथेनाधिकं गोशतं दत्त्वा तस्य कन्यामुद्वहेत् । 'यस्यास्तु न भवेद् भ्राता' इतिमनुवचनाद् अभ्रातृमतीपरिणयनं निषिद्धं, तदतिक्रम्य कश्चित्तामुद्वहेचेत्, तस्याः पुत्रिकात्वदोषपरिहाराय रथाधिकं गवां शतं दद्यात् ॥

सा यदि न पश्येत्पश्यामीत्येव ब्रूयात् ॥ १४ ॥

सा कन्या यदि ध्रुवसञ्ज्ञकं सूक्ष्मं नक्षत्रं न पश्येत् तथाऽपि तया पश्यामीत्येव वक्तव्यम्, न पश्यामीति वचनं न वक्तव्यम् ॥

त्रिरात्रमक्षारालवणाशिनौ स्याताम् ॥ १५ ॥

विवाहदिनमारभ्य त्रिरात्रं त्रीन् अहोरात्रान् अक्षारालवणाशिनौ अक्षारं चालवणं चाक्षारालवणन्तदश्नीतः एवंशीलौ स्याताम् ॥

अधः शयीयाताम् । संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ॥ १६ ॥

अधः आस्तरणास्तृतायां भूमौ न खट्वादौ संवत्सरं वर्षं यावत् मिथुनमभिगमनं नोपेयाताम् नोपगच्छेताम् । अथवा द्वादशरात्रम्, अथवा षड्रात्रम्, अथवा त्रिरात्रमन्ततः, संवत्सरादिपक्षाणाम् अन्ते त्रिरात्रमित्यर्थः । संवत्सरादिविकल्पास्तु शक्त्यपेक्षया विकल्पिता विज्ञेयाः । संवत्सरादिपक्षाशक्तौ त्रिरात्रपक्षाश्रयणेऽपि चतुर्थीकर्मानन्तरं पञ्चम्यादिरात्राभिगमनम् । चतुर्थीकर्मणः प्राक् तस्या भार्यात्वस्यैव असंवृत्तत्वात् । चतुर्थीकर्मणः विवाहैकदेशत्वात् ॥ इत्यष्टमी कण्डिका । नवमीदशम्यौ कण्डिके संस्कारानुपयोगित्वान्न व्याख्यायेते ॥

अथ चतुर्थीकर्मसूत्रव्याख्या ॥

चतुर्थ्यामपररात्रे ऽभ्यन्तरतो ऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकꣳ श्रपयित्वा ऽऽज्यभागाविष्ट्वा ऽऽज्याहुतीर्जुहोति—

"अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा १ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा २ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ३ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा ४ गन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि । ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा" ५ इति ॥ १ ॥

विवाहतिथिमारभ्य या चतुर्थी तिथिस्तस्यामपररात्रे ऽग्निसमहर्दे अभ्यन्तरतो गृहस्य मध्ये ऽग्निमुपसमाधाय वैवाहिकमग्निं स्थापयित्वा ऽग्नेर्दक्षिणतो ब्रह्मण उपवेशनार्थं कुशानास्तीर्य तत्र ब्रह्माणमुपवेश्याग्नेरुत्तरतः प्रणीतास्थलं त्यक्त्वोदपात्रमुदकयुक्तं पात्रं प्रतिष्ठाप्य स्थापयित्वा स्थालीपाकं चरुं श्रपयित्वा पर्युक्षणान्ते आघारानन्तरमाज्यभागाविष्ट्वा आज्याहुतीर्जुहोति—आज्येन "अग्ने प्रायश्चित्त"इत्येतैः पञ्चभिर्मन्त्रैः पञ्चाहुतीर्जुहोति ।

विवाहशेषत्वाद्बहिःशालायां मा भूदित्यभ्यन्तरग्रहणम् । एतेन बहिःशालायामनुष्ठानं केषां चिदनापेक्षेत वोदितव्यम् । पूर्वाह्णव्युदासार्थं चापररात्रग्रहणम् । ब्रह्माणमुपवेश्येति उदपात्राव-

सन्निधित्सया । पूर्वसिद्धस्य चरोरुपादानं मा भूदिति श्रपयित्वेत्युच्यते । आज्यभागाविष्ट्वेति आज्याहुतिकालविधानार्थम् ।

चतुर्थीकर्मणो विवाहाङ्गत्वाद्विवाहाग्नावेवानुष्ठानम् । तस्यापि समारोपं कृत्वा पुनरपररात्रे तं गृहाभ्यन्तरत उत्पाद्य न चतुर्थीकर्मानुष्ठानम्, किन्तु कन्यागृहमण्डपात् स्वगृहं नीत्वा चत्वारि दिनान्यजस्रं स्थापयित्वा तस्मिन्नेव चतुर्थीकर्मानुष्ठानम्। यद्यपि पारस्करगृह्ये चतुर्थीकर्म विवाहाग्नावेव कर्तव्यमिति स्पष्टतया नोक्तं तथाऽपि प्रथमकाण्डे दशम्यां कण्डिकायां "राज्ञो ऽक्षभेदे"इत्यादिना "स्त्रियाश्च उद्वहने" ( पितृगृहाद्भर्तृगृहं प्रति प्रथमगमने ) इत्यन्तेन निमित्तान्युदाहृत्य पारस्कराचार्येण तमेवाग्निमुपसमाधायेत्यादिना प्रायश्चित्त्युपदेशात् तत्रैवानुष्ठानं गम्यते । आश्वलायनगृह्ये प्रथमाध्याये ऽष्टमखण्डे "विवाहाग्निमग्रतो ऽजस्रं नयन्ति" इति गृहप्रवेशनीयहोमार्थं प्रज्वलितस्य विवाहाग्नेर्नयनं स्पष्टमेवोक्तम् । हि० के० गृ०, गो० गृ० च स्पष्टमेतत् । अयत्ने तु माग्नौ नष्ट एव विवाहाग्नौ पुनस्सन्धाय कथंचिच्चतुर्थीकर्माचरन्ति । तत्रापि प्रायश्चित्ताचरणमावश्यकमेव ॥

स्थालीपाकस्य जुहोति प्रजापतये स्वाहेति ॥ २ ॥

स्थालीपाकस्य चरोः प्रजापतये स्वाहेत्येकामाहुतिं मनसा जुहोति ॥

हुत्वा हुत्वैतासामाहुतीनामुदपात्रे सꣳस्रवान् समवनीय ॥ ३ ॥

"अग्ने प्रायश्चित्त"इत्यादीनां प्राजापत्यान्तानां षण्णामाहुतीनामेकैकामाहुतिं हुत्वा संस्रवान् स्रुवलग्नाज्यचर्वंशान् हुतशेषानुदपात्रे समवनीय प्रक्षिप्य ॥

तत ऽएनां मूर्द्धन्यभिषिञ्चति—

"या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत ऽएनां करोमि सा जीर्य्य त्वं मया सहासौ" इति ॥ ४ ॥

ततः तस्मादुदपात्रात् संस्रवमिश्रमुदकमादायैनां वधूं वरो मूर्द्धन्यभिषिञ्चति "या ते पतिघ्नी" इति मन्त्रेण। असावित्यत्र वधूनामग्रहणम्। अत्रैव समाचारात् पतिः स्वनामसंबद्धं भार्याया नाम करोति।

षण्णामाहुतीनामत्र संस्रवभक्षणलोप इतरासां तु भवत्येव। हुत्वाहुत्वेति ग्रहणं सर्वाहुत्यन्ते संस्रवनिनयनं मा भूदिति॥

अथैनाᳬस्थालीपाकं प्राशयति—

"प्राणैस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि माᳬसैर्माᳬसानि त्वचा त्वचम्"इति ॥ ५ ॥

अथाभिषेकानन्तरम् एनां वधूं स्थालीपाकं चरुशेषं "प्राणैस्त" इत्यादिना मन्त्रेण वरः प्राशयति। वधूसंस्कारोऽयं नतु द्रव्यप्रतिपत्तिः, अतो द्रव्यस्य नाशदोषादावन्यद्रव्येण प्राशनं कार्यम् ॥

तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥ ६ ॥

यतो ऽनेन चरुशेषप्राशनकर्मणा भर्त्रा सहैकत्वं प्राप्ता दारास्तस्माच्छ्रोत्रियस्य दारेण सह भार्यया सहोपहासं मैथुनं नेच्छेत् न कामयेत्। हि यस्मादेवंविदपि श्रोत्रियस्य परः शत्रुर्भवति ॥ समाप्तं चतुर्थीकर्म ॥

अथ गर्भाधानसूत्रव्याख्या ॥

तामुदुह्य यथर्तु प्रवेशनम् ।

यथाकामी वा "काममाविजनितोः सम्भवाम" इति वचनात् ॥ ७ ॥

एवं पूर्वोक्तेन प्रकारेण तां वधूमुदुह्य विवाहकर्मणा भार्यात्वं संपाद्य यथर्तु ऋतुकालमृतुकालं प्रवेशनमभिगमनम् । कुर्यादिति शेषः । स्त्रियाः काममनतिक्रम्य यथाकामं तदस्यास्तीति यथाकामी वा भवेत् । न ऋतुकालाभिगमननियमः । कामं स्वेच्छया आविजनितोरामसवात् सम्भवाम भर्त्रा सह सङ्गता भवाम इति स्त्रीणामिन्द्राद्वरप्रार्थनावचनात् । अत्र यद्यपि "यथर्तुप्रवेशनम्" इति सामान्येनोक्तं तथाऽपि "अथास्या ऊरू विहापयति" इत्यादिना शतपथब्राह्मणे उपदिष्टः ( का. १४ अ. ९ ब्रा. ४ कं. २० ) इतिकर्तव्यताविशेषो बोद्धव्यः । स च प्रयोगनिरूपणावसरे प्रदर्शयिष्यते । स्मृत्यन्तरोक्तपर्वादिनिषेधपालनं च कुर्यात् ॥

अथास्यै दक्षिणाᳬंसमधि हृदयमालभते—

"यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतᳪं शृणुयाम शरदः शतम्"इति ॥ ८ ॥

अथ अभिगमनानन्तरमस्यै अस्या भार्याया दक्षिणांसं दक्षिणस्कन्धमधि उपरि दक्षिणं हस्तं नीत्वा हृदयं वक्ष आलभते स्पृशति "यत्ते सुसीम" इत्यादिना मन्त्रेण ॥

एवमत ऊर्ध्वम् ॥ ९ ॥

एवमनेनैव प्रकारेण अतोऽनन्तरमृतावृतौ प्रवेशनं यथाकामं वा इति हरिहरः । हृदयालम्भ इति गदाधरः ॥ इत्येकादशी कण्डिका ॥ द्वादशीत्रयोदश्यौ पूर्वोक्तादेव हेतोर्न व्याख्याते ॥

अथ पुंसवनसूत्रव्याख्या ॥

अथ पुंसवनम् । पुरा स्पन्दत इति मासे द्वितीये तृतीये वा ॥ १ ॥

पुंसवनमिति गर्भसंस्कारकर्मणो नामधेयम् । सम्र स्पन्दते पुरा स्पन्दिष्यते चलिष्यति "यावत्पुरानिपातयोः" इति भविष्यदर्थे लटः प्रयोगः । पुरा गर्भस्पन्दनाद्भवतीति हेतोः शुद्धे द्वितीये वा मासे तृतीये वा मासे गर्भाधानाद्भवति। गर्भसंस्कारकत्वात् प्रतिगर्भमावर्तनीयमेतदिति गदाधरादयः । क्षेत्रसंस्कारकत्वात् सकृदेव पुंसवनसीमन्ते कार्ये इति विज्ञानेश्वरः ॥

यदहः पुꣳसा नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्याप्लाव्याहते व्वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनꣳ "हिरण्यगर्भः" "अद्भ्यः सम्भृत" इत्येताभ्याम् ॥ २ ॥

यस्मिन्नहनि पुंसा पुन्नामकेन पुष्यादिना नक्षत्रेण चन्द्रमा युक्तो भवति तदहस्तस्मिन्दिने गर्भिणीमुपवास्यनाशयित्वाऽभोजयित्वा ऽऽप्लाव्य स्नापयित्वा ऽहते वाससी नवे वाससी परिधाप्य च न्यग्रोधो वटस्तस्यावरोहान् अधोजायमानान्, शुङ्गान् तदग्रपल्लवान् मुकुलाकारांश्च उभयं रात्रौ पूर्ववद्गर्भधारणार्थोक्तवत् पिष्ट्वा पूर्ववदेवासेचनम् दक्षिणनासारन्ध्रे "हिरण्यगर्भो ऽद्भ्यः संभृत" इत्येताभ्यामृग्भ्याम् ॥

कुशकण्टकꣳ सोमाꣳशुं चैके ॥ ३ ॥

एक आचार्याः न्यग्रोधावरोहशुङ्गेषु पिष्यमाणेषु कुशस्य कण्टकं मूलं सोमांशुं सोमलताखण्डं च प्रक्षिपन्ति ॥

कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्य-

वान् स्यादिति विकृत्यैनमभिमन्त्रयते "सुपर्णोऽसि" इति प्राग् विष्णुक्रमेभ्यः ॥ ४ ॥

स भर्ता यदि कामयेतेच्छेद् गर्भो वीर्यवान् शक्तिमान् स्यादिति तदाऽस्या भार्याया उपस्थे उत्सङ्गे कूर्मपित्तं जलपूर्णशरावं निधाय विकृत्या विकृतिच्छन्दस्कया "सुपर्णोऽसि" इत्यनया ऋचा स्वःपतेरित्यन्तया एनं गर्भमभिमन्त्रयते ऽनामिकाग्रेण गर्भाशयं स्पृष्ट्वा मन्त्रं जपतीत्यर्थः ।

तदुक्तं कात्यायनेन—

स्पृशंस्त्वनामिकाग्रेण क्वचिदालोकयन्नपि ।

अनुमन्त्रणीयं सर्वत्र सदैवमनुमन्त्रयेत् ॥

अभिमन्त्रणानुमन्त्रणयोर्न कश्चिद्विशेषः इति गदाधरः। इति चतुर्दशी कण्डिका ॥

अथ सीमन्तोन्नयनसूत्रव्याख्या ॥

अथ सीमन्तोन्नयनं पुंसवनवत् ॥ १ ॥

अथ पुंसवनानन्तरं क्रमप्राप्तं सीमन्तोन्नयनं गर्भसंस्कारकं कर्म (व्याख्यास्यते) । तच्च पुंसवनवत् पुन्नक्षत्रे भवति ॥

प्रथमगर्भे मासे षष्ठे ऽष्टमे वा ॥ २ ॥

आद्यगर्भे गर्भाधानप्रभृति षष्ठे ऽष्टमे वा मासे नियमेन कुर्यात्, गर्भान्तरेष्वनियम इति कर्कोपाध्यायः । अन्ये तु प्रथमगर्भ एवेति ॥

तिलमुद्गमिश्रꣳ स्थालीपाकꣳ श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ ऽउपविष्टायां युग्मेन शलाटुग्रप्सेनौदुम्बरेण, त्रिभिश्च दर्भपिञ्जूलैः, त्र्येण्या शलल्या, वीरतरशङ्कुना, पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति भूर्भुवः स्वरिति । प्रतिमहाव्याहृतिभिर्वा ॥ ३ ॥

तिलैर्मुद्गैर्मिश्रस्तिलमुद्गमिश्रस्तं स्थालीपाकमोदनं चरुं श्रपयित्वाऽऽज्यभागान्ते प्रजापतये स्वाहेत्येकामाहुतिं हुत्वा स्विष्टकृदादिपूर्णपात्रदानान्तं विदध्यात् । अग्नेः पश्चिमतः - भर्तुर्दक्षिणतो मृद्वासने आसीनायां गर्भिण्यां भर्तौदुम्बरेणोदुम्बरवृक्षोद्भवेन युग्मेन म्यादियुग्मफलवता शलाटुग्रप्सेनापक्वफलैकस्तबकानिबद्धेन, त्रिभिश्च दर्भपिञ्जूलैर्दर्भपवित्रैश्च, त्र्येण्या त्रिषु स्थानेषु एता श्येणी तया त्र्येण्या शलल्या शलल्याख्यपक्षिकण्टकेन, वीरतरशङ्कुना शरेषीकया आश्वत्थेन वा शङ्कुना, पूर्णचात्रेण च पूर्णं सूत्रेण पूर्णं चात्रं सूत्रकर्तनसाधनम् तर्कुरिति यावत् तेन लोहकीलकेन च । चकारः सर्वसमुच्चयार्थः । अस्थौदुम्बरयुग्मादिभिस्सर्वैः पुञ्जीकृतैः सीमन्तं स्त्रियाः ऊर्ध्वं विनयति पृथक् करोति । ललाटान्तरमारभ्य केशान् द्विधा करोति "भूर्भुवः स्वः" इत्येतावता मन्त्रेण सकृदेव भूर्भुवः स्वर्विनयामीत्येवम् । यद्वा प्रतिमहाव्याहृतिभिर्विनयति ततश्च भूर्विनयामि, भुवर्विनयामि, स्वर्विनयामि इति त्रिर्विनयनं भवति ॥

त्रिवृतमाबध्नाति "अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव" इति ॥ ४ ॥

अयमूर्जावत इत्यनेन मन्त्रेण त्रिवृतं वेणीं प्रति आबध्नाति । पुञ्जीकृतमौदुम्बरादिपञ्चकं वेण्यां नियुनक्ति इत्यर्थः ॥

अथाह वीणागाथिनौ राजानꣳसङ्गायेतां यो वाऽन्यो वीरतर इति ॥ ५ ॥

अथ औदुम्बरादिपञ्चकस्य वेणीबन्धनानन्तरमाह ब्रवीति "हे वीणागाथिनौ राजानं भूपतिं सङ्गायेतां राजवर्णनसम्बद्धं ध्रुवादिरूपकं युवां सम्यग्गायेताम्, अथवा यो ऽन्योऽपि राजव्यतिरिक्तो वीरतरः प्रकृष्टः शूरस्तं सङ्गायेताम्" इति ॥

निगुक्तामप्येके गाथामुपोदाहरन्ति ॥ ६ ॥

एके आचार्या नियुक्तां गाने विहितां गाथां मन्त्रम् उपोदाहरन्ति पठन्ति । अपिः समुच्चयार्थः । तत्पक्षे राजवीरतरयोरन्यतरगानं गाथागानं च समुच्चितं भवति ॥

गाथामाह सूत्रकारः—

सोम ऽएव नो राजेमा मानुषीः प्रजाः । अविमुक्तचक्र ऽआसीरँस्तीरे तुभ्यमसाविति ॥ ७ ॥

यां नदीमुपावसिता भवति तस्या नाम गृह्णाति ॥८॥

ततो गर्भिणी यां नदीम् उप समीपे आवसिता स्थिता भवति तस्या नद्या असाविति गङ्गे यमुने इत्येवं संबुद्ध्यन्तं नाम गृह्णाति॥

ततो ब्राह्मणभोजनम् ॥ ९ ॥

उक्तार्थम् । इति सीमन्तोन्नयनम् ॥ इति पञ्चदशी कण्डिका ॥

अथ जातकर्मसूत्रव्याख्या ।

सोष्यन्तीमद्भिरभ्युक्षत्येजतु दशमास्य इति प्राग्यस्यैत इति ॥ १ ॥

सोष्यन्तीं प्रसवशूलवतीं स्त्रियं भर्ता ऽद्भिर्जलेन 'एजतु दशमास्य' इत्येतया 'यस्यैत'इति प्राक् पठितया ऋचा त्र्यवसानया विराड्जगत्या ऽभ्युक्षति प्रसिञ्चति ॥

अथावरावपतनम् "अवैतु पृश्नि शेवल१ शुने जराय्वत्तवे । नैव माᳬसेन पीवरि न कस्मिँश्चनायतमव जरायु पद्यताम्"इति ॥ २ ॥

अथाभ्युक्षणानन्तरमवरावपतनम् अवरमुल्वं जरायुः गर्भवेष्टनमवाचीनमधः पतत्यनेन जप्तेनेत्यवरावपतनो मन्त्रः तम् 'अवैतु' इत्यादि पद्यतामित्यन्तं स्त्रीसमीप उपविश्य भर्ता जपति ॥

**जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति ॥ ३ ॥**

मन्त्रपाठानन्तरम् जातस्योत्पन्नस्य कुमारस्याच्छिन्नायां नाड्याम् अच्छिन्ने नाभिनाले मेधाजननायुष्ये मेधाजननं चायुष्यं च ते पिता करोति ॥

मेधाजननं तावदाह—

**अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा "भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामि" इति ॥ ४ ॥**

अनामिकयाऽङ्गुल्या सुवर्णेनाच्छादितया मधु च घृतं च मधुघृते द्वन्द्वसमाससामर्थ्यादेकीकृते, घृतं वा केवलं कुमारं सकृत्प्राशयति कुमारस्य जिह्वायां निमार्ष्टि 'भूस्त्वयि दधामि' इत्यादिना 'सर्वं त्वयि दधामि' इत्यन्तेन। अत्रेतिकरणाद्वाक्यसमुदायस्यैकमन्त्रत्वमिति हरिहरः ॥

**अथास्यायुष्यं करोति नाभ्यां दक्षिणे वा कर्णे जपति "अग्निरायुष्मान् स वनस्पतीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि १ सोम ऽआयुष्मान्त्सोषधीभिरायुष्माँस्तेन त्वाऽऽयुषा ऽऽयुष्मन्तं करोमि २ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वा ऽऽयुषा ऽऽयुष्मन्तं करोमि ३ देवा ऽआयुष्मन्तस्ते ऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषा ऽऽयुष्मन्तं करोमि ४ ऋषय ऽआयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वा ऽऽयुषा ऽऽयुष्मन्तं करोमि ५ पितर ऽआयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वा ऽऽयुषा ऽऽयुष्मन्तं करोमि ६ यज्ञ ऽआयुष्मान्त्स दक्षिणाभिरायु-**

ष्माँस्तेन त्वा ऽऽयुषा ऽऽयुष्मन्तं करोमि ७ समुद्र ऽआयुष्मान्त्स स्रवन्तीभिरायुष्माँस्तेन त्वा ऽऽयुषा ऽऽयुष्मन्तं करोमि" ८ इति त्रिः ॥ ५ ॥

अथ मेधाजननानन्तरम् अस्य कुमारस्यायुष्यमायुषो हितं जीवनवर्धनं कर्म करोति । तद्यथा–नाभिदेशे दक्षिणे वा कर्णे–नाभिसमीपे दक्षिणकर्णसमीपे वा "अग्निरायुष्मान्" इत्यादिकान् अष्टौ मन्त्रान् त्रिर्जपति त्रीन् वारानुपांशु पठति ॥

त्र्यायुषमिति च ॥ ६ ॥

त्र्यायुषमिति मन्त्रं च तथैव त्रिर्जपति ॥

इदं चायुष्यकरणं कालातिक्रमेऽपि क्रियते । मेधाजननं तु मुख्यकालातिक्रमान्निवर्तते । "तस्मात्कुमारं जातं घृतं वै वाऽग्रे प्रतिलेहयन्ति स्तनं वा ऽनुधापयन्ति" इति जातमात्रस्य कुमारस्य श्रुत्या मेधाजननोपदेशात् ॥

स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत् ॥ ७ ॥

स पिता यदि अयं कुमारः सर्वं सम्पूर्णमायुर्जीवितमियात् इत्येवम् इच्छेत् तदा वात्सप्रेण वात्सप्रिणा भालन्दनेन दृष्टेन अनुवाकेन दिवस्परि इत्यादिद्वादशर्चेन एनं कुमारम् अभिमृशेत् सर्वं शरीरमालभेत ॥

तत्र 'उपप्रयन्तोऽअध्वरम्'इति वात्सप्रव्यावृत्त्यर्थं विशेषमाह–

दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि ॥८॥

दिवस्परीत्यादिको द्वादशर्चो ऽनुवाको वात्सप्रः । एतस्योत्तमामन्त्यां द्वादशीम् 'अस्ताव्यग्निः'इत्येतामृचं परिशिनष्टि व्युदस्यति । तां परित्यज्यैकादशभिर्ऋग्भिरभिमृशेदित्यर्थः ॥

प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति । पूर्वो ब्रूयात्प्राणेति । व्यानेति दक्षिणः । अपानेत्यपरः । उदानेत्युत्तरः । समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात् । स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु ॥ ९ ॥

कुमारस्य प्रतिदिशं दिशं दिशं प्रति चतसृषु प्राच्यादिषु दिक्षु मध्ये च यथाक्रमं पञ्च ब्राह्मणानवस्थाप्य कुमाराभिमुखान्संनिवेश्य तान् प्रति "इममनुप्राणित"इति "इमं कुमारम अनुप्राणित लक्षीकृत्य प्राणेत्यादि ब्रूत"इत्यर्थकं प्रैषं ब्रूयात् । ततः प्रेरिता ब्राह्मणाः पूर्वादिक्रमेण कुमारं लक्षीकृत्य ब्रूयुः । तत्र प्राणेति कुमारं लक्षीकृत्य पूर्वो ब्रूयात् । व्यानेति दक्षिणो ब्राह्मणः । अपानेति पश्चिमः । उदानेत्युत्तरः । समानेति पञ्चम उपरिष्टादूर्ध्वमवेक्षमाणः । अविद्यमानेष्वसत्सु ब्राह्मणेषु स्वयं वा स्वयमेव अनुप्राणनं कुर्याद् अनुपरिक्रामं परिक्रम्य परिक्रम्य पूर्वादिकां दिशम् । अनुपरिक्राममिति णमुलन्तम् । अस्मिन्पक्षे प्रैषाभावः ॥

स यस्मिन्देशे जातो भवति तमभिमन्त्रयते—

"वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्" ॥ इति ॥ १० ॥

स कुमारो यस्मिन्देशे भूभागे उत्पन्नस्तन्देशमभिमन्त्रयते हस्तेन स्पृशति "वेद ते भूमि" इत्यादिमन्त्रेण ॥

अथैनमभिमृशति—

"अश्मा भव परशुर्भव हिरण्यमस्रुतं भव । आत्मा वै पुत्रनामासि स जीव शरदः शतम्" इति ॥ ११ ॥

अथ जन्मदेशाभिमन्त्रणानन्तरम् एनं कुमारं पिताऽभिमृ-

शति समन्ततः सर्वशरीरे स्पृशति अश्माभवेत्यादिना मन्त्रेण ।

वात्सप्राभिमर्शनादि एतदभिमर्शनान्तं कर्म कालव्यतिक्रमेऽपि क्रियते संस्काररूपत्वात् ॥

अथास्य मातरमभिमन्त्रयते–

इडाऽसि मैत्रावरुणी व्वीरे व्वीरमजीजनथाः । सा त्वं व्वीरवती भव याऽस्मान्वीरवतो ऽकरत्" इति॥१२॥

अथ कुमाराभिमर्शनानन्तरम् अस्य कुमारस्य मातरं जननीम् अभिमुखो भूत्वा इडासीत्यादिना मन्त्रयते मन्त्रश्रावणेन संस्करोति ॥

अथास्यै दक्षिणꣳ स्तनं प्रक्षाल्य प्रयच्छतीमꣳ स्तनमिति । यस्ते स्तन इत्युत्तरमेताभ्याम् ॥ १३ ॥

अथाभिमन्त्रणानन्तरमस्यै अस्याः मातुर्दक्षिणं स्तनं प्रक्षाल्य धावयित्वा 'इमं स्तनम्' इत्येतयर्चा कुमाराय प्रयच्छति ददाति । तत उत्तरं वामं स्तनं प्रक्षाल्य 'यस्ते स्तनः' 'इमꣳस्तनम्' इत्येताभ्यामृग्भ्यां प्रयच्छति ॥

उदपात्रꣳ शिरस्तो निदधाति–"आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ एवमस्याꣳ सूतिकायाꣳ सपुत्रिकायां जाग्रथ"इति ॥ १४ ॥

उदपात्रं जलपूर्णपात्रं कुमारस्य शिरस्तः शिरःप्रदेशे निदधाति स्थापयति आपोदेवेष्वित्यादिना मन्त्रेण । सूतिकायाः शिरःप्रदेशे इति गदाधरः ॥

द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्सन्धिवेलयोः फलीकरणमिश्रान् त्सर्षपानग्नावावपति–"शण्डा मर्का ऽउपवीरः शौण्डिकेय ऽउलूखलः । मलिम्लु-

घो द्रोणासश्च्यवनो नश्यतादितः स्वाहा २ आलिखन्ननिमिषः किंवदन्त ऽउपश्रुतिर्हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा"३इति ॥ १५ ॥

ततः सूतिकागृहस्य द्वारदेशे पञ्चभूसंस्कारपूर्वकं सूतिकाग्निं स्थापयित्वा ओत्थानादुत्थानं यावत् सन्धिवेलयोः सायंप्रातः फलीकरणमिश्रान् फलीकरणैः तण्डुलकणैर्मिश्रान् युक्तान् सर्षपान् तस्मिन्नग्नौ आवपति जुहोति द्वे आहुती। शण्डामर्का इत्येकाम्, आलिखन्निति द्वितीयाम्। आवपनोपदेशाद्धोमेतिकर्तव्यतानिवृत्तिः॥

यदि कुमार ऽउपद्रवेत् जालेन प्रच्छाद्योत्तरीयेण वा पिताऽङ्क ऽआधाय जपति–

"कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः। चेचेच्छुनक सृज नमस्ते ऽस्तु सीसरो लपेतापह्वर १ तत्सत्यं यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः। चेचेच्छुनक सृज नमस्ते ऽस्तु सीसरो लपेतापह्वर २ तत्सत्यं यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ। चेचेच्छुनक सृज नमस्ते ऽस्तु सीसरो लपेतापह्वर" ३ इति। अभिमृशति–"न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसि"इति ॥ १६ ॥

यदि चेत्कुमारो बालग्रहस्तं बालमुपद्रवेत् अभिभवेत् तदा तं बालं जालेन मत्स्यग्रहसाधनेन तदलाभे उत्तरीयेण वाससा प्रच्छाद्याङ्के उत्सङ्गे निधाय धृत्वा कूर्कुर इत्यादिकमपह्वरेत्यन्तं मन्त्रं जपति। जपान्ते कुमारस्य सर्वाङ्गमभिमृशति

"न नामयति"इत्यादिना मन्त्रेण॥ इति जातकर्म॥ इति षोडशी।

अथ नामकरणसूत्रव्याख्या ।

दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति ॥ १ ॥

दशम्यां रात्र्यामतीतायाम् एकादशे ऽहनि ब्राह्मणान् श्राद्धव्यतिरेकेण त्रिप्रभृतीन् भोजयित्वा पिता कुमारस्य नाम करोति । अन्यस्मिन्नपि संस्कारे पितुरेवोत्सर्गात्कर्तृत्वम् । इह पितुर्ग्रहणादन्यत्रापि नियमो ऽवगम्यते ॥

द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम्। अयुजाक्षरमाकारान्तꣳ स्त्रियै तद्धितम् ॥ २ ॥

द्वे अक्षरे अस्य तद् द्व्यक्षरं चत्वार्यक्षराण्यस्य तच्चतुरक्षरम् । अनयोर्विकल्पः । किञ्च घोषवदादि घोषवदक्षरमादौ यस्य नाम्नस्तद्घोषवदादि । घोषवन्ति चाक्षराणि वर्गतृतीयचतुर्थपञ्चमा हकारश्चेत्येतानि । अन्तरन्तस्थम् अन्तर्मध्ये ऽन्तस्था यस्य तदन्तरन्तस्थम् । अन्तस्था यरलवाः । दीर्घाभिनिष्ठानम् दीर्घमभिनिष्ठानमवसानं यस्य तद्दीर्घाभिनिष्ठानम् । कृतं कृत्प्रत्ययान्तं कुमारस्य नामधेयं कुर्यात् । यद्वा कृतं पूर्वकृतं पितामहादिनाम तत् कुर्यात् । न तद्धितं, तद्धितप्रत्ययान्तं न कुर्यात् । स्त्रियान्तु विशेषः–अयुजाक्षरम् अयुजानि विषमाणि त्र्यादीनि अक्षराणि यस्य तदयुजाक्षरम्, आकारान्तम् आकारो ऽन्तो यस्य तदाकारान्तम्, स्त्रियै स्त्रियाः तद्धितं तद्धितप्रत्ययान्तं, नाम कुर्यादित्यनुपज्यते ॥

शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य॥३॥

ब्राह्मणस्य विप्रस्य पूर्वोक्तलक्षणनामान्ते शर्मेति पदम्,

क्षत्रियस्य वर्मेति पदम्, वैश्यस्य गुप्तेति पदं कुर्यात् ॥

अथ निष्क्रमणसूत्रव्याख्या।

चतुर्थे मासि निष्क्रमणिका ॥ ४ ॥

कुमारस्य जन्मचतुर्थे मासि निष्क्रमणिका गृहाद्बहिर्निष्क्रमणं करोति पिता ॥

सूर्यमुदीक्षयति तच्चक्षुरिति ॥ ५ ॥

'तच्चक्षुर्देवहितम्'इत्यादिना 'शरदः शतात्'इत्यन्तेन मन्त्रेण श्रीसूर्यं भगवन्तं रश्मिमालिनमुदीक्षयति कुमारं प्रदर्शयति पिता। इति सप्तदशी कण्डिका। अष्टादशी न व्याख्याता। हेतुस्तूक्तः ॥

अथान्नप्राशनसूत्रव्याख्या।

षष्ठे मासेऽन्नप्राशनम् ॥ १ ॥

जन्मतः षष्ठे मासे कुमारस्यान्नप्राशनं कुर्यात् ॥

स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति—

"देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा"इति। वाजो नोऽद्येति च द्वितीयाम् ॥ २ ॥

स्थालीपाकं चरुं यथाविधि श्रपयित्वाऽऽघारावाज्यभागौ हुत्वा द्वे आहुती आज्येन जुहोति ॥

"देवीं वाचम्"इत्यादिकया ऋचा एकामाहुतिं जुहुयात् "इदं वाचे"इति त्यागं कुर्वन्। चकारात् पुनः "देवीं वाचम्"इत्येतस्यान्ते "वाजो नोऽद्य" इति च मन्त्रं

पठित्वा द्वितीयामाज्याहुतिं जुहुयात् "इदं वाचे वाजाय च" इति त्यागं कुर्वन् ॥

स्थालीपाकस्य जुहोति-

. प्राणेनान्नमशीय स्वाहा १ अपानेन गन्धानशीय स्वाहा २ चक्षुषा रूपाण्यशीय स्वाहा ३ श्रोत्रेण यशोऽशीय स्वाहा ४ इति ॥ ३ ॥

स्थालीपाकस्य चरोः चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहोति प्राणेनान्नमशीय स्वाहेत्यादिभिः प्रतिमन्त्रम् ॥

प्राशनान्ते सर्वान् रसान्त्सर्वमन्नमेकत उद्धृत्याथैनं प्राशयेत् तूष्णीं, हन्तेति वा । हन्तकारं मनुष्या इति श्रुतेः ॥ ४ ॥

प्राशनान्ते-संस्रवप्राशनान्ते कर्मणि जाते सर्वान् कटुमधुरतिक्तकषायादीन्, सर्वमन्नं-भक्ष्यं भोज्यं लेह्यं चूष्यं पेयं चैकतः एकस्मिन्सुवर्णादिपात्रे उद्धृत्याथैनं कुमारं तस्मादन्नं गृहीत्वा तूष्णीं प्राशयेत्, हन्तेति मन्त्रेण वा प्राशयेत् । "तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च, हन्तकारं मनुष्याः, स्वधाकारं पितर" इति श्रवणात् ॥

गुणफलमाह-

भारद्वाज्या मांसेन वाक्प्रसारकामस्य, कपिञ्जलमांसेनान्नाद्यकामस्य, मत्स्यैर्जवनकामस्य, कृकषाया आयुष्कामस्य, आट्या ब्रह्मवर्चसकामस्य, सर्वैः सर्वकामस्यान्नपर्याय वा, ततो ब्राह्मणभोजनम् । अन्नपर्याय वा ततो ब्राह्मणभोजनम् ॥ ५ ॥

भारद्वाज्याः पक्षिण्या मांसेन कुमारस्य प्राशनं कार-

यितव्यम्, यदि "कुमारो वाग्मी स्यात्"इत्येवं कामना भवति पितुः। कपिञ्जलमांसेन प्राशयेत् यदि "कुमारः अन्नादः स्यात्"इति कामयेत। यदि "कुमारः जवनः शीघ्रगामी स्यात्"इति कामयेत तदा मत्स्यान् प्राशयेत्। यदि "कुमारो दीर्घायुः स्यात्"इति कामयेत तदा कृकषाया मांसं प्राशयेत्। यदि "कुमारो ब्रह्मवर्चसी स्यात्"इति कामयेत तदा ऽऽत्या मांसं प्राशयेत्। यदि "वाक्प्रसारादीनि ब्रह्मवर्चसान्तानि सर्वाणि कुमारस्य भवन्तु"इति कामयेत तदा भारद्वाज्यादीनामाद्यन्तानां सर्वाणि मांसानि क्रमेण प्राशयेत्। अन्नपर्याय वा अन्नपरिपाट्या वा ऽन्नवत्सर्वमांसान्येकीकृत्य प्राशयेदित्यर्थः। अन्नपर्यायेत्यविभक्तिकमार्षम्। ततो ब्राह्मणभोजनमित्युक्तार्थम्। द्विरुक्तिः काण्डसमाप्तिसूचनार्था।इत्येकोनविंशी कण्डिका॥

॥ इति प्रथमकाण्डम्॥

---

अथ चूडाकरणसूत्रव्याख्या।

**सांवत्सरिकस्य चूडाकरणं तृतीये वाऽप्रतिहते॥१॥**

संवत्सरमन्द्रमतिक्रान्तः सांवत्सरिकः तस्य बालकस्य चूडाकरणं चूडाकर्माख्यं वक्ष्यमाणं कर्म कुर्यात्। तृतीये वा संवत्सरे ऽप्रतिहते ऽल्पावशिष्टे॥

**यथामङ्गलं वा सर्वेषाम्॥२॥**

यद्वा यथामङ्गलं यथाकुलाचारं सर्वेषां वर्णानां व्यवस्थेत्यर्थः। यस्य कुले सांवत्सरिकस्य चूडाकर्म क्रियते तस्य सांवत्सरिकस्य, यस्य तृतीये ऽब्दे तस्य तदा इति व्यवस्था। यस्य कुले नास्ति नियमस्तस्य यदृच्छया विकल्पः।

अन्ये तु यथामङ्गलपदं धर्मशास्त्रान्तरे विहितकालान्तरोपलक्षणमाहुः। धर्मशास्त्रोक्ताः कालाश्च तृतीयपञ्चमसप्तमा उपनीत्या सहैव वा॥

आर्थक्रमानुरोधेन यथामङ्गलमिति सूत्रं पूर्वं व्याख्याय षोडशवर्षस्य केशान्त इति सूत्रं व्याख्यायते—

षोडशवर्षस्य केशान्तः॥ ३॥

षोडश वर्षाणि अतीतानि यस्य स षोडशवर्षः तस्य सप्तदशे वर्षे केशान्तः केशान्ताख्यः संस्कारो भवति॥

ब्राह्मणान् भोजयित्वा माता कुमारमादायाप्लाव्याहते व्वाससी परिधाप्याङ्क ऽआधाय पश्चादग्नेरुपविशति॥ ४॥

कालमभिधाय कर्माभिधीयते। चूडाकरणाङ्गतया त्रीन् ब्राह्मणान् भोजयित्वा माता जननी कुमारं पुत्रं चूडाकरणार्हमादाय गृहीत्वा ऽऽप्लाव्य स्नापयित्वा ऽहते नवे सकृद्धौते वाससी द्वे वस्त्रे परिधाप्यान्तरीयोत्तरीयत्वेन परिहिते कारयित्वा ऽङ्के उत्सङ्गे आधाय स्थापयित्वा ऽग्नेः पश्चात् पश्चिमतः उपविशति॥

अन्वारब्ध ऽआज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा ऽआसिञ्चति—

"उष्णेन व्वाय ऽउदकेनेह्यदिते केशान् वप" इति। "केशश्मश्रु" इति च केशान्ते॥ ५॥

ततो ब्रह्मणा ऽन्वारब्धः कुशेनोपस्पृष्टः आज्याहुतीःआघारादिस्विष्टकृदन्ताः चतुर्दश हुत्वा संस्रवप्राशनान्ते शीतासु अप्सु उष्णा अपः शीतोदके उष्णोदकमासिञ्चति प्रक्षिपति—

'उष्णेन व्वाय ऽउदकेनेहि' इतिमन्त्रेण। केशान्ते तु 'उष्णेन

व्राय ऽऽदुद्केनेह्यदिते केशश्मश्रु व्वप' इति मन्त्रे विशेष ॥

**अथात्र नवनीतपिण्डं घृतपिण्ड दध्नो वा प्रास्यति ॥६॥**

अथोष्णोदकसेकानन्तरम् अत्रास्मिन्नुदके नवनीतपिण्डं घृतपिण्ड दध्नो वा पिण्ड प्रक्षिपति ॥

**तत ऽआदाय दक्षिणं गोदानमुन्दति–"सवित्रा प्रसूता दैव्या ऽआप ऽउन्दन्तु ते तनूं दीर्घायुत्वाय व्वर्चसे" इति ॥ ७ ॥**

ततस्तस्मादुदकात् चुलुकेनैकदेशमादाय दक्षिणं गोदानं शिरसो दक्षिणप्रदेशस्थं केशसमूहं 'सवित्रा प्रसूता' इति मन्त्रेणोन्दति आर्द्रं करोति ॥

**त्र्येण्या शलल्या व्विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति ॥ ८ ॥**

त्रिषु स्थानेषु एनी चित्रा त्र्येणी। शलली सेधाशलाका। विलग्नान् केशान् तया विनीय पृथक्कृत्य विरलान् कृत्वा त्रीणि कुशतरुणानि दर्भतृणानि अन्तः मध्ये दधाति धारयति-'ओषधे त्रायस्व'इति मन्त्रेण ॥

***शिवो नामेति लोहक्षुरमादाय निवर्तयामीति प्रवपति ९॥***

ततः कर्ता "शिवो नामासि"इति मन्त्रेण लोहक्षुरं ताम्रादिपरिष्कृतमयोमय क्षुरमादाय दक्षिणकरेण गृहीत्वा निवर्तयामीति मन्त्रेण प्रवपति त कुशतरुणान्तर्हितेषु केशेषु संलागयति स्थापयति ॥

**'येनावपत्सविता क्षुरेण सोमस्य राज्ञो व्वरुणस्य व्विद्वान्। तेन ब्रह्माणो व्वपतेदमस्यायुष्यञ्जरदष्टिर्यथा ऽसत्"इति सकेशानि प्रच्छिद्य आनडुहे गोमय-**

पिण्डे प्रास्यत्युत्तरतो ध्रियमाणे ॥ १० ॥

येनावपदिति मन्त्रेण केशसहितानि कुशतरुणानि प्रच्छिद्य खण्डयित्वा ऽग्नेरुत्तरतो भूभागे ध्रियमाणे ऽवस्थाप्यमाने आनडुहे आर्षभे गोमयपिण्डे प्रास्यति प्रक्षिपति ॥

एवं द्विरपरं तूष्णीम् ॥ ११ ॥

एवमुक्तेन प्रकारेण द्विः द्विवारमुन्दनादि गोमयपिण्डनिधानान्तं कर्म तूष्णीं मन्त्ररहितं कुर्यात् ॥

इतरयोश्चोन्दनादि ॥ १२ ॥

इतरयोः पश्चिमोत्तरयोर्गोदानयोरुन्दनादिच्छेदनप्रभृतिगोमयपिण्डनिधानान्तं कर्म चकारात्सकृत्समन्त्रकं द्विरमन्त्रकं भवति ॥

अथ पश्चात् त्र्यायुषमिति ॥ १३ ॥

अथ दक्षिणगोदानस्य त्रिरुन्दनादिच्छेदनान्तकर्मानन्तरं पश्चाद्गोदाने विशेषमाह–त्र्यायुषमिति। "त्र्यायुषं जमदग्नेः" इत्यादिना मन्त्रेण सकेशानि कुशतरुणानि सकृत्प्रच्छिद्य तूष्णीं द्विः प्रच्छिद्य गोमयपिण्डे प्रास्यति ॥

अथोत्तरतो–"येन भूरिश्चरा दिवं ज्योक् च पश्चाद्धि सूर्यम्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये" इति ॥ १४ ॥

अथानन्तरम् उत्तरतः उत्तरगोदानकर्मणि सकेशानां कुशतरुणानां छेदनं "येन भूरिश्चरा" इति मन्त्रेण कुर्यात्। अन्यत्सर्वं दक्षिणगोदानवत्कार्यम् ॥

त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति, समुखं केशान्ते–"यत्क्षुरेण मज्जयता सुपेशसा वप्त्रा वा वपति केशाँश्छिन्धि, शिरो माऽस्यायुः प्रमोषीः।

मुखमिति च केशान्ते ॥ १५ ॥

त्रिः त्रीन् वारान् क्षुरेण शिरो मूर्द्धानं प्रदक्षिणं यथा भवति तथा परिहरति—शिरसः समन्तात् प्रदक्षिणं क्षुरं "यत्क्षुरेण" इति मन्त्रेण भ्रामयतीत्यर्थः। केशान्ते समुखं मुखसहितं शिरः परिहरति। मन्त्रे च शिरःपदानन्तरं मुखपदं प्रक्षेपणीयम् ॥

ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छति—"अक्षण्वन् परिवप" इति ॥ १६ ॥

ताभिः प्रकृताभिः शीतोष्णाभिरद्भिः शीतोष्णोदकेन शिरो मस्तकं समुद्य क्लेदयित्वा ऽऽर्द्रभावमापाद्य नापिताय क्षुरं प्रयच्छति मुण्डनार्थं ददाति "अक्षण्वन् परिवप" इतिमन्त्रेण।

यथामङ्गलं केशशेषकरणम् ॥ १७ ॥

क्षुरसमर्पणानन्तरं नापितेन केशवपनं कार्यम्। तत्र केशानां शेषकरणं शिखारक्षणं यथामङ्गलं यस्य कुले यथा प्रसिद्धं तस्य तथैव शिखास्थापनं कार्यम् ॥

अनुगुप्तमेतत् सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल ऽउदकान्ते वा ॥ १८ ॥

ततो वपनोत्तरं सर्वान् केशान् गोमयपिण्डे कृत्वा एतं गोमयपिण्डं वस्त्रादिवेष्टनेनानुगुप्तमाच्छन्नं कृत्वा गोष्ठे गवां व्रजे स्थापयेत्। अथवा पल्वले ऽल्पोदके सरसि स्थापयेत्। अथवोदकान्ते यत्र कुत्रचिदुदकसमीपे स्थापयेत् ॥

आचार्याय वरं ददाति ॥ १९ ॥

ततश्चूडाकरणकर्ता पित्रादिः स्वकीयायाचार्याय वरं तदभिलषितं द्रव्यं ददाति। अभिलषितद्रव्याभावे 'चतुष्कार्षा-

'पणो वर' इति मूल्याध्यायोक्तद्रव्यदानम् इति वृद्धाः । कार्षापणश्च षोडशमाषपरिमिता राजती मुद्रा । पञ्चरक्तिको माषः ॥

गां केशान्ते ॥ २० ॥

केशान्ते कर्मणि केशान्तसंस्कारकर्ता स्वाचार्याय गां ददातीति गदाधरः । संस्कार्यस्याचार्यायेति हरिहरादयः ॥

संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते ॥ २१ ॥

केशान्तकर्मानन्तरं संस्कृतः संवत्सरं यावद्ब्रह्मचर्यं चरेत् । केशान्तोत्तरकालं संवत्सरं यावत् वपनं च वर्जयेत् इति गदाधरः । केशान्तकर्मोत्तरं यावज्जीवं शास्त्रीयवपनव्यतिरेकेण वपनं वर्जयेत् इति वासुदेवहरिहरगर्गाः । शास्त्रीयं वपनं च "गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ । आधाने सोमपाने च वपनं सप्तसु स्मृतम्" ॥ इत्यादिनिमित्तेषु बोध्यम् । केशवपनस्य चूडाकरणादौ जातत्वात् श्मश्रुवपनस्यैव केशान्तसंस्कारे मुख्यत्वात् केशान्तसंस्कारोत्तरं श्मश्रूणामवपनमेव यावज्जीवं शास्त्रीयवपनं वर्जयित्वा पारस्कराचार्येणोपदिश्यते । श्मश्रुशब्दश्च मुख्यया वृत्त्या उत्तरोष्ठोपरिवर्तमानलोमान्येवाभिधत्ते । लक्षणप्रकाशे उत्तरोष्ठलक्षणानन्तरं श्मश्रुलक्षणाभिधानात् । तावन्मात्रावपनस्यैव सर्वदेशसम्प्रदायसिद्धत्वाच्च । केशवपनं तु समावर्तनोत्तरं जीवत्पितृकस्य निषिद्धम् । "मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वतः । न जीवत्पितृकः कुर्यात् गर्भिणीपतिरेव च" ॥ इतिदक्षवचनात् । "मुण्डनस्य निषेधे ऽपि कर्तनं तु विधीयते" इति स्मृत्यन्तरात् कर्तनमात्रं तस्यानुष्ठेयम् । गर्भिणीपतेस्तु तदपि निषिद्धम् । "नोदन्वतोऽम्भसि स्नायात् नच श्मश्र्वादि कर्तयेत् । अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवम्" ॥ इति क्रतुस्मरणात् । सर्वके-

शवपनस्यैव मुण्डनपदार्थत्वमभिमेत्य कतिपयकेशान् परिशेष्य जीवत्पितृका अपि केषुचिद्देशेषु केशवपनं कारयन्ति । प्रयागादितीर्थप्राप्तौ मातृमरणादिनिमित्ते च जीवत्पितृकस्य गर्भिणीपतेश्च मुण्डनमावश्यकम् । 'प्रयागे वपनं कुर्यात्'इतिवचनात्। "क्षौरं नैमित्तिकं कुर्यात् निषेधे सत्यपि ध्रुवम् । पित्रोः प्रेतविधानं च गर्भिणीपतिराचरेत्" ॥ इति स्मृत्यन्तरात् । "क्षौरं नैमित्तिकं कुर्यात् निषेधे सत्यपि ध्रुवम् । पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके" ॥ इति सङ्ग्रहवचनाच्च । "अन्तर्वत्न्यां च जायायां तीर्थे क्षौरं न कारयेत्" । इतिवचनात्तु तीर्थे गर्भिणीपतेः क्षौरनिषेधोऽवगम्यते । अतोऽत्र विकल्पो वा पूर्ववचनस्य प्रयागपरकत्वं वा । प्रयागे जीवत्पितृकस्य श्मश्रुवपनमप्यावश्यकम् । एवंमातृमरणादिनिमित्तेऽपि । आशौचान्ते तु "आशौचान्ते कृतश्मश्रुकर्मणः" इति विष्णुवचनेन जीवत्पितृकोऽपि श्मश्रुवपनं कुर्यात् निषेधस्य रागप्राप्तविषयकत्वादिति गुर्जराः । श्मश्रुवपनस्य पितृमरणादिनिमित्तं विना आचार्येण निषेधात्, "यस्य यस्य च वर्णस्य यद्यत्स्यात्पाश्चिमं त्वहः । स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि ॥ केशश्मश्रुनखादीनां यच्चाज्यं तज्जहात्यपि" । ( वै.-प. ) इति ब्रह्मपुराणीयवचनेन आशौचान्तवपनस्य शुद्धयर्थत्वलाभात् श्मश्रुव्यतिरिक्तकेशादिवपनेनापि शुद्धेर्लाभात्, समाचाराच्च श्मश्रुव्यतिरिक्तकेशादिवपनमेव जीवत्पितृकेणाशौचान्तेऽनुष्ठेयमित्यन्ये । जीवत्पितृकस्य पञ्चाशद्वायनोत्तरं निमित्तं विनाऽपि केशादिवपनं, तदन्येषां श्मश्रुवपनं च भवत्येव । "पञ्चाशद्वायनात्पूर्वं क्षौरं नैमित्तिकं विना । न कुर्यात् तत् तदूर्ध्वं तु स्वेच्छया वपनं चरेत् ॥ ( वी० मि० सं० प्र० ) इतिस्मृत्यन्तरात् ।

पर्युप्तशिरसमलङ्कृतमानयन्ति ॥ ६ ॥

परि सर्वतः उप्तं मुण्डितं शिरो यस्य स पर्युप्तशिरास्तम्, अलङ्कृतं यथासम्भवं सुवर्णादिनिर्मितैः कुण्डलाद्यलङ्कारैः, आचार्यपुरुषा आचार्यसमीपमानयन्ति ॥

पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामिति वाचयति ॥७॥

तत आचार्यो माणवकम् अग्नेः पश्चिमत आत्मनो दक्षिणतो ऽवस्थाप्य "ब्रह्मचर्यमागामिति ब्रूहि" इति प्रैषमुक्त्वा माणवकं तथैव वाचयति ॥

ब्रह्मचार्यसानीति च ॥ ८ ॥

"ब्रह्मचार्यसानीति ब्रूहि"इत्याचार्यो माणवकं प्रेषयति । प्रेषितश्च माणवको ब्रह्मचार्यसानीति वदेत् ॥

अथैनं वासः परिधापयति–"येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे" इति ॥ ९ ॥

अथ वाचनानन्तरमेनं कुमारम् आचार्यो वक्ष्यमाणलक्षणं शाणादिवासः परिधापयति येनेन्द्रायेत्यादिना मन्त्रेण ॥

मेखलां बध्नीते–"इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म ऽआगात् । प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम्"इति ॥ १० ॥

ततो मेखलां मौञ्ज्यादिकां वक्ष्यमाणलक्षणां कटिप्रदेशे बध्नीते–त्रिवृतां प्रवरसङ्ख्याकग्रन्थियुताम् प्रादक्षिण्येन त्रिः परिवेष्टयति "इयं दुरुक्तम्" इत्यादिना मन्त्रेण । माणवकस्य मन्त्रपाठ इति हरिहरः । आचार्यस्येति गदाधरः ॥

"युवा सुवासाः परिवीत ऽआगात्स ऽउ श्रेयान्

भवति जायमानः। तं धीरासः कवय ऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः" इति वा। तूष्णीं वा॥ ११॥

उक्तमन्त्रान्तरेण वा तूष्णीं वा मेखलां बध्नीते॥

"यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः। यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि" इति मन्त्रेण—

सूत्रकारानुक्तमपि सर्वभाष्यकारसम्मतम् उपवीतधारणम् अस्मिन्नवसरे कर्त्तव्यम्॥

समाचारादेवात्र—"मित्रस्य चक्षुर्धरुणम् बलीयस्तेजो यशस्वि स्थविरꣳ समिद्धम्। अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम्"

इत्यनेन मन्त्रेणाजिनधारणमिति कारिकायां गर्गपद्धतौ च॥

दण्डं प्रयच्छति तं प्रतिगृह्णाति—"यो मे दण्डः परापतद्वैहायसो ऽधिभूम्याम्। तमहं पुनरादद ऽआयुषे ब्रह्मणे ब्रह्मवर्चसाय" इति॥ १२॥

आचार्यो माणवकाय वक्ष्यमाणलक्षणं दण्डं तूर्ष्णी प्रयच्छति। माणवकश्च तं "यो मे दण्ड" इत्यादिना मन्त्रेण प्रतिगृह्णाति॥

दीक्षावदेके दीर्घसत्रमुपैतीति वचनात्॥ १३॥

एके आचार्या दीक्षावद् सोमे दीक्षायां यथा दण्डप्रदानं तूर्ष्णी तथेच्छन्ति। तत्र यथा "उच्छ्रयस्व वनस्पते" इत्यादिना "यज्ञस्यो द्वः" इत्यन्तेन मन्त्रेण यजमानो दण्डमुच्छ्रयति तद्वदत्र ब्रह्मचारी। "दीर्घसत्रं वा ऽएष ऽउपैति यो ब्रह्मचर्यमुपैति" इत्यारभ्य ब्रह्मचर्यस्य दीर्घसत्रसम्पत्प्रतिपादनात्॥

अथास्याद्भिरञ्जलिनाऽञ्जलिं पूरयति "आपोहिष्ठा" ।ति तिसृभिः ॥ १४ ॥

अथ दण्डप्रदानानन्तरम् आचार्यो ऽस्य माणवकस्याञ्जलिं स्वकीयाञ्जलिस्थाभिरद्भिरापोहिष्ठेत्यादिकाभिस्तिसृभिर्ऋग्भिः पूरयति ॥

अथैनꣳ सूर्यमुदीक्षयति तच्चक्षुरिति ॥ १५ ॥

अथाञ्जलिपूरणानन्तरमेनं माणवकं 'सूर्यमुदीक्षस्व'इत्येवं प्रेष्य सूर्यमुदीक्षयति अवलोकयति दर्शयति । स च माणवकः "तच्चक्षुः"इत्यादिना"शरदः शतात्"इत्यन्तेन मन्त्रेण सूर्यं पश्यति ॥

अथास्य दक्षिणाꣳसमधि हृदयमालभते-"मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते ऽअस्तु । मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्"इति ॥ १६ ॥

अथ सूर्यदर्शनानन्तरमाचार्यो ऽस्य माणवकस्य दक्षिणांसमधि दक्षिणस्कन्धस्योपरि स्वकीयं दक्षिणहस्तं नीत्वा "ममव्रते"इत्यादिना मन्त्रेण हृदयं वक्ष आलभते स्पृशति ॥

अथास्य दक्षिणꣳ हस्तं गृहीत्वाऽऽह "को नामासि"इति ॥ १७ ॥

अथ हृदयालम्भनानन्तरमाचार्योऽस्य माणवकस्य स्वकीयेन दक्षिणहस्तेन दक्षिणहस्तं गृहीत्वा 'को नामासि'इत्याह ॥

"असावहं भोः" इति प्रत्याह ॥ १८ ॥

एवं पृष्टो माणवकः, असौ अमुकशर्मा ऽहं भोः इति प्रत्याह प्रतिवचनं दद्यात् ॥

अथैनमाह-कस्य ब्रह्मचार्यसीति । 'भवत' इत्युच्यमाने-"इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमा-

चार्यस्तवासौ" इति ॥ १९ ॥

अथ प्रतिवचनानन्तरम् आचार्य एनं माणवकं कस्य ब्रह्मचार्यसीत्याह पृच्छति । 'भवत' इति माणवकेनोच्यमाने—"इन्द्रस्य ब्रह्मचार्यसि अग्निराचार्यस्तवाहमाचार्यस्तव अमुकशर्मन्" इति मन्त्रं पठति ॥

अथैनं भूतेभ्यः परिददाति—"प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्य. परिददाम्यरिष्ट्यै" इति ॥ २० ॥

अथानन्तरम् एनं कुमारमाचार्यः भूतेभ्यः प्रजापतिप्रभृतिभ्यः प्रजापतयेत्वेत्यादिना मन्त्रेण रक्षितुं ददाति ॥ इति द्वितीयकण्डिका॥

प्रदक्षिणमग्निं परीत्योपविशति ॥ १ ॥

एवं वस्त्रदानादिभिराचार्येण संस्कृतो माणवको ऽग्निं प्रदक्षिणं परिक्रम्याग्नेः पश्चाद् आचार्यस्योत्तरत उपविशति इति जयरामहरिहरौ । पश्चादग्नेरुपवेशनमिति भर्तृयज्ञकारिकाकारौ । आचार्यस्य दक्षिणत इति गर्गपद्धतौ । आचार्यस्योत्तरत इति वासुदेवः । अग्नेरुत्तरत इति गदाधरः ॥

अन्वारब्ध ऽआज्याहुतीर्हुत्वा प्राशनान्ते ऽथैनं संशास्ति–ब्रह्मचार्यसि,अपोऽशान,कर्म कुरु,मा दिवा सुषुप्था, वाचं यच्छ, समिधमाधेह्यपो ऽशानेति॥२॥

ततो ब्रह्मणाऽन्वारब्ध आचार्यः आघारादिस्विष्टकृदन्ताश्चतुर्दशाहुतीर्हुत्वा संस्रवप्राशनान्ते अथानन्तरमाचार्य एनं माणवकं संशास्ति शिक्षयति–'ब्रह्मचारी असि' इति । असानीति माणवकेन प्रत्युक्तः, अपो ऽशान पिब इति ।

संज्ञास्तीति सर्वत्र सम्बध्यते। अश्नानीति प्रत्युक्तः, कर्म स्नानादिकं स्ववर्णाश्रमविहितं कुरु विधेहि इति। करवाणीति प्रत्युक्तो, मा दिवा दिवसे सुषुप्थाः स्वाप्सीः इति । न स्वपानीति प्रत्युक्तः, वाचं गिरं यच्छ नियमयेति। यच्छानि इति प्रत्युक्तः, समिधं वक्ष्यमाणप्रकारेणाधेहि अग्नौ प्रक्षिपेति । आदधानि इति प्रत्युक्तः, अपोऽश्नानेति । अश्नानि इति ब्रह्मचारी । अत्र प्रथमं श्रूयमाणम् 'अपोऽश्नान'इति आचमनम् अशिष्यतः, अन्ते च श्रूयमाणम् आशितवतः । 'अशिष्यन्नाचामेत् अशित्वाऽऽचामेत्'इति श्रुतेः ॥

**अथास्मै सावित्रीमन्वाहोत्तरतो ऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय, दक्षिणतस्तिष्ठत ऽआसीनाय वैके, पच्छो ऽर्द्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् ॥ ३ ॥**

अथ शासनानन्तरमस्मै ब्रह्मचारिणे सावित्रीं सवितृदैवतां गायत्रीच्छन्दस्कां विश्वामित्रदृष्टाम् ऋचं प्रत्यङ्मुखाय पश्चिमाभिमुखायाग्नेरुत्तरस्यां दिश्युपविष्टाय पादोपसङ्ग्रहणादिनोपसन्नाय भजमानाय तथा समीक्षमाणाय सम्यक् आचार्यमवलोकयते तथा ऽऽचार्येण सम्यगवलोकिताय, पक्षान्तरे दक्षिणतो ऽग्नेर्दक्षिणस्यां दिशि तिष्ठते ऊर्ध्वायासीनायोपविष्टाय वा । पच्छः पादं पादम्, अर्द्धर्चशः तदनु अर्द्धर्चमर्द्धर्चं, तदनु सर्वां च तृतीयेन वारेण सह मिलित्वाऽनुवर्तयन् पठन् अन्वाह उपदिशति ॥

**संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा, सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयात् आग्नेयो वै ब्राह्मण इति श्रुतेः, त्रिष्टुभꣳराजन्यस्य, जगतीं वैश्यस्य, सर्वेषां वा गायत्रीम् ॥ ४ ॥**

सावित्रीप्रदानस्य कालविकल्पानाह–संवत्सरे इति । संवत्सरे उपनयनमारभ्य पूर्णे वर्षे, षण्मास्ये षडेव मासाः षण्मास्यं स्वार्थे ष्यञ्। छान्दसत्वाद्वृद्ध्यभावः । छन्दोवत्सूत्राणि भवन्तीति वचनात् । तस्मिन्षण्मास्ये, चतुर्विंशत्यहे चतुर्विंशत्याऽहोभिरुपलक्षिते काले, द्वादशाहे द्वादशभिरहोभिरुपलक्षिते काले, षडहे षड्भिरहोभिरुपलक्षिते काले, त्र्यहे त्रिभिरहोभिरुपलक्षिते काले वा–सावित्रीमन्वाहेत्यनुषज्यते । एते कालविकल्पा आचार्यस्य शुश्रूषादिशिष्यगुणतारतम्यापेक्षाः । एवं सामान्येन कालविकल्पानभिधाय ब्राह्मणस्य विशेषमाह–सद्यस्त्विति । तुशब्दः पक्षव्यावृत्तौ । सद्य एव गायत्रीं ब्राह्मणायानुब्रूयात् कथयेत् । "आग्नेयो वै ब्राह्मणः"इति श्रुतेः–आग्नेयो ऽग्निदेवताको ब्राह्मण इति वेदवचनात् । राजन्यस्य त्रिष्टुभं त्रिष्टुप्छन्दस्कां "देवसवितः"इत्यादिकां सावित्रीम्, वैश्यस्य जगतीं जगतीच्छन्दस्कां "विश्वा रूपाणि" इत्यादिकां सावित्रीमनुब्रूयात्। यद्वा सर्वेषां ब्राह्मणक्षत्रियविशां गायत्रीमेव गायत्रीच्छन्दस्कामेव सावित्रीं "तत्सवितुः"इति ऋचं सकलवेदशाखाम्नातामनुब्रूयात्।

इति तृतीया कण्डिका ॥

**अत्र समिदाधानम् ॥ १ ॥**

*अत्र सावित्रीप्रदानोत्तरकाले इति केचित् । अत्रास्मिन्प्रकृते ऽग्नौ इति कर्कादयः । समिधामाधानं प्रक्षेपः ब्रह्मचारिणो भवति ॥*

**पाणिना ऽग्निं परिसमूहति–"अग्ने सुश्रवः सुश्रवसं मा कुरु, यथा त्वमग्ने सुश्रवः सुश्रवा ऽअसि, एवं मांᳫ सुश्रवः सौश्रवसं कुरु, यथा त्वमग्ने देवानां यज्ञस्य निधिपा ऽअसि, एवमहं मनुष्याणां वे-**

दस्य निधिपो भूयासम्"इति ॥ २ ॥

पाणिना दक्षिणहस्तेन अग्निं प्रकृतहोमाधिकरणं परिसमूहति सन्धुक्षयतीन्धनप्रक्षेपेण वक्ष्यमाणैः पञ्चभिः "अग्ने सुश्रवः" इत्यादिभिः पञ्चभिर्मन्त्रैः प्रतिमन्त्रम् ।

कारिकायां विशेषः-

प्रतिमन्त्रं त्रिभिः काष्ठैरग्नेसुश्रवआदिभिः ।
अग्नेसुश्रव इत्येकं यथात्वं स्याद् द्वितीयकम् ॥
यथात्वमग्नेदेवानांमन्त्रेणापि तृतीयकम् ।
कृत्वा पर्युक्षणं वह्नेरुत्थाय समिदाहुतिः ॥ इति ॥

प्रदक्षिणमग्निं पर्युक्ष्योत्थाय समिधमादधाति-

"अग्नये समिधमाहार्षं बृहते जातवेदसे । यथात्वमग्ने समिधा समिध्यस ऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे । जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासᳪंस्वाहा"इति ॥ ३ ॥

ततो ब्रह्मचारी अग्निं प्रदक्षिणं पर्युक्ष्य दक्षिणगृहीतेनोदकेन परिषिच्योत्थायोर्ध्वीभूय प्राङ्मुखस्तिष्ठन्समिधमादधाति अग्नौ प्रक्षिपति अग्नयेसमिधमित्यादिना मन्त्रेण । तिष्ठन्समिधः सर्वत्रेति परिभाषयैवोत्थाने सिद्धे उत्थायेति ग्रहणं नायं होमः किन्तु समिदाधानमित्येतत्सूचनार्थम् । अतोऽत्र त्यागाभावः । इह उत्थायेति ग्रहणमन्यत्र स्मार्ते उत्थानपरिसङ्ख्यार्थमिति कारिकायाम् ॥

एवं द्वितीयां तथा तृतीयाम् ॥ ४ ॥

एवमनेनैव मन्त्रेण द्वितीयां समिधमादधाति, तथा ऽनेनैव

मन्त्रेण तृतीयाम् ॥

एषा त इति वा समुच्चयो वा ॥ ५ ॥

अथवा 'एषा ते ऽअग्ने समित्' इतिमन्त्रेण समिदाधानम्। अत्रापि मन्त्रान्तेऽचिः। अथवा द्वयोर्मन्त्रयोः समुच्चयेनार्थात् उभयोः पाठान्ते समिदाधानम् । प्रतिसमिदाधानं मन्त्रयोरस्मिन् पक्षे ऽपि आवृत्तिः ॥

पूर्ववत्परिसमूहनपर्युक्षणे ॥ ६ ॥

परिसमूहनम् 'अग्नेसुश्रव'इत्यादिना सम्मुक्षणम्। पर्युक्षणं अग्नि सर्वतो जलासेकः। पूर्ववत् प्राग्वदग्नेः कर्तव्ये ॥

पाणी प्रतप्य मुखं विमृष्टे—"तनूपा ऽअग्ने ऽसि तन्वं मे पाहि। आयुर्दा ऽअग्ने ऽस्यायुर्मे देहि। वर्चोदा ऽअग्ने ऽसि वर्चो मे देहि। अग्ने यन्मे तन्वा ऽऊनं तन्म ऽआपृण। मेधां मे देवः सविता। मेधां देवी सरस्वती। मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ"इति ॥ ७ ॥

पर्युक्षणानन्तरं ब्रह्मचारी पाणी उभौ हस्तौ प्रतप्य तूष्णीमग्नौ तापयित्वा "तनूपा ऽअग्नेऽसि"इत्यादिभिः सप्तभिर्मन्त्रैः प्रतिमन्त्रं पाणिभ्यां मुखं विमृष्टे—ललाटादिचिबुकान्तं मोञ्छति। तनूपा इत्येतस्य मन्त्रस्य स्वशाखीयत्वात्प्रतीकग्रहणे प्राप्ते मन्त्रवाक्यचतुष्टयोपयोगात्सर्वपाठः । "मेधां मे देवः सविता" "मेधां देवी सरस्वती"इत्यनयोर्मन्त्रयोः 'आदधातु' इत्यध्याहारः साकाङ्क्षत्वात् ।

अत्राङ्गालम्भनत्र्यायुषकरणाभिवादनानि सूत्रकारानुक्तान्यप्याचारतो ऽनुष्ठेयानीति जयरामगदाधरौ। अत्र त्र्यायुषकरणं सूत्रकारानुक्तमपि प्रसिद्धत्वाच्छिष्टपरम्परानुरोधाच्चानुष्ठीयत इति कर्कहरिहरौ ॥

अङ्गान्यालभ्य जपति–"अङ्गानि च म ऽआप्यायन्तां, व्वाक्, प्राण, श्चक्षुः, श्श्रोत्रं, यशो बलम्" इति। (त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्) ॥ ८ ॥

अङ्गानिचम इत्यनेन मन्त्रेण शिरःप्रभृतीनि पादान्तानि अङ्गान्यालभते। एवं वागित्यनेन मुखं, प्राणः इत्यनेन नासिके युगपद्, चक्षुरित्यनेन चक्षुषी युगपद्, श्रोत्रमित्यनेन श्रवणे मन्त्रावृत्त्या, 'यशो बलम्' इत्यस्य पाठमात्रम्। त्र्यायुषमित्येतैश्चतुर्भिर्मन्त्रपादैः प्रतिपादं क्रमेण अनामिकागृहीतेन भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदये च त्र्यायुषाणि तिलकानि करोति। ततो ब्रह्मचारी सन्ध्यामुपास्य अग्निकार्यं कृत्वा गुरुषु उपसङ्ग्रहणं वृद्धतरेष्वभिवादनं वृद्धेषु नमस्कारं कुर्यात्पर्यायेण।

उपसङ्ग्रहणं नाम "अमुकगोत्रः अमुकेत्येतावत्प्रवरो ऽमुकशर्माऽहं भो अमुकशर्मन् त्वामभिवादये" इत्युक्त्वा, कर्णौ दक्षिणोत्तरपाणिभ्यां स्पृष्ट्वा, दक्षिणपाणिना गुरोः दक्षिणं पादं सव्येन सव्यं गृहीत्वा शिरो ऽवनमनम्। अभिवादने पादग्रहणं नास्ति पादस्पर्शनं कार्यम्। शिरोऽवनमनमात्रं नमस्कारः। इति चतुर्थी कण्डिका ॥

अत्र भिक्षाचर्यचरणम् ॥ १ ॥

अत्रावसरे भिक्षाचर्यानुष्ठानम् ॥

भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यांऽराजन्यो भवदन्त्यां व्वैश्यः ॥ २ ॥

भवत्पूर्वा भवच्छब्दः पूर्वो यस्याः सा भवत्पूर्वा तां भिक्षां ब्राह्मणो द्विजोत्तमो भिक्षेत। भवति भिक्षां देहीत्येवम् प्रयोगः। तथा भवन्मध्यां राजन्यः क्षत्रियो भिक्षेत। भिक्षां

भवति देहि इत्येवम् । भवदन्त्यां वैश्यः । भिक्षां देहि भवतीत्येवम् ॥

**तिस्रो ऽप्रत्याख्यायिन्यः षड् द्वादशापरिमिता वा ॥३॥**

भिक्षेर्द्विकर्मकत्वाद् द्वितीयं कर्माह—तिस्र इति । तिस्रः स्त्रियो भिक्षेतामत्याख्यायिन्यः । न प्रत्याख्यातुं निराकर्तुं शीलं यासां ता अप्रत्याख्यायिन्यः । द्वितीयार्थे प्रथमा बोध्या । अप्रत्याख्यायिनीरित्यर्थः । षड् वा द्वादश वाऽपरिमिता असङ्ख्याता वा स्त्रियो भिक्षेत । एते भिक्षाविकल्पा आहारपर्याप्त्यपेक्षया ॥

**मातरं प्रथमामेके ॥ ४ ॥**

एके आचार्या मातरं जननीं प्रथमां भिक्षेतेत्याहुः । अयं च प्रथमाहधर्म इति कर्कः ॥

**आचार्याय भैक्षं निवेदयित्वा वाग्यतो ऽहःशेषं तिष्ठेदित्येके ॥ ५ ॥**

आचार्याय गुरवे भैक्षं लब्धां भिक्षां निवेदयित्वा निवेद्य ( ल्यवभावः छान्दसः ) इयं भिक्षा मया लब्धेति समर्प्य वाग्यतो मौनी अहःशेषं भिक्षानिवेदनोत्तरतो यावदस्तमय तिष्ठेत् नोपविशेत् नच शयीत रागतः इत्येके सूत्रकारा वर्णयन्ति । वयं तु अनियमं मन्यामहे । ततश्च विकल्पः ॥

**अहिंसन्नरण्यात्समिध ऽआहृत्य तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजते ॥ ६ ॥**

अहिंसन्नच्छिन्दन् स्वयंपतिता इत्यर्थः, अरण्याद् न ग्रामात् समिधः पूर्वोक्तलक्षणा आहृत्य आनीय तस्मिन्नग्नौ यत्रोपनयनाङ्गहोमः कृतस्तस्मिन् पूर्ववत् पाणिना ऽग्निं परिसमूहतीत्यादिपूर्वोक्तरीत्या आधाय हुत्वा वाचं विसृजते मौनं वि-

सृजति वाग्यमपक्षे ॥

अधःशाय्यक्षारालवणाशी स्यात् । दण्डधारणमग्निपरिचरणं गुरुशुश्रूषा भिक्षाचर्यां । मधुमांसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेत् ॥७॥

अत ऊर्ध्वं ब्रह्मचारिणो यमनियमानाह—अधः शयितुं शीलमस्यासौ अधःशायी स्यात् । तथा अक्षारमलवणं चाशितुं शीलमस्येत्यक्षारालवणाशीत्येवंशीलो भवेत् । दण्डधारणं दण्डस्य स्ववर्णविहितस्य पालाशादेर्धारणं कुर्यात् । अग्नेः परिचरणं सायंप्रातः परिसमूहनपूर्वं ऋयायुषकरणान्तं समिदाधानम् । गुरुशुश्रूषा गुरोः शुश्रूषा परिचर्या । भिक्षार्थं चर्या भिक्षाचर्या भैक्षचरणम् । एतत्सर्वं ब्रह्मचारी कुर्यात् । मधु क्षौद्रम्, मांसं पललं, मज्जनं नद्यादावाप्लवनं, स्नानन्तूद्धृतोदकेन कुर्यात्, उपरि खट्वादावासनमुपवेशनम् आसनस्योपरि मञ्चिरकाद्यासनं च, स्त्रीगमनं स्त्रीणां मध्येऽवस्थानम् अभिगमनस्याग्रे वक्ष्यमाणत्वात्, अनृतमसत्यवदनम्, अदत्तानां परद्रव्याणामादानं ग्रहणम् स्तेयमिति यावत्—एतानि मध्वादीनि ब्रह्मचारी वर्जयेत् ॥

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत् । द्वादश द्वादश वा प्रतिवेदम् । यावद्ग्रहणं वा ॥ ८ ॥

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं वेदग्रहणार्थं ब्रह्मचर्यमुक्तलक्षणं चरेत् अनुतिष्ठेत् । अस्मिन्पक्षे चतुर्णामपि वेदव्रतानामेक एव व्रतादेशः सर्ववेदाहुतिहोमश्च । एतावदशक्तौ द्वादश द्वादश वर्षाणि प्रतिवेदं वेदे वेदे ब्रह्मचर्यं चरेत् । तत्राप्यशक्तौ यावद्ग्रहणं यावद्वेदस्य वेदयोर्वेदानां वा ग्रहणम् आचार्यात्पाठतोऽर्थतश्च स्वीकरणं तावद्वा ब्रह्मचर्यं चरेत् ॥

त्वासार्ंसि शाणक्षौमाविकानि ॥ ९ ॥

ब्राह्मणक्षत्रियविशां ब्रह्मचारिणां यथासङ्ख्यं शाणक्षौमाविकानि वस्त्राणि परिधेयानि भवन्ति। तत्र–शणमयं शाणं, क्षुमा अतसी तद्विकारः क्षौमम्, अवेर्मेषस्य विकार आविकं ऊर्णामयमित्यर्थः। गौतमः, सर्वेषां कार्पासं चाऽविकृतमिति ॥

ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य, रौरवं राजन्यस्य, आजं गव्यं वा वैश्यस्य ॥ १० ॥

एणी हरिणी तस्या इदमैणेयम् अजिनं कृत्तिर्ब्राह्मणस्य ब्रह्मचारिण उत्तरीयं भवति। रुरुश्चित्र इति प्रसिद्धस्तस्याजिनं राजन्यस्य क्षत्रियस्योत्तरीयं भवति। अजस्य बस्तस्याजिनं, गव्यं वा अजिनम् वैश्यस्योत्तरीयं भवति। कारिकायां प्रयोगरत्ने च विशेषः, तत् त्र्यङ्गुलं बहिर्लोम यद्वा स्याच्चतुरङ्गुलम्। एकखण्डं त्रिखण्डं वा धार्यं तदुपवीतवत् ॥ इति ॥

सर्वेषां वा गव्यमसति प्रधानत्वात् ॥ ११ ॥

सर्वेषां ब्राह्मणक्षत्रियविशां गव्यमजिनं वोत्तरीयं भवति असति–मुख्ये ऽविद्यमाने। प्रधानत्वात्। गव्यं ह्यजिनानां प्रधानम्। तत्प्रकृतेर्गोः प्रधानत्वात्। यद्वा गव्यस्य चर्मणः पुरुषसम्बन्धित्वेन प्रधानत्वात्। तथा च श्रुतिः "तेऽवच्छाय पुरुषं गव्येतां त्वचमदधुः"इति। ते देवाः पुरुषत्वचमुत्कृत्यैतां त्वचं गवि अदधुः इति तदर्थः ॥

मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्य। मुञ्जाभावे कुशाश्मन्तकबल्वजानाम् ॥१२॥

मुञ्जश्शरस्तृणविशेषस्तन्मयी मौञ्जी रशना मेखला ब्राह्मणस्य ब्रह्मचारिणो भवति। धनुर्ज्या चापस्य ज्या गुणः राजन्यस्य ब्रह्मचारिणो रशना भवति। मूर्वस्तृणविशेषस्तन्मयी र-

शना वैश्यस्य भवति । मुञ्जस्याभावे ऽलाभे ब्राह्मणस्य कुशानां कुशमयी रशना भवति, धनुर्ज्याऽभावे क्षत्रियस्याश्मन्तकमयी भवति, मौर्व्या अभावे वैश्यस्य वल्वजमयी भवति । मुञ्जाभावशब्दो धनुर्ज्यामौर्व्यभावयोरप्युपलक्षणार्थः ॥

**पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्यौदुम्बरो वैश्यस्य ॥ १३ ॥**

पालाशः पलाशवृक्षोद्भवो ब्राह्मणस्य ब्रह्मचारिणो दण्डो भवति, बैल्वो बिल्ववृक्षोद्भवः क्षत्रियस्य, औदुम्बर उदुम्बरवृक्षोद्भवो वैश्यस्य ॥

**केशसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य घ्राणसंमितो वैश्यस्य ॥ १४ ॥**

इदं हरिहरभाष्ये सूत्रत्वेन स्थितं कर्कादिग्रन्थेषु नोपलभ्यते ऽतः प्रक्षिप्तमिति प्रतिभातीति गदाधरः । स च केशसंमितः पादादिकेशमूलावसानको ब्राह्मणस्य, क्षत्रियस्य ललाटसंमितो भ्रूमध्यावधिकः, वैश्यस्यौष्ठावधिकः ॥

**सर्वे वा सर्वेषाम् ॥ १५ ॥**

यद्वा सर्वेषां ब्राह्मणादीनां ब्रह्मचारिणां सर्वे पालाशादयो ऽनियमेन दण्डा भवन्ति । मुख्यालाभे यथालाभमुपादेयम् ॥

**आचार्येणाहूत उत्थाय प्रतिशृणुयात् ॥ १६ ॥**

आचार्येण गुरुणा ऽऽहूतः आकारितो ब्रह्मचारी उत्थाय ऊर्ध्वो भूत्वा प्रतिशृणुयात् प्रतिवचनं दद्यात् ॥

**शयानं चेदासीनः ॥ १७ ॥**

यदि ब्रह्मचारिणं शयानं गुरुराह्वयति तदाऽऽसीन उपविष्टः सन् प्रतिवचनं दद्यात् ॥

आसीनं चेत्तिष्ठन् ॥ १८ ॥

आसीनमुपविष्टं चेदाह्वयति तदा तिष्ठन्नुत्थितः सन् ॥

तिष्ठन्तं चेदभिक्रामन् ॥ १९ ॥

तिष्ठन्तमुत्थितमाह्वयति चेत्तदा ऽभिक्रामन् गुरुमभिमुखं गच्छन् ॥

अभिक्रामन्तं चेदभिधावन् ॥ २० ॥

अभिक्रामन्तमभिमुखमागच्छन्तं ब्रह्मचारिणमाह्वयति चेत्तदा सो ऽभिधावन् अभिमुखं धावन् सन् प्रतिवचनं दद्यात् ॥

स ऽएवं वर्तमानो ऽमुत्राथ वसत्यमुत्राथ वसतीति ॥ २१ ॥

स ब्रह्मचारी एवमुक्तेन मार्गेण ब्रह्मचर्ये वर्तमानस्तिष्ठन् अमुत्र स्वर्गेऽथेहैव स्थितः सन् वसति । द्विरुक्तिः स्तुत्यर्था ॥

तस्य स्नातकस्य कीर्तिर्भवति ॥ २२ ॥

तस्य ब्रह्मचारिणः स्नातकस्य समावृत्तस्य कीर्तिर्यशो भवति ॥

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति। समाप्य वेदमसमाप्य व्रतं यस्समावर्तते स विद्यास्नातकः, समाप्य व्रतमसमाप्य वेदं यस्समावर्तते स व्रतस्नातकः, उभयं समाप्य यस्समावर्तते स विद्याव्रतस्नातक इति॥२३॥

स्पष्टम् ॥

उपनयनकालस्य परमावधिमाह—

आषोडशाद्ब्राह्मणस्यानतीतः कालो भवति, आद्वाविंशाद्राजन्यस्याचतुर्विंशाद्वैश्यस्य ॥ २४ ॥

आषोडशात् षोडशाद्वर्षात्प्राक् ब्राह्मणस्य विप्रस्य अनतीतः न अतीतः उपनयनस्य कालः समयो भवति ॥

आद्वाविंशात् द्वाविंशाद्वर्षात्पूर्वं क्षत्रियस्य, आचतुर्विंशात् चतुर्विंशाद्वर्षादर्वाक् वैश्यस्योपनयनस्य–कालोऽनतीतो भवतीति सर्वत्र सम्बध्यते ॥

अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ २५ ॥

अतः पञ्चदशादेकविंशात् त्रयोविंशाद्वर्षादूर्ध्वमनुपनीता ब्राह्मणक्षत्रियविशः यथासङ्ख्यम्, पतितसावित्रीकाः–पतिता स्खलिता अधिकाराभावान्निवृत्ता सावित्री गायत्री येभ्यस्ते पतितसावित्रीकाः भवन्ति सम्पद्यन्ते ॥

नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः ॥ २६ ॥

एनान् पतितसावित्रीकान् न उपनयेयुरुपनयनसंस्कारेण न संस्कुर्युः शिष्टाः । कैश्चिदतिक्रान्तनिषेधैरुपनीतानपि नाध्यापयेयुः न वेदं पाठयेयुः । तथा कैश्चिदतिक्रान्तनिषेधैर्वेदमध्यापितानपि न याजयेयुर्न यज्ञं कारयेयुः । एभिः सह भोजनादिव्यवहारमपि न कुर्युः ॥

गर्भाधानादीन्युपनयनान्तानि कर्माणि नियतकालान्यभिहितानि । यदि दैवात्पुरुषापराधाद्वा दोषाद्वा तेषां नियतस्य कालस्यातिक्रमो भवति तदा किं कर्तव्यमिति सन्देहे निर्णयमाह–

कालातिक्रमे नियतवत् ॥ २७ ॥

कालातिक्रमे यस्य संस्कारस्य शास्त्रेण नियमितो यः कालस्तस्यातिक्रमे लङ्घने नियतवत् नित्यवद् । नित्ये श्रौतकल्पे नैमित्तिकेषु यद्विहितं तदेव स्मार्ते अनादिष्टं प्रायश्चित्तं भवति । अतः

कृतप्रायश्चित्तस्यातिक्रान्तकाले संस्कारकर्मण्यधिकारः सम्पद्य ते। तच्च "अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं च"इति का. श्रौतसूत्रे ( अ. २५ कं. १ ) उक्तम्। सर्वप्रायश्चित्तस्वरूपं च पूर्वमुक्तम् ( प्र. भा. ४५ )। तत्र कालातिक्रमे इत्युपलक्षणमतो ऽन्येषां कर्मणां नाशे ऽपि इदमनादिष्टेषु प्रायश्चित्तम्। सूत्रकारेण प्रायश्चित्तान्तरस्यानुपदिष्टत्वात्। किन्तु श्रौतानामतिदेशे प्राप्ते "अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तं च"इत्यस्यैव 'कालातिक्रमे नियतवद्'इत्यनेनातिदेशः कृतो नतूपदेशो सूत्रकारेण। तत्र अविज्ञातम् अप्रत्यक्षश्रुतिमूलं किमिदमार्ग्वेदिकं याजुर्वेदिकं सामवेदिकं वेत्यनिश्चितं स्मार्तं कर्म। तस्य भ्रेषे श्रौतकल्पे व्याहृतिचतुष्टयं पञ्चवारुणहोमं प्रायश्चित्तम् उदिष्टम्। अत्र गृह्यसूत्रे गृह्योक्तकर्मणामपि स्मार्तत्वाद् भ्रेषे तस्यैवातिदेशो युक्तः, न पुनः प्रत्यक्षवेदमूलकर्मभ्रेषोपदिष्टानाम्॥

त्रिपुरुषं पतितसावित्रीकाणामपत्येऽसँस्कारो नाध्यापनं च॥ २८॥

त्रिपुरुषं त्रीन् पुरुषान् यावद् ये पतितसावित्रीकाः पितृपुत्रपौत्राः तेषामपत्ये पुत्रे असंस्कारः उपनयनं न भवति, अध्यापनं च न॥

तेषाᳪँसँस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा "काममधीयीरन् व्यवहार्या भवन्ति"इति वचनात्॥ २९॥

तेषां पितृपुत्रपौत्राणां त्रयाणां पतितसावित्रीकाणां मध्ये यस्संस्कारेप्सुरात्मानं संस्कारयितुकामः स व्रात्यस्तोमेन यज्ञेनेष्ट्वा व्रात्यस्तोमं कृत्वा व्यवहार्यो भवति। काममिच्छया व्रात्यस्तोमेनेष्ट्वा ऽधीयीरन् वेदं पठेयुः। व्यवहार्याः

लोके शिष्टानामध्यापनादिकर्मसु योग्या भवन्तीति वचनात् श्रुतेः ॥ चतुर्विधो व्रात्यस्तोमश्च का श्रौ. सूत्रे (अ. २२ कं. ४) उपदिष्टः ॥ इति पञ्चमी कण्डिका ॥ इत्युपनयनम् ॥

अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेदिति सूत्रे वेदाध्ययनाङ्गतया ब्रह्मचर्याचरणमुक्तम् । वेदाध्ययनारम्भस्य काल इतिकर्तव्यता च नोक्ता । केवलं समावर्तनकर्मैव सूत्रकारेणारब्धम् 'वेदꣳ समाप्य स्नायाद्'इति । तत्र वेदस्यारम्भं विना समाप्तिः कर्तुमशक्येति उपनयनानन्तरमेव वेदारम्भस्य समय इत्यवगम्यते । इतिकर्तव्यता च पुनः 'एतदेव व्रतादेशनविसर्गेषु'इतिउपाकर्महोमातिदेशाद् व्रतादेशने वेदारम्भे प्राप्नोति । अतः,

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेद् ॥ इति-

गुरोरुपनयनानन्तरं वेदाध्यापनविधानाच्च उपनयनोत्तरकालं पुण्ये ऽहनि मातृपूजापूर्वकं वेदारम्भनिमित्तमाभ्युदयिकं श्राद्धमाचार्यो विधाय वेदारम्भं कारयेत् ।

तत्प्रकारश्च द्वितीयकाण्डे नवम्यां कण्डिकायाम् उपाकरणकालम् 'अथातोऽध्यायोपाकर्म'इत्यादिना ऽभिधाय—

"आज्यभागाविष्ट्वा ऽऽज्याहुतीर्जुहोति पृथिव्या ऽअग्नय ऽइति ऋग्वेदे, अन्तरिक्षाय वायव ऽइति यजुर्वेदे, दिवे सूर्यायेति सामवेदे, दिग्भ्यश्चन्द्रमस ऽइत्यथर्ववेदे, ब्रह्मणे छन्दोभ्यश्चेति सर्वत्र, प्रजापतये देवेभ्य ऽऋषिभ्यः श्रद्धायै मेधायै सदसस्पतये ऽनुमतय ऽइति च । एतदेव व्रतादेशनविसर्गेषु"

इति सूत्रकारेणोपदिष्टः ।

आज्यभागाविष्ट्वाऽऽज्यभागहोमानन्तरमाज्याहुतीर्जुहोति। तत्र ऋग्वेदेऽधीयमाने 'पृथिव्यै, अग्नये' इति द्वे आहुती जुहोति, यजुर्वेदे अधीयमाने 'अन्तरिक्षाय, वायवे' इति द्वे, सामवेदेऽधीयमाने 'दिवे, सूर्याय' इति द्वे, अथर्ववेदे ऽधीयमाने 'दिग्भ्यः, चन्द्रमसे' इति द्वे। 'ब्रह्मणे छन्दोभ्यश्च' इति द्वे आहुती सर्वेषु वेदेषु अधीयमानेषु एकतमे वा। तथा प्रजापतये इत्यादिकाः मन्त्र चशब्दात्सर्वत्र। एवमेकैकशो वेदाध्ययनोपाकरणपक्षे। यदा पुनश्चतुर्णामपि वेदानां तन्त्रेणोपाकरणकर्म तदा 'ब्रह्मणे छन्दोभ्यश्च' इति प्रतिवेदमाहुतिद्वयमावर्तयेत्। प्रजापतये इत्याद्याः सप्ताहुतयस्तन्त्रेणैव योगविभागसामर्थ्यात्। एतद् उपाकर्मणि विहितं पृथिव्या इत्यादि अनुमतये इत्यन्तं होमकर्म व्रतादेशनं वेदारम्भः, विसर्गः समावर्तनम्, व्रतादेशनानि च विसर्गाश्च व्रतादेशनविसर्गाः, तेषु भवति॥

ब्रह्मचारिव्रतलोपे प्रायश्चित्तम्, आग्नेयं, शुक्रियम्, औपनिषदं, शौलभं, गोदानं चेति पञ्च व्रतानि, पुनरुपनयनं च गदाधरभाष्ये उक्तानि। तानि तत एव ज्ञातव्यानि विस्तरभयान्नेहोच्यन्ते॥ इति वेदारम्भः॥

वेदꣳ समाप्य स्नायाद्ब्रह्मचर्यं वा ऽष्टाचत्वारिꣳशकम्॥१॥

वेदं मन्त्रब्राह्मणात्मकं समाप्य सम्यक् पाठतो ऽर्थतश्चान्तं नीत्वा स्नायाद् वक्ष्यमाणेन विधिना स्नानं कुर्याद्। अथवा ब्रह्मचर्यं व्रतम् अष्टाचत्वारिंशकम् अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य गुरुणा ऽनुमतः—स्नायादिति गतेन सम्बन्धः॥

द्वादशके ऽप्येके गुरुणा ऽनुज्ञातः॥ २॥

एके सूत्रकारा द्वादशके ऽपि द्वादशवार्षिके व्रते स-

माप्ते ऽपि स्नायादिति मन्यन्ते । तत्रापि गुरुणा ऽनुज्ञातः । अत्रामूत्रितमपि वेदं व्रतं चोभयं समाप्य स्नायादित्यनुपद्यते । पूर्वं त्रिविधस्य स्नातकस्योक्तत्वात् ॥

विधिर्विधेयस्तर्कश्च वेदः ॥ ३ ॥

विधीयते इति विधिः, "अग्निमादधीत" इत्यादि ब्राह्मणवाक्यम् । विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्र इषेत्वादिः । तर्को ऽर्थवाद इति कर्कोपाध्यायाः । यथा "अक्ताः शर्करा उपदधाति" इति विधिः श्रूयते । तत्राञ्जनसाधनं घृतं तैलं वसा च–तन्मध्ये केनाक्ता इति संशये "तेजो वै घृतम्" इत्यर्थवादाद् घृतेनाक्ता इति निर्णीयते ऽतस्तर्को ऽर्थवादः । तर्को मीमांसेति कल्पतरुकारः । चकारान्नामधेयभागसङ्ग्रहः । यतो वेदो विध्यर्थवादमन्त्रनामधेयैश्चतुर्धा मीमांसकैर्विचार्यते । यथाऽग्निहोत्रादयो यागभेदा उद्भिद्वलभिदिति नामधेयानि ॥

षडङ्गमेके ॥ ४ ॥

एके सूत्रकारा षडङ्गं वेदं समाप्य स्नायादित्याहुः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड् अङ्गानि यस्य स षडङ्गस्तं षडङ्गम् ॥

न कल्पमात्रे ॥ ५ ॥

कल्पमात्रे ग्रन्थमात्रे वेदे वा ब्राह्मणे वा ऽधीते न स्नानमिच्छन्ति । 'अथातो ऽधिकारः' 'अथातो ब्रह्मजिज्ञासा' 'अथातो धर्मजिज्ञासा' इत्यादिभिरधिकारसूत्रैरधीतसकलवेदस्याधिकार इत्याचार्यैर्वर्ण्यमानत्वात् ॥

कामं तु याज्ञिकस्य ॥ ६ ॥

तुशब्दः पक्षव्यावृत्तौ । काममिच्छया याज्ञिकस्याध्वर्यवा-

दियज्ञविद्याकुशलस्य स्नानमिच्छन्ति ॥

अयमर्थः—मन्त्रब्राह्मणात्मकं वेदमधीत्यावबुध्य च स्नायादित्येकः पक्षः । साङ्गं वेदमधीत्य स्नायादिति द्वितीयः । ग्रन्थमात्रमधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः । यज्ञविद्याविरहेण ग्रन्थमात्राध्ययने न स्नायादिति निषेधः । वेदाध्ययनस्य वेदविहिताग्निहोत्रादिकर्मानुष्ठानप्रयोजकत्वात् ॥

उपसङ्गृह्य गुरुं समिधाऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात् स्थित्वाऽष्टानामुदकुम्भानां "ये ऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो मनोहाऽस्खलो विरुजस्तनूदूषुरिन्द्रियहा तान् विजहामि यो रोचनस्तमिह गृह्णामि" इत्येकस्मादपां गृहीत्वा तेनाभिषिञ्चते—"तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय" इति ॥ ७ ॥

स्नानविधिमाह—उपसंगृह्येति। उपसङ्गृह्य उपसङ्ग्रहणविधिना गुरुमाचार्यं प्रणम्य तिस्रः समिधः परिसमूहनादित्र्यायुषकरणान्तेन विधिना ऽऽचार्यनिर्वर्तितसमावर्तनाङ्गहोमे ऽग्नौ आधाय प्रक्षिप्य । अत्र यद्यपि उपसङ्गृह्य गुरुं समिधो ऽभ्याधायेति समिदाधानानन्तरं वेदाहुतीनामवसर इति गम्यते, तथाऽपि "स यामुपयन्त्समिधमादधाति सा प्रायणीया यां स्नास्यन्त्सोदयनीया" इति श्रुतेः स्नानाङ्गसमिदाधानस्य उदयनीयात्वोक्तेरुदयनीयायाश्चान्ते कर्तव्यत्वात् समिदाधानं तत्पूर्वाङ्गभूतमुपसङ्ग्रहणं च वेदाहुत्यादिसमावर्तनहोमानन्तरं कार्यम् ।

परिश्रितस्य परिवेष्टितस्य सर्वत आच्छादितस्य समावर्तनाङ्गहोमसाधनाग्निस्थापनप्रदेशस्योत्तरत उत्तरस्मिन्भागे ऽष्टानां

दक्षिणोत्तरायतानामपलजलपूर्णानामाम्रादिशुभपल्लवमुखानामुदकुम्भानां पुरस्तात्प्राच्यां दिशि प्रागग्रेष्वास्तीर्णेषु कुशेषु स्थित्वोर्ध्वीभूय येऽप्स्वन्तरित्यादिना गृह्णामीत्यन्तेन मन्त्रेण एकस्मात्प्रथमातिक्रमे कारणाभावादिति न्यायेन प्रथमादुदक्संस्थानां मध्ये दक्षिणाद्यो जलं दक्षिणहस्तेन गृहीत्वा तेन जलेनात्मानं शिरस्तोऽभिषिञ्चतेऽभ्युक्षति "तेन मामभिषिञ्चामि" इत्यादिना मन्त्रेण ॥

येन श्रियमकृणुतां येनावमृशताᳪं सुराम् । येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यश इति । आपो हिष्ठेति च प्रत्यृचम् । त्रिभिस्तूष्णीमितरैः ॥ ८ ॥

एवमेकोदकुम्भजलसाध्यस्नानमभिधायेतरसप्तोदकुम्भजलस्नानमात्रे मन्त्रविशेषाभिधानाद् येऽप्स्वन्तरग्नय इत्ययमेव सर्वजलकुम्भग्रहणसाधारण इत्यवगम्यते । ततः सर्वेभ्यो द्वितीयादिकुम्भेभ्यः प्रत्येकं येऽप्स्वन्तरिति जलमादाय वक्ष्यमाणैर्मन्त्रैर्यथाक्रममभिषिञ्चते । तद्यथा 'येनश्रियम्'इति द्वितीयेनोदकुम्भेन स्नानम्,'आपोहिष्ठा'इति तृतीयेन,'यो वः शिवतमः' इति चतुर्थेन, 'तस्मा अरम्'इति पञ्चमेन,षष्ठसप्तमाष्टमैस्तूष्णीम् ॥

उदुत्तममिति मेखलामुन्मुच्य दण्डे निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठते—"उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमय । उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मा गमय । उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मा गमय" इति ॥ ९ ॥

उदुत्तममितिमन्त्रेण मेखलां रशनामुन्मुच्य शिरोमार्गेण निस्सार्य तां भूमौ निक्षिप्य दण्डं च निधाय भूमौ निक्षिप्य अवसरप्राप्तमजिननिधानं च कृत्वा अन्यद्वस्त्रं परिधायादित्यं सूर्यम् 'उद्यन्भ्राजभृष्णुः'इत्यादिभिर्मन्त्रैरुपतिष्ठते स्तौति ॥

दधि तिलान् वा प्राश्य जटालोमनखानि संहृत्यौदुम्बरेण दन्तान्धावेत "अन्नाद्याय व्यूहध्वं सोमो राजा ऽयमागमत् । स मे मुखं प्रमाक्ष्यते यशसा च भगेन च"इति ॥ १० ॥

ततः दधितिलानामन्यतरत्प्राश्य जटाश्च लोमानि च नखानि च संहृत्य संहार्य वापयित्वौदुम्बरेण द्वादशाङ्गुलसम्मितेन कनिष्ठिकाग्रस्थूलेनोदुम्बरकाष्ठेन 'अन्नाद्याय व्यूहध्वम्' इति मन्त्रेण दन्तान्धावेत प्रक्षालयेद्ब्राह्मणः । दशाङ्गुलेन राजन्यो ऽष्टाङ्गुलेन वैश्य इति विशेषः । अत्र जटालोमनखवपननिमित्तात् उत्तरसूत्रे पुनः स्नात्वेति पुनःशब्दसामर्थ्याच्च स्नानमापद्यते, अतो वपनानन्तरं स्नानाचमने विधाय पुनः कर्मान्तरमारभेत इति सिद्धम् ॥

उत्साद्य पुनः स्नात्वा ऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते "प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय"इति ॥ ११ ॥

उत्साद्य सुगन्धिना द्रव्येण शरीरमुद्वर्त्य पुनर्भूयः स्नात्वा शिरःप्रभृतीन्यङ्गानि प्रक्षाल्यानुलेपनं चन्दनादि मुखस्य नासिकयोश्च "प्राणापानौ मे तर्पय"इत्यादिना मन्त्रेणोपगृह्णीते मुखं नासिकां चानुलिम्पतीत्यर्थः ॥

पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणा नि-

पिच्यानुलिप्य जपेत् "सुचक्षा ऽअहमक्षीभ्यां (भूयासं) सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम्" इति॥१२॥

ततः पाण्योरवनेजनं हस्तयोः प्रक्षालनमुदकं "पितरः शुन्धध्वम्" इत्यनेन मन्त्रेण प्राचीनावीती दक्षिणाभिमुखो भूत्वा दक्षिणस्यां दिशि पितृतीर्थेन प्रक्षिप्य यज्ञोपवीती भूत्वा पितृकर्मकरणनिमित्तमुदकस्पर्शं विधाय चन्दनादिना सुगन्धिद्रव्येण गात्राण्यनुलिप्य "सुचक्षा ऽअहम्" इति मन्त्रं जपेत् ॥

अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत "परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये" इति ॥ १३ ॥

ततो ऽहतं नवं सदशं वासो वस्त्रं 'परिधास्यै' इत्यादिना मन्त्रेणाच्छादयीत परिदधीत। तदलाभे ऽमौत्रेणारजकेन धौतं क्षालितं परिदधीत ॥

अथोत्तरीयम् "यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च मा ऽविन्दद्यशो मा प्रतिपद्यताम्" इति ॥ १४ ॥

अथान्तरीयपरिधानानन्तरं तादृशमेवोत्तरीयं वस्त्रं 'यशसा मा' इत्यादिना मन्त्रेणाच्छादयीतेति गतेन सम्बन्धः ॥

एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ॥ १५ ॥

यद्येकमेव वासो भवति तदा पूर्वस्यैव परिधानीयस्य वाससं उत्तरवर्गेणोत्तरभागेण पूर्वोक्तेनैव मन्त्रेण प्रच्छादयीत ॥

सुमनसः प्रतिगृह्णाति "या ऽआहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ता ऽअहं प्रतिगृह्णामि यशसा च भगेन च" इति ॥ १६ ॥

सुमनसः पुष्पाणि प्रतिगृह्णाति अन्येन दत्तान्यादत्ते 'या आहरत्' इति मन्त्रेण ॥

अथावबध्नीते "यद्यशो ऽप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन सङ्ग्रथिताः सुमनस ऽआबध्नामि यशो मयि"इति ॥ १७ ॥

अथ ताः सुमनसः प्रतिगृह्यावबध्नीते शिरसि बध्नाति 'यद्यशोऽप्सरसाम्'इत्यादिना मन्त्रेण ॥

उष्णीषेण शिरो वेष्टयते 'युवा सुवासा'इति ॥१८॥

उष्णीषेण पूर्वोक्तलक्षणेन तृतीयेन वाससा शिरो मूर्धानं वेष्टयते 'युवा सुवासा' इति मन्त्रेण ॥

"अलङ्करणमसि भूयो ऽलंकरणम् भूयात्" इति कर्णवेष्टकौ ॥ १९ ॥

अलङ्करणमसीति मन्त्रेण दक्षिणोत्तरयोः कर्णयोः वेष्टकौ कुण्डले मन्त्रावृत्त्या प्रतिमुञ्चते परिधत्ते ॥

वृत्रस्येत्यङ्क्ते ऽक्षिणी ॥ २० ॥

वृत्रस्येत्यादिना चक्षुर्मेदेहीत्यन्तेन मन्त्रेण यथाक्रमं दक्षिणवामे अक्षिणी मन्त्रावृत्त्याङ्क्ते सौवीराञ्जनेन संस्करोति ॥ "सव्यं वा अग्रे मानुष"इति दीक्षाप्रकरणस्थालिङ्गात् "वृत्रस्येत्यक्षिणी अङ्क्तेऽभ्यञ्जनेनाभिनासिकम् । सव्यं प्रथममित्येव श्रूयते बह्वृचश्रुतौ"इति कारिकाकारोक्तेश्च सव्यदक्षिणे यथाक्रमं मन्त्रावृत्त्येति गदाधरः ॥

रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते ॥ २१ ॥

रोचिष्णुरसीत्यनेन मन्त्रेणात्मानं मुखप्रभृति शरीरम् आदर्शे दर्पणे प्रेक्षते पश्यति ॥

छत्रं प्रतिगृह्णाति "बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेहि" इति ॥ २२ ॥

छत्रमातपत्रं बृहस्पतेश्छदिरसीत्यादिना मन्त्रेण प्रतिगृह्णाति अन्यत आदत्ते ॥

"प्रतिष्ठे स्थो विश्वतो मा पातम्" इत्युपानहौ प्रतिमुञ्चते ॥ २३ ॥

उपानहौ पादत्राणे 'प्रतिष्ठे स्थ' इति मन्त्रेण प्रतिमुञ्चते परिधत्ते। मन्त्रस्य द्विवचनान्तत्वात्परिधातुं शक्यत्वाच्च युगपत्पादयोः प्रतिमुञ्चते ॥

"विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वत" इति वैणवं दण्डमादत्ते ॥ २४ ॥

विश्वाभ्य इत्यनेन मन्त्रेण वैणवं वंशमयं दण्डमादत्ते गृह्णाति। इदमभिषेकप्रभृति दण्डग्रहणान्तं कर्मजातं स्नानकर्ता करोति नाचार्यः ॥

दन्तप्रक्षालनादीनि नित्यमपि, वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः ॥ २५ ॥

दन्तप्रक्षालनमादौ येषां पुष्पादानादीनां तानि दन्तप्रक्षालनादीनि नित्यमपि सर्वदा मन्त्रवन्ति स्नातकस्य भवन्ति। वाससी च छत्रं चोपानहौ च वासश्छत्रोपानहः चकाराद्दण्डोऽपि। एतानि चेदपूर्वाणि नूतनानि क्रियन्ते तदा मन्त्रो भवति। इति षष्ठी कण्डिका ॥ स्नातस्य नियमाश्च प्रयोगे वक्ष्यन्ते।

इति समावर्तनम् ॥

विवाहाद्युपयोगिपारस्करगृह्यसूत्रव्याख्या समाप्ता ॥

## अथ पारस्करगृह्यानुसारी विवाहप्रयोगः ॥

तत्र वैवाहिकात् दिनात्पूर्वं तृतीयषष्ठनवमाद्दिनेषु "न पूर्वमिदमाचरेत्त्रिनवषण्मिते वासरे" इति मुहूर्तचिन्तामणौ सर्वारम्भनिषेधात् अनवमे अषष्ठेऽतृतीये दिवसे चन्द्रानुकूल्ये विवाहोक्तनक्षत्रे संस्कार्यायाः कन्यायाः संस्कार्यस्य पुत्रस्य च पित्रादिः सर्वारम्भं कुर्यात् ।

आचारात् चुल्लीनिर्माणाय पुरन्ध्रीद्वारा मृत्तामानीय संशोध्य तस्यास्त्रिशृङ्गां चुल्लीं सद्रव्यां निर्माय गोमयेनोपलिम्पेत् ।

*गैरिकाद्युपलिप्तायां भूमौ तण्डुलेखेन 'खडी' इति प्रसि*द्धेन, तण्डुलपिष्टोदकेन वा चतुष्पदीमुपालिख्य तत्र सर्वारम्भलग्नात्प्राक् वितानाधः पिप्पलादिपात्रस्थपिष्टातकाङ्कितपीठं संस्थाप्य तत्र वरं कन्यां वा समुपवेश्य कोष्णेनोदकेन सुगन्धिस्वच्छतैलहरिद्रासिद्धार्थकल्काद्युद्वर्तनपूर्वकं संस्नाप्य धौतानि वासांसि परिधाप्य स्वसमीपमानाय्य स्वासने स्वदक्षिणतः समुपवेश्य दीपं प्रज्वाल्य आचम्य प्राणानायम्य देवेभ्यः पुष्पाञ्जलिं स्वयं संस्कार्यहस्तेन च समर्प्य गणेशपूजनं कुर्यात् । तत्र सङ्कल्पः—अद्येहामुकोऽहम् मम अमुकराशेः कन्यायाः पुत्रस्य वा करिष्यमाणविवाहसंस्कारकर्मणः सर्वसामग्रीसंघट्टकर्मणि निर्विघ्नतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये इति सङ्कल्प्य यथाविधि गणेशं सम्पूज्य आचारात्सद्रव्यास्तिस्रो वस्त्रखण्डपोटलिकाः कृत्वा एकां चुल्ल्याम् एकां ताम्रकटाहे एकां ताम्रदर्व्यां च बद्ध्वा कटाहे वस्त्रपूतं सुगन्धि सुरभ्यादिघृतं निक्षिप्य अपटच्छराः अङ्कस्याङ्गाः

अनेडमूकाः अकृष्णाः अरुग्णाः अलोलुपाः शिल्पज्ञाः पुरन्ध्रीरानाय्य तद्द्वारा धौतगोधूमचूर्णसंपाद्यसोहालिकादिपाकारम्भं कृत्वा तदैव वरकन्यापरिधानार्हवस्त्रस्यूतकरणाद्यारम्भं कारयेत् ॥

॥ अथ पूर्वाङ्गविधिः ॥

विवाहदिनात्पूर्वदिने तस्मिन्नेव दिने वा कन्यापित्रादिः पत्न्या सह कृताभ्यङ्गस्नानः कन्यां सर्वारम्भोक्तरीत्या स्नापयित्वा अहतोष्णीषादिपीतवासाः शुभासने प्राङ्मुख उपविश्य दीपं प्रज्वलय्याचम्य प्राणानायम्य स्वदक्षिणतः (पृ. ५४ प्र. भा.) पत्नीं तद्दक्षिणे 'संस्कार्यकन्यां चोपवेश्य 'स्वस्तिनोमिमीताम्'इत्यादिशान्तिपाठं (स्वस्तिवाचनं ) कृत्वा गणेशं विष्णुम् उमामहेश्वरौ सूर्यं गुरुं कुलदेवतां स्थानदेवतां च नमस्कृत्य गणेशमुक्तविधिना' सम्पूज्य यावन्मातृविसर्जनस्थाय्यखण्डदीपं प्रज्वलयेत् । तत्र सङ्कल्पः-मम कन्यायाः साङ्गविवाहकर्मणि अन्तरिक्षचारिभूतादिविघ्ननिरासार्थम् एतत्काळमारभ्य मातृविसर्जनपर्यन्तमखण्डदीपं देवसंनिधौ स्थापयिष्ये । अथ दीपप्रार्थना-दीपस्त्वं देहि कल्याणं देहि सर्वान्मनोरथान् । यावद्व्रतं समाप्येत तावत्त्वं च स्थिरो भवेति ॥ ततः प्रधानसङ्कल्पं कुर्यात्-अर्घं संस्थाप्य अद्येत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्माऽहम् मम अमुकराशेरस्याः कन्यायाः बीजगर्भसमुद्भवैनोनिबर्हणद्वारा भर्त्रा सह धर्म्यप्रजोत्पादनगृह्यपरिग्रहधर्माचरणेष्वधिकारसिद्धिद्वारा च श्रीपरमेश्वरप्रीत्यर्थं विवाहाख्यसंस्कारं करिष्ये इति सङ्कल्प्य तत्पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इति सङ्कल्प्य मातृपूजानान्दीश्राद्धपुण्याहवाचनानि पूर्वोक्तविधिना विधाय सति सम्भवे ग्रहयागं पूर्वोक्तरीत्या कुर्यात् । तदसम्भवे कलशस्थापनं

कृत्वा तत्र ब्रह्मवरुणाधिदेवतादिसहितान् नवग्रहानावाह्य सम्पूज्य चन्दनादिना लिखतयोर्गौरीहरयोः पूजनं कन्याहस्तेन कारयेत्। सङ्कल्पः–अद्येत्यादिसं. अमुकराशिरमुकनाम्नी अहं सर्वसौभाग्यसमृद्धये गौरीहरयोः पूजनं करिष्ये। एतन्त इति, ॐभूर्भुवः स्वः गौरीहरौ सुप्रतिष्ठितौ वरदौ भवतम् इति प्र०। ध्यानम्। सिंहासनस्थां देवेशीं सर्वालङ्कारसंयुताम्। पीताम्बरयुगं देवं चन्द्रार्द्धकृतशेखरम् १. करेणाधः सुधापूर्णं कलशं दक्षिणेन तु। वरदं चाभयं वामेनाश्लिष्य च सतुप्रियाम् २ एवं ध्यात्वा पूज्य मन्त्रैः पुण्यभाजस्तथा स्त्रियः॥ इति ध्यात्वा पूजयेत्॥ पूजामन्त्रः–गौरीहर महेशान सर्वमङ्गलदायक। पूजां गृहाण देवेश सर्वदा मङ्गलं कुरु॥ इति मन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य-

कन्यादेहप्रमाणेन सप्तविंशतितन्तुभिः।
वर्तिकां दीपयेत्पश्चान्नृतसम्पत्तिहेतवे॥

एवं वर्तिकां प्रज्वाल्य तया नीराज्य सम्मार्जयेत्। एवं सिद्धवर्तिकयाऽखण्डदीपं कुर्यादिति केचित्। भोजनीया ब्राह्मणाश्च सुवासिन्यः सुपूजिताः। दद्याद् पञ्च युग्मं वा हिरण्येनाथ तोषयेत्॥ अस्मिन्नवसरे कात्यायनी–महालक्ष्मीपूजनं कार्यम्। वाग्दानसमयोक्तम् इन्द्राणीपूजनमपि अस्मिन्नेव समये कार्यम्। वाग्दानस्य उत्कृष्य द्वारपूजासमयेऽनुष्ठीयमानत्वात्। अद्येहामुकगोत्रोत्पन्ना अमुकनाम्न्यहं सौभाग्यसमृद्धये इन्द्राणीपूजनं स्वर्णादिमूर्तौ चन्दनादिना लिखितमूर्तौ वा करिष्ये इति सङ्कल्प्य ताम्–

देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि। वरं सौभाग्यमारोग्यं पुत्रलाभं च देहि मे॥ धान्यं देहि धनं देहि पद्मेन्द्रेहीन्द्रभामिनि। यशो देहि सुखं देहि सर्वकार्यकरी भव॥ इति

मन्त्राभ्यां पूजयेत् । ततः रक्षाविधानोक्तप्रकारेण कङ्कणमभिमन्त्र्य एतं ते इति प्रतिष्ठापयेत् । कन्याया वामहस्ते तन्मातुश्च वामहस्ते कङ्कणं बध्नीयात्, तिलकादि कृत्वाऽऽशिषं च दद्यात् पुरोहितः। कङ्कणोपचयश्चाग्रे वरपूर्वाङ्गप्रस्तावे द्रष्टव्याः ॥

॥ इति कन्यापक्षे पूर्वाङ्गविधिः ॥

अथ वरपक्षे तद्विधिः ॥

वरपिता विवाहात्पूर्वदिने तद्दिने वा कृताभ्यङ्गस्नानः नित्यं कर्म वैश्वदेवान्तं कृत्वा शुचिः शुक्लादिवासाः वरम् अभ्यङ्गपूर्वकं मङ्गलद्रव्यैः संस्नाप्य शुभासने प्राङ्मुख उपविश्य दीपं प्रज्वल्याचम्य 'स्वस्ति नो मिमीताम्'इत्यादिना शान्तिपाठं ( स्वस्तिवाचनं ) कृत्वा गणेशं विष्णुम् उमामहेश्वरौ सूर्यं गुरुं कुलदेवतां स्थानदेवतां च प्रणम्य अर्घस्थापनं विधाय प्राणानायम्य देशकालस्मरणान्ते अमुकोऽहम् मम अमुकराशेरस्य पुत्रस्य विवाहकर्मणि निर्विघ्नतया कार्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये-इति सं० यथाविधि गणेशं सम्पूज्य *प्रधानसङ्कल्पं कुर्यात् ।

---

* अत्रैव वरः अनाश्रमस्थितिप्रयुक्तदोषपरिहारार्थं प्रायश्चित्तं कुर्यात्। तच्च हारीतेनोक्तम्—अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाऽऽश्रममुपेयात् । द्वितीये ऽतिकृच्छ्रम्, तृतीये कृच्छ्रातिकृच्छ्रम्, अत ऊर्ध्वं चान्द्रायणमिति।

प्राजापत्यकृच्छ्रादीनां स्वरूपं मिताक्षरायां व्यक्तम् । प्राजापत्यकृच्छ्रप्रत्याम्नायश्चैका गौः, अतिकृच्छ्रप्रत्याम्नायो गोद्वयम्, कृच्छ्रातिकृच्छ्रप्रत्याम्नायो गोचतुष्टयं गोत्रयं वा, चान्द्रायणप्रत्याम्नायो ऽष्टौ पञ्च चतस्रस्तिस्रो वा गावः । प्राजापत्येष्वशक्तस्तु धेनुं दद्यात्पयस्विनीम् । धेनोरभावे निष्कं वा तदर्धं पादमेव वा ॥ सुवर्णं रजतं वा ऽपि दद्याच्छक्त्यनुसारतः । अशीति-

अद्येत्यादि संकीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्मा सपत्नीकोऽहम् मम अमुकराशेरस्य पुत्रस्य देवपितृऋणापाकरणहेतुधर्म्यप्रजोत्पादनगृह्यपरिग्रहसिद्धिद्वारा श्रीपरमेश्वर-

---

गुञ्जात्मकः कर्षः, चत्वारः कर्षा निष्कः ।

अल्पशक्तेन निष्कपादाधर्मितं रजतं, तत्समप्रमूल्यं धान्यादि वा देयम् । अथ साङ्कल्पिकः प्रयोगः । तत्र प्रथमाब्दे प्राजापत्यकृच्छ्रव्रत सङ्कल्पः—देशकालसंकीर्तनान्ते ऽमुकशर्मणो मम समावर्तनदिनमारभ्य यावदब्दं किञ्चित्तन्न्यूनं वा ऽनाश्रमस्थितिजन्यदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्राजापत्यकृच्छ्रव्रतं तत्प्रत्याम्नायैकगोनिष्क्रयीभूतरजतद्रव्यदानेनाहं करिष्ये इति सङ्कल्प्य ब्राह्मणं सम्पूज्य देयद्रव्यं च सम्प्रोक्ष्य सम्पूज्य द्रव्यं गृहीत्वा पूर्ववद्देशकालाद्युल्लिख्येदं प्राजापत्यकृच्छ्रव्रतप्रत्याम्नायैकगोनिष्क्रयीभूतं रजतद्रव्यं चन्द्रदैवतममुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति 'यज्ञसाधनभूताया' इति मन्त्रमुच्चरन् दद्यात् । दानप्रतिष्ठार्थं किञ्चिद्रजतं ताम्रखण्डं वा दद्यात् ।

अब्दद्वयमनाश्रमस्थितौ समावर्तनादिनमारभ्याब्दद्वयपर्यन्तम्-अनाश्रमस्थितिज० प्रीत्यर्थम् अतिकृच्छ्रव्रतं तत्प्रत्याम्नायगोद्वयनिष्क्रयेत्यादि पूर्ववत् ।

त्रिवर्षं तत्स्थितौ अब्दत्रयपर्यन्तम् इति कृच्छ्रातिकृच्छ्रव्रतप्रत्याम्नायेति च विशेषः ।

त्रिवर्षोर्ध्वं तु देशकालकीर्तनान्ते समावर्तनदिनमारभ्याद्य यावदनाश्रमस्थितिज० चान्द्रायणव्रतं तत्प्रत्याम्नायाष्टान्यतमगोनिष्क्रयीभूतद्रव्यदानेनाहमाचरिष्यामि० इत्यादि पूर्ववत् ।

कन्यापिता कन्यायाः गर्भाधानादीनां संस्काराणां मध्ये लुप्तानामेषां संस्काराणामबुद्धिपूर्वं बुद्धिपूर्वं वा लोपेन जनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रतिसंस्कारमर्द्धकृच्छ्रप्रायश्चित्तं तत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतदानेनाहमाचरिष्यामि इति सङ्कल्प्य ब्राह्मणं संपूज्य पूर्ववद्दत्वा प्रधानसङ्कल्पं कुर्यात् ।

प्रीतये विवाहाख्यं संस्कारं *करिष्ये । तत्पूर्वाङ्गत्वेन मा-

विवाहात्पूर्वम् आपदादिना कन्यारजोदर्शने जाते कन्याया विवाहयोग्यतासिद्ध्यर्थमुपायमाह—संस्कारभास्करे आश्वलायनः—

पिता ऋतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः ।
स्नानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥
दद्याच्चर्तुसङ्ख्यया गाः शक्तः कन्यापिता यदि ।
वातस्यैकाऽपि यत्नेन दाने तस्या यथाविधि ॥
दद्याद्वा ब्राह्मणेभ्यश्चमतिनिःस्वः सदक्षिणम् ।
तद्वीतर्तुसङ्ख्येषु वराय प्रतिपादयेत् ॥
उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥
तामुद्वहन् वरश्चापि कूष्माण्डैर्जुहुयाद्घृतमिति ।
विष्णुः—यद्देवेति ऋक्सूक्तं कूष्माण्डं परिकीर्तितम् ।
तयावृत्त्या हुवेदाज्यं होमः कूष्माण्ड ईडितः ॥

तस्याः-कन्यायाः। दाने-कर्तव्ये। यथाविधि-सुवर्णशृङ्गादिगोदानविधिना। वरायेति त्रितयस्य उक्तप्रकाराणामन्यतमेन दातुः कन्यादाने योग्यता भवतीत्यर्थः । उपोष्येति श्लोकेन दृष्टरजस्ककन्याया उपवासत्रयान्ते गव्यपयःपानपूर्वकम् अदृष्टरजसे कुमार्यै रत्नभूषणदानेन विवाहयोग्यतोच्यते। तामुद्वहन्नित्यनेन वरस्य कूष्माण्डहोमेन तदुद्वाहयोग्यता बोध्यते इति दिक् ।

*वरपितुः पुत्रस्य विवाहाख्यसंस्कारे कर्तृत्वं पुत्रकर्तृकपाणिग्रहणादिकर्मसु अनुमतिदानरूपप्रेरणया । यथा प्रयागे वपनं कुर्यादित्यादौ वपने कर्तृत्वस्य नापितनिष्ठत्वे ऽपि तत्प्रेरणया यजमानस्यैव कर्तृत्वमुच्यते । अत एव वपनं करिष्ये इत्येव सङ्कल्पो नारायणभट्टादिसर्वनिबन्धकारसम्मतस्तत्र, तद्वत्प्रकृते ऽपि प्रयोजकव्यापारस्यानुमतिरूपस्यैव धातुवाच्यत्वेन विवक्षया कर्तृत्वं सूपपादम्—इति प्राचीनानामभिप्रायः। नवीनास्तु प्रधानसङ्कल्पं पुत्रकर्तृकमेव वदन्ति । अङ्गानुष्ठानव्यतिरिक्तस्य पितृव्यापारस्याभावात् । एवं समावर्तने ऽपि ।

कन्यापितुस्तु वरकर्तृकविवाहपदार्थघटकप्रतिग्रहप्रयोजकीभूत-

तृपूजा–नान्दीश्राद्ध–पुण्याहवाचनानि करिष्ये। इति सङ्कल्प्य मातृपूजा–नान्दीश्राद्ध–पुण्याहवाचनानि विधाय सति सम्भवे ग्रहयागं कुर्यात्। तदसम्भवे कलशं संस्थाप्य तत्र ग्रहवरुणाधिदेवतादिसहितानादित्यादिग्रहानावाह्य पूर्वोक्तविधिना सम्पूज्य रक्षाविधानोक्तप्रकारेण कङ्कणमभिमन्त्र्य मतिष्ठाप्य वरहस्ते कन्याहस्ते च यत्ना सुरक्षितं कुर्यात्। चतुर्थीकर्मदिवसे मोचयेत्।

कङ्कणौषधयश्च हेमाद्रौ भविष्यपुराणे–

दूर्वा यवाङ्कुराश्चैव बालकं चूतपल्लवाः। हरिद्राद्वय–सिद्धार्थ–शिखिपत्रोरगत्वचः॥ कङ्कणौषधयश्चैताः कौतुकाख्या नव स्मृताः। इति पूर्वाङ्गविधिः॥

(यद्यपि सूत्रकारेण बहिःशालायां विवाहादिकर्मविधानात् शालाकर्मणि च आग्नेयादिषु चतुर्षु कोणेषु स्तम्भनिखननस्य मध्ये च छादनार्थं काष्ठस्थापनस्य विधानात् तन्निमित्तं पुरस्कृत्य वसिष्ठेन चतुर्षु कोणस्तम्भेषु मध्यकाष्ठे च विहितं नन्दिन्यादिपञ्चमातृणां स्थापनं शालाकर्माभावेऽपि समाचारात् शूर्पे दाक्षिणात्येषु परिदृश्यते तथापि विवाहादिषु यथाविधि शालानिर्माणस्य प्रायः सर्वत्र लुप्तत्वात् तद्घटकस्तम्भनिमित्तमुपक्रम्य विहितं नन्दिन्यादिस्थापनं पर्वतीयादिषु न प्रचलति। निमित्ताभावे नैमित्तिकस्याननुष्ठातव्यत्वात्। शूर्पादौ स्थापनं तु स्मृत्यविहितं न तत्समाचारासिद्धमिति बोध्यम्।

वधूवरयोर्विवाहस्थैकस्यां शालायां कन्यापितृगृहादहिरनुष्ठीयमानत्वात्तत्रैव नन्दिन्यादीनां स्थापनमुचितम्। यत्तु उभयोः पक्षयोरनयोः स्थापनं दृश्यतेऽधुना दाक्षिणात्येषु, तत्र समादानकर्तृत्वादेव कन्याविवाहसंस्कारकर्तृत्वम् बोध्यमिति दिक्।

चार एव शरणम् इति दिक् ।

पूर्वाङ्गानुष्ठानं च देशान्तरे विवाहे तत्रैव गत्वा कार्यम् । "उक्ते काले विवाहाङ्गं कुर्यान्नान्दीमुखं पिता । देशान्तरे विवाहश्चेत्तत्र गत्वा भवेदिदम्" ॥ इतिरेणुकारिकोक्तेः । देशान्तरं च महानदीव्यवहितं वा गिरिव्यवहितं वा भाषाभिन्नं वेति दिक् ।

इदं च पूर्वं वरपक्षे प्राधान्यादिति पर्वतीयसमाचारः । कन्यापक्षे पूर्वमिति दाक्षिणात्याचारः । तद्यथाऽऽचारमनुष्ठेयम्) ।

(ततो ब्राह्मणान्भोजनदक्षिणादिभिः सन्तोष्य तत एकं ज्योतिर्विदं सुशीलं मङ्गलादिद्रव्यसहितघटिकापात्रयुतं विवाहलग्ननिश्चयार्थं कन्यापितृगृहं प्रति प्रथमं प्रेषयेत् ।

ततो वरं सात्त्विकाहारं भोजयित्वा, नेदिष्ठे वधूगृहे दिवा विवाहलग्ने अभोजयित्वा सर्वां विवाहसामग्रीमुपकल्प्य वरं रक्ततूलकञ्चुकोष्णीषकटिवेष्टोत्तरीयकुण्डलग्रैवेयकाद्यलंकारैर्मुकुटादिभिश्चालंकृत्य शिविकादियानमारोह्य उपकल्पितां सर्वां विवाहसामग्रीमग्रतः कृत्वा वस्त्रालङ्कारादिभूषितमुदितबान्धवाप्तयुतः सपुरोहितादिद्विजः *पञ्चघोषपूर्वकं कन्यापितृगृहं व्रजेत्) ।

## अथ वाग्दानवरणविधिः ॥

अथ कन्यापिता मार्गागतं वरं श्रुत्वा उपकल्पितां

---

*पुरश्चर्यार्णवे संगीतशास्त्रे-ततं सुषिरमानद्धमयःसारो घनं तथा । वाद्यमेतत् पञ्चविधं देवदेवस्य ताण्डवे ॥ ततं-वीणादि । सुषिरं—वंशीशङ्खादि । आनद्धं—डिण्डिममृदङ्गादि । अयःसारो घण्टादि । घनं—कांस्यतालादि ।

वरपूजासामग्रीं स्वसविधे आनाय्य सुलिप्तायां शुचि समुपविश्य त्रिराचम्य प्राणानायम्य गणेशादीन् गन्धपुष्पादिना सम्पूज्य सति सम्भवे कलशविधिना कलशं संस्थाप्य तत्र वरुणं ग्रहांश्चावाह्य संम्पूज्य वरागमनं प्रतीक्षेत ।

(अथ वरस्य पिता मार्गागतस्य वरस्य जनतादिवृत्तान्तनिवेदनार्थं सफलदधिपात्रसहितं सौम्यवेषं मनुष्यद्वयं, *वराभ्यङ्गावशिष्टहरिद्राराञ्जिततैलकुतुपकङ्कतिकापट्टसूत्रहस्तं नापितादिकञ्च प्रेषयति । ततः कन्यापितापि तत्प्रेषितं गृहीत्वा मनुष्ययोर्मनुष्याणां वा अर्चां कृत्वा यथाशक्ति तयोर्गद्रव्यं दत्त्वा सुभोज्यं भोजयित्वा स्वयमपि स्वीयमाप्तं मनुष्यद्वयं फलसहितं वरस्य शीघ्रमाकारणार्थं प्रेषयति) ।

ततः कन्यापिता निजमन्दिराददूरागतं समाजमध्यस्थितं वरं विलोक्य जनतया सह वरमानेतुं पद्मघोषपूर्वकं कतिचित्पदानि गत्वा द्वारमानाय्य द्वारे यथाशक्ति वराधिष्ठितयानं वोढ्वा वरं यानादवतार्य्य वरहस्तात् श्रीफलादि सादरं गृहीत्वा स्वानीय स्वस्तिकादिशोभितायां शुद्धायां भूमौ वक्ष्यमाणप्रकारेण पादप्रक्षालनादिपूर्वकं स्वासने प्राङ्मुखमुपवेश्य स्वयमुदङ्मुख उपविशेत् । तत्र तावत् आचम्य प्राणानायम्य आचार्यस्य पादप्रक्षालनार्थं पात्रयुग्मं प्रयच्छति—"आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः । अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः." ॥ इत्याचार्यपादौ प्रक्षाल्य इत्थमेव वरपा-

*वराभ्यङ्गावशिष्टतैलकुतुपादिहस्तनापितादिप्रेषणं तु पूर्वाङ्गानुष्ठानोत्तरं सच एवोचितम् । दृश्यते च तथैव मध्यदेशीयपर्वतीयेषु । असुकरत्वात्पर्वते न तथा प्रचलतीति बोध्यम् ।

दौ प्रक्षालयेत् । ततः वाग्दानसंकल्पं कुर्यात् । अद्येहेत्यादि सं० अमुकराशिरमुकशर्म्माऽहं *करिष्यमाणकन्यादानाङ्गत्वेन वाग्दा*-नं करिष्ये इति संकल्प्य कुङ्कुमाक्तानि पञ्च पूगीफलान्यादाय अमुकगोत्रो ऽमुकप्रवरोऽमुकवेदान्तर्गतामुकशाखाध्यायी अमुक-शर्म्माऽहम् अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्या-यिनोऽमुकशर्म्मणः प्रपौत्राय अमुकशर्म्मणः पौत्राय अमुकशर्मणः पुत्राय अमुकशर्म्मणे विष्णुस्वरूपिणे कन्यार्थिने वराय अमुक-गोत्रस्यामुकप्रवरस्यामुकवेदान्तर्गतामुकशाखाध्यायिनोऽमुकश-र्म्मणः प्रपौत्रीम् अमुकशर्म्मणः पौत्रीम् अमुकशर्म्मणः पुत्रीम् अ-*मुकनाम्नीं श्रीरूपिणीं वरार्थिनीं कन्यां ज्योतिर्विदादिष्टे मुहूर्ते* (तुभ्यं) दास्ये इति वाचा संप्रददे । तत्प्रतिग्रहार्थम् एभिर्ग-न्धाक्षतपुष्पपूगीफलद्रव्यभूषणाद्युपचारैस्त्वामहं वृणे । वृतोऽस्मी-ति प्रत्युक्तिः ।

इति वाग्दानम् । अथ वरणविधिः ।

ततः पुनरर्घं संस्थाप्य वरणसंकल्पंकुर्यात् । अद्येहेत्यादि सं० अमुकगोत्रोऽमुकराशिरमुकशर्म्माऽहं करिष्यमाणकन्यादा-नप्रतिग्रहार्थं द्वारदेशागतस्य वरस्य पूजनपूर्वकं वरणं करिष्ये ।

*तत्पूर्वाङ्गत्वेन वरकन्ययोः पाणिग्रहणकर्म्मणि आचार्यकर्म* कर्तुम् आचार्यस्य पूजनं वरणं च करिष्ये । प्रथमम् आचार्याय भू-मिदेवाग्रेति मन्त्रेण अर्घं दत्त्वा गन्धद्वारामिति गन्धान् दत्त्वा ॐन-मोऽस्त्वनन्तायेति अक्षतपुष्पमालादिभिः सम्पूज्य अद्भिः क्षीरेण कुशाग्रैर्दध्ना तिलैः (तिलस्थाने बदरेण) तण्डुलैर्यवैः सर्षपैश्च सम्पा दिताष्टाङ्गेनार्घेण आचार्यसम्मुखः अर्घोऽर्घोऽर्घः प्रतिगृह्यताम् इति वदेत् । ॐ अर्हं प्रतिगृह्णामीत्याचार्यः प्रतिब्रूयात् । ततः कन्या-पिता वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलयज्ञोप-

धीतद्रव्यवासोलंकरणपुष्पमालाभिर्वरकन्ययोर्विवाहकर्म्मणि(आचार्यकर्म कर्त्तुम्) आचार्य्यत्वेन त्वामहं वृणे इति ब्रूयात् । आचार्य्यश्च तत्प्रतिगृह्य वृतोऽस्मीति प्रतिब्रूयात् । आचार्य स्तु यथास्वर्गे इति सम्प्रार्थ्य कन्यापिता पुनरर्घं दद्यात् ॐअर्घोऽर्घोऽर्घः प्रतिगृह्यताम् इति । अहं प्रतिगृह्णामि इत्याचार्यः । ततः कन्यापिता पूर्ववत् सम्पादितमष्टाङ्गमर्घं हस्तयोः कृत्वा उत्थाय वराचार्याभिमुखस्तिष्ठेत् । ततः समाचारात् आचार्यप्रमुखाः वरशाखीया एतद् ब्राह्मणकण्डिकासप्तकं यथाश्रुतमुच्चैः पठेयुः ।

*ॐ अथ वरं वृणीते बलं वै देवा एतस्य ग्रहस्य होमं प्रेप्सन्ति तेऽस्मा एतं वरꣳ समर्द्धयन्ति क्षिप्रं नोऽइमं ग्रहं जुहवदिति तस्माद्वरं वृणीते १ अथ वरं वृणीते यद्वै किञ्च सुपुराणो वरं वृणी-

*का श्रौ अ ९ क ४ सू ३६ वरं वृत्वा ददाति च ।

अग्निष्टोमे सुत्यादिवसे उपांशुग्रहहोमात् पूर्वं यजमानो हविर्धानमण्डपान्निष्क्रान्तमध्वर्युमन्वारभ्य "पुत्रो मेऽस्तु स्वर्गो मेऽस्तु" इत्यादिवरं प्रार्थ्य अध्वर्यवे वरं गवादिरूपं ददाति । तस्यार्थवादोऽयम्—अथ वरं वृणीते इति ( श ब्रा का ४ अ १ ब्रा १ क २१ ) अथ अध्वर्यौ हविर्धानमण्डपान्निष्क्रमणानन्तरं यजमानो वरं वृणीते । *इह यत देवा *एतस्य ग्रहस्य उपांशुग्रहस्य होमं बलवत् बलेन युक्तं यथा स्यात्तथा प्रेप्सन्ति । यद्वा बलवत् बलमिव । बलं यथा इच्छन्ति तथा होममपीच्छन्ति । यद्वा बलवदिति होमविशेषणम् । छान्दसो विभक्तिलुक् । ते देवा अस्मै यजमानाय एतं यजमानप्रार्थितं वरं समर्धयन्ति वर्धयन्ति—नः अस्माकमर्थे इमम् उपांशुग्रहं क्षिप्रं क्षिप्रताकरे भये जुहवत् जुहोतु इति हेतोः । तस्मात् अस्मिन् समये वरस्य देवैः समर्धनात् वरं वृणीते ॥ १ ॥

का श्रौ अ १५ कं ७ सू ७ वरं वृत्वा ब्रह्मचित्यामन्त्रयते ।

ते सोऽस्मै सर्वः समृध्यते तस्माद्वरं वृणीते २ अथ वाराह्याऽउपानहाऽउपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो वराहः संबभूव तस्माद्वराहो मेदुरो घृताद्धि संभूतस्तस्माद्वराहे गावः सञ्जानते । स्वमेवैतद्रसमभिसञ्जानते । तत्पशूनामेवैतद्रसे प्रतितिष्ठति । तस्माद्वाराह्याऽउपानहाऽउपमुञ्चते ३ स ऽआजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास । तस्माऽआसनमाहार्योदकमाहारयाञ्चका-

---

राजसूयेऽध्वर्य्वादिभिः आसन्द्यामुपवेशितो यजमानो वरं वृणीते तस्यार्थवादोऽयं—

यद्धेति । (श० ब्रा० कां० ५ अ० ४ ब्रा० ४ कं० ८) अस्मिन्नवसरे सुषुवाणः सोमं कुर्वन् यजमानः यं कं च वरं वृणीते स वरः अस्मै अस्य यजमानस्य सर्वः समृध्यते समृद्धो भवति तस्माद्वरं वृणीते ॥ २ ॥

- का. श्रौ. अ. १५ कं ६ सं. २४ पशूनां रसोऽसीति वराहोपानहाऽउपमुञ्चते ।

राजसूये रथविमोचनीयहोमानन्तरं रथादवरोहणसमये वराहोपानद्धारण विहितम्—तस्यार्थवादः—अग्नौ ह देवा इत्यादि । ( श. ब्रा. कां. ५ अ. ४ ब्रा. ३ क. १९ ) देवा अग्नौ घृतकुम्भं प्रवेशयांचक्रुः । ततोऽग्निनिक्षिप्तात् घृतकुम्भात् वराहः सम्बभूव उत्पन्नः । तस्मात् घृतकुम्भोत्पत्तिकत्वात् वराहो मेदुरः स्निग्धः । हि यतः घृतात् सम्भूतः समुत्पन्न इति उक्तस्यैव स्पष्टीकरणम्, श्रुतेरजामित्वात् । तस्मात् घृतोत्पन्नत्वात् गावः पशुश्रेष्ठाः वराहे सञ्जानते । कथमित्याकाङ्क्षायां श्रुतिरेवाह–स्वं स्वकीयं रसमेव एतद् वराहसत्त्वमभिसञ्जानते । तस्मात् गवां तादृशसञ्ज्ञानात् एतद् वराहसत्त्वं पशूनां रसे प्रतितिष्ठति । सारत्वात् पशुश्रेष्ठ इति भावः । तस्मात् वाराह्यौ वराहचर्मनिर्मिते उपानहौ धारयेदिति विधिः ॥ ३ ॥

राथहास्माऽअर्घञ्चकार ४ स होवाच 'वरं भवते गौतमाय दद्म, इति । स होवाच प्रतिज्ञातो मऽएष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ५ स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ६ स होवाच विज्ञायते हास्ति हिरण्य-

---

स आजगामेति । (श. ब्रा. कां. १४ अ. ९ ब्रा. १ कं. ७-१० )

गौतमो गोत्रतः, आरुणिः । प्रवाहणस्य जैवलेरिति षष्ठीद्वयं प्रथमास्थाने । पञ्चालानां राजा प्रवाहणो जैवलिरित्यर्थः । तस्मै गौतमाय आगताय आसनमनुरूपमाहार्य उदकं भृत्यैराहारयाञ्चकार । (आहृत्येति का. पा.) अथ अस्मै अर्घं पूजां पुरोधसा कृतवान् ४

मन्त्रवन्मधुपर्कं कृत्वा स ह राजा "वरं गोऽश्वादिलक्षणं भगवते गौतमाय तुभ्य दद्म" इत्युवाच । (वरं हेति का. पा.)

स ह गौतमः "मे मम एष वरस्त्वया प्रतिज्ञातः । अस्यां प्रतिज्ञायां दृढीकुरु आत्मानम् । यां तु वाचं कुमारस्य मम पुत्रस्य अन्ते समीपे त्वमभाषथाः पञ्चप्रश्नरूपां तामेव मे ब्रूहि । स एव नो वरः" इत्युवाच ५

स ह राजा "हे गौतम दैवेषु वरेषु तद्वै, यं वरं त्वं प्रार्थयसे, मानुषाणामन्यतमं ब्रूहि प्रार्थय" इत्युवाच ६

स ह गौतमः—"भवताऽपि विज्ञायते ह, ममास्ति सः, न तेन प्रार्थितेन मम कृत्यं, यं मानुषं वरं त्वं दित्ससि । यस्मात् ममाप्यस्ति हिरण्यस्य प्रभूतस्य अपात्तं प्राप्तम् । गोऽश्वानां, दासीनां, प्रवाराणां—परिवाराणां, परिधानानां—परिधानयोग्यक्षौमादीनाञ्च अपात्त प्राप्तम् । न च मम यद्विद्यमानं मया त्वत्तः प्रार्थनीयं, त्वया वा मह्यं देयम् । प्रतिज्ञातश्च वरस्त्वया । त्वमेव जानीषे यदत्र युक्तं प्रतिज्ञा रक्षणीया न वेति । मम पुनरयमभिप्रायः—नः अस्मानेव केवलान् प्रति भवान् सर्वत्र वदान्यो भूत्वाऽवदान्यो मा भूत् । कदर्यो माभूदित्यर्थः । बहोः प्रभूतस्य अनन्तस्य फलस्य अपर्यन्तस्य अपरिसमाप्तिकस्य

**स्यापात्तं गोऽश्वानां दासीनां प्रवाराणां परिधानानां मा नो भवान् बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्यो भूदिति । स वै गौतम तीर्थेनेच्छासाऽइति । उपैम्यहम्भवन्तमिति । वाचा ह स्मैव पूर्व्वऽउपयन्ति ७ +स होपायनकीर्त्त्याऽउवाच ॥**

इति पठितवते वराय *अष्टाङ्गमर्घं वक्ष्यमाणमन्त्रैर्निवेदयेत् ।

---

पुत्रपौत्रादिगामिफलप्रदस्य वित्तस्य मां प्रत्येव अदाता मा भूत् भवान् । नवात्यन्तादेयमस्ति भवतः" इत्युवाच । एवं गौतमेनोक्ते स राजा आह—"हेगौतम स त्वं तीर्थेन उपसदनशास्त्रविहितेन मार्गेण विद्यामिच्छसि इच्छस्य आप्तुमिच्छस्य" इति । एवमुक्ते गौतम आह-शिष्यत्वेनाहं भवन्तमुपैमि उपगच्छामि । पूर्वे ब्राह्मणा विद्यार्थिनः सन्तः क्षत्रियान् वैश्यान्वा उपयन्ति स्म आपदि शिष्यवृत्त्या वाचैव उपगच्छन्ति स्म । क्षत्रिया वा वैश्यान् आपदि शिष्यवृत्त्या वाचैव उपगच्छन्ति स्म नोपायनशुश्रूषादिभिः ७

+अतः स राजा उपायनं पादोपस्पर्शनं तस्य कीर्तौ कीर्तनमात्रे विद्यां वक्ष्यमाणप्रकारेण उवाच उक्तवान् नोपायनमकारयत् । सहोपायनकीर्त्या उवासेति कण्वशाखीयपाठे स गौतम उपायनकीर्त्या उपगमनकीर्तनमात्रेणैव उवास उषितवान् । नोपगमनं चकारेत्यर्थः ।

सहोपायनकीर्तौ इति एकादशकण्डिकास्थ वाक्यं पूर्वाकाङ्क्षितार्थपूर्त्यर्थं सङ्कलितम् ।

पुरुषार्थचतुष्टयस्य भार्याधीनत्वात् भार्यात्वेन कन्यादातुः वरवरणसमये वरदानाख्यानत्रितयस्य पाठो वरस्य तत्पक्षीयाणां च दातृप्रोत्साहनार्थं समुचितः । वराहाख्यानपाठस्याभिप्रायस्तु उपानत्समर्पणस्य वरणे उक्तत्वात् यायाहोस्तयोः प्रशस्तत्वबोधनमेव युज्यते, न शक्यते ऽन्यो, बोधनीयो विद्वद्वरैरिति ॥

*हेमाद्रौ दानखण्डे तृ. प्र. भविष्यपुराणे—आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा । यवाः सिद्धार्थकाश्चैव अष्टाङ्गोऽर्घः प्रकीर्तितः ॥ इति ।

अष्टाङ्गानितु—

नाभौ हस्ते प्रदातव्यं स्कन्धे शिरसि पादयोः ।
जानुनोरुदरे वक्रे अष्टाङ्गोऽर्घः प्रकीर्तितः ॥

अर्घदानमन्त्राः—

ॐआगतोऽसि वरश्रेष्ठ सर्वकामार्थसिद्धये ।
प्रतिग्रहसमर्थोऽसि अर्घं गृह्ण नमोऽस्तुते ॥

ॐअसौ यस्ताम्रो ऽअरुण ऽउत बभ्रुः सुमङ्गल । ये चैनꣳ रुद्रा ऽअभितो दिक्षु श्रिताः सहस्रशो वैषाꣳ हेड ऽईमहे १ ॐअसौ यो ऽवसर्पति नीलग्रीवो विलोहितः। उतैनङ्गोपा ऽअदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः २ एवमर्घं दत्त्वा नमोस्त्वनन्तायेति गन्धाक्षतपुष्पमालादिभिर्वरं सम्पूज्य वरणसामग्रीं हस्ते गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतताम्बूलपादुकोपानहपुष्पमालोष्णीषकञ्चुककटिवेष्टोपसंव्यानहस्तभूषणकर्णवेष्टरूवरमुद्रिकादिभिः करिष्यमाणकन्यादानप्रतिग्रहार्थम् अमुकगोत्रम्

---

य० सं० अ० १६ म० ६

आदित्यरूपेणात्र रुद्रः स्तूयते । अभिनयेन दर्शयन् आह—योऽसौ प्रत्यक्षो रुद्रो रविरूपः ताम्रः उदयेऽस्यमत्त रक्तोऽरुणोऽस्तकाले आरक्तः उत अपि च बभ्रुः पिङ्गलवर्णः सुमङ्गलः शोभनानि मङ्गलानि यस्य एतादृशः, ये च रुद्रा एनम् अभितो दिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसङ्ख्याताः एषां हेडः क्रोधम् अस्मदपराधजं वयमेव ईमहे निवारयामः भक्त्या निराकुर्मः । हेडः इति क्रोधनाम । एनामिति अभित इत्यादिना द्वितीया १

य. स अ १६ मं.७ योऽसौ आदित्यरूपोऽवसर्पति उदयास्तमयौ कुर्वन्निरन्तरं गच्छति,यश्च नीला नीलवर्णा ग्रीवा कण्ठो यस्य स नीलकण्ठः मयूरस्तत्सदृशोऽस्तमये मयूरवत् रक्तः विलोहितः विशे

अमुकप्रवरम् अमुकवेदाध्यायिनम् अमुकशाखिनम् अमुकशर्माणं विष्णुस्वरूपिणं कन्यार्थिनं वरत्वेन त्वामहं वृणे । वृतोऽस्मीति वरः प्रतिवदेत् । ततो वरः वस्त्रयज्ञोपवीतभूषणपुष्पमालावरमुद्रिकाधारणं विधाय सुचक्षामन्त्रं जपेत् । ॐसुचक्षा ऽअहमक्षीभ्यां (भूयासꣳ) सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम्(समावर्तने ब्राह्मणग्रन्थे) इति । तत आचार्यः वरश्च उत्थाय यजमानाय तिलकाशीर्दानादिकं कुर्याताम् ।

मन्त्राश्च ॐअग्नये त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे १

ॐरुद्राय त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीय

---

पेण लोहितो रक्तोऽस्मि—एनं देवं गोपा उत गोपाला अपि अदृश्रन् पश्यन्ति, उदहार्यः उदकं हरन्ति ता उदहार्यः जलहारिण्यः योषितोऽपि अदृश्रन् पश्यन्ति । आगोपालाङ्गनं प्रसिद्ध इत्यर्थः । दृशेर्लुङ् इरितोवेत्यङ् । छन्दसि ... । स दृष्टो रुद्रः नः अस्मान् मृडयाति सुखयतु । लेटो ऽडाटौ इति आट् । अर्थेऽपि आदित्यबुद्धिः कर्तव्येति वाक्यार्थः ॥ २ ॥

य० सं० अ० ७ कं० ४७ हिरण्यप्रतिग्रहे विनियुक्तोऽयम् कात्यायनेन—

हे हिरण्य वरुणः अग्नये ऽग्निरूपापन्नाय मह्यम् त्वा त्वां ददातु । पूर्वं वरुणेन कनकादि ब्रह्मादिभ्यो दत्तम्, अतस्तेन तेनात्मना प्रतिगृह्णानो विप्रो न नश्यतीति देवतादेशः । अनेन विधिना गृह्णानः सोऽहम् अमृतत्वमारोग्यमशीय प्राप्नुयाम् । हे हिरण्य त्वं दात्रे आयुर्जीवनमेधि भव । प्रतिग्रहीत्रे प्रतिग्रहकर्त्रे मह्यम् मयः सुखम् सुखकरम् एधि भव । दाता आयुष्मान् भवतु अहं सुखी स्यामिति भावः १

गोप्रतिग्रहे विनियुक्तः—

हे गौः रुद्ररूपाय मह्यं वरुणस्त्वा त्वां ददातु । सोऽहममृतत्वं

प्राणो दात्रऽएधि वयो मह्यं प्रतिग्रहीत्रे २ ॐबृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे ३ ॐयमाय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय हयो दात्रऽएधि वयो मह्यं प्रतिग्रहीत्रे ४ ॐकोऽदात्कस्माऽअदात्कामो ऽदात् कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ ५ ॥

इति मन्त्राशिषं प्रतिगृह्य कन्यापिता समाचारात् दास्या-

---

प्राप्नुयाम् । हे गौः त्वं दात्रे यजमानाय प्राणरूपा एधि भव । मह्यं प्रतिग्रहीत्रे वयः अन्नं पशुर्वा भव—दुग्धदध्यादिरूपेण अन्नं सन्ततिद्वारा पशुश्च भव २

वस्त्रप्रतिग्रहे विनियुक्तः–

हे वासः बृहस्पतिरूपाय मह्यं वरुणस्त्वा त्वां ददातु । सोऽहममृतत्वमशीय प्राप्नुयाम् । त्वं च दात्रे त्वगेधि त्वगिन्द्रियसुखकारि भव । प्रतिग्रहीत्रे मह्यं मयः सुखकरं च भव ३

अश्वप्रतिग्रहे विनियुक्तः–

हे अश्व यमरूपाय मह्यं वरुणस्त्वा त्वां ददातु । स यमरूपोऽहमश्वं गृह्णनोऽमृतत्वं प्राप्नुयाम् । हे अश्व त्वं दात्रे हयोऽश्वो भव । मह्यं प्रतिग्रहीत्रे वयः अन्नं भोग्यं सन्ततिद्वारा पशुर्वा भव ४

य० सं० अ० ७ मं० ४८

गन्धौदनतिलादिप्रतिग्रहे विनियुक्तः—

दातुर्दानाभिमानाभावाय स्वस्य प्रतिग्रहजदोषाभावाय च देहेन्द्रियात्मसङ्घाते कामं विविनक्ति—को नरोऽदात् दत्तवान्, कस्मै नराय अदात् दत्तवानिति प्रश्नद्वयम् । अस्योत्तरमाह-कामोऽदात् कामायादात् । न त्वं दाताऽहं प्रतिग्रहीता, त्वत्कामाभिमानी देवः मत्कामाभिमानिने देवायादात् । एवं च काम एव दाता काम एव प्रतिग्रहीता नान्यः । हे काम एतद् द्रव्यं ते तव दातृप्रतिग्रहीतृत्वात् ॥ ५ ॥

दिभिः सुवासिनीभिर्वरस्य महानीराजनं कारयेत् ।

इति द्वारागतवरस्य पूजनपूर्वकवरणविधिः ।

( इति वाग्दानपूर्वपर्वविधिः ) ॥

ततः कन्यापिता वरं पाण्डुकम्बलास्तृतस्थाने समुपवेश्य वराचार्ययोस्तिलकं कृत्वा तत्पवसरे वरपित्रादीनामन्येषां नेदिष्ठबान्धवानां च तिलकमालादिभिः पूजनं विधाय सुखोपविष्टान्कुर्यात् ।

अथ मधुपर्कपूर्वकविवाहप्रयोगः ।

तत उभयपक्षीया वाद्यघोषपुरस्सरं शान्तिपाठं ( स्वस्तिवाचनं) पठन्तो विवाहस्थलं प्रविशेयुः । तत्र रक्तकम्बलादिना उदग्दशम् अन्तःपटं विधाय प्राङ्मुखं वरं वरासमक्षं पश्चिमाभिमुखीं कन्यां समुपवेश्य स्वयं दाता उदङ्मुखो भूत्वा अपेक्षितां विवाहसामग्रीं यथास्थानमासाद्य स्वासनउपविश्य मधुपर्केण वरमर्चयेत् । दीपं प्रज्वलय्य आचम्य अर्घं संस्थाप्य प्राणायामं कृत्वा —

अद्येहेत्यादि संकीर्त्य अमुकगोत्रः अमुकराशिरमुकशर्माऽहं कन्यादानप्रतिग्रहार्थं गृहागतं स्नातकं वरं मधुपर्केणार्चयिष्ये इति संकल्पयेत् । ( द्वितीयविवाहे स्नातकमिति न वाच्यम् )। मधुपर्कविधिस्तु वरशाखोक्तः कार्य्यः । यः स्वशाखां परित्यज्य परशाखां समाश्रयेत । दुर्मेधाः स तु विज्ञेयो मोघं तत्तस्य चेष्टितमिति। अर्घ्यशाखया मधुपर्क इति च।

अत्र विवाहानुक्रमश्लोकाः—

अग्निप्रणयनं वस्त्रपरिधानं समञ्जनम् । गोत्रोच्चारो वरस्य प्राक्कन्यायाश्च ततोऽर्पणम् १ कन्यादानप्रतिष्ठार्थं सुवर्णं गौश्च दक्षिणा । गृहान्निष्क्रमणं चाग्निसमीपगमनं ततः २ क-

न्यापितुः प्रैषदानं समीक्षेथामिति स्फुटम् । अग्निं प्रदक्षिणीकृत्योपविश्य कुशकण्डिका ३ होमे वधूर्दक्षिणतो हृदालम्भे तु वामतः । उपवेश्य वरश्चैनां स्विष्टकृद्धोममाचरेत् ४ संस्रवप्राशनं पूर्णपात्रमाचार्यदक्षिणा । विवाहानुक्रमश्लोकाः शितिकण्ठमुखोदिताः ॥ ५ ॥ इति ।

अथ यजमानः वारणादियाज्ञियकाष्ठमयं हरिद्रादिरञ्जितं लेख्यालंकृतमनुपभुक्तमतिभव्यं दर्भास्तीर्णं चतुष्पादमासनं तदभावेऽन्यादृशं वा पीठासनमाहार्याह "साधु भवानास्तामर्चयिष्यामो भवन्तम्"इति । ॐअर्चय इति वरस्योक्तिः । ततोऽर्चकपुरुषाः विष्टरद्वयं पाद्यार्थमुदकम् अर्घम् आचमनीयं मधुपर्कं (दधिमधुघृतम्) अपिहितं कांस्येन न्यस्तं कांस्ये तत्समीपमानयन्ति ।

अथ यजमान एकं विष्टरमादाय तिष्ठति । यजमानपक्षीयोऽन्यः कश्चिद्ब्राह्मणो विष्टरो विष्टरो विष्टरः इति त्रिः श्रावयति । यजमानः प्रतिगृह्यतामिति सकृदुक्त्वा वरस्य हस्तयोर्ददाति । (हस्ते ददातीति गदाधरसंमतः क्वचित् पुस्तके पाठः )। वरश्च ॐप्रतिगृह्णामीत्युक्त्वा उदगग्रं विष्टरं तूष्णीमादाय ( वर्ष्मोऽस्मीत्यथर्वणऋषिरनुष्टुप्छन्दो विष्टरो देवता उपवेशने विनियोगः) इति ऋष्यादीनि स्मृत्वा—

* ॐवर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः। इमं

---

* अस्यार्थः—अर्च्य आत्मानं स्तौति अर्च्यत्वाय । कुलशीलाचारवपुर्वयोगुणैः अहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः अस्मि भवामि, उद्यताम् उदयं प्रकाशं कुर्वतां ग्रहनक्षत्रादीनां मध्ये सूर्य इव । किञ्च इमं विष्टरं तं पुरुषमुद्दिश्य विष्टरवत् पदम् अभि लक्ष्यीकृत्य तिष्ठामि

तमभि तिष्ठामि यो मा कश्चाभिदासति-अनेन मन्त्रेण विष्टरम् उदगग्रमासने निधाय तदुपरि उपविशति । ततः पाद्यम् ३ इति त्रिः अन्येन श्राविते प्रतिगृह्यतामिति यजमानेनोक्ते वरः ॐप्रतिगृह्णामीत्युक्त्वा प्रतिगृह्य तत्पात्रं भूमौ निधाय ( विराजो दोहोऽसीति प्रजापतिर्ऋषिर्यजुश्छन्दः आपो देवताः पादप्रक्षालने विनियोगः ) इति ऋष्यादीनि स्मृत्वा-

अञ्जलिना जलमादाय—

* ॐ विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः-इति मन्त्रेण प्रथमं दक्षिणं पादं प्रक्षाल्य अनेनैव वामं पादं प्रक्षालयेत् । क्षत्रियादीनां तु वामम्प्रथमम् । अत्रावसरे समाचारात् वरो यथाशक्ति फलशद्रव्यं दद्यात् । तद्द्रव्यमानीय सम्प्रोक्ष्य सम्पूज्य अद्येहामुकोऽहं दशाया मन्तर्दशायां गोचरेऽष्टकवर्गे सर्वतोभद्रे नैर्याणे वर्षफलेऽपिवा यत्रकुत्रस्थाने स्थितानां आदित्यादिनवग्रहाणां दुष्टानां दुष्टदोषोपशान्त्यर्थं शुभानां शुभफलाधिक्यप्राप्तये इदं सुवर्णं सुवर्णनिष्क्रयीभूतं रजतद्रव्यं वा कन्यापक्षीयपुरोहिताय सम्प्रददे इति कलशद्रव्यं दत्त्वा पुनर्द्वितीयं

---

अधः कृत्वा उपविशामि, यः कश्चन मा माम् अभिदासति उपक्षीणं कर्तुमिच्छति । वसु उपक्षये ॥

*अस्यार्थः । प्राणधारणादिगुणैः सकलसौहित्येन विविधतया राजते इति विराडन्नं तस्य विराजः दोहः परिणामसारो रसः स त्वमसि भवसि । हे उदक तं त्वां विराजो दोहम् अशीय अश्नवै व्याप्नुयाम् । किञ्च मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थम् विराजो दोह- मन्त्रसंस्कृतं जल, भवेति शेषः ॥

विष्टरं प्रतिगृह्णीयात् । विष्टरो विष्टरो विष्टरः इत्यन्येन श्राविते प्रतिगृह्यतामिति यजमानेनोक्ते वरः ॐप्रतिगृह्णामीत्युक्त्वा प्रतिगृह्य पूर्ववद्वर्ष्मोऽस्मीति मन्त्रेण आसने उदगग्रं पादयोरधस्तान्निदधाति । ततो यजमानः अर्घोऽर्घोऽर्घः इत्यन्येन श्राविते प्रतिगृह्यतामिति वदेत् । वरः ॐप्रतिगृह्णामीत्युक्त्वा ( आपः स्थेति प्रजापतिर्ऋषिः यजुश्छन्दः आपो देवताः अर्घग्रहणे विनियोगः ) ।

+ॐआपः स्थ युष्माभिः सर्वान्कामानवाप्नवानि-इत्यर्घं *पाणिभ्यां प्रतिगृह्य शिरःपर्यन्तमानीय भूमौ ऐशान्यां निनयन् अभिमन्त्रयते अग्रिममन्त्रेण । यथा ( समुद्रमित्याथर्वणऋषिरनुष्टुप्छन्द आपो देवताः अर्घाभिमन्त्रणे विनियोगः ) ।

÷ॐसमुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टास्माकं वीरा मा परासेचि मत्पयः-इति । अथान्येन आचमनीयम् ३ इत्युक्ते प्रतिगृह्यतामिति यजमानेनोक्ते वरः ॐप्रतिगृह्णामीत्युक्त्वा हस्ताभ्यां प्रति-

---

+अस्यार्थः । हे आपः यूयम् आपः स्थ आप्तिहेतवो भवथ । युष्माभिः सर्वान् कामानभीष्टार्थानवाप्नवानि लभेय ॥

*"कांस्येनैवार्हणीयस्य निनयेदर्घमञ्जलौ" इति—
शुभकर्मनिर्णये वचनात् ।

÷अस्यार्थः । हे आपः वः युष्मान् समुद्रं प्रहिणोमि गमयामि । अतः स्वां योनिम् स्वकारणभूतं समुद्रम् अभि लक्षीकृत्य गच्छत व्रजत । किञ्च युष्मत्प्रसादात् अस्माकं वीराः पुत्रा भ्रातरश्च अरिष्टा अनुपहताः सन्तु । अरिष्टास्माकमित्यत्र सन्धिरार्षः । मत् मत्तः पयः अर्घ्यादिसम्बन्धि जलं मा परासेचि अपगतं माऽस्तु । सदैव अर्घ्यो भवानीत्यर्थः ॥

गृह्य ( आमागन्निति परमेष्ठी ऋषिर्बृहती छन्दः आपो देवताः आचमने विनियोगः )।

+ॐआ ऽमा ऽगन्यशसासꣳसृज व्वर्चसा। तम्मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्-इति मन्त्रेण सकृदाचम्य ततः "त्रिः प्राश्याप" इत्याद्युक्तरीत्या स्मार्त्ताचमनं कुर्यात्। अथ मधुपर्को मधुपर्को मधुपर्कः इत्यन्येनोक्ते यजमानः प्रतिगृह्यतामित्युक्त्वा दधिमधुघृतं कांस्यपात्रस्थापितं *बृहता कांस्यपात्रेण पिहितं वराय निवेदयति। वरश्च ॐप्रतिगृह्णामीत्युक्त्वा यजमानहस्तस्थितम् ईषद् यजमानहस्तोद्घाटितं मधुपर्कमीक्षमाणो मन्त्रं पठति ( मित्रस्यत्वा इति प्रजापतिर्ऋषिः पङ्क्तिश्छन्दो मित्रो देवता मधुपर्कप्रतीक्षणे विनियोगः )।

÷ॐमित्रस्य त्वा चक्षुषा प्रतीक्षे-इति। प्रतीक्ष्य—

---

+अस्यार्थः। हे वरुण जलेश त्वम् एकरूपेण त्वाम् आश्रितं मा मां यशसा अमा सहभावं सामीप्यं वा आऽगन् आगमय। अमेत्यव्ययं सहार्थे। आङुपसर्गः अगन्निति क्रियार्थनिपातेन सम्बध्यते। यद्वा मा गन् इत्येव छेदः। गन्निति अन्तर्भूतण्यर्थस्य गमधातोर्लोटि छान्दसं रूपम्। मा मां यशसा आगन् आगमय यशस्विनं कुर्वित्यर्थः। तथा वर्चसा ब्रह्मवर्चसेन संसृज संसृष्टं कुरु। किञ्च प्रजानां पुत्रपौत्रादीनां प्रियं, पशूनां गोऽश्वादीनाम् अधिपतिं स्वामिनं,तथा तनूनां देहावयवानां शरीराणां वा अरिष्टिम् अहिंसकं कुरु। अरिष्टमिति जयरामसंमतः पाठः। हिंसाऽत्र "अनभ्यासेन वेदानामाचारस्य च लङ्घनात्। आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" इत्यादिना दर्शिता॥

*वर्षीयसा पात्रेणापिधायेति हिरण्यकेशिगृह्यात्।

÷हे मधुपर्क त्वा त्वां मित्रस्यादित्यस्य चक्षुषा प्रतीक्षे पश्यामि। आदित्यानुग्रहेण पश्यामीति वाक्यार्थः॥ का०श्रौ०अ०२ कं०२ सू०१५

*(देवस्य त्वेति बृहस्पतिराङ्गिरसऋषिर्यजुश्छन्दः सविता देवता मधुपर्कग्रहणे विनियोगः)।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि—इत्युक्त्वा मधुपर्कपात्रं हस्ताभ्यां गृहीत्वा (अञ्जलिना प्रतिगृह्णीति आश्व. गृ.) स्ववामकरे निधाय दक्षिणहस्तानामिकया त्रिः प्रयौति मिश्रयति वक्ष्यमाणेन मन्त्रेण। (नमः श्यावेति प्रजापतिर्ऋषिर्यजुश्छन्दः सविता देवता मिश्रणे विनियोगः)।

+ॐ नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि—इतिमन्त्रेण मधुपर्कं सकृत्प्रदक्षिणमालोड्य अङ्गुष्ठानामिकाभ्यां सकृच्चूर्णी बहिर्निरस्यति प्रक्षिपति। एवं पुनर्द्विवारमालोडनं निरसनं च कृत्वा तस्य त्रिः प्राश्नाति। (यन्मधुन इति कुत्सऋषिर्जगतीछन्दो मधुपर्को देवता मधुपर्कप्राशने विनियोगः)

÷ॐ यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यं तेनाहं

---

*"महारथं प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोऽपश्यत्" इति सर्वानुक्रमसूत्रे प्राशित्रप्रतिग्रहणे विनियुक्तस्य देवस्यत्वेत्यस्य आङ्गिरसबृहस्पतिऋषिकत्वोक्तेः, "देवस्यत्वा सावित्रम्" इति तत्रैव सवितृदेवताकत्वोक्तेश्च मधुपर्कप्रतिग्रहेऽपि विनियुक्तस्य तथात्वमुचितम्। अन्यथालेखस्तु प्रामादिकः। य० सं० २।११ व्या० पृ० २३८

+अस्यार्थः। हे अन्ने ते तुभ्यं नमः। किम्भूताय श्यावास्याय कपिशमुखाय। ते तव अन्नशने अन्नाशने अशने इति अन्नं तस्य अशने अदनीये मधुपर्के, (ह्रस्वश्छान्दसः) यद् दृश्यम् आविद्धं संश्लिष्टम् अनदनीयं तद् निष्कृन्तामि निरस्यामि॥

÷अस्यार्थः। हे देवाः मधुनो मकरन्दस्य यद् मधव्यं मधुनि साधु

मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि-इति अनामिकाङ्गुष्ठाभ्यां प्राश्नाति। एवं पुनर्द्विवारम् उच्छिष्टस्यैव मन्त्रवत्प्राशनम्। ताम्बूलेक्षुफले इति पूर्वोक्तवचनात्। (ॐमधुवातादृतायते इत्यादितिसृभिर्ऋग्भिः प्रत्यृचं वा त्रिः प्राशनं कृत्वा) प्राशितशेषं पूर्वस्यां दिशि असंचरे क्षिपेत्। ततः ॐऋग्वेदाय स्वाहा इत्यादिकात्यायनकृतशौचसूत्रबोधितरीत्या द्विः स्मार्ताचमनं कृत्वा जलं स्पृष्ट्वा अङ्गान्युपस्पृशति*। यथा दक्षिणकराग्रेण संहताभिस्तिसृभिस्तर्जनीमध्यमानामिकाभिः—

+'वाङ्मऽआस्ये अस्तु' इति मुखं स्पृशेत्।

---

परमम् उत्कृष्टम् रूपयति प्रकाशयति देहसंघातमिति रूपम् अन्नाद्यं मोहादियम् प्राणधारकम् अन्नोपादानकम् अन्नादिरसफद्रव्यं वा तेन सर्वरूपोपपन्नेन रसेन उक्तविशेषणविशिष्टेन अहं परमः सर्वेभ्यो गुणाधिकः मधव्यो मधुपर्कार्हः अन्नादः सदन्नभोक्ता च असानि भवानि॥

*'आसने प्राङ्मुख' इत्यादिना आचमनप्रकारमुपदिश्य "ततः संहताभिस्तिसृभिरङ्गुलिभिरास्यमलोमकप्रदेशे स्पृष्ट्वा हस्तौ प्रक्षाल्याङ्गुष्ठप्रदेशिनीभ्यां घ्राणं स्पृष्ट्वाऽङ्गुष्ठानामिकाभ्यां चक्षुषी श्रोत्रे च स्पृशेत्। अङ्गुष्ठकनिष्ठिकाभ्यां नाभिं, तलेन हृदयं, सर्वाङ्गुलीभिः शिरः, सर्वाङ्गुलीभिर्बाहुमूले स्पृशेत्। सर्वत्र मध्येमध्ये हस्ताभ्यामपः स्पृशत्"॥ इति सजलहस्तेन आस्यादिस्पर्शः संहताङ्गुलिभ्यादिना विधानपारिजाते तृ स्तबके आह्निकप्र. योगीश्वरेणोक्तः। यद्यप्यत्र संहताङ्गुलिभिर्बाहुमूले इति उक्तं तथापि अङ्गुल्यग्रैस्तद् ज्ञेयम्। आश्व. गृ. परिशिष्टादौ तथा दर्शनात्।

+अस्यार्थः। मे मम वागिन्द्रियमास्ये ऽस्तु। नसोर्नासिकयोः प्राणः प्राणवायुः। अक्ष्णोर्नेत्रगोलकयोः चक्षुः चक्षुरिन्द्रियम्।

हस्तौ प्रक्षाल्य जलं स्पृष्ट्वा अङ्गुष्ठप्रदेशिनीभ्यां 'नसोर्मे प्राणः अस्तु'इति नासिकारन्ध्रद्वयम् । अङ्गुष्ठानामिकाभ्याम् 'अक्ष्णोर्म्मे चक्षुरस्तु'इति युगपत् चक्षुषी । तथैव 'कर्णयोर्म्मे श्रोत्रमस्तु'इति मन्त्रावृत्त्या दक्षिणोत्तरौ कर्णौ । संहताङ्गुल्यग्रैः 'बाह्वोर्म्मे बलमस्तु'इति बाहुमूले । असंहताङ्गुलिभ्यां पाणिभ्याम् 'ऊर्वोर्म्मे ओजः अस्तु'इति युगपदूरू । 'अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु' इति शिरःप्रभृतिपादपर्यन्तम् पाणिभ्यामालभेत । ततो द्विराचामेत् । ततो यजमानः खड्गप्रतिनिधिं कुशतरुणमादाय गौर्गौर्गौः इत्यन्योक्ते आलभ्यतामित्याह । वरश्च माऽऽलभ्यतामित्युक्त्वा मन्त्रं पठेत् ।

(मातारुद्राणामिति ब्रह्मा ऋषिस्त्रिष्टुप्छन्दो गौर्देवता गोरभिमन्त्रणे विनियोगः) *ॐमाता रुद्राणां दुहिता व-

---

कर्णयोः कर्णशष्कुल्योः श्रोत्रं श्रवणेन्द्रियम् । बाह्वोः बलं शक्तिः । ऊर्वोः ओजस्तेजः । मे मम तनूः देहः तन्वा देहस्याङ्गानि च सह युगपत् अरिष्टानि अनुपहतानि सन्तु ॥

*अस्यार्थः । हे पूजका यत इयं गौः रुद्राणां माता जननी वसूनां दुहिता कन्या आदित्यानां स्वसा भगिनी अमृतस्य क्षीरस्य नाभिराश्रयः कारणम् । नु वितर्के । छन्दसि व्यवहिताश्चेत्युक्तेः प्रोपसर्गस्य वोचमित्यत्रान्वयः । अतः प्रवोच ब्रवीमि, चिकितुषे चेतनावते जनाय मादृशाय यूयमिमां गां मा वधिष्ट मा हत । किंतु गोपशुं कुरुतेति तात्पर्यार्थः । किंभूताम् ? अनागाम् अनपराधाम् अदितिं देवमातरं, पयोदानात् । अहं मम अमुष्य अर्घयितुश्च पाप्मानं गोस्थाने हनोमि हन्मीति ॥

उत्सर्गपक्षे ममामुष्य च पाप्मा हतः ओम् इत्युपांशु उक्त्वा उत्सृजत तृणान्यत्तु इति, उच्चैर्ब्रूयात् । कलावयमेव पक्षः सर्वैः स्वीकृतः॥

स्नाᳪ स्वमाऽऽदित्यानाममृतस्य नाभिः। प्र नु व्वोचं चिकितुषे जनाय मा गामनागामदितिं व्वधिष्ट-मम चामुष्य यजमानस्य च पाप्मा हनः ॐ इत्युपांशु पठित्वा उत्सृजत तृणान्यत्तु इत्युच्चैर्ब्रूयात्। ततः कुशपत्रस्योत्सर्जनमेव नालम्भनम्। कलौ गवालम्भनस्य निषिद्धत्वात्। अत्राचाराद्दक्षिणादानम्। अद्येहेत्यादि सं० अमुकोऽहं मधुपर्कोपयोगिनो गोत्सर्गकर्मणः साद्गुण्यार्थं गोप्रत्याम्नायीभूतं सुवर्णं तन्निष्क्रयीभूतं रजतद्रव्यं वा ब्राह्मणाय दास्ये ॐतत्सत् इति सङ्कल्प्य ब्राह्मणाय दद्यात्।

इति मधुपर्कविधिः।

'अग्निमुपसमाधाय पाणिंगृह्णीयात्' इति पारस्करोक्तेः-अस्मिन्नवसरे वरानुमत्या कश्चिद्वरपक्षीयो ब्राह्मणो बहिः शालायामागत्य चतुरङ्गुलमुच्छ्रितायां चतुर्विंशत्यङ्गुलायतायां तावदेव विस्तृतायां गृह्यसंग्रहोक्तायां वेद्यां पञ्चभूसंस्कारपूर्वकमग्निं ताम्रपात्रेण संस्थापयेत्। ततः अग्नेः पश्चात्तृणपूलकं कटं वा स्थापयेत्। नारदोक्ता चतुर्हस्ता वेदिस्तु न पर्वतीयादिषु प्रचलति। अग्निस्थापनानन्तरं कन्यापिता वराय वस्त्रचतुष्टयं ददाति। तत्र सङ्कल्पः अद्येह अमुकशर्माऽहं कन्यादानकर्मणः पूर्वाङ्गत्वेन वराय सद्रव्यं वस्त्रचतुष्टयं संप्रददे इति दद्यात्। वरश्च ॐस्वस्तीत्युक्त्वा प्रतिगृह्य तेषु वस्त्रेषु वस्त्रयुग्मं कन्यायै परिधानार्थं प्रयच्छति वस्त्रद्वयं स्वयं परिधत्ते। तत्र प्रथमं कन्यायाः वस्त्रपरिधानम्। वरस्यैव मन्त्रपाठो लिङ्गात्। ( जरां गच्छेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो वासो देवता अनेनोवस्त्रपरिधापने विनियोगः )

*ॐजरां गच्छ परिधत्स्व व्वासो भवाकृष्टीनाम-

*अस्यार्थः। हे कन्ये त्वं जरां निर्दुष्टदशयं मया सह गच्छ

भिशस्तिपावा । शतञ्च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः–इत्यधोवस्त्रम् परिधत्ते ।

अथोत्तरीयं ( याऽअकृन्तन्निति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः वासो देवता उत्तरीयपरिधापने विनियोगः ) ।

*ॐ या ऽअकृन्तन्नवयन्या ऽअतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः–इति ।

अथ समाचारात् वरः स्वयं परिधत्ते समावर्तनसूत्रोक्ताभ्यां मन्त्राभ्याम् । ( परिधास्यै इत्याथर्वणऋषिः पङ्क्तिश्छन्दो वासो देवता वासःपरिधाने विनियोगः ) ।

ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टि-

---

प्राप्नुहि । वासश्च मया समर्पितं परिधाहि । आकृष्यन्ते कामादिभिरित्याकृष्टयो मनुष्याः तेषाम् अभिशस्तिः अभिशापः शास्तु प्रमादे, तस्मात् पातीत्यभिशस्तिपावा भव । धनिवन्तमेतत् । शतं च शरदो वर्षाणि जीव प्राणिहि । सुवर्चाः तेजस्विनी भूत्वा रयिं च धनं पुत्रांश्च अनु पश्चात् संव्ययस्व अतिसङ्गृहीष्व उत्पाद्य राशिं कुरु, हे आयुष्मति इदं वासः परिधत्स्व इत्यनुवादः । मन्त्र प्रयाम कारितार्थे ॥

*अस्यार्थः । या देवीः देव्यः इदं वासः अकृन्तन् कर्तितवत्यः, या अवयन् वीतवत्यः, वेञ् तन्तुसन्ताने, ओतवत्य इत्यर्थः । याः तन्तून् सूत्राणि अतन्वत प्रोतवत्यः तिर्यक् तन्तून् विस्तारितवत्य इत्यर्थः । चकारात् या ओतान् प्रोतांश्च तन्तून् अभितः उभयपार्श्वयोरपि ततन्थ तेनुः तुरीवेमादिव्यापारेण ग्रथितवत्यः–ताः तत्तत्सामर्थ्यदात्र्यो देव्यः स्वकार्यं रूपवदिदं वासः त्वा त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयन्तु । संधिः पुरुषादिव्यत्ययश्च छान्दसः । अतो हेतोः आयुष्मति इदं वासः परिधत्स्व उत्तरीयत्वेन गृहाण ॥

रस्मि । शतञ्च जीवामि शरदः पुरूची रायस्पोषमभि-संव्ययिष्ये–इत्यधोवस्त्रं परिधाय ।

अथोत्तरीयं ( यशसामेत्याथर्वणऋषिः पङ्क्तिश्छन्दो लिङ्गोक्ता देवता उत्तरीयपरिधाने विनियोगः )।

ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च माऽविन्दद्यशो मा प्रतिपद्यताम्–इति ।

ततो द्विराचमनम् । "स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे । आचान्तः पुनराचामेद्वासो विपरिधाय च" ॥ इति विधानपारिजाते याज्ञवल्क्यवचनात् ।

अथ कन्यापिता कन्यावरौ परस्परं समञ्जेतमिति प्रेष्य सम्मुखीकुर्यात् । ततो वरः सम्मुखीभूतः पश्यन्नेव मन्त्रं पठति ( समञ्जन्त्विति आथर्वणऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता परस्परमञ्जने विनियोगः )।

*ॐसमञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ–इति ॥

अथ वंशगोत्रप्रवरसापिण्ड्यनिश्चयार्थं गोत्रोच्चारः कर्त्तव्यः।

तत्र क्रममाह कारिकाकारः–"उच्चारः प्रातिलोम्येन पितॄणां सर्वकर्मसु। कन्यादाने यज्ञकृतावानुलोम्येन स स्मृतः" इति ॥

तत्र प्रथमं कन्यापक्षीयः आशीर्वादश्लोकं पठति पृच्छति च–

---

*अस्यार्थः। हेकन्यके नौ आवयोः हृदयानि मनांसि तद्विषयव्यापारान् सङ्कल्पविकल्पात्मकान् विश्वेदेवाः सम्यग्भूता आपश्च समञ्जन्तु गुणातिशयाधानेन संस्कुर्वन्तु । तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः तथा अनुकूलः प्रजापतिः तथा देष्ट्री धर्मोपदेष्ट्री देवता आवयोर्हृदयानि सन्दधातु, उ अप्यर्थे ॥

जेतुं यस्त्रिपुरं हरेण, हरिणा व्याजाद्बलिं बध्नता,
स्रष्टुं वारिभवोद्भवेन भुवनं, शेषेण धर्तुं धराम् ॥
पार्वत्या महिषासुरप्रमथने, सिद्धादिभिर्मुक्तये,
ध्यातः पञ्चशरेण विश्वविजये, नागाननः पातु वः ॥ १ ॥

किङ्गोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्राय किङ्गोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्राय किङ्गोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्राय आयुष्मते कन्यार्थिने विष्णुस्वरूपिणे किंनाम्ने वरायेति ।

ततो वरपक्षीयो ब्राह्मणः आशीर्वादं पठित्वोत्तरयति पृच्छति च—

कौपीनं परिधाय पन्नगपतिं गौरीपतौ श्रीपते-
रभ्यर्णं समुपागते कमलया सार्द्धं स्थितस्यासने ॥
आयाते गरुडेऽथ पन्नगपतौ त्रासाद्बहिर्निर्गते
शम्भुं वीक्ष्य दिगम्बरं जलभुवः *स्मेरं स्मितं पातु वः॥२॥

अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने अमुकनाम्ने वराय । किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंश-

* इदं दिगम्बरस्य विशेषणम् ।

र्म्मणः पुत्रीमायुष्मतीं श्रीरूपिणीं वरार्थिनीं किंनाम्नीं कन्याम्।

अथ कन्यापक्षीयः पठति उच्चरयति पृच्छति च—

च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
द्वयं चक्रीकृत्य प्रहसितमुखी शैलतनया ॥
अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥ ३ ॥

अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्रीम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्रीम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्रीमायुष्मतीं श्रीरूपिणीं वरार्थिनीम् अमुकनाम्नीं कन्याम्। किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने किंनाम्ने वराय।

अथ वरपक्षीयो ब्राह्मणः आशीर्वादं पठित्वा उच्चरयेत् पृच्छेच्च—

रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवाम्
अभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया राधया ॥
साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुतिः
व्याजालिङ्गनचुम्बितः स्मितमनोहारी हरिः पातु वः ॥ ४ ॥

अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्मणः पौत्राय अमुकगोत्रस्य

अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने अमुकनाम्ने वराय। किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्मणः प्रपौत्रीं किङ्गोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्रीं किङ्गोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्रीम् आयुष्मतीं श्रीरूपिणीं वरार्थिनीं किंनाम्नीं कन्याम्।

अथ कन्यापक्षीयः पठेत् उत्तरयेत्पृच्छेच—

देव्यं वारि कथं यतः सुरधुनी मौलौ, कथं पावको
देव्यस्तद्धि विलोचनं, कथमहिर्देव्यः स चाङ्गे तव॥
तस्माद् द्यूतविधौ त्वयाऽद्य मुषितो हारः परित्यज्यताम्
इत्थं शैलसुता विहस्य लपितः शम्भुः शिवायास्तु वः॥५॥

अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्रीम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्रीम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्रीम् आयुष्मतीं श्रीरूपिणीं वरार्थिनीम् अमुकनाम्नीं कन्याम्। किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्राय किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने किंनाम्ने वराय।

अथ वरपक्षीयः पठेदुत्तरयेत्पृच्छेच—

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-

न्नासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ॥
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्याश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः॥६॥

अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्म्मणः पौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने अमुकनाम्ने वराय । किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः प्रपौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पौत्रीं किंगोत्रस्य किंप्रवरस्य किंशाखिनः किंवेदाध्यायिनः किंशर्म्मणः पुत्रीम् आयुष्मतीं श्रीरूपिणीं वरार्थिनीं किंनाम्नीं कन्याम् ।

अथ कन्यापक्षीयः केवलं प्रतिब्रूयात् । अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनो ऽमुकशर्मणः प्रपौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनोऽमुकशर्मणः पौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनोऽमुकशर्मणः पुत्रीम् आयुष्मतीं श्रीरूपिणीं वरार्थिनीम् अमुकनाम्नीं कन्याम् । एवं त्रिवारं गोत्राद्युच्चारं विधाय पक्षद्वयेऽप्याशीर्वादश्लोकपाठः ।

देवक्यां यस्य सूतिः त्रिजगति विदिता रुक्मिणी धर्मपत्नी,
पुत्राः प्रद्युम्नमुख्याः सुरनरजयिनो, वाहनं पक्षिराजः ॥
वृन्दारण्यं विहारो, व्रजपुरवनिता वल्लभा राधिकाद्याः,
चक्रं विख्यातमस्त्रं स जयति जगतां स्वस्तये नन्दसूनुः॥७॥
कौसल्याविशदालवालजनितः सीतालतालिङ्गितः

सिक्तः पङ्क्तिरयेन सोदरमहाशाखाभिसंवर्द्धितः ॥
रसस्तीव्रनिदाघपातनपटुश्छायाश्रितानन्दकृत्
युष्माकं स विभूतयेऽस्तु भगवान् श्रीरामकल्पद्रुमः ॥ ८ ॥

इति पठित्वा कन्यापिता त्रिवारं ददानि ३ इति वरं प्रति वदेत् । ततः समाचारात् पक्षद्वये गोत्रानुसारदक्षिणा । तत्र संकल्पः । अद्येत्यादि सं. अमुकशर्म्माऽहं विवाहकर्मणि द्विजद्वारा कृतस्य गोत्रानुसारकर्म्मणः साङ्गतासिद्ध्यै इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् न मम । दक्षिणां दद्यात् । ततः सुलग्नसमागमकाले कन्यां वस्त्रभूषणादिभिर्भूषयित्वा गन्धाक्षतपुष्पादिभिस्तां पूजयेत् । ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं मऽइषाण सर्वलोकं मऽइषाण ॥ १ ॥ ॐअम्बे ऽअम्बिके ऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥२॥ ॐसमख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । मा मऽआयुः प्रमोषीर्मोऽअहं तव वीरं विदेय तव देवि सन्दृशि ॥ ३ ॥ इति मन्त्रैः कन्यां पूजयेत् ।

(अथ कन्यादानलग्नानुरोधेन कन्यादानात्पूर्वं पश्चाद्वा पर्वतीया आचाराच्छोलिकाभरणं कुर्वन्ति । छोलिकेति 'थाली' इति प्रसिद्धाभरणस्य नाम ( वि० को० )। सौभाग्यभूषणेषु नासिकावालिकाया मुख्यत्वात् तां पुरस्कृत्यास्याचारस्य प्रवृत्तत्वात्तन्नाम्ना व्यवहारः । तत्र प्रथमं कन्यापक्षे । एकस्मिन्कांस्यपात्रे शुक्लतण्डुललड्डुक फलेक्षुदण्डद्रव्याणि संस्थाप्य–फलानि द्राक्षा–दाडिम–पूगीफल जातीफल नारिङ्ग नालिकेर कदलीफल बीजपूर जम्बु जम्बीर निम्बूफलाम्रफलं

पनस मातुलुङ्गेक्षुदण्डोत्तराणि कांस्यादिपात्रोपरि स्थापितानि पतिपुत्रवतीनां स्त्रीणां हस्ते कुमारी छोलिकां दद्यात् । मन्त्रः-

ॐया: फलिनीर्य्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व*हसः ॥इति, ॐभद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा*सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ इति च मन्त्रं पाठयित्वा कन्या वराय प्रयच्छति । कन्यापिता वरपिताच आचारात् पञ्चसप्तलड्डुकान् कमलमुकुलाकारान् सद्रव्यान् ब्राह्मणेभ्यो दद्याताम् ।

ततो वरपक्षेऽपि आचारमात्तं छोलिकाभरणं कार्यम् । एकस्मिन् कांस्यपात्रे शुक्लतण्डुलनिर्मितं दूर्वाद्रव्यहरिद्रापूगीफलाक्षतादिगर्भं शिखराकारं सुगन्धिद्रव्यचूर्णसुवासितं स्थूललड्डुकं निधाय पात्रान्तरे तत्रैव वा यथाशक्ति सप्त पञ्च वा स्वच्छाः फेणिकाः अपूपादींश्च संस्थाप्य-शाल्यादिपिष्टघटित-लवङ्गैलामरिचकर्पूरजातीफलजातीपत्रादिसुगन्धिद्रव्यमिश्रित-पिष्टतिलमहालड्डुकादीनि अपूपशष्कुलीमोहालिकाफेणिकादिविविधपक्वान्नानि सद्योघृतपाचितानि कांस्यादिपात्रोपरि स्थापितानि पतिपुत्रवतीहस्तेन गृहीत्वा प्रयच्छेत् ।

मन्त्रः ॐअन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।

---

य. सं. अ. ११ मं. ८३

हेअन्नपते अग्ने नः अस्मभ्यम् अन्नस्य देहि । कर्मणः शेषत्वविवक्षायां षष्ठी । अन्नं देहीत्यर्थः । यद्वा अन्नस्य स्वमंशं देहि । कीदृशस्य अन्नस्य । अनमीवस्य-अमीवा व्याधिः तद्रहितस्य, शुष्मिणः-शुष्मं बलं तद्युक्तस्य । रोगनाशकं बलहेतुमन्नं प्रयच्छेत्यर्थः । किञ्च दातारं प्रप्रतारिषः प्रकर्षेण वर्धय । प्रसमुपोद इति प्रोपसर्गस्य द्वित्वम् । किञ्च नः अस्माकं द्विपदे मनुष्यरूपे पुत्रा-

प्रप्रदातारं तारिष ऽऊर्जं नो धेहि द्विपदे चतुष्पदे ॥

ततो वासांसि संस्थाप्य हरितपीतश्वेतरक्तनीलमाञ्जिष्ठ-कौसुम्भकाश्मीरयक्षकर्दमादिनानारङ्गरञ्जितानि विचित्रकार्पासकौशेयपट्टवस्त्राणि नूतनस्वर्णसूत्राञ्चितानि नानादिग्देशागतानि बहुमूल्यानि नानानामधेयानि दुकूलोत्तरीयकञ्चुकादीनि कांस्यादिपात्रोपरि स्थापितानि कुमारी छो० ।

मन्त्रः ॐ यद्दद्वाय व्वास ऽउपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै । सन्दानमर्वन्तं पड्बीशं प्रिया देवेष्वायामयन्ति ॥

परिधेयभूषणानिसं० मणिमौक्तिकहीरकगारुत्मतमरकत पुष्परागनीलेन्द्रवैदूर्यगोमेदादिमहार्घविविधोपलशोभित-स्वर्णरचित-कटक केयूर पादाङ्गुलीयक काञ्ची हार ग्रैवेयक नासिकाभरण तिलक ताटङ्क स्वर्णपुष्प कङ्कण कराङ्गुलीयक बाहुबन्ध किरीट शिरःपुष्पादीनि विविधस्वर्णशृङ्खलापट्टसूत्रग्रथितानि नानानामधेयानि भूषणानि रौप्यकांस्यादिपात्रोपरि-स्थापितानि कुमारी छो० ।

मन्त्रः *ॐ रूपेण वो रूपमभ्यागां तुथो वो विश्व-

---

दौ चतुष्पदे गवादौ च ऊर्जमन्नं धेहि धारय ॥

*य सं अ. ७-मं. ४५

पूर्वं पशवः स्वदानमसहमाना रूपान्तराणि जगृहुः, देवाः स्वै रूपैस्तानुपागताः, ततस्ते स्वै रूपैराजग्मुरिति मन्त्रस्य निदानम् । हे दक्षिणारूपा गावः रूपेण मूल्यां वो युष्माकं रूपमहमभ्यागाम् अभ्यागतोऽस्मि अतो भवतीभिरागन्तव्यम् । सर्वे हि स्वरूपमागच्छन्तीति भावः । किञ्च तुथो ब्रह्मरूपः प्रजापतिः वो युष्मान् विभजतु यथायोग्यमृत्विग्भ्यो विभज्य ददातु । किम्भूतस्तुथः । विश्वं सर्वं वेदनं वेदो ज्ञानं यस्य स विश्ववेदास्सर्वज्ञः ॥

स्वयेदा विधमंजतु । ऋतस्य पथा प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः १ ॐस्वर्णघर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा स्वर्णं ज्योतिः स्वाहा स्वर्ण सूर्य्यः स्वाहा॥२॥(प.सं. १८।५०)

इति छोलिकाभरणम्) ॥

*अथ पाणिग्रहणार्हे लग्ने समागते उभयपक्षयोः लंग्नदानविधानम् । वरपिता अद्येहामुकोऽहम् अमुकराशेरस्य वरस्य विवाहलग्नात् यत्रकुत्रस्थानास्थितानां दुष्टानां ग्रहाणां दुष्टफलनिरासपूर्वकं शुभानां शुभफलप्राप्तये आदित्यादिनवग्रहाणां प्रीतये च इदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा ब्राह्मणाय दास्ये ॐतत्सत् न मम ।

अथ कन्यापिता अद्येहेत्यादि सं. अमुकोऽहम् अमुकराशे-

---

किञ्च यूयमेतज्ज्ञात्वा ऋतस्य यज्ञस्य पथा मार्गेण प्रेत गच्छत । किम्भूता यूयम् । चन्द्र सुवर्णं यजमानहस्तस्थं द्वितीयदक्षिणा यासां ताश्चन्द्रदक्षिणाः । शाकपार्थिवादित्वात् द्वितीयशब्दस्य लोपः । हेदक्षिणाः अहं स्वः स्वर्गं देवयानमार्गं विपश्य विपश्यामि विलोकयामि । छान्दसो व्यवहितप्रयोगः पुरुषव्यत्ययश्च । अन्तरिक्षं पितृयानमार्गं च विपश्यामि । भवतीभिः सोपानभूताभिरिति शेषः । हेदक्षिणे त्वं यतस्व यत्नं कुरु यथा सदस्यैर्ऋत्विग्भिः, पूरितैरपि अतिरिच्यसे इति शेषः । तथा त्वया यतितव्यं यथा ऋत्विजो धनैः सम्पूर्य अधिका भवेयुरिति भावः ॥

*"त्रिषुत्रिपूत्तरादिषु कुमार्याः पाणिं गृह्णीयात्" इति पारस्करोक्त्या पाणिग्रहणस्यैव शुभकालसम्बन्धबोधनात् कन्याप्रतिग्रह एव शुभलग्ने पारस्करानुयायिभिः कर्तव्यः । "सुलग्ने सुमुहूर्ते च दद्याच्चैव यथाविधि। कुमार्यास्त्वष्टवर्षायाः शस्यते पाणिपीडनम्" ॥ इति हेमाद्रौ भविष्यपु. वचनाच्च ॥

रस्याः कन्यायाः विवाहलग्नात् इति वि. अन्यत्समानम् । इति लग्नदानं विधाय ततः शङ्खघण्टातूर्यमङ्गलघोषपुरःस्सरम् उदङ्मुखोपविष्टः* कन्यापिता *प्रत्यङ्मुखोपविष्टायाः कन्यायाः दक्षिणहस्ताङ्गुष्ठं गृहीत्वा प्राङ्मुखोपविष्टाय स्वाचान्ताय वराय दातुं कन्यादानसङ्कल्पं कुर्यात् । कुशतिलयवजलान्यादाय पत्नीहस्तेन संततजलधारां दापयेत् । आचारात् कन्याहस्तं कांस्यपात्रोपरि स्थापयेत् । "कांस्येऽविच्छिन्नया वारिधारया दीयदपा । ॐस्वस्तीति वरो ब्रूयाद्धर्मे चेति वधूपिता" ॥ इति संस्कारगणपतौ वचनाच ॥

ॐविष्णुः ३ ॐनमः परमात्मने श्रीपुराणपुरुषोत्तमाय ॐतत्सत् श्रीहंसस्य चित्सदानन्दरूपिणो ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृम्भिताविद्यायोगात्कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहङ्कारांशितयोद्भूतवियदादिपञ्चभूतेन्द्रियदेवतानिर्मिताण्डकटाहे चतुर्दशलोकात्मके लोके लीलया तन्वध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतेन सकललोकपितामहेन ब्रह्मणा सृष्टिं कुर्वता तदुद्धरणाय प्रार्थितेन महापुरुषरूपिणा धृतवाराहावतारेण ध्रियमाणायामस्यां भूर्लोकसंज्ञितायां धरित्र्यां सप्तद्वीपमण्डितायां क्षीरोदाद्यब्धिद्विगुणकुशादिद्वीपवलयीकृते लक्षयोजनविस्तीर्णे जम्बूद्वीपे भरतखण्डे स्वर्गस्थितामराधाशासितावतारे गङ्गादिसरिद्भिः पाविते निखिलजनपावने शौनकादिमुनिकृतवसतिके नैमिषारण्ये आर्य्यावर्त्ते पुण्यक्षेत्रे

---

* "सर्वत्र प्राङ्मुखो दाता प्रतिग्राही उदङ्मुखः । एष एव विधिर्दाने कन्यादाने विपर्ययः" ॥ इति संस्कारगणपतौ वचनात् । *"वरः प्राङ्मुख उपविशेत् तस्य पुरस्तात् प्रत्यङ्मुखीं कन्यां पुरस्कृत्य दातोपविशेत् " इति आश्वलायनगृह्यपरिशिष्टाच ।

(हिमवत्पर्वतैकदेशे) श्रीभगवन्मार्चण्डकृपापात्रकालत्रितयज्ञगर्गपराशराचार्यादिगणितायां संख्यायां श्रीब्रह्मणो द्वितीयपरार्द्धे द्वितीययामे तृतीयमुहूर्ते श्रीश्वेतवाराहनाम्नि प्रथमकल्पे स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषेतिषण्मनूनामतिक्रम्यमाणे सम्प्रति सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमकलियुगस्य प्रथमचरणे बौद्धावतारे श्रीमन्नृपतिविक्रमार्कसमयात् संवत्सराणां समयेनातिक्रान्तानां षष्ट्यब्दानां मध्ये अमुकनामसंवत्सरे अमुकायने अमुकर्त्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनामदिवसनक्षत्रे अमुकनाममहानक्षत्रे अमुकनामयोगे अमुकनामकरणे अमुकनाममुहूर्ते अमुकस्थे सूर्ये अमुकस्थे चन्द्रे अमुकस्थे भौमे अमुकस्थे बुधे अमुकस्थे देवगुरौ अमुकस्थे शुक्रे अमुकस्थे शनौ अमुकस्थे राहौ अमुकस्थे केतौ एवङ्गुणविशेषविशिष्टायाम् अस्यां शुभावस्थायाम् अमुकगोत्रोऽमुकप्रवरोऽमुकराशिरमुकम्र्मा सपत्नीकोऽहम् अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनोऽमुकशर्म्मणः प्रपौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनः अमुकवेदाध्यायिनः अमुकशर्मणः पौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने अमुकगोत्रायामुकप्रवराय अमुकशर्मणे वराय अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोमुकवेदाध्यायिनोऽमुकशर्म्मणः प्रपौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनोऽमुकशर्मणः पौत्रीम् अमुकगोत्रस्यामुकप्रवरस्यामुकशाखिनोऽमुकवेदाध्यायिनः अमुकशर्म्मणः पुत्रीम् आयुष्मतीं श्रीरूपिणीं वरार्थिनीम् अमुकनाम्नीमिमां कन्यां यथाशक्त्यलंकृतां य-

यथाशक्त्युपकल्पितयौतकयुतां प्रजापतिदैवतां (विधानपा. संवर्त०) मम पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रसमफलप्राप्तिपूर्वकं, मम समस्तपितॄणां निरतिशयानन्दब्रह्मलोकावाप्त्यादिफलावाप्तिपूर्वकं वा श्रीलक्ष्मीनारायणप्रीतये (पू० मी० अ० ४ पा० ३ अधि० १२) तथा अनेन वरेणास्यां कन्यायाम् उत्पादयिष्यमाणसन्तत्या *द्वादशावरान् द्वादश परान् पुरुषान् आत्मानं च पवित्रीकर्तुं देवाग्निगुरुब्राह्मणसन्निधौ अग्न्यादिसाक्षिकतया सहधर्म्माचरणाय तुभ्यमहं सम्प्रददे प्रतिगृह्णातु भवान् इति दाता उत्थाय* सकुशाक्षतजलं कन्यादक्षिणहस्तं वरदक्षिणहस्ते समर्प्पयेत् ।

( कन्यादाने 'न मम' इति न वाच्यम् । उत्तरकालमपि यथापूर्वं ममेयं कन्येति व्यवहारादिति केचित् । आवयोरिति संप्रतिपत्तेरसत्त्वेन दानेन असाधारणस्वत्वनिवृत्तौ साधारणस्वत्वोत्पत्तेरयोगात् स्वत्वाभावप्रकाशनार्थमन्यत्रेवात्रापि 'न मम' इति वाच्यमेव । "न ममेति स्वस्वत्वस्य निवृत्तिमपि कीर्तयेत्" । इति हेमाद्र्यादौ वचनात् । ममेयं कन्येति व्यवहारस्तु जन्यजनकभावसम्बन्धमूलको न स्वत्वमूलक इत्यन्ये )।

अथ दानवाक्यं पठेत् —

(विधानपा० वायुपु०) कन्यां कनकसम्पन्नां कनका-

---

*"अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः । तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः" इत्याश्वलायनगृह्यात् । (अ १ क. ६)

*विधानपा बृहस्पतिः, "चतुष्पादं गृहं कन्यां दासीं छत्रं रथं तथा । तिष्ठन्नेतान् द्विजो दद्याद् भूम्यादीनुपविश्य च" ॥ इति ।

भरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया १ विश्वम्भरः सर्वभूताः साक्षिण्यः सर्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च २ इति। अथ प्रार्थनामन्त्रौ पठेत् गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ३ कन्या लक्ष्मीः समाख्याता वरो नारायणः स्मृतः । तस्मात्कन्याप्रदानेन कृष्णो मे प्रीयतामिति ४ (विधानपा० ऋष्यशृङ्गोक्तौ)।

ततः कन्यां प्रार्थयेत्–( वि० पा० व्यासोक्तेन मन्त्रेण ) कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः। कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ इति ।

अथ श्रीलक्ष्मीनारायणप्रीतये वरकन्ययोः पूजनं कृत्वा प्रार्थयेत् । त्रैलोक्यनाथ देवेश सर्वभूतदयानिधे । दानेनानेन सुप्रीतः सदा शांतिं प्रयच्छ मे ॥ इति ।

ततो वरः ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्यां-*प्रजापतये कन्यां प्रतिगृह्णामि

---

*"प्रतिग्रहीता सावित्रं सर्वत्रैवानुकीर्तयेत् ।
ततस्तु कीर्तयेत्सार्द्धं द्रव्येण द्रव्यदैवताम् ॥

समापयेत्ततः पश्चात्कामस्तुत्या प्रतिग्रहम् । तदन्ते कीर्तयेत्स्वस्ति प्रतिग्रहविधिस्त्वयम् ॥ सावित्रं सवितृदैवतं यजुः देवस्यत्वेत्यादि प्रसिद्धम् । द्रव्यदैवताम् —"अभयं सर्वदैवत्यं भूमिर्वै विष्णुदैवता । कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्तिताः" ॥ इत्यादिना वक्ष्यमाणा । कामस्तुत्या कोऽदादिति मन्त्रेण । इति हेमाद्रौ दानखण्डे तृतीयप्रकरणे विष्णुधर्मोत्तरवचनैः 'प्रजापतये कन्यां प्रतिगृह्णामि' इति प्रतिग्रहवाक्यं सिद्ध्यति । "दातुर्मन्त्रप्रयोगान्ते ह्यमुकस्मै सुराय वै । इदमों प्रतिगृह्णामि तदन्ते स्वस्ति कीर्तयेत्" ॥ इति तत्रैवाग्रे स्पष्टमभिधानाच्च ।

*द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॐस्वस्ति इत्युक्त्वा दक्षाङ्गुष्ठं गृहीत्वा कामस्तुतिं पठेत्—ॐकोऽदात्कस्माऽअदात्कामोऽदात्कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते-इति। ततो दाता बद्धाञ्जलिः पुनः पठेत्-कन्या मम कुले जाता पालिता वत्सराष्टकम्। तुभ्यं विप्र मया दत्ता पुत्रपौत्रविवर्धिनी॥ धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयमिति। वत्सराष्टकमित्यत्र वर्षानुसारेणोहः कार्यः। ॐनातिचरामीति वरः प्रतिवदेत्। ततो दाता उपविश्य कन्यादानप्रतिष्ठां कुर्यात्। तिलकुशयवजलान्यादाय अद्येह अमुकोऽहं कन्यादानकर्मणः फलप्रतिष्ठासिद्ध्यर्थम् इदं सुवर्णम् अग्निदैवतं वराय तुभ्यं सम्प्रददे न मम। इति सुवर्णं दद्यात्। वरश्च ॐस्वस्तीति प्रतिवदेत्। अथाचारात्कन्यापिता तद्बान्धवादयोऽपि यथाशक्ति यौतकत्वेन सुवर्णरजतताम्रपित्तलपात्राणि गोमहिष्यश्ववस्त्रशय्यादासीदासग्रामादिकं च वरकन्याभ्यां प्रयच्छन्ति। केचिदेतद्धोमान्ते वदन्ति। गवादिदानवाक्यानि चाग्रे प्रदर्शयिष्यन्ते।

अथाचाराच्छिष्टाचारपरम्पराप्राप्तम् उभयोर्वरकन्ययोरुत्तरीयप्रान्तग्रन्थिकरणं मङ्गलद्रव्यसहितमाचरन्ति। तत्र पुरोहितादिः द्रव्यपूगीफलसर्षपाक्षतहरिद्राभिर्वरकन्ययोर्वस्त्राञ्चलग्रन्थि यज्ञोपवीतेन दृढं बद्ध्वा एतन्तइत्यादि पठित्वा ॐपूः

*पारस्करगृ. कां. ३ कं. १५ स्नातककर्तृके प्रतिग्रहे विनियुक्तः। योग्यत्वात् प्रकृते हेकन्ये इत्यध्याहार्यम्। द्यौराकाशाभिमानिनी देवता त्वा त्वां ददातु। यजमानो द्योरूपो भूत्वा ददात्वित्यर्थः। पृथिवी सर्वंसहा त्वा त्वां प्रतिगृह्णातु। मानुषः पृथिवीरूपो भूत्वा प्रतिगृह्णात्वित्यर्थः। स्वत्वदातृश्रुतिः दक्षिणायाः कर्मसादृगुण्यकर्तृत्वस्थापनार्थेति जयरामभाष्ये विस्तरः।

सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे १ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो ऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः २ सोमोऽददद्गन्धर्वाय गन्धर्वो ऽददग्नये । रयिं च पुत्राँश्चादादग्निर्मह्यमथो ऽइमाम् ३ सा नः पूषा शिवतमामैरय सा न ऊरू ऽउशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै ४ इति ।

अथ निष्क्रमणप्रभृति आमूर्द्धाभिषेकात् कश्चिद्ब्राह्मणः जलपूर्णं कुम्भं स्कन्धे धृत्वा वाग्यतो दक्षिणतस्तिष्ठेत् । अथ वरो वध्वा सह बहिःशालायामागत्य वधूमग्रतः कृत्वाऽग्निं प्रदक्षिणीकृत्य वधूं दक्षिणतः कृत्वा दक्षिणपादेन तृणपूलिकां कटं वा प्रत्यस्योल्लङ्घ्य दक्षिणपादमग्रतः कृत्वा उपविशति । ततो वरस्त्रिराचम्य त्रिः प्राणानायम्य वधूं दक्षिणत उपवेश्य अर्घं संस्थाप्य प्रधानसंकल्पं कुर्यात् । अद्येहेत्यादि सं. अमुकगोत्रो-

---

या सर्वलोकसाक्षिणी पूषा देवता सा इमां शिवतमां कल्याणगुणशीलां कृत्वा नः अस्मान् प्रति ऐरय ईरयतु । आद्यो दर्शनं विभक्तेरदर्शनं च छान्दसम् । अस्मासु अनुरक्तां करोत्वित्यर्थः । सा ऽत्र अस्मत्तः सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी जानुनोरूर्ध्वभागदण्डौ विहर विहरताम् विवृणोतु प्रसारयत्वित्यर्थः । मध्यमपुरुषश्छान्दसः । प्रयोजनमाह, यस्यां स्त्रीयोनौ उशन्तः सुखमिच्छन्तः शेपं शिश्नं प्रहराम प्रवेशयाम वयम । उ एवार्थे— यस्यामेव कन्यायां बहवः कामाः धर्मपुत्ररतिसुखरूपाः सन्तु निविष्ट्यै अग्निहोत्राद्युपासनया ऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये । पुत्रस्य पितृऋणापाकरणार्थत्वेन, भार्यारतिसुखस्य विषयान्तरवैमुख्यकरणार्थत्वेन च सायुज्योपयोगित्वं बोध्यम् ॥ ४ ॥

ऽमुकराशिरमुकशर्म्मा ऽहं धर्मार्थकामसिद्धिद्वारा श्रीपरमेश्वरप्रीतये ब्राह्मविधिना पितृदत्तामिमां ( गौरीं ) कन्यां विवाहयिष्ये । तत्पूर्वाङ्गतया विवाहहोमकर्म्मणि कृताकृतावेक्षणादि ब्रह्मकर्म्म कर्तुं ब्रह्मणः पूजनपूर्वकं वरणं करिष्ये इति सङ्कल्प्य दक्षिणतो ब्रह्मासनमास्तीर्य उत्तरतोऽपरमासनं संस्थाप्य तत्र ब्रह्माणमुपवेश्य भूमिदेवेति ब्रह्मणे अर्घं दत्त्वा ब्रह्मज्ञानमिति गन्धाक्षतपुष्पैः संपूज्य वरणसामग्रीं करयोः कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यवासोभिः विवाहहोमकर्म्मणि कृताकृतावेक्षणादि ब्रह्मकर्म कर्त्तुम् अमुकशर्म्माणं (ब्रह्मत्वेन) त्वामहं वृणे । ॐवृतोऽस्मीति प्रत्युक्तिः । ततः यथा चतुर्मुखो ब्रह्मेति ब्रह्माणं प्रार्थयेत् । एवमुत्तरासने ब्रह्माणं धृत्वा अग्नेः पूर्वेण गमयित्वा पूर्वकल्पितदक्षिणासने उपवेशयेत् ।

ततः प्रतिनिधिभूत आचार्य आत्मासनं यजमानासनं च अग्नेः पश्चात् प्रागग्रकुशैः सम्पाद्याग्नेरुत्तरतः पश्चिमभागे एकमासनं, पूर्वभागे द्वितीयासनं प्रागग्रकुशैः कल्पयित्वा प्रणीतापात्रं सव्यहस्ते कृत्वा पात्रस्यजलेनापूर्य दर्भैराच्छाद्य ब्रह्ममुखमवलोक्य पश्चिमासने निधायालभ्य पूर्वासने निदध्यात् । पूर्वादिदिक्षु प्रागग्रैरुदगग्रैश्च कुशैः परिस्तरणम् । पुरस्तात्पश्चाचोदगग्रैः, दक्षिणत उत्तरतश्च प्रागग्रैः। अथार्थवन्ति वस्तून्यासादयेत्। पवित्रच्छेदनानि त्रीणि कुशतरुणानि, द्वे पवित्रे, प्रोक्षणीपात्रम्, आज्यस्थाली, सम्मार्जनकुशाः पञ्च, उपयमनकुशास्त्रयोदश, समिधस्तिस्रः, स्रुवः, आज्यं, पूर्णपात्रं, कर्मोपयोगिनी दक्षिणा, एतानि वस्तूनि अग्नेः पश्चात्स्थापयेत् । तत्र पात्राणि प्राग्विलान्युदगग्राणि स्थापयेत् । विशेषोपकल्पनीयानि यथा–शमीपलाशमिश्रा लाजाः, अखण्डोऽश्मा, लोहितमानडुहं

चर्म्म, तदभावे रक्तवस्त्रं, कुमारीभ्राता, तदभावेऽन्यो वा, नवीनं शूर्पम्, दृढपुरुषः, आचार्य्याय वरद्रव्यम्। ततः त्रिभिर्दर्भैर्द्वे प्रच्छिद्य प्रादेशमात्रे पवित्रे कुर्यात्। प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र प्रणीतोदकमासिच्य पवित्राभ्यां तज्जलमुत्क्षिप्य पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकस्य दक्षिणहस्तमध्यमाऽनामिकाङ्गुल्योर्मध्यपर्वभ्यामुच्छालनं कृत्वा प्रणीतोदकेन तज्जलं प्रोक्षेत्। प्रोक्षण्युदकेन पवित्राभ्याम् आज्यस्थालीं संमार्जनकुशान् उपयमनकुशान् समिधः स्रुवम् आज्यं दक्षिणां च प्रोक्षेत्। विशेषोपकल्पनीयानि न प्रोक्षेत् इति कर्कभाष्ये स्पष्टम् (का.श्रौ. अ. २ क. ३ सू. ८)। आज्यमग्नावारोपयेत्। अर्द्धश्रित आज्ये ज्वलदुल्मुकं समन्ताद् भ्रमयेत्। दक्षिणेन स्रुवमधोमुखं प्राञ्चं प्रतप्य सव्ये कृत्वा सम्मार्जनकुशाग्रैर्मूलतोऽग्रपर्यन्तमन्तरतः सम्मार्ज्य, कुशमूलैरधस्ताद्भागेऽग्रादारभ्य मूलपर्यन्तं सम्मार्ज्याग्नौ कुशान् प्रक्षिपेत्। ततः प्रणीतोदकेन स्रुवमभ्युक्ष्य पुनः पूर्ववत्प्रतप्य कराभ्यां सम्मार्ज्यात्मनो दक्षिणतः कुशोपरि निदध्यात्। आज्यम् उत्तरतउत्तार्याग्नेः पश्चादानयेत्। अङ्गुष्ठाभ्यामनामिकाभ्यां च धृताभ्यामुदगग्राभ्यां पवित्राभ्यामाज्यमुत्क्षिप्यावेक्ष्यापद्रव्यनिरसनं कृत्वा प्रोक्षणीश्च पवित्राभ्यामुत्क्षिप्य तासु पवित्रे निदध्यात्। उपयमनकुशान् दक्षिणेनादाय वामकरे कृत्वा तिष्ठन् तिस्रो घृताक्तास्समिधस्तूष्णीमग्नौ प्रक्षिपेत्। ततः सपवित्रेण प्रोक्षण्युदकेन ईशानादि उत्तरपर्यन्तं सम्प्रोक्ष्य पवित्रे प्रणीतायां निदध्यात्। संस्रवधारणार्थं प्रोक्षणीपात्रं प्रणीताग्न्योर्मध्ये निदध्यात्।

इत्थं पर्युक्षणान्तं कर्म आचार्यद्वारा स्वयं वा कृत्वा

वरो देवताभिध्यानं करोति–अद्येह सवधूकोऽहं विवाहकर्मणा यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमम्, अग्निं, वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् (देवान्) मरुतः स्वर्कान्, वरुणम्, १२–ऋताषाहम् ऋतधामानम् अग्निं गन्धर्वम्, ओषधीरप्सरसो मुदः, संहितं विश्वसामानं सूर्यं गन्धर्वं, मरीचीरप्सरस ऽआयुवः, सुषुम्णः सूर्यरश्मिं चन्द्रमसं गन्धर्वं, नक्षत्राण्यप्सरसो भेकुरीः, इषिरं विश्वव्यचसं वातं गन्धर्वम्, अपोऽप्सरस ऽऊर्जः, भुज्युः सुपर्णं यज्ञं गन्धर्वं, दक्षिणाऽप्सरस स्तावाः, प्रजापतिं विश्वकर्म्माणं मनो गन्धर्वम्, ऋक्सामान्यप्सरस ऽएष्टीः, १२–चित्तं, चित्तिम्, आकूतम, आकूतिम्, विज्ञातं, विज्ञातिं, मनः, शक्वरीः, दर्शं, पौर्णमासम्, बृहत्, रथन्तरं, प्रजापतिम्, १३–अग्निंभूतानामधिपतिम्, इन्द्रं ज्येष्ठानामधिपतिं, यमं पृथिव्या ऽअधिपतिं, वायुमन्तरिक्षस्याधिपतिं, सूर्यं दिवोऽधिपतिं, चन्द्रमसं नक्षत्राणामधिपतिं, बृहस्पतिं ब्रह्मणोऽधिपतिं, मित्रꣳ सत्यानामधिपतिं, वरुणमपामधिपतिं, समुद्रꣳ स्रोत्यानामधिपतिम्, अन्नꣳ साम्राज्यानामधिपतिं, सोममोषधीनामधिपतिं, सवितारं प्रसवानामधिपतिं, रुद्रं पशूनामधिपतिं, त्वष्टारꣳ रूपाणामधिपतिं, विष्णुं पर्वतानामधिपतिं, मरुतो गणानामधिपतीन्, पितॄन् पितामहान् परान् अवरान् ततान् ततामहान्, १८– अग्निम्, अग्निम्, अग्निम्, अग्निम्, वैश्वस्वतं, पृ सुं ५ चाज्येनाहं यक्ष्ये ।

अत्रावसरे कन्या देवताभिध्यानं करोति–अर्य्यमणम्, अग्निम्, अग्निम्, अर्य्यमणम्, अग्निम्, अग्निम्, अर्य्यमणम्, अग्निम्, अग्निम्, सर्वं १० च लाजैरहं यक्ष्ये ।

पुनर्वरः प्रजापतिम्, अग्निꣳ स्विष्टकृतं, चाज्येनाहं यक्ष्ये।

( एवं देवताभिध्यानमात्रमस्मिन् समये कुर्यात् । विवाहहोमस्य यजमानमात्रकर्तृकत्वेन मत्याहुतित्यागस्य कर्तुं शक्यत्वादग्रे होमकाले एव ते निर्देक्ष्यन्ते । निर्दिष्टाश्च सर्वपुस्तकेषु इदं प्रजापतये न ममेत्यादयः । द्विवारं तदुल्लेखस्यानुचितत्वात्कचित्पुस्तकेऽत्र तदुल्लेखोऽनुचित एव सर्वथेति बोध्यम् ) ।

अग्निं प्रज्वलय्य ॐएतन्ते इत्यादि प. ॐभूर्भुवःस्वः योजकनामाग्ने सुप्रतिष्ठितो वरदो भव इति ( विवाहे योजकः स्मृतः इति वचनात् ) योजकनामानमग्निं प्रतिष्ठाप्य ॐअग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलमनन्तं विश्वतोमुखम् ॥ सर्वतःपाणिपादश्च सर्वतोऽक्षिशिरोमुखः । विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥

ॐचत्वारि शृङ्गा त्रयो ऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ २॥ आविवेश-इति मन्त्रैः अग्निं ध्यानादि नीराजनान्तं संपूज्य ॐब्रह्मणे नमः इति प्रथमरेखाम्, ॐविष्णवे नमः इति मध्यरेखाम्, ॐरुद्राय नमः इति उत्तररेखां सम्पूज्य उदकं स्पृष्ट्वा ॐकराल्यैनमः ॐधूम्रिन्यैनमः ॐश्वेतायैनमः ॐलोहितायैनमः ॐमहालोहितायैनमः ॐसुवर्णायैनमः ॐपद्मरागायैनमः इति सप्तजिह्वाश्च संपूज्य दक्षिणं जान्वाच्य कुशेन दक्षिणबाहौ ब्रह्मणाऽन्वारब्धो जुहुयात् । ॐप्रजापतये स्वाहा इदं प्रजापतये न मम १ इति मनसा प्रजापतिं ध्यात्वा, ॐइन्द्राय स्वाहा इदमिन्द्राय न मम २ इति माघाराघारौ हुत्वा ॐअग्नये स्वाहा इदमग्नये न मम ३ ॐसोमाय स्वाहा इदꣳ सोमाय न मम ४ इत्याज्यभागौ जुहुयात् । सर्वत्र त्यागकाले अग्नौ प्रक्षिप्य

हुतशेषं प्रोक्षणीपात्रे निक्षिपेत् । ततो महाव्याहृतिहोमः । (महाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः होमे विनियोगः ) ॐभूः स्वाहा इदमग्नये न मम १ ॐभुवः स्वाहा इदं वायवे न मम २ ॐस्वः स्वाहा इदꣳसूर्याय न मम ३

(त्वन्नो ऽअग्ने इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सर्वप्रायश्चित्तहोमे विनियोगः )

ॐत्वन्नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्-स्वाहा-इदमग्नीवरुणाभ्यां न मम ४ (सत्वन्न इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सर्वप्रायश्चित्तहोमे विनियोगः )।

ॐस त्वन्नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्व्युष्टौ । अवयक्ष्व नो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवो न ऽएधि-स्वाहा इदमग्नीवरुणाभ्यां न मम ५ (अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता सर्वप्रायश्चित्तहोमे विनियोगः )

ॐअयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया ऽअसि । अया नो यज्ञं व्वहास्यया नो धेहि भेषजꣳस्वाहा । इदमग्नये न मम ६ (येतेशतमिति वामदेवऋषिस्त्रिष्टुप्छन्दः वरुणः सविता विष्णुर्विश्वे (देवा) मरुतः स्वर्काश्च देवताः सर्वप्रायश्चित्तहोमे विनियोगः )

ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं व्वरुणाय सवित्रे विष्णवे

विश्वेभ्यो ( देवेभ्यो ) मरुद्भ्यः स्वर्केभ्यश्च न मम७ ( उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दो वरुणो देवता सर्वप्रायश्चित्तहोमे विनियोगः ) ।

ॐउदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय। अथा वयमादित्य व्रते तवानागसो ऽअदितये स्याम–स्वाहा। इदं वरुणाय न मम ८

अन्वारम्भं त्यक्त्वा देशाचारतो दक्षिणासंकल्पः। अद्येह अमुकगोत्रः अमुकराशिरमुकशर्म्मा सवधूकोऽहम् आधाराज्यभागमहाव्याहृतिसर्वप्रायश्चित्तहोमानां साङ्गतासिद्ध्यै इमां दक्षिणाम् आचार्य्यब्रह्मभ्यां विभज्य दास्ये ॐतत्सत् न मम इति दद्यात्। आचार्यब्रह्माणौ च मन्त्राशिषं दद्याताम्। यथा, उत्सर्गे वारुणेचैव वरुणो विष्णुना सह। तुष्टिपुष्टिकरौ नित्यमुभयोः स्त्रीकुमारयोः॥ इति।

अथ राष्ट्रभृद्धोमः। (ऋताषाडिति प्रजापतिर्ऋषिर्यजुश्छन्दः ऋताषाडृतधामाग्निर्गन्धर्वो देवता होमे विनियोगः। )

*ॐऋताषाडृतधामाऽग्निर्गन्धर्व्वः स न ऽइदं ब्रह्म

---

*य० सं० अ० १८ मं० ३८

प्रतिस्वाहाकारं राष्ट्रभृतः। व्यतिषक्तेषु द्वादशमन्त्रेषु पूर्वो मन्त्रः स्वाहाव्याडित्यन्तः, उत्तरः ताभ्यः स्वाहेत्यन्तः। ततो मन्त्रे यानि पुंलिङ्गानि तदन्वययोग्यानि च सन ऽइदंब्रह्मेत्यादीनि तानि व्यवहितपठितान्यप्यपकृष्य पठित्वा पूर्वो मन्त्रः सम्पाद्यः। यानि च स्त्रीलिङ्गानि तदन्वययोग्यानि च तस्योषधयोऽप्सरसइत्यादीनि तानि उत्कृष्योत्तरो मन्त्रः सम्पाद्यः। ऋताषाडित्यादीनि च द्वितीयमन्त्रे तस्येत्याकाङ्क्षापूरणाय योज्यानि। द्वादश यजूंषि गन्धर्वाप्सरोदैवतानि। स्वाहाव्याडित्यन्तः ऋताषाडित्यादिनामकगन्धर्वदैवतः। ताभ्यःस्वाहेत्यन्तः ओषध्यादिनामकाप्सरोदैवतः। एवमुत्तरत्रापि बोध्यम्।

क्षत्रं पातु तस्मै स्वाहा वाट् । इदमृतासाहे ऋतधाम्नेऽग्नये गन्धर्वाय न मम । (पुन. ऋताषाडिति प्रजापतिर्ऋषिर्यजुश्छन्द ओषधयोऽप्सरसो मुदो देवताः होमे विनियोगः) ।

ॐऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा । इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यो न मम । ( सꣳहितइति प्रजापतिर्ऋषिर्यजुश्छन्दः सꣳहितो विश्वसामा सूर्यो गन्धर्वो देवता होमे विनियोग ) ।

*ॐसꣳहितो विश्वसामा सूर्यो गन्धर्वः स न इदं ब्रह्म क्षत्र पातु तस्मै स्वाहा वाट् । इदꣳ सꣳहिताय विश्वसाम्ने सूर्याय गन्धर्वाय न मम । (पुन सꣳहितइति प्रजापतिर्ऋषिर्यजुश्छन्दः मरीचयोऽप्सरसऽआयुवो देवताः होमे विनियोगः)

ॐसꣳहितो विश्वसामा सूर्यो गन्धर्वस्त-

---

अथ मन्त्रार्थः । योऽग्निर्गन्धर्वः ऋताषाट् ऋत सत्य सहते इत्यृताषाट् तथा ऋतधामा ऋत सत्यमविनश्वर धाम यस्य तादृश स. नोऽस्माकम् इद ब्रह्म ब्राह्मणजातिम् इद क्षत्र क्षत्रियजातिं च पातु रक्षतु । तस्मै अग्नये गन्धर्वाय स्वाहा वाट् वषट्कारेण सुहुतमस्तु । इत्येको मन्त्र । तस्याग्नेर्गन्धर्वस्यौषधयो मोदाधा मुद मोदन्ते जना याभिस्ता नाम नाम्नाऽप्सरस स्त्रीत्वेन भोग्याः, ताभ्य ओषधिभ्य स्वाहा सुहुतमस्तु इति द्वितीय ॥

*अ० १८ म० ३९

य सूर्यो गन्धर्व, संहित –सन्दधात्यहोरात्रे इति संहित 'एष ह्यहोरात्रे सन्दधाति'इति श्रुते, विश्वसामा–विश्वानि सर्वाणि सामानि प्रतिपादकत्वेन यस्य स विश्वसामा स, नोऽस्माकम् इद ब्रह्म क्षत्र च पातु तस्मै सूर्याय स्वाहा वाट् । तस्य सूर्यस्य मरीचयो नामाप्सरसस्तत्सञ्चरणत्र, आयुव —आ समन्तात् युवन्ति मिश्रीभवन्ति इत्यायुव, ताभ्यो मरीचिभ्य स्वाहा ॥

स्य मरीचयोऽप्सरस ऽआयुवो नाम ताभ्यः स्वाहा। इदं मरीचिभ्योऽप्सरोभ्य ऽआयुभ्यो न मम। (सुषुम्णइति प्रजापतिर्ऋषिर्यजुश्छन्दः सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वो देवता होमे विनियोगः)।

*ॐसुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्। इदं सुषुम्णाय सूर्य्यरश्मये चन्द्रमसे गन्धर्वाय न मम। (पुनः सुषुम्णइतिप्रजापतिर्ऋषिर्यजुश्छन्दः नक्षत्राण्यप्सरसो भेकुरयो देवताः होमे विनियोगः)।

ॐसुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा। इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यो न मम। (इषिरइति प्रजापतिर्ऋषिर्यजुश्छन्द इषिरो विश्वव्यचा वातो गन्धर्वो देवता होमे विनियोगः)।

+ॐइषिरो विश्वव्यचा वातो गन्धर्वः स न ऽइदं

---

*अ० १८ मं० ४०

यश्चन्द्रमा गन्धर्वः, सुषुम्णः—शोभनं सुम्नं सुखं यस्मात् सुषियः यद्द्वारा सुखप्रदः, सूर्यरश्मिः—सूर्यस्येव रश्मयः किरणा यस्यैतादृशः–स नोऽस्माकम् इदं ब्रह्म क्षत्रं च पातु तस्मै चन्द्रमसे स्वाहा वाट्। तस्य चन्द्रमसो नक्षत्राणि नामाप्सरसः, भेकुरयः–भां कान्तिं कुर्वन्ति इति भेकुरयः। पृषोदरादित्वात्साधुः। ताभ्यो नक्षत्राप्सरोभ्यः स्वाहा। अवशिष्ट पूर्ववत्॥

+अ० १८ मं० ४१

यो वातो वायुर्गन्धर्वः, इषिरः–इष्यति गच्छतीति इषिरः शीघ्रगमन, विश्वव्यचाः—विश्वस्मिन् व्यचो गमनं यस्य स विश्वव्यचाः

ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्। इदमिषिराय विश्वव्यचसे वाताय गन्धर्वाय न मम। (पुनरिषिर इति प्रजापतिर्ऋषिर्यजुश्छन्दः आपोऽप्सरस ऊर्जो देवताः होमे विनियोगः) ॐइषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरस ऊर्जो नाम ताभ्यः स्वाहा। इदमद्भ्योऽप्सरोभ्य ऊर्ग्भ्यो न मम। (भुज्युरिति प्रजापतिर्ऋषिर्यजुश्छन्दः भुज्युः सुपर्णो यज्ञो गन्धर्वो देवता होमे विनियोगः)।

*ॐभुज्युः सुपर्णो यज्ञो गन्धर्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्। इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय न मम। (पुनः भुज्युरिति प्रजापतिर्ऋषिर्यजुश्छन्दो दक्षिणा ऽअप्सरस स्तावा देवताः होमे विनियोगः)

ॐभुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा ऽअप्सरस स्तावा नाम ताभ्यः स्वाहा। इदं दक्षिणाभ्योऽप्सरोभ्य स्तावाभ्यो न मम। (प्रजापतिरिति प्रजापतिर्ऋषिर्यजुश्छन्दः प्रजापतिर्विश्वकर्म्मा मनो गन्धर्वो देवता होमे विनियोगः)

+ॐप्रजापतिर्विश्वकर्म्मा मनो गन्धर्वः स न

---

सर्वतोगमनः—स न इदं ब्रह्म क्षत्र च पातु तस्मै स्वाहा वाट्। तस्यापो नामाप्सरसः, ऊर्जः—ऊर्जयन्ति जीवयन्ति भाग्योत्पादनेनेत्यूर्जः ताभ्यऽद्भ्योऽप्सरोभ्य स्वाहा॥

*अ० १८ मं० ४२

यो यज्ञो गन्धर्व, भुज्युः—भुनक्ति पालयति भूतानि इति भुज्युः, सुपर्णः शोभनं पर्ण पतन स्वर्गगमन यस्य स सुपर्णः—सः न इद ब्रह्म क्षत्र च पातु। तस्मै स्वाहा वाट्। तस्य यज्ञस्य दक्षिणा नामाप्सरसः, स्तावाः—स्तूयते यज्ञो यजमानश्च याभिस्ताः स्तावाः—ताभ्यो दक्षिणाभ्योऽप्सरोभ्य स्वाहा॥

+अ० १८ मं० ४३—

ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा स्वाट्। इदं प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय न मम। (पुनः प्रजापतिरिति प्रजापतिर्ऋषिर्यजुश्छन्दः ऋक्सामान्यप्सरस ऽएष्टयो देवताः होमे विनियोगः)

ॐप्रजापतिर्विश्वकर्म्मा मनो गन्धर्वस्तस्य ऽऋक्सामान्यप्सरस ऽएष्टयो नाम ताभ्यः स्वाहा। इदमृक्सामेभ्योऽप्सरोभ्य ऽएष्टिभ्यो न मम ॥ १२ ॥

अत्रापि दक्षिणा। अद्येह अमुकशर्म्मा सवधूकोऽहं कृतैतद्राष्ट्रभृद्धोमस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च इमां दक्षिणाम् आचार्यब्रह्मभ्यां विभज्य दास्ये ॐतत्सत्-मन्त्र पाठः। गन्धर्वाप्सरसश्चैव प्रयच्छन्तु यशः श्रियम्। दीर्घायुर्धनमारोग्यमुभयोः स्त्रीकुमारयोः ॥ इति राष्ट्रभृद्धोमः ॥

अथ जयहोमः। (चित्तंचेत्यादीनां द्वादशमन्त्राणां परमेष्ठी ऋषिर्यजूंषि चित्तादयो मन्त्राम्नाता देवताः प्रतिमन्त्रं होमे विनियोगः) *ॐचित्तं च स्वाहा। इदं चित्ताय न मम १

---

यो मनोरूपो गन्धर्वः, प्रजापतिः—प्रजायाः पालकः, विश्वकर्मा-विश्वं सर्वं करोतीति विश्वकर्मा-स न इदं ब्रह्म क्षत्रं च पातु। तस्मै स्वाहा वाट्। तस्य मनसः गन्धर्वस्य ऋक्सामान्यप्सरसः, एष्टयः—इष्यते काङ्क्ष्यते ऽभीष्टं याभिस्ता एष्टयस्ताभ्योऽप्सरोभ्यः स्वाहा ॥

जयमन्त्रार्थः। प्रजापतिः यथा इन्द्राय जयान् प्रायच्छत् तथा चित्तादि च मह्ममपि प्रयच्छतु इति क्रियां विपरिणम्योत्तरत्र सम्बन्धः। तस्मै च सुहुतमस्तु। तत्र चित्तं ज्ञानाधारो हृदयं, चित्तिस्तत्प्रया चेतना। आकूतं चाभिमतम्, आकूतिश्चाभिमानः। यद्वा चित्तं ज्ञानेन्द्रियं जातावेकवचनं, चित्तिस्तद्देवता। आकूतं कर्मेन्द्रियम्, आकूतिस्तद्देवता। विज्ञातं शिल्पादिज्ञानमपरोक्षम्,

ॐचित्तिश्च स्वाहा। इदं चित्त्यै न मम २ ॐआकूतं च स्वाहा । इदमाकूताय न मम ३ ॐआकूतिश्च स्वाहा । इदमाकूत्यै न मम ४ ॐविज्ञातं च स्वाहा । इदं विज्ञाताय न मम५ ॐविज्ञातिश्च स्वाहा । इदं विज्ञातये न मम६ ॐमनश्च स्वाहा । इदं मनसे न मम ७ ॐशकरीश्च स्वाहा । इदं शकरीभ्यो न मम ८ ॐदर्शश्च स्वाहा । इदं दर्शाय न मम ९ ॐपौर्णमासं च स्वाहा । इदं पौर्णमासाय न मम १० ॐबृहच्च स्वाहा । इदं बृहते न मम ११ ॐरथन्तरं च स्वाहा । इदं रथन्तराय न मम १२ (प्रजापतिरिति मन्त्रस्य परमेष्ठी ऋषिः त्रिष्टुप्छन्दः प्रजापतिर्देवता जयहोमे विनियोगः) ॐप्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु । तस्मै विशः समनमन्त सर्वाः स ऽउग्रः स ऽइ हव्यो बभूव स्वाहा । इदं प्रजापतये न मम १३ उदकस्पर्शः । ततो दक्षिणा । अद्येह अमुकशर्म्मा सवधूकोऽहं विवाहादिजयहोमकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं च इमां दक्षिणाम् आचार्यब्रह्मभ्यां विभज्य दास्ये ॐतत्सत् न मम । वैरञ्चीव्यं महातेजश्चिन्ताद्याश्च

---

विज्ञातिस्तद्देवता । मनः प्रसिद्धम्, शक्करीः शक्वर्यः तच्छ्रुतयः, दर्शपूर्णमासौ तद्देवते, बृहद्रथन्तरे सामनी तद्देवते वा । सर्वत्र प्रथममन्त्रोक्तवाक्यार्थः सम्बध्यते । प्रजापतिः परमेश्वरः अयाञ्जि(?) शत्रूनिति जयाः तान् जयान् मन्त्रान् इन्द्राय प्रायच्छत् ददौ, वृष्णे मनोरथवर्षणाय । इन्द्रविशेषणं वा वृष्णे इति । ततः स इन्द्रः पृतनाजयेषु असुरसेनाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव । किञ्च ततस्तस्मै इन्द्राय विशः प्रजाः समनमन्त सम्यङ् नेमुः । इन्द्रार्थे, स चेन्द्रः हव्यः हवनीयः इज्यः बभूव । स्वाहा तस्मै सुहुतमस्तु ॥

दिवौकसः । प्रयच्छन्तु करे वाञ्छामुभयोः स्त्रीकुमारयोः ॥ इति जयहोमः ॥

अथाभ्यातानहोमः ।

(अग्निर्भूतानामधिपतिरित्यादीनां पितरःपितामहा इत्यन्तानामष्टादशमन्त्राणां प्रजापतिर्ऋषिः पङ्क्तिश्छन्दो मन्त्राम्नाता अग्न्यादिदेवताः प्रतिमन्त्रं होमे विनियोगः )

*ॐअग्निर्भूतानामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्याꣳ स्वाहा । इदमग्नये भूतानामधिपतये न मम १

ॐइन्द्रो ज्येष्ठानामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्याꣳ स्वाहा । इदमिन्द्राय ज्येष्ठानामधिपतये न मम २

ॐयमः पृथिव्या ऽअधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्याꣳ स्वाहा । इदं यमाय पृथिव्या ऽअधिपतये न मम ३ पित्र्यत्वादुदकस्पर्शः ।

---

*अभ्यातानमन्त्रार्थः । अग्निः प्रजापतिः भूतानां स्थावरादीनामधिपतिः ईशः स मा माम् अवतु पातु । अस्मिन् ब्रह्मणि ब्रह्मकर्मणि होमादौ, पुनः अस्मिन् क्षत्रे क्षत्रकर्मणि प्रजापालनादौ, पुनः अस्यामाशिषि ब्राह्मणैः सम्पादितेष्टाशासने पुत्रादिसुखकामनायां वा अस्यां कन्यायाम् पुरोधायाम् पुरः स्थितायाम्, अस्मिन् कर्मणि विवाहे अस्यां देवहूत्यां देवताह्वाने देवतोद्देशेन होमे वा । स्वाहा सुहुतमस्तु । अयं च वाक्यार्थ उपरिष्टादपि सप्तदशसु मन्त्रेषु सम्बध्यते । शेषं स्पष्टम् ॥

ॐ वायुरन्तरिक्षस्याधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदं वायवे ऽन्तरिक्षस्याधिपतये न मम ४

ॐ सूर्य्यो दिवोऽधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदᳬं सूर्य्याय दिवोऽधिपतये न मम ५

ॐ चन्द्रमा नक्षत्राणामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬंस्वाहा । इदं चन्द्रमसे नक्षत्राणामधिपतये न मम ६

ॐ बृहस्पतिर्ब्रह्मणोऽधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदं बृहस्पतये ब्रह्मणोऽधिपतये न मम७

ॐ मित्रः सत्यानामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदं मित्राय सत्यानामधिपतये न मम ८

ॐ वरुणोऽपामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदं वरुणायापामधिपतये न मम ९

ॐ समुद्रः स्रोत्यानामधिपतिः स माऽवत्वस्मिन्ब्र-

ह्मण्यस्मिन् क्षत्त्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदᳬं समुद्राय स्रोत्यानामधिपतये न मम १०

ॐअन्नᳬं साम्राज्यानामधिपति तन्माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्त्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदमन्नाय साम्राज्यानामधिपतये न मम ११

ॐसोम ऽओषधीनामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्त्रेऽस्यामाशिष्यस्यां पुरोधायाम-स्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदᳬं सोमायौषधीनामधिपतये न मम १२

ॐसविता प्रसवानामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्त्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदᳬं सवित्रे प्रसवानामधिपतये न मम १३

ॐरुद्रः पशूनामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्त्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदᳬं रुद्राय पशूनामधिपतये न मम १४ प्रणीतोदकस्पर्शः ।

ॐत्वष्टा रूपाणामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्त्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬं स्वाहा । इदं त्वष्ट्रे रूपाणामधिपतये न मम १५

ॐविष्णुः पर्वतानामधिपतिः स माऽवत्वस्मिन्ब्र-

ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬ स्वाहा । इदं विष्णवे पर्वतानामधिपतये न मम १६

ॐमरुतो गणानामधिपतयस्ते माऽवन्त्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬ स्वाहा । इदं मरुद्भ्यो गणानामधिपतिभ्यो न मम १७

ॐपितरः पितामहाः परेऽवरे ततास्ततामहाः । इह माऽवन्त्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳬ स्वाहा । इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यो न मम१८

प्रणीतोदकस्पर्शः । अत्रापि दक्षिणा । अद्येत्यादि सं. अमुकशर्म्मा सवधूकोऽहम् अभ्यातानहोमस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च इमां दक्षिणाम् आचार्य्यब्राह्मणाभ्यां विभज्य दास्ये। मन्त्रपाठः । उत्सर्गे च तुरीये च प्रयच्छन्त्वनलादयः । पुत्रान् लक्ष्मीं तथा कामानुभयोः स्त्रीकुमारयोः ॥

अथापरोऽग्न्यादिपक्षकहोमः ।

(अग्निरैत्वित्यादीनां चतुर्णां मन्त्राणां प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता आज्यहोमे विनियोगः) ।

ॐअग्निरैतु प्रथमो देवतानाᳬ सोऽस्यै प्रजां मु-

---

मन्त्रार्थः । अग्निः एतु आगच्छतु देवतानां यज्ञभुजां प्रथमः आद्यः प्रधानत्वात् । स चाग्निः अस्यै-अस्याः कन्यायाः प्रजां भाविपुत्रादिरूपां मुञ्चतु मोचयतु मृत्युपाशात् । यद्वा मृत्युपाशात् अग्निः अस्यै कन्यायै प्रजां मुञ्चतु ददातु । तच्च प्रजामोचनं राजा वरुणोऽनुमन्यताम् अनुजानातु । यथा येनानु-

अतु मृत्युपाशात् । तदयᳪ राजा वरुणोऽनुमन्यतां यथेयᳪ स्त्री पौत्रमघन्न रोदात्स्वाहा। इदमग्नये न मम॥१॥

ॐइमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुद्ध्यतामियᳪ स्वाहा। इदमग्नये न मम ॥२॥

ॐस्वस्ति नो ऽअग्ने दिव ऽआ पृथिव्या विश्वानि धेह्ययथा यजत्र। यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रᳪ स्वाहा। इदमग्नये न मम॥३॥

---

घानेन प्रकारेण वा इयं कन्या पौत्रं पुत्रभवमघं दुःखं न रोदात् शोकं प्राप्य न रोदिष्यति। कदाचिदपि अपत्यवियोगो मा भूदित्यर्थः ॥ १ ॥

इमां कन्यां गार्हपत्योऽग्निस्त्रायतां गार्हपत्याभिधो भाव्यग्निः पालयतु-इमां पत्नीमग्निहोत्रिणीं कृत्वा रक्षतु। अस्यै-अस्याः कन्यायाः प्रजां दीर्घमायुः निर्दुष्टबहुकालजीवनं नयतु प्रापयतु। इयं चाशून्योपस्था सफलप्रसवा यद्वा नित्यं भर्तृसङ्गोत्सङ्गा अस्तु भवतु, एवं जीवताम् दीर्घायुषां माता चास्तु-जीवपुत्रा भवत्वित्यर्थः॥ किञ्च पौत्रं पुत्रसम्बन्धजमानन्दं सुखम् अभि अधिगम्य, आभिमुख्येन सर्वभावेन वा प्राप्य विविधं बुध्यतां जानातु-सर्वज्ञाऽस्त्वित्यर्थः। यद्वा पौत्रमानन्दं विशिष्टतया बुध्यतां निद्रासुखापेक्षां त्यक्त्वा जागर्तु इत्यर्थः ॥ २ ॥

हे अग्ने, यजन्तं त्रायतइति यजत्रः हेयजत्र, यस्मात् त्वं सर्वप्रत्यक् अतो नोऽस्माकं विश्वानि सर्वाणि कर्माणि अयथा अन्यथा कृतानि कर्माणि स्वस्ति संपूर्णानि यथा स्युस्तथा धेहि अनुकूलानि कृत्वा स्थापय। किञ्च दिव आ स्वर्गं लोकमभिव्याप्य आपृथिव्याः पृथिवीमभिव्याप्य च यत् महि महिमा तदस्मासु धेहि स्थापय। किञ्च अस्यां पृथिव्यां जातं यद् द्रविणं धनं, चित्रं नानारूपं स्वर्णरत्नादिभेदेन, प्रशस्तं प्रशस्यं श्रेष्ठं यच्च दिवि स्वर्गे जातं तदप्यस्मासु धेहि ॥ ३ ॥

*ॐसुगं नु पन्थाम्प्रदिशन्न ऽएहि ज्योतिष्मद्धेह्यजरन्न ऽआयुः। अपैतु मृत्युरमृतन्न ऽआगाद्वैवस्वतो नो ऽअभयं कृणोतु स्वाहा। इदं वैवस्वताय न मम॥४॥

अत्र शिष्टाचारात्, अनन्तर्धाने संस्कारभास्करे "रौद्री पैत्री तथा मृत्योः" इति कारिकायां दोषश्रवणाच्च वधूं वस्त्रेणान्तर्धाय मनसा मन्त्रं पठन् मृत्यवे जुहोति। (परंमृत्यविति संकुसुकऋषिस्त्रिष्टुप्छन्दो मृत्युर्देवता होमे विनियोगः)।

+ॐपरं मृत्यो ऽअनु परेहि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाᳬ रीरिषो मोत वीरान्-स्वाहा। इदं मृत्यवे न मम॥५॥ प्रणीतो-

---

*हे अग्ने नोऽस्मान् एहि आगच्छ। अस्मद्गृहानागत्य नोऽस्माकं सुगं सुखगम्यं पन्थाम् पन्थानम् अर्चिरादिमार्गम् प्रदिशन् उपदिशन् सम्पादयन्निति यावत् आयुः निर्दुष्टजीवनं धेहि। कथम्भूतमायुः, अजरं जरारोगादिपराभवरहितम्। अजरमित्यग्निविशेषणं वा विभक्तिव्यत्ययेन। पुनः कथम्भूतं, ज्योतिष्मत् प्रकाशकम्। तत्प्रतिबन्धको मृत्युरपि नोऽस्माकं भवत्प्रसादादपैतु अपगच्छतु। अमृतमानन्दश्च नोऽस्मान् आगात् आगच्छतु। वैवस्वतो यमश्च नोऽस्माकम् अभयं त्वत्सम्बन्धेन पापाभावात् दुःखहेतुभयाभावं कृणोतु करोतु॥४॥

+अ० ३५ म० ७

हे मृत्यो परा-पराङ्मुखो भूत्वा परमन्यं पन्थां पन्थानम् मार्गम् इहि अनुगच्छ। तमेव दर्शयति-यस्ते तव पन्था देवयानात्पथ इतरः तुच्छोऽन्यः पितृयानाख्योऽस्ति। देवा यान्ति यस्मिन् स देवयानः। किञ्च चक्षुष्मते ज्ञानिने शृण्वते च ते तुभ्यं हेमृत्यो किञ्चिद्ब्रवीमि वदामि। आदरार्थं वचनम्, नहि तस्यादृष्टमश्रुतं वाऽस्ति। हे मृत्यो नः अस्माकं प्रजां सन्ततिं वंशपरम्पराम् मा रीरिषः मा हिंसीः। उत अपि च वीरान् पुत्रान् मा हिंसीः॥५॥

दकस्पर्शः । अत्रापि दक्षिणा । अद्येह अमुकशर्म्मा सवधूकोऽहं कृतैतदग्न्यादिपञ्चकहोमस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च इमां दक्षिणाम् आचार्य्यब्रह्मभ्यां विभज्य दास्ये ॐ तत्सत् न मम । मन्त्रपाठः–गोविन्दो गोकुले तिष्ठन्गोपीभिर्विहरन्सह । तुष्टिपुष्टिकरो नित्यमुभयोः स्त्रीकुमारयोः ॥

अथ पाणिग्रहणाङ्गभूतो लाजहोमः । अत्र कन्यायाः कर्तृत्वम् । आयुष्मानस्तु मे पतिरिति मन्त्रलिङ्गात् । लाञ्जुहोति सः हितेन तिष्ठतीति वचनाच्च । ततस्तिष्ठन्ती कुमारी अञ्जलिं विदधाति । वरश्च अनुपृष्ठं परिक्रम्य उत्तराभिमुखो वध्वा दक्षिणतस्तिष्ठन्कुमार्य्यञ्जलिं यथासमाचारमञ्जलिना दक्षिणहस्तेन वाऽऽलभते । अथ कुमार्या ज्येष्ठः कनिष्ठो वा भ्राता लौकिकाग्निसिद्धान् शमीपत्रमिश्रान् लाजान् ( भृष्टान् व्रीहीन् ) घृतेनाभिघार्य सम्प्रोक्ष्य नवीनशूर्पे चतुर्द्धा कृत्वा तेष्वेकं भागं प्रथमं कुमार्य्यञ्जलावावपति । कुमारी च तानञ्जलिना गृहीत्वा प्राङ्मुखी तिष्ठन्ती मन्त्रं पठन्ती जुहुयात् । (अर्य्यमणमित्यादिमन्त्राणामाथर्वणऋषिरनुष्टुप्छन्दः लिङ्गोक्ता देवता लाजहोमे विनियोगः) ।

*ॐ अर्य्यमणं देवं कन्या ऽअग्निमयक्षत । स नो ऽअर्य्य

---

*लाजहोममन्त्रार्थः । कन्याः पूर्वाः प्रथममर्यमणं सूर्यं देवं कान्तम् अग्निमग्निस्वरूपम् वरलाभाय अयक्षत अयजन् । लङि छान्दसं रूपम् । स चार्यमा देवः ताभिरिष्टो यतोऽतो नोऽस्मान् इदानीं परिणीताः कन्या इतः पितृकुलात् प्रमुञ्चतु प्रमोचयतु, मा पतेः–पत्युः कुलात् सहचरितत्वाद्वा मा प्रमोचयतु । यद्वा वरो ब्रूते कन्याः यम् अर्यमणम् अग्निरूपेणायजन् सोऽर्यमा देवः पतेः पत्युः मत्तः सकाशात् इमां नो प्रमुञ्चतु मा प्रमोचयतु, इतः अस्याः कन्यायाः सकाशात् मा मां नो प्रमुञ्चतु । अत्रेदं मन्त्रत्रयं कन्यैव वरपाठिता पठति ॥ १ ॥ .

मा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा। ॐइदमर्यम्णे न ममेति वर एव ॐकारपूर्वकं त्यागं कुर्यात् इत्यञ्जलिस्थलाजानां तृतीयांशम् अञ्जलिवामपार्श्वेन जुहोति। नात्र संस्रवधारणम्। शेषस्य होष्यमाणत्वात्।

*ॐइयं नार्य्युपब्रूते लाजानावपन्तिका। आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा। ॐइदमग्नये न मम इत्यर्द्धं जुहोति।

+ॐइमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव। मम तुभ्यं च संवननं तदग्निरनुमन्यतामियꣳ स्वाहा॥ ॐइदमग्नये न मम इति सर्वानञ्जलिस्थलाजान् जुहोति।

अथ वरो वध्वाः साङ्गुष्ठं दक्षिणं हस्तमुत्तानं गृह्णाति। (गृभ्णामीत्यादीनां चतुर्णां मन्त्राणां याज्ञवल्क्यभरद्वाजाथर्वणप्रजापतय ऋषयः त्रिष्टुबुष्णिगनुष्टुब्जगतीपङ्क्तिश्छन्दांसि भगार्य्यमसवितृपुरन्ध्रयो देवताः वधूपाणिग्रहणे विनियोगः)

÷ॐगृभ्णामि ते सौभगत्वाय हस्तं मया पत्या

---

*इयं नारी वधूः उप—पत्युः समीपे ब्रूते लाजान् भृष्टान् व्रीहीन् आवपन्तिका अग्नौ विभागशः प्रक्षिपन्ती। स्वार्थे कः। किं ब्रूते, तदाह—मम पतिः आयुष्मान् सकलदीर्घायुरस्तु भवतु मम ज्ञातयः एधन्तां वर्धन्तामिति॥ २॥

+किं च हेपते इमान् लाजानग्नौ आवपामि प्रक्षिपामि तव समृद्धिकरणं समृद्धिहेतवे। अतो मम कन्यायाः तुभ्यं च तव च भर्तुः (मलोपश्छान्दसः) संवननं वशीकरणम् अन्योन्यमनुरागः तदयमग्निः अर्यमा अनुमन्यताम् अनुमोदनं करताम्, इयं च स्वाहा तत्पत्नी अनुमन्यताम्॥ ३॥

÷पाणिग्रहणमन्त्रार्थः॥ हेकन्ये ते तव हस्तं करं गृभ्णामि गृह्णामि। ह्रग्रहोर्भश्छन्दसीति भत्वम्। यथा येन गृहीतहस्तेन मया पत्या भ-

जरदष्टिर्यथाऽऽसः । भगो ऽअर्य्यमा सविता पुरन्धि- र्मह्यन्त्वाऽदुर्गार्हपत्याय देवाः १ *अमोऽहमस्मि सा त्वꣳसा त्वमस्यमो ऽअहम् । सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् २ +तावेव विवहावहै सह रेतो दधावहै । प्रजां प्रजनयावहै पुत्रान्विन्दावहै बहून् ३ ÷ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू

---

र्थां सह जरदष्टिः जरच्छरीरा बहुवर्षायुष्मती आसः । भवासि इत्यर्थे निपातोऽयम् । ग्रहणमेव तावत्कुतः, तत्राह—भगादयस्त्रयो देवाः पुरंधिर्लक्ष्मीश्च त्वा त्वां महाम् अदुः दत्तवन्तः । यद्वा पुर- न्धिः-पुरन्धिम् । द्वितीयार्थे प्रथमा । येषां तु रूपवती वा । तथाच श्रुतिः, पुरंधिर्योषेति, योषित्येव रूपं दधातीति च ॥ किमर्थम्, गार्हपत्याय—गृहस्वामिनीत्वाय, आविगार्हपत्यं से- वितुं वा । किञ्च सौभगत्वाय सुभगानां समूहः सौभगं तस्य भावः सौभगत्वं तस्मै तदर्थं निरतिशयानन्दाप्तये इत्यर्थः ॥ १ ॥

*हे कन्ये यथा अमो विष्णुरहमस्मि । अमति सर्वत्र गच्छति सर्वं जानातीति वा न मिनोति हिनस्तीति वा अमः । तथा सौति सुवति सूते वा विश्वमिति सा लक्ष्मीः त्वमसि । किञ्च देवीत्रयीरूपा त्वमसि, अमो देवत्रयरूपोऽहमस्मि । किञ्च अहं सामा- स्मि त्वम् ऋगसि । अहं द्यौरस्मि त्वं पृथिव्यसि ॥ २ ॥

+तावेव आवां विवहावहै विवाहं करवावहै, सह—संयुक्तौ भूत्वा रेतः पुत्रदेहरूपं दधावहै धारयाव, ततः प्रजां स्त्रीरूपां सन्ततिं प्रजनयावहै उत्पादयाव, पुत्रान् पुत्रपौत्रादीन् बहून् विन्दावहै लभावहै ॥ ३ ॥

÷ते च पुत्रा जरदष्टयः शतायुषः सन्तु । आवामपि संप्रियौ सम्यक् प्रीतौ परस्परं प्रेमशालिनौ, रो- चिष्णू सुदीप्तौ शोभमानौ वा, सुमनस्यमानौ शोभन- मनोवृत्तिं कुर्वाणौ—सुमनसो भावः सौमनस्यं तत्कुर्वाणावि- त्यर्थः । सन्त्विति क्रियां विपरिणमय्य भवाव इति योज्यम् । इन्द्रिय-

सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतम् ४ इति।

असवर्णायां हस्तम् इत्यस्य स्थाने शरम् इत्यूहः। अथैनामश्मानमारोहयति। अग्नेरुत्तरतः स्थितेऽश्मनि वरो वध्वाः दक्षिणं पादं स्वदक्षिणहस्तेन गृहीत्वा वक्ष्यमाणमन्त्रेण स्थापयेत्। (आरोहेममित्यस्याथर्वणऋषिरनुष्टुप्छन्दो वधूर्देवता अश्मारोहणे विनियोगः)।

*ॐआरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव। अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः—इति तामश्मन्यारोप्य तस्याः शिरसि हस्तं नीत्वा वरो गाथां गायति। (सरस्वतिप्रेदमिति विश्वावसुऋषिरनुष्टुप्छन्दः सरस्वती देवता *गाथागाने* विनियोगः)

+ॐसरस्वति प्रेदमव सुभगे वाजिनीवति। यां

---

पाठकमाशास्ते—वयं च पुत्रादिसहिताः शतं शरदः वत्सरान् पश्येम रूपग्रहणसमर्थाः स्याम, तथा शतं शरदो जीवेम निरुपद्रवं *प्राणान् धारयाम*, तथैव शतं शरदः *शृणुयाम* निर्दुष्टं शब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियं भवत्वित्यर्थः ॥ ४ ॥

*अश्मारोहणमन्त्रार्थः। हे कन्ये इमं पुरोवर्तिनमश्मानं प्रस्तरमारोह आक्राम अधितिष्ठेति यावत्। आरोहणेन संस्कृता त्वम् अश्मेव पाषाणवत् स्थिरा दृढा भव। किञ्च अभि अधिकृत्य आक्रम्य तिष्ठ। कान्, तत्राह—*पृतनां संग्राममिच्छन्ति पृतन्यन्ति त एव पृतन्यन्तः* तान् पृतन्यतः कलहकारिण इत्यर्थः। किञ्च पृतनाभिः सेनाभिर्यतन्त इति पृतनायतः तान् पृतनायतः अव अर्वाचीनान् कृत्वा बाधस्व भग्नोद्यमान् कुरु ॥

+गाथागानमन्त्रार्थः॥ हे सरस्वति वाग्देवते, सुभगे कल्याणि, वाजिनीवति—वाज अन्नं तदस्ति अस्यामिति वाजिनी अश्वशाला यद्वा वाजाः पक्षाः सन्ति यस्या इति वाजिनी हंसी तद्व-

स्त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः १ *यस्या भूतᳫं समभवद्यस्यां विश्वमिदं जगत् । तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः २ इति ।

अथ वधूवरौ प्रदक्षिणमग्निं परिक्रामतः । वर एव मन्त्रं पठेत् । (तुभ्यमग्रइत्याथर्वण ऋषिरनुष्टुप्छन्दोऽग्निर्देवता परिक्रमणे विनियोगः) ।

+ॐतुभ्यमग्रे पर्य्यवहन्त्सूर्य्यां वहतु ना सह । पुनः पतिभ्यो जायां दाऽग्ने प्रजया सह—इति पठन् वधूमग्रतःकृत्वा परिक्रामेत् । (अग्रे तु शुभदा पत्नी माङ्गल्ये सर्वकर्मणीति सं. भा. कारिकावचनात्) । एवं पुनर्वारद्वयं लाजहोमपाणिग्रहणाश्मारोहणगाथागानपरिक्रमणानि कुर्यात् । तृतीयपरिक्रमणानन्तरं कुमार्या भ्राता शूर्पकोणप्रदेशेन सर्वान् लाजान् कुमार्यञ्जलौ ददाति । सा च तिष्ठन्ती जुहोति । (भगायेति मन्त्रस्य प्रजापतिर्ऋषिर्यजुश्छन्दः भगो देवता लाजहोमे विनियोगः)

---

ती वाजिनीवती हे वाजिनीवति, इदं युग्मं कर्मच प्राच प्रकृष्टतया अद्य रक्ष । त्वा त्वाम् अस्य विश्वस्य भूतस्य जातस्य पृथिव्यादेर्या प्रजायां प्रकृष्टां जनयित्रीमाहुः । किंभूताम्, अग्रतः-प्रथमाम् ॥ १ ॥

*तदेव प्रपञ्चयति, यस्यां प्रकृतिरूपायां त्वयि इदं सर्वं विश्वं, तथा भूतं पृथिव्यादि सर्वं जगत्-अस्तं गच्छत् आस । प्रलये लीनमित्यर्थः । पुनः सृष्ट्यादौ च यस्याः सकाशात् समभवत् जातं-तस्याः सरस्वत्याः सम्बन्धिनीं तां गाथां गुणप्रभावस्तुतिप्रकाशिकाम् अद्य गास्यामि, या श्रुता सती स्त्रीणामुत्तमं श्रेष्ठं यशः कीर्तिं ददाति ॥ २ ॥

+परिक्रमणमन्त्रार्थः । हेऽग्ने तुभ्यं त्वदर्थमेव सोमादयः अग्रे पूर्वं जन्मादिनादारभ्य पर्यवहन् परिगृहीतवन्तः अतः सूर्याम् सूर्यसम्बन्धिनीं भार्यामिमां पतिभ्यः सोमादिभ्यो भवान् वहतु । किंभूतः, नापुरुषः परमपुरुषार्थहेतुरित्यर्थः । ऊढ्वातां जायां जायात्वेन पुनः प-

ॐ भगाय स्वाहा । ॐ इदं भगाय न मम इति वरः । ततः समाचारात्तूष्णीं *चतुर्थं परिक्रमणं कृत्वा यथास्थानमागत्योपविश्य ब्रह्मणाऽन्वारब्धः ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम इति मनसा प्रजापतिं ध्यात्वा हुत्वा एनां वधूमुदीचीं सप्त

---

ध्यात् स्वभोगानन्तरं प्रजया पुत्रैः सह मह्यं दाः देहि । सन्धितार्पः ॥

*समाचारात् क्रियमाणे चतुर्थपरिक्रमणे वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छेताम् । अग्नेरिव मण्डपस्थानां ब्रह्मादीनामपि पूज्यबुद्ध्या प्रदक्षिणीकरणस्य 'मृदं गां दैवतं विप्रम्' इतिमनुवचनसिद्धत्वात् । "दक्षिणां दिशमाश्रित्य यमो मृत्युश्च तिष्ठतः । तयोः संरक्षणार्थाय ब्रह्मा तिष्ठति वाह्यतः" ॥ इत्यादिवचनैः "अथ परिक्रामतः" इतिविधिबोधितेषु त्रिषु परिक्रमणेषु ब्रह्माग्न्योरन्तरा गमनेऽपि चतुर्थे नान्तरा गमनम् । इतरथावृत्त्यायेव पूर्वावृत्तिसजातीयनियमसत्त्वात् । इतरथावृत्तिस्तु नात्र । तत्कारणस्य बहिरङ्गव्यवधानस्याभावात् । "आवृत्तिसामन्तेषु प्रदक्षिणम्" इतिसूत्रानन्तरमनुल्लिख्य 'गार्हपत्याहवनीयौ न व्यवेयात' इतिव्यवधाननिषेधकसूत्रानन्तरं "विहृत्यावृत्य वा इतरथावृत्तिः" इतिसूत्रणात् इतरथावृत्तेर्व्यवायकारणकत्वावधारणात् । कात्यायनो हि गार्हपत्याहवनीययोर्व्यवधानं निषिध्य प्रदक्षिणीकरणादौ व्यवायावश्यंभावं मन्यमानो व्यवायकरणदोषपरिजिहीर्षया विहृत्येति इतरथाऽऽवृत्तिं विदधाति । ततश्च प्रकृते वधूवरयोः स्वामित्वेनान्तरङ्गत्वात् ब्रह्मणश्च ऋत्विक्त्वेन बहिरङ्गत्वात् वधूवरयोरन्तरा गमने बहिरङ्गव्यवायाभावान्नेतरथाऽऽवृत्तिः । अन्तरङ्गबहिरङ्गभावश्च 'हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वमन्तरम्' इति परिभाषायां कात्यायनेन प्रतिपादितः । एवंच चतुर्थपरिक्रमणाभिप्रायेण 'परिक्रमणं कुर्वन्तौ वधूवरौ ब्रह्माग्न्योर्मध्ये न गच्छेताम्' इति हरिहरोक्तिः साधीयस्येवेति नात्र तत्खण्डनेऽभिनिवेष्टव्यमिति दिक् । सूत्रव्याख्यायां 'ब्रह्माग्न्योर्मध्ये गच्छेतामित्येव युक्तम्' इत्युल्लेखस्तु परिक्रमणत्रयाभिप्रायकः इति बोध्यम् ।

पदानि प्रक्रमयति । तद्यथा-(एकमिषे इत्यादीनां सप्तानां मन्त्राणां प्रजापतिर्ऋषिर्यजुश्छन्दः लिङ्गोक्ता देवता सप्तपदीप्रक्रमणे विनियोगः)

*ॐएकमिषे विष्णुस्त्वानयतु इति वरेणोक्ते वधूरेकं दक्षिणपदमुदग् ददाति वामन्त्वनन्तरं निरर्थकमेव दद्याद् । एवमुत्तरत्र सर्वत्र बोध्यम्। ॐद्वे ऊर्जे विष्णुस्त्वा नयतु इति द्वितीयम् । ॐत्रीणि रायस्पोषाय विष्णुस्त्वा नयतु इति तृतीयम् । ॐचत्वारि मायोभवाय विष्णुस्त्वा नयतु इति चतुर्थम् । ॐपञ्च पशुभ्यो विष्णुस्त्वा नयतु इति पञ्चमम् । ॐषड्ऋतुभ्यो विष्णुस्त्वा नयतु इति षष्ठम् । ॐसखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु-इति सप्तमम् । इति रीत्या वर एकैकं मन्त्रमुच्चार्य सप्त पदानि दापयति उत्तरोत्तरं दक्षिणपादेन । अथाचारात् सुश्वेताः सुपुष्टाः घृताक्ताः सप्त वर्त्तिकाः मण्डलस्य तण्डुलमध्ये संस्थाप्य तन्मध्यादेकैकां वर्त्तिकामुत्तरतः संस्थाप्य वधूस्तदुपरि दक्षिणपादं धृत्वैभिरेव मन्त्रैः षड्वर्तिका निर्वाप्य सप्तमीं ज्वलन्तीमेव स्थापयेत् । अथ वरः यथास्थानमागत्य निष्क्रमणप्रभृति सुरक्षितात् दक्षिणतो वाग्यतस्थितद्विजस्कन्धस्थितात् उदककुम्भादुदकमादाय दर्भपिञ्जूलेन दूर्वामुष्ट्या

*सप्तपदीमन्त्रार्थः हे कन्ये एकं प्रथमं पदम् इषे अन्नाय विष्णुस्त्वा नयतु ।ऊर्जे बलाय द्वे पदे द्वितीयं पदं विष्णुस्त्वा नयतु । एवमुत्तरत्र सर्वत्र योज्यम् । रायस्पोषाय धनपुष्ट्यै, मायः सुखं तस्य भव उत्पत्तिः तदर्थं, पशुभ्यः पश्वादिभ्यः तत्तत्सुखाय, ऋतुभ्यः ऋतुजन्यार्थभोगार्थं, सखे इहामुत्र च मित्र सा त्वं सप्तपदा भूरादिसप्तलोकप्रख्याता भव, मामनुव्रता अनुवर्तिनी च भव ॥

आम्रपल्लवेन वा वधूमूर्द्धन्यभिषिञ्चति। (आपः शिवा इति प्रजापतिर्ऋषिः यजुश्छन्दः आपो देवताः वधूमूर्द्धाभिषेचने विनियोगः )

*ॐआपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्-इति। पुनः (ॐआपोहिष्ठेति त्र्यृचस्य सिन्धुद्वीपऋषिर्गायत्रीछन्द आपो देवताः वधूमूर्द्धाभिषेके विनियोगः)।

ॐआपो हि ष्ठा मयोभुवस्ता न ऽऊर्जे दधातन। महे रणाय चक्षसे १ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः २ तस्मा ऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ३ इतित्र्यृचेनाभिषिञ्चेत्। अथ दिवाविवाहे सूर्यमुदीक्षस्वेति वरेण प्रेषिता वधूः सूर्यमुदीक्षते।(तच्चक्षुरिति दध्यङ् आथर्वण ऋषिः +ब्राह्मी त्रिष्टुप्(पुरउष्णिक्)छन्दः सूर्यो देवता सूर्योदीक्षणे विनियोगः )

÷ॐतच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत्। पश्येम

---

*अभिषेकमन्त्रार्थः। या आपः शिवाः कल्याणहेतवः शिवतमाः अतिशयाभ्युदयकारिण्यः शान्ताः सुखकर्त्र्यः शान्ततमाः परमानन्ददात्र्यः ता आपः ते तव भेषजमारोग्यं कृण्वन्तु कुर्वन्तु॥

+तच्चक्षुरिति ब्राह्मी त्रिष्टुप् सौरीत्येव युक्तः पाठः न तु पुरउष्णिगिति, तद्गुणाभावादिति सर्वानुक्रमभाष्ये स्पष्टम्॥

÷अ ३६। मं. २४ तत् प्रसिद्धं चक्षुः जगतां नेत्रभूतम् आदित्यरूपं पुरस्तात्पूर्वस्यां दिशि उच्चरत् उच्चरति उदेति। कीदृशं तत्, देवहितं देवैर्हितं स्थापितं शुक्रं शुद्धं पापासृष्टम्, तस्य प्रसादात् शतं शरदो वर्षाणि वयं पश्येम शतवर्षपर्यन्तमव्याहतचक्षुरिन्द्रिया भवेम। प्रार्थनायां लिङ्। शतं शरदो जी-

शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्-इतिमन्त्रेण। अथ वरो वध्वाः दक्षिणांसस्योपरि स्वदक्षिणहस्तं नीत्वा तस्या हृदयमालभते। ( मम व्रते तऽइति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता वधूहृदयालम्भने विनियोगः )

*ॐमम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं तेऽअस्तु। मम व्वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्-इतिमन्त्रेण।अथ वरो वधूमभिमन्त्रयते। (सुमङ्गलीरिति प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता वध्वभिमन्त्रणे विनियोगः )

+ॐसुमङ्गलीरियं व्वधूरिमाꣳ समेत पश्यत।

---

वेम अपराधीनजीवना भवेम। शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम। शतं शरदोऽदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्याम। शताच्छरदः शतवर्षोपर्यपि भूयश्च बहुकालं पश्येमेत्यादि योज्यम्॥

*मन्त्रार्थः। हेकन्ये इत्यध्याहारः। मम व्रते शास्त्रविहितनियमादौ ते तव हृदयं मनः दधामि स्थापयामि। किञ्च मम चित्तमनु मम चित्तानुकूलं ते तव चित्तमस्तु। त्वं च मम वाचं वचनम् एकमना अव्यभिचारिमनोवृत्तिः जुषस्व हर्षचित्तादरेण कुरुष्व। त्वा त्वां स एव प्रजापतिः मह्य मदर्थं मां प्रसादयितु नियुनक्तु नियोजयतु॥

+मन्त्रार्थः। हेविवाहदेवताः इय वधूः सुमङ्गलीः शोभनमङ्गलरूपा ( विसर्गश्छान्दसः ) अत इमां कन्यां समेत सङ्गच्छत सङ्गत्य च इमां पश्यत मङ्गलदृष्टया विलोकयत। किञ्च अस्यै कन्यायै सौभाग्यं दत्त्वा अस्तं गृहं याथ यात, न विपरेत-न विरुद्धमुखतया परेत, न अपगच्छत। पुनरपि मङ्गलमाशास्य पुनरागमनाय व्रजतेत्यर्थः। यद्वा यदस्तं याथ तर्हि न विपरेते-

सौभाग्यमस्यै दत्त्वा याथास्तं विपरेत न-इति मन्त्रेण । वधूं पश्यन् मन्त्रं पठति । अत्रावसरे "उत्तरतऽआयतना हि स्त्री" ( श. ब्रा. कां. ८ अ. ४ ब्रा. ४ कं. ११ ) इतिश्रुतिलिङ्गानुमितात् शिष्टाचारात् वरस्य वामभागे वधूमुपवेशयन्ति, तस्याः सीमन्ते वरेण सिन्दूरमपि दापयन्ति वृद्धाः । साऽपि वरस्याञ्चलं प्रतिगृह्य तं यथास्थानं दक्षिणभागे निवेशयति । अथाग्नेः प्रागुदग्वा पूर्वकल्पिते अनुगुप्ते (सर्वतः परिवृते) आगारे (गृहे) उत्तरलोम्नि प्राग्ग्रीवे आनडुहे चर्मणि आस्तीर्णे रक्तवस्त्रखण्डे वा कश्चन वृद्धपुरुषो, वृद्धो वर एव वा वधूमुत्थाप्योपवेशयति-(इहगाव इति प्रजापतिऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता वधूपवेशने विनियोगः)

*ॐइह गावो निषीदन्त्विहाश्वा ऽइह पूरुषाः । इहो सहस्रदक्षिणो यज्ञ ऽइह पूषा निषीदतु-इति मन्त्रेण । ततो वरस्तस्मात्स्थानादागत्य तां वधूं यथास्थानमुपवेश्य स्वयं चोपविश्य ग्रामवचनं कुर्यात् । ग्रामेति स्वकुलवृद्धाः स्त्रियः कथ्यन्ते । ततो वधूहस्तेन वरस्य पादप्रक्षालनम्, वरवध्वोः परस्परं तिलकाक्षतारोपणं, दधिगुडप्राशनं, परस्परोच्छिष्टलापनं च यथादेशकुलाचारं भवति । तस्मात्तयोर्ग्रामिः प्रमाणमिति श्रुतिवचनम् ॥ अत्रैकपादप्रक्षालनं कृत्वा द्वितीयपादप्रक्षालनं वरात् सुवर्णादिद्रव्यं गृहीत्वा

---

ति । अस्तं गृहा इतिश्रुतेः ॥

*मन्त्रार्थः । इह कन्यानिवेशने गाव अश्वाः पुरुषाश्च निषीदन्तु वसन्तु । इहपदावृत्तिः कर्तृभेदापेक्षया । किञ्च उ-पदार्थे इहैव सहस्रं गावो दक्षिणा यस्य स यज्ञः पूषा पुष्टिकरो निषीदतु । पूषा वै सहस्रदक्षिण आसेति श्रुतेः ॥

वधूः करोतीति पर्वतीयसमाचारः । ततः हस्तौ पादौ प्रक्षाल्याचम्य ब्रह्मणाऽन्वारब्धः ॐअग्नये स्विष्टकृते स्वाहा-इदमग्नये स्विष्टकृते न मम इतिस्विष्टकृद्धोमं विधाय संस्रवं प्राश्यापोऽथाय वाऽऽचम्य सजलपवित्राभ्यां मुखमार्जनं कृत्वा पवित्रप्रतिपत्तिमग्नौ स्वाहेति कृत्वा अग्नेः पश्चिमतः प्रणीताविमोकं कुर्यात् । ततः ब्रह्मणे पूर्णपात्रदानम् । अद्येहत्यादि सं० अमुकशर्म्मा सवधूकोऽहं विवाहहोमकर्म्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यं संप्रददे । अक्रन्कर्म्म कर्म्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म्म कृत्वाऽस्तं प्रेत सचाभुवः-इति मन्त्रपाठः ॥ पूर्णाहुतिस्तु नात्र । विवाहे व्रतबन्धे च शालायां चौलकर्मणि । गर्भाधानादिसंस्कारे पूर्णाहुतिं न कारयेत् ॥ इति गोभिलगृह्यभाष्ये गर्भाधानप्रकरणे वचनात् । अत्रैव स्वाचार्य्याय वरं ददाति । गौर्ब्राह्मणस्य वरः, ग्रामो राजन्यस्य, अश्वो वैश्यस्य । तदद्वराभावे विभवानुसारेण सुवर्णादिद्रव्यं दद्यात् । तत्र संकल्पः अद्येह अमुकगोत्रोऽमुकराशिरमुकशर्म्मा सवधूकोऽहं विवाहहोमकर्मणः साद्गुण्यार्थं संपूर्णफलप्राप्त्यर्थं च इमां गां रुद्रदैवताम् इदं गोप्रत्याम्नायीभूतं सुवर्णादिद्रव्यं वा वरत्वेन आचार्य्याय तुभ्यं सम्प्रददे। इति सं० यज्ञसाधनभूताया-इत्यादिमन्त्रेण आचार्य्याय गां तन्निष्क्रयभूतं सुवर्णादिकं वा समर्प्य भूयसीं संकल्पयेत् । अद्येह अमुकशर्म्मा सवधूकोऽहं विवाहकर्म्मणः साद्गुण्यार्थम् इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो नटनर्त्तकगायकेभ्यो दीनाऽनाथेभ्यश्च विभज्य दास्ये ॐतत्सत् इति संकल्प्य भूयसीं विसृज्य ऽञ्जलिपाणि कृत्वा

(व.भा.पृ.१८३) घृते छायां दृष्ट्वा अभिषेकतिलककरणरक्षासूत्रबन्धनमन्त्रापाठादिकं कारयेत् । चतुर्थीकर्महोमार्थमग्नेर्धारणीयत्वान्नास्य विसर्जनम् । अथ दिवा चेद्विवाहस्तदाऽस्तमितेऽर्के, रात्रौ चेद्विवाहस्तदा वरदानानन्तरं वधूं वरो ध्रुवं दर्शयति । अमुकि ध्रुवमीक्षस्वेति प्रेषिता वधूर्ध्रुवं मन्त्रेण प्रेक्षते ( ध्रुवमसीति प्रजापतिर्ऋषिः पङ्क्तिश्छन्दो ध्रुवो देवता ध्रुवोद्वीक्षणे विनियोगः )

*ॐ ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये(पोष्या) मयि । मह्यं त्वाऽदाद् बृहस्पतिः मया पत्या प्रजावती सञ्जीव शरदः शतम्–इति वरोच्चारितेन मन्त्रेण सह वधूः पश्येत् । सा यदि ध्रुवं न पश्येत् तथापि पश्यामीत्येव ब्रूयात् ॥

अथ वरवध्वोस्त्रिरात्रनियमाः । अक्षारालवणाशिनौ स्यातामृ, अधः शयीयाताम्, संवत्सरं द्वादशरात्रं षड्रात्रं त्रिरात्रं वा न मिथुनीभावमुपेयाताम् इति । इति विवाहहोमप्रयोगः ॥

ततः शङ्खघोषपूर्वकं विवाहमण्डपादभ्यन्तरं गत्वा जीवमातृपूजनं कुर्यात् । स्वासनउपविश्याचम्य अर्घं संस्थाप्य प्राणानायम्य अद्येहेत्यादि सं० अमुकशर्मा सवधूकोऽहं विवाहकर्मणि उत्तराङ्गत्वेन सर्वाभ्युदयप्राप्तये षट्लिखितानां कल्याण्यादिजीवमातॄणां पूजनं करिष्ये इति सं०

---

*मन्त्रार्थः । हे वधु त्वं ध्रुवं ध्रुवा शाश्वती असि भवसि । यतः त्वा त्वां ध्रुवं तारकाविशेषं पश्यामि दर्शयामि ( अन्तर्भूतो णिज् ज्ञेयः ) अतः त्वमपि मयि ध्रुवा शाश्वती पोष्या इ इतिच्छेदः इ–वार्थे मत्प्रजापोष्ट्री च एधि भव । एतदर्थमेव बृहस्पतिर्ब्रह्मा त्वा त्वां मह्यमदात् दत्तवान् । अतो मया पत्या भर्त्रा सह प्रजावती पुत्रपौत्रादियुक्ता शतं शरदो वर्षाणि जीव प्राणिहि ॥

पतन्त इत्यादि ॐभूर्भुवः स्वः कल्याण्यादिजीवमातर इहा-
गच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्र० ।

ध्यानम्—कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा ।
जयाच विजया चैव सप्तैता जीवमातरः ॥इति ध्यात्वा नाममन्त्रैः
पूजनम् ॐकल्याण्यैनमः ॐमङ्गलायैनमः ॐभद्रायैनमः ॐ
पुण्यायैनमः ॐपुण्यमुख्यै नमः ॐजयायैनमः ॐविजयायैनमः
इति मन्त्रैः पाद्यादि नैवेद्यान्तं सम्पूज्य नाममन्त्रेण जपं विधा-
य ॐवसोः पवित्रमसीति वसोर्धाराः पातयित्वा नीराजनं
विधाय पुष्पाञ्जलिं दद्यात् ।

ॐब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया ।
कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ॥
वाराही घनघोरघर्घरमुखी ऐन्द्री च वज्रायुधा ।
चामुण्डा गणनाथरुद्रमहिता रक्षन्तु नो मातरः ॥

इति पुष्पाञ्जलिः । अथ दक्षिणासङ्कल्पः अद्येहेत्यादि सं०
अमुकशर्म्मा सवधूकोऽहं विवाहकर्म्मण उत्तराङ्गत्वेन कृतस्य जी-
वमातृपूजनकर्म्मणः साङ्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये
ॐतत्सत् । दक्षिणां दत्त्वा समर्प्ये इतिमन्त्रपाठः ॥ ततः श्वश्र्वा-
दिभिः सुवासिनीभिर्म्महानीराजनपूर्वकं कृतपिष्टातकादितिल-
कौ वधूवरौ दध्यादिकं प्राश्य करौ मुखं च प्रक्षाल्य आ-
चम्याञ्चलग्रन्थित्वं स्वबध्वा एव समीपे निधाय धौतमुष्णी-
षं धौते वाससी च परिधाय स्वपक्षीयैः पुरुषैः सह श्व-
शुरगृहे बहुविधमोदनादि भक्ष्यं भुक्त्वा रात्रौ यथासुखं शयीत ।
ततः प्रभाते नित्यकर्म्म समाप्य द्वारपूजायां प्रथमवरणलब्धं
कुण्डिकादारुपीठादि वस्तु आप्तपुरुषद्वारा स्वगृहं प्रति सम्प्रेष्य
मुकुटादि परिधाय सवधूको वरः श्वश्रूश्वशुरयोः पादाव-

भिवन्द्य तत्रोदिष्टानन्यांश्चाभिवन्द्य वध्वा देहलीपूजां कारयित्वा सोत्साहो गणेशादिदेवतानामान्युचरन् बहिरागत्य वधूं श्वशुरपुरुषवाह्यशिबिकादियानमारोप्य अग्रतः कृत्वा स्वयमपि यानान्तरमारुह्य श्वशुरादिदत्तं सर्वं यौतकजातं निजाप्तपुरुषायत्तं विधाय मङ्गलतूर्यघोषपुरस्सरम् अन्यैर्जन्यमनुजैः सह स्वगृहं प्रत्यागच्छेत् ॥

अथ कन्यापिता यान्तु देवगणाः सर्वे इति स्थापितदेवता विसृज्य दीपविसर्जनं च कृत्वा तिलपात्रदानं कृत्वा अच्छिद्रविधानमाचरेत् । तद्यथा नित्यकर्मान्ते सुलिप्तायां भूमौ तिलपात्रसामग्रीं सम्पाद्य स्वासने प्राङ्मुख उदङ्मुखो वोपविश्याचम्य इष्टदेवाय पुष्पाञ्जलिं समर्प्य सामान्यार्घं संस्थाप्य सूर्यायार्घन्दत्त्वा विशेषार्घं संस्थाप्य तेन जलेनात्मानं तिलपात्रसामग्रीं च सम्प्रोक्ष्य ॐहिरण्यगर्भेत्यादिना तिलसुवर्णसहितं ताम्रपात्रं गन्धाक्षतपुष्पैः सम्पूज्य पवित्रपाणिः सङ्कल्पं कुर्यात् । ॐविष्णुः ३ अद्येहेत्यादि सं० अमुकशर्मा सपत्नीकोऽहं यथाशक्ति कृतस्य कन्यादानकर्मणः साङ्गतासिद्धिद्वारा श्रीपरमेश्वरप्रीतये ससुवर्णमिदं तिलपात्रं ब्राह्मणाय दास्ये ॐतत्सन्न मम । ब्राह्मणम् अर्घादिभिः सम्पूज्य दद्यात् । दानवाक्यम्—तिलाः पुण्याः पवित्राश्च सर्वकामफलप्रदाः । शुक्लाश्चैव तथा कृष्णा विष्णुगात्रसमुद्भवाः ॥ यानिकानिच पापानि ब्रह्महत्यासमानिच । तिलपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥ तिलाः स्वर्णसमायुक्ता दुरितक्षयकारकाः । विष्णोः प्रीतिकरा नित्यमतः शान्तिं प्रयच्छथ ॥ विप्रश्च ॐस्वस्तीत्युक्त्वा प्रतिगृह्य ॐकोदादित्यादिकामस्तुतिं पठेदिति ॥ अथाच्छिद्रविधिः पराशरस्मृत्युक्तः ॥ तत्रसङ्कल्पः ॐविष्णुः ३ अद्येहेत्यादि सं० सप-

मीकोऽहं कन्यादानाङ्गव्रतोपवासकर्मणि अच्छिद्रतासिद्धये न्यूनातिरिक्तपरिहारार्थम् अच्छिद्रविधानमाचरिष्यामि। श्रीविष्णुपादोदकं सतुलसीदलम् अर्घस्थितं करयोः कृत्वा प्रार्थयेत् । तत्रमंत्राः ॐव्रतानां व्रतराजेदं व्रतानां व्रतमुत्तमम् । व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥ सर्व्वं भवतु मेऽच्छिद्रं ब्राह्मणा भवतां गिरा । ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ॥ सर्वदेवमयो विप्रो न तद्वचनमन्यथा । उपवासो व्रतं चैव स्नानं तीर्थं जपस्तपः ॥ विप्रैः सम्भाषितं सर्वं सम्पूर्णं भवति ध्रुवम् । अन्नव्यञ्जनपानेषु शय्यायां ताम्रभाजने ॥ यदि भुक्तमभुक्तं वा स्वप्नान्तरमथापिवा । दन्तान्तरविलग्नं वा क्षम्यतां मधुसूदन ॥ व्यासवाल्मीकिवचनात्पाराशर्यवसिष्ठयोः । गर्गगौतमधौम्यात्रिकश्यपाङ्गिरसां तथा ॥ वचनान्नारदादीनां सम्पूर्णं भवतु व्रतम् । एतत्कन्यादानाङ्गोपवासव्रतं मया विधिहीनं देशहीनं कालहीनं क्रियाहीनं श्रद्धाहीनं दक्षिणाहीनं यत्कृतं तत्सुकृतमस्तु, यन्न कृतं तच्छ्रीविष्णोः प्रसादाद्ब्राह्मणानां वचनाच्च सर्व्वं परिपूर्णमस्तु । ॐअस्तु परिपूर्णम् इतिब्राह्मणप्रतिवचनं प्रतिगृह्य सतुलसीदलं चरणामृतं पात्रान्तरेण पिबेत् । तत्रमन्त्रौ--ॐअकालमृत्युहरणं सर्वव्याधिविनाशनम् । विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ॥ नैमिषाच्च प्रयागाच्च गङ्गासागरसङ्गमात् । कुरुक्षेत्राद्दशगुणं शालग्रामशिलोदकम् ॥ इति पीत्वा शेषं शिरसि धारयेत् । ॐप्रमादात्कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ॐविष्णवेनमः ३ । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐअच्युतायनमः ३ । कृतं कर्मेश्वरार्पणं

कुर्यात् । विष्ण्वर्पितानि कर्माणि सफलानि भवन्ति हि । अनर्पितानि कर्माणि भस्मनीव हुतं हविः ॥ नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् । विष्णोः समर्पितं सर्वं सात्त्विकं फलदं भवेत् ॥ इति संस्कारभास्करे बृहन्नारदीयात् । ॐकायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वाऽनुसृतस्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥ ॐकर्मसाक्षिणे श्रीनारायणाय नमः इत्यर्घोदकं देवदक्षिणहस्ते समर्प्य आचम्य शतं यथाशक्ति वा ब्राह्मणान्सम्भोज्य स्वयमपि भुञ्जीतेति ॥

ततो वरो निजगृहाजिरमागत्य सजलकलशान् स्त्रीबालादीन् द्रव्येण सन्तोष्य यानात्स्वयमवतीर्य वधूं चावरोह्य पित्रोश्चरणयुगलयोः स्वर्णादिमुद्रा निधायाभिवन्द्य पितृव्यादीन् ज्येष्ठांश्चाभिवन्द्य कृतमुकुटादिधारणो वधूमग्रतः कृत्वा बद्धाञ्जलिः विप्रावृतःस्वस्तिकाङ्कितगोधूमशष्कुल्यलंकृतपटाच्छन्नगृहसोपानमधिरुह्य स्पर्शदोषापनोदाय मार्जनं कारयित्वा द्वाराद्बहिरासने समुपविश्य वधूं दक्षिणत उपवेश्याचम्य प्राणानायम्य अर्घं संस्थाप्य द्वारमातृः पूजयेत् । तत्र तावत् अद्येह अमुकशर्मा सवधूकोऽहं करिष्यमाणगृहप्रवेशकर्म्मणः पूर्वाङ्गत्वेन द्वारमातॄणां पूजनं करिष्ये इति संकल्प्य—

कुमारी धनदा नन्दा विपुला मङ्गला ऽचला । पद्मा चैव समाख्याताः सप्तैता द्वारमातरः ॥ ॐकुमार्यै नमः ॐधनदायै नमः ॐनन्दायै नमः ॐविपुलायै नमः ॐमङ्गलायै नमः ॐअचलायै नमः ॐपद्मायै नमः इति ध्यानादिनी-

राजनान्तं सम्पूज्य वसोर्धाराः पातयित्वा तासां यथावत्पूजां विधाय लग्नदानं कुर्यात् । अद्येह अमुकशर्म्मा नवधूकोऽहं मम गृहप्रवेशलग्नाद्यत्रकुत्रस्थाने स्थितानामादित्यादिनवग्रहाणां मध्ये शुभानां शुभफलाधिक्यप्राप्तये दुष्टानां दुष्टफलोपशान्तिपूर्व्वकशुभफलप्राप्त्यर्थम् इदं सुवर्णादिद्रव्यं ज्योतिर्विदे पुरोहिताय वा ब्राह्मणाय दास्ये ॐतत्सन्न मम इति संकल्प्य दक्षिणां दत्त्वा अन्येभ्यश्च दक्षिणां दत्त्वा स्वस्तिवाचन-(शान्तिपाठ)पूर्व्वकं गृहं प्रविश्य वधूं स्वासने स्वदक्षिणतः समुपवेश्य स्वयंच समुपविश्य गणेशादिभ्यः पुष्पाञ्जलिं समर्प्य अर्घ्यं संपाद्य ततः कुशतिलयवजलान्यादाय प्राङ्मुख उदङ्मुखो वा, अद्येह अमुकशर्म्मा सवधूकोऽहं गृहप्रवेशकर्म्मणि उत्तराङ्गत्वेन उत्तरोत्तराभ्युदयप्राप्तये पट्टलिखितगणपतिसहितकल्याण्यादिसप्तजीवमातॄणां पूजनं करिष्ये इति सङ्कल्प्य एतन्तइति प्रतिष्ठाप्य—

ध्यानं–कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा। जया च विजया चैव सप्तैता जीवमातरः ॥ इति ध्यात्वा ॐकल्याण्यै नमः इत्यादिनाममन्त्रैरावाहनादि नीराजनान्तं सम्पूज्य गुडसर्पिषा वसोर्धाराः पातयित्वा ताः संपूज्य ब्रह्माणीत्यादिना सम्प्रार्थ्य दक्षिणासंकल्पं कुर्यात् । अद्येह अमुकशर्म्मा सवधूकोऽहं गृहप्रवेशकर्म्मणि उत्तराङ्गत्वेन कुड्यादिलिखितगणपतिसहितकल्याण्यादिसप्तजीवमातृपूजनकर्म्मणः साङ्गतासिद्ध्यै साद्गुण्यार्थं च इमां दक्षिणाम् आचार्याय दास्ये इति संकल्प्य आचार्यं संपूज्य दक्षिणां दत्त्वा अन्येभ्यो भूयसीं च दत्त्वा आशिषं प्रतिगृह्णीयात् । तत्र वरमात्राद्याः सुवासिन्यो वधूवरयोः नेदिष्ठानां बान्धवानां च महानीराजनपू-

वैकं तिलकादि कुर्युः। ततोऽभिषेकमन्त्रपाठाज्यच्छायादर्शनादिकं कुर्यात्। ततो वधूवरौ गुडदध्यादिप्राशनं कुर्याताम्। ततो वरपिता सुवासिनीभ्यः स्त्रेष्ठेभ्यो नटनर्तकगायकेभ्यो वादकादिभ्यश्च यथारुचि यथाशक्ति पारितोषिकं द्रव्यवस्त्रभोजनादि दद्यात्॥

इति वधूप्रवेशाद्युत्तराङ्गसहितो विवाहहोमप्रयोगः॥

---

## अथ चतुर्थीकर्म्मप्रयोगः॥

वरपिता विवाहचतुर्थदिवसे अपररात्रेऽरुणोदयात् प्राक् उद्वर्तनपूर्वकं वधूवरौ स्नापयित्वाऽलङ्कृतस्य वरस्य दक्षिणतोऽलङ्कृता वधूं बध्वा उत्तरतो वरमुपवेशयेत्। अथ वरस्त्रिराचम्य अर्घं संस्थाप्य प्राणानायम्य गणेशपूजनं कुर्यात्। तत्र संकल्पः अद्येह अमुकशर्म्मा सवधूकोऽहं करिष्यमाणविवाहाङ्गचतुर्थीकर्माख्यकर्म्मणि निर्विघ्नतया कार्यसिद्ध्यै श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये इति। यथाविधि गणेशं सम्पूज्य प्रधानसङ्कल्पं कुर्यात्। अद्येह अमुकोऽहं ममास्या वध्वाः सोमाद्युपभुक्तिदोषपरिहृत्यै विवाहाङ्गचतुर्थीकर्म्म करिष्ये। *तत्रादौ समचारात् पूर्वाह्नदिवसे स्थापितानां गणपतिसहितगौर्यादिषोडशमातृणां पूजनं करिष्ये इति संकल्प्य यथाविधि मातृः सम्पूज्य वसोर्धाराः पातयित्वा समाचारादेव कृतस्नानसन्ध्यावन्दनब्राह्मणद्वारा पुण्याहं च

---

* विवाहाग्निनाशे तत्रादौ अनादिष्टप्रायश्चित्तं च करिष्य इत्यपि सङ्कल्पनीयम्।

वाचयित्वा गृहाभ्यन्तरतो होमवेदीं संपाद्य तत्र पञ्चभूसँस्कारपूर्व्वकं विवाहाग्निं संस्थाप्य वेद्या ईशाने कलशे ग्रहानावाह्य संपूज्य च विवाहहोमसमये वृतस्य ब्रह्मणोऽसत्त्वेऽन्यस्य ब्रह्मणो वरणं कुर्य्यात् । अद्येह अमुकशर्म्माऽहं करिष्यमाणचतुर्थीकर्म्माङ्गहोमकर्म्मणि कृताकृतावेक्षणादि ब्रह्मकर्म्म कर्तुं ब्रह्मणः पूजनपूर्व्वकं वरणं करिष्ये इति संकल्प्य ब्रह्मजज्ञानमिति गन्धादिभिः सम्पूज्य वरणसामग्रीं करे कृत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यैः करिष्यमाणचतुर्थीकर्म्माङ्गहोमकर्म्मणि कृताकृतावेक्षणादिब्रह्मकर्म्मकरणाय त्वामहं वृणे । वृतोऽस्मीति प्रत्युक्तिः । ततः स्थापिताग्नेः पश्चादुपविश्य दक्षिणतो ब्रह्माणमुपवेश्य यथा चतुर्मुख इति मार्थ्य प्रणीतास्थानादुत्तरतस्ताम्राद्युदपात्रमग्न्यादिप्रधानाहुतिसंस्रवधारणार्थं प्रतिष्ठाप्य प्रणीतास्थापनचर्वाज्याधिश्रयणादि पर्युक्षणान्तं कुशण्डिकोक्तरीत्या विधाय आघारादिसंस्रवधारणार्थं प्रोक्षणीपात्रं प्रणीताग्न्योर्मध्ये निधाय देवताभिध्यानं कुर्यात् । अद्येह वध्वाः सोमाद्युपभुक्तिदोषपरिहारार्थं चतुर्थीकर्म्मणा यक्ष्ये । तत्र *प्रजापतिम्, इन्द्रम्, अग्निं, सोमम्, अग्निं, व्वायुं, सूर्य्यं, चन्द्रं, गन्धर्वं च आज्येन–प्रजापतिं चरुणा–अग्निꣳस्विष्टकृतं चर्वाज्येन–अग्निं, व्वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, व्वरुणꣳ सवितारं व्विष्णुं व्विश्वान्(देवान्)मरुतः स्वर्कान्, व्वरुणं, प्रजापतिं चाज्येनाऽहं यक्ष्ये । एतन्तइति ( चतुर्थ्यां तु शिखी नामेति-

---

* अनादिष्टप्रायश्चित्तानुष्ठाने कारिष्यमाणे अग्निं, व्वायुं, सूर्यं, प्रजापतिम्, अग्नीवरुणौ, अग्नीवरुणौ, व्वरुणꣳ सवितारं व्विष्णुं व्विश्वान्(देवान्) मरुतः स्वर्कान्, व्वरुणम्, इत्यभिध्याय प्रजापतिम् इत्याद्यभिध्येयम् ।

वचनात्) ॐभूर्भुवः स्वः शिखिनामाग्ने इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भवेति शिखिनामाग्निं प्रतिष्ठाप्य ॐसर्वतः पाणिपाद इति ॐचत्वारिशृङ्गा इति, ॐशिखिनामाग्नये नम इति नाममन्त्रेण च ध्यानादिनीराजनान्तं सम्पूज्य रेखापूजनं जिह्वापूजनं च कृत्वा ब्रह्मणाऽन्वारब्धो आघारादि जुहुयात्* । ॐप्रजापतये स्वाहा इदं प्रजापतये न मम इति मनसा प्रजापतिं ध्यात्वा, ॐइन्द्राय स्वाहा इदमिन्द्राय न मम । ॐअग्नये स्वाहा इदमग्नये न मम । ॐसोमाय स्वाहा इदꣳ सोमाय न मम । अन्वारम्भं त्यक्त्वा आज्येन प्रधानहोमः । (अग्नेप्रायश्चित्तइत्यादीनां पञ्चानां मन्त्राणां परमेष्ठी ऋषिस्त्रिष्टु-

---

*अनादिष्टप्रायश्चित्तानुष्ठानकल्पे पूर्वं तदनुष्ठाय अनन्तरमन्वारब्धो भूत्वा ऽऽघारादिहोमं कुर्यात् । तथाहि—व्यस्तसमस्तव्याहृतीनां प्रजापतिऋषिर्गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि अग्निवायुसूर्यप्रजापतयो देवताः प्रायश्चित्तहोमे विनियोगः । ॐभूः स्वाहा—इदमग्नये न मम । ॐभुवः स्वाहा-इदं वायवे न मम । ॐस्वः स्वाहा-इदꣳसूर्याय न मम । ॐभूर्भुवः स्वः स्वाहा-इदं प्रजापतये न मम-इतिचतस्र, अनुपदमेव निर्देक्ष्यमाणाः (१७५) त्व नोऽअग्ने इत्याद्याः पञ्च वारुणीराहुतीश्चाज्येन हुत्वा आघाराद्याहुतीर्जुहुयात् । यद्यपि प्रायश्चित्तानुष्ठानं चतुर्थीकर्मप्रयोगात्पूर्वमेवोचित तथापि 'पशु समानतन्त्र स्यादिति बौधायनोऽब्रवीत्,इति बौधायनेन प्रायश्चित्तपशो' अग्नीषोमीयपशुसमानतन्त्रत्वबोधनात् माध्यन्दिनादिभिः सर्वैरपि तत्पक्षस्य स्वीकारात् अत्रापि चतुर्थीकर्महोमसमानतन्त्रत्वेन अनादिष्टविधिरुक्तः । प्रणीताप्रणयनादिपर्युक्षणान्तेतिकर्तव्यतायाः प्रायश्चित्तहोमे हरिहरेण गदाधरेण च राज्ञो ऽक्षभेदे इति (कां १ कं. १०) व्याख्याने स्पष्टमभिहितत्वादुचितत्वाच्चात्र तदनुष्ठानात्पूर्वं सोपदिष्टा।आघारयोराज्यभागयोश्च प्रायश्चित्तानुष्ठानेऽनावश्यकत्वान्न तेषां पूर्वमुल्लेख इति बोध्यम्।

च्छन्दो लिङ्गोक्ता देवताः चतुर्थीकर्माङ्गाज्यहोमे विनियोगः)।

+ॐअग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा-इदमग्नये न मम इति हुत्वा उदपात्रे संस्रवप्रक्षेपः १ ॐवायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा-इदं वायवे न मम। उदपात्रे संस्रवप्रक्षेपः २ ॐसूर्य्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा-इदꣳसूर्य्याय न मम। उदपात्रे संस्रवप्रक्षेपः ३ ॐचन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा-इदं चन्द्राय न मम। उदपात्रे संस्रवप्रक्षेपः ४ ॐगन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम ऽउपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा-इदं गन्धर्वाय न मम। उदपात्रे संस्रवप्रक्षेपः ५

इत्याज्येन हुत्वा स्थालीपाकमाज्येनाभिघार्य स्रुवेणा-

---

+हेऽग्ने हेप्रायश्चित्ते सर्वदोषापहर्त्यात्, यतस्त्वं देवानामिन्द्रादीनां मध्ये प्रायश्चित्तिर्दोषापहर्ताऽसि अतः अहं ब्राह्मणो भूत्वा त्वा त्वाम् उपधावामि-कीदृशोऽहं, नाथकामः आशीःकामः (नाथृ याच्ञायां) स्वामिकामो वा। उपधावनप्रयोजनमाह येति। अस्यै अस्या वध्वाः या पतिघ्नी तनूरवयवोऽस्ति ताम् अस्यै एतस्या उपकर्तुं नाशय। स्वाहा सुहुतमस्तु। समुदायवाचकोऽपि तनूश-

दाय मनसा प्रजापतिं ध्यात्वा जुहोति ॐप्रजापतये स्वाहा—इदं प्रजापतये न मम । उदपात्रे संस्रवप्रक्षेपः । तत आज्यचरुणी गृहीत्वा ब्रह्मणा अन्वारब्धो महाव्याहृतिहोमात् पूर्वं स्विष्टकृतं जुहुयात् । प्राक् महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः इति वचनात् । ॐअग्नये स्विष्टकृते स्वाहा—इदमग्नये स्विष्टकृते न मम । ततो ब्रह्मणाऽन्वारब्ध एव भूराद्या नवाहुतीराज्येन जुहुयात् । (व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः प्रायश्चित्तहोमे विनियोगः) ।

ॐभूः स्वाहा इदमग्नये न मम । ॐभुवः स्वाहा इदं वायवे न मम । ॐस्वः स्वाहा इदं सूर्याय न मम । (त्वन्नोऽअग्न इत्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रायश्चित्तहोमे विनियोगः)

ॐत्वन्नो ऽअग्ने वरुणस्य विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाᳬंसि प्रमुमुग्ध्यस्मत्—स्वाहा इदमग्नीवरुणाभ्यां न मम । (सत्वन्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रायश्चित्तहोमे विनियोगः) ।

ॐस त्वन्नो ऽअग्ने ऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ । अवयक्ष्व नो वरुणᳬं रराणो वीहि मृडीकᳬं सुहवो न ऽएधि—स्वाहा इदमग्नीवरुणाभ्यां न मम । (अयाश्चाग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता प्रायश्चित्त-

---

न्द्रोऽश्चैकरंदशारः । गोभिः सम्पन्न इतिवत् । तेन यदस्याः पतिनाशकमङ्गलक्षणं तदपाकृत्य स्वच्छं कुरु इति वाक्यार्थः । एवमुपर्यपि व्याख्येयम् । हे वायो पवमान प्रजाघ्नी या तनूः, हे सूर्य पशुघ्नी या तनूः, हे चन्द्र गृहघ्नी या तनूः, हे गन्धर्व यशोघ्नी यातनूः ॥

होमे विनियोगः )

ॐअयाश्चाग्ने ऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया ऽअसि । अया नो यज्ञं व्वहास्यया नो धेहि भेषजꣳ स्वाहा–इदमग्नये न मम। (येतेशतमिति वामदेव ऋषिस्त्रिष्टुप्छन्दो व्वरुणः सविता व्विष्णुर्व्विश्वे(देवा) मरुतः स्वर्क्काश्च देवताः प्रायश्चित्तहोमे विनियोगः )

ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः। तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा–इदं व्वरुणाय सवित्रे व्विष्णवे व्विश्वेभ्यो (देवेभ्यो) मरुद्भ्यः स्वर्क्केभ्यश्च न मम। (उदुत्तममितिशुनःशेप ऋषिस्त्रिष्टुप्छन्दो व्वरुणो देवता प्रायश्चित्तहोमे विनियोगः )

ॐउदुत्तमं व्वरुणपाशमस्मदवाधमं व्विमध्यमꣳश्रथाय। अथा व्वयमादित्य व्व्रते तवानागसोऽअदितये स्याम–स्वाहा इदं व्वरुणाय न मम। मनसा ॐप्रजापतये स्वाहा इदं प्रजापतये न मम। बर्हिर्होमः । ततः संस्रवप्राशनम् । पवित्रयोरग्नौ प्रतिपत्तिः । प्रणीताविमोकः पश्चिमतः । ब्रह्मणे पूर्णपात्रदानम्–अद्येह अमुकशर्म्मा सवधूकोऽहं कृतस्यास्य चतुर्थीकर्माङ्गहोमकर्म्मणः साङ्गतासिद्ध्यर्थं इदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यमहं सम्प्रददे इति संकल्प्य ब्रह्मणे पूर्णपात्रं दद्यात् । अक्रन्कर्म्मेत्याशिषं प्रार्थयेत ।

अथ पूर्व्वस्थापितादुदपात्रादुदकमादाय वरो वधूमूर्द्धन्यभिषिञ्चति । (यातइति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो वधूर्देवता अभिषेचने विनियोगः) *ॐया ते पतिघ्नी प्रजाघ्नी पशुघ्नी

*अमो इति वधूनामादेशः। हे कन्ये या ते पत्यादिघातिनी तनू-

गृहघ्नी यशोघ्नी निन्दिता तनूः। जारघ्नीं तत ऽएनां करोमि। सा जीर्य्य त्वं मया सह अमुकसुन्दरि इत्यनेन मन्त्रेण। अत्रैव वध्वाः आचारात्पत्या स्वनामाद्यवर्णाक्षरान्वितं सुन्दर्यादिपदान्तं द्वितीयं नाम करणीयम्। अथ वरो वधूं हुतशेषं स्थालीपाकं प्राशयति सकृत्। (प्राणैस्तइति प्रजापतिर्ऋषिर्यजुश्छन्दो वधूर्देवता वध्वाः स्थालीपाकप्राशने विनियोगः)

*ॐप्राणैस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि माꣳसैर्माꣳसानि त्वचा त्वचम्-इति मन्त्रेण भर्ता हुतशेषं स्थालीपाकं वधूं सकृत्प्राशयेत्। अथ देशाचारात्स्थालीपाकस्य ग्रासाष्टकं तूष्णीं वधूं प्राशयति वरः॥ अतः परं पत्नीशब्दः प्रयोक्तव्यः।

अत्रावसरे समाचारात् वध्वाः दक्षिणस्कन्धस्योपरि स्वदक्षिणभुजस्य पाणितलं निधाय मन्त्रं पठन् हृदयं स्पृशति वरः। (यत्तइति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो हृदयं देवता हृदयालम्भने विनियोगः)। (व्याख्यास्यते गर्भाधाने.)

ॐयत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्। इति।

---

निन्दिताऽस्ति ततोऽनेनाभिषेकेण तव एनां तनुं जारघ्नीम् उपपतिघातिनीं करोमि। सा त्वं मया पत्या सह जीर्य वृद्धा भव। जृवयोहानौ दैवादिकः॥

*वाह्यसंस्कारैः संस्कृतां वधूम् अन्तःसंस्कारयति प्राणैरिति। हेवधु मम प्राणैस्ते तव प्राणान् संदधामि संयोजयामि। एवमस्थ्यादिभिः॥

अथाचारात्कलशं त्रिः प्रदक्षिणीकृत्य गजदन्तादिनिर्मितयाऽभिनवकङ्कतिकया वध्वाः सीमन्तोन्नयनं च विधाय अञ्चलग्रन्थिं कङ्कणञ्च मोचयेत् । परस्परं वरवध्वोः कङ्कणमोचनम् । कङ्कणविमोचने मन्त्रः—कङ्कणं मोचयाम्यद्य रक्षोघ्नं रणक्षं मम । मयि रक्षां स्थिरां कृत्वा स्वस्थानं गच्छ कङ्कण ॥

ततः पाणिप्रतपनाद्यङ्गालम्भान्तं कर्म्म समाप्य उत्तराङ्गभूतमग्निपूजनं कृत्वा दक्षिणासंकल्पं कुर्यात् । अद्येह अमुकशर्म्मा सपत्नीकोऽहं कृतस्यास्य चतुर्थीकर्म्मणः साङ्गतासिद्ध्यर्थम् इमां होमदक्षिणाम् आचार्याय भूयसीं चाऽन्येभ्यो ब्राह्मणेभ्यश्च विभज्य दास्ये ॐतत्सत् न मम इति संकल्प्य आचार्याय होमदक्षिणां दत्त्वा सति सम्भवे ( शतं विवाहसंस्कारे इतियज्ञपार्श्वपरिशिष्टवचनात् ) शतब्राह्मणभोजनं संकल्प्य तदसम्भवे दशब्राह्मणभोजनं सङ्कल्प्य भूयसीं च दत्वा ऽग्निं विसृज्य त्र्यायुषरक्षाबन्धनघृतच्छायादर्शनाभिषेकतिलकमन्त्रपाठाशीर्ग्रहणादीनि विधाय आचम्य यस्य स्मृत्येति पठित्वा ॐअच्युताय नम इति त्रिरुच्चार्य्य द्विजान्प्रणम्य ॐकायेन वाचेति कर्म ईश्वरार्पणं कृत्वा बहिरागत्य आकृष्णेनेति सूर्यं प्रणमेत् । ततो गृहं प्रविश्य इष्टैः सह यथासुखं विहरेत् । ततो वरपिता पूर्वाह्णदिवसे स्थापितानां मातॄणां ग्रहादीनां चोत्तराङ्गत्वेन पञ्चोपचारैः पूजनं विधाय यान्तु देवगणा इति विसर्जनं कुर्यात् ॥

ततो मध्याह्नादर्वाक् वरमाता सुभूषणाः सपरिवाराः गायन्तीः सुवासिनीरग्रतः कृत्वा मातृकाफलकमुत्थाप्य वंशपात्रे निधाय शुद्धरक्तवस्त्रेणाच्छाद्य दास्यादिमूर्द्धनि निधाय तामग्रतः प्रस्थाप्य शङ्खघण्टातूर्यादिवादकाँश्चाग्रतः कृत्वा बद्धाञ्जलौ धृतमुक्त-

-टादिभूषणौ वधूवरौ वाप्यादिजलाशयं गमयित्वा तत्र गन्धादिना जलमातॄर्विलिख्य ताः पूजयेत् । तद्यथा एतन्तइत्यादिना ताः प्रतिष्ठाप्य ॐमत्स्यैनमः १ ॐकूर्म्यै नमः २ ॐवाराह्यै नमः ३ ॐकुचकुट्यै नमः ४ ॐदर्दुर्य्यै नमः ५ ॐजलूक्यै नमः ६ ॐसोमायै नमः ७ इति नाममन्त्रैः ध्यानादि नीराजनान्तं सप्त जलमातॄः सम्पूज्य वरमाता अन्याभिः सुवासिनीभिः समं समातृकाफलकं वंशपात्रं पर्यायेण शिरसि निधाय सोत्साहं नृत्यं कुर्य्यात् । ततस्तं फलकं सवंशपात्रं गृहीत्वोदधाय जलसमीपे निधाय तल्लिखितमातॄर्विसर्जयेत् । ततस्तत्रैव कस्यचित्क्षीरिवृक्षस्य समन्तात् प्रदक्षिणं प्रक्रममाणयोर्वधूवरयोः शिरसोर्मुकुटे अवरोप्य तस्य वृक्षस्य शाखायां वरमाताद्या बन्धयेयुः । अथ नानागीतानि गायन्त्यस्तास्स्त्रियो वधूवराभ्यां सह जलाशयाद् गृहं प्रत्यागच्छेयुः । ततस्ता वधूवरयोर्गृहाङ्गणे उपविश्य तन्मध्ये गोमयोदकेनोपलिप्य तत्र तण्डुलपिष्टोदकेन श्यामां देवीं विलिख्य गायन्त्य एव तां सम्पूजयेयुः । ततो यथावृद्धाश्रुतं श्यामागाथाः कथयेयुः । ततो मङ्गलगानपुरस्सरं गृहं प्रविश्य देहलीमध्ये उपविश्य संनिधिदत्त महालड्डुकयुग्मं पेषणाश्मादिना विभेद्य सोत्साहं मिथो विभजेयुः । ततः सर्वारम्भदिवसाऽधिवासितताम्रकटाहेऽपूपादिकं पक्त्वा मिथः सुवासिन्यो विभजेयुः । ततो वरस्य माता स्नुषाया विवाहमहपरिहितानि वासांसि तस्या ननान्द्रे दद्यात् । तदलाभे स्वपुरोहिताय दद्यात् ॥

इति चतुर्थीकर्म्मसहितो विवाहप्रयोगः ॥

## अथ द्विरागमनविधिः ।

शुभेऽह्नि फेणिकादिकं पाचयित्वा पेटायां निधाय शि-

विकार्धं यानमारुह्य श्वशुरगृहं गत्वा श्वशुरावभिवन्द्य तत्कृतार्चामुररीकृत्य भोजनं विधाय गणपतिं सम्पूज्य शुभे लग्ने वधूं प्रस्थाप्य श्वशुरावभिवन्द्य ताभ्यां कृततिलकः पुरस्कृततद्दत्तयौतकः सपत्नीको निजगृहमागत्य स्पर्शदोषापनोदाय मार्जनं कारयित्वा हस्तौ पादौ प्रक्षाल्य स्वदेशरीत्या देहलीसमीपे मिथोऽञ्चलग्रन्थिं सम्पाद्य स्वासने समुपविश्य *स्ववामभागे पृथक्पीठे वधूमुपवेश्य आचम्य अर्घं संस्थाप्य प्राणानायम्य संकल्पं कुर्यात् । अद्येह अमुकशर्म्मा सपत्नीकोऽहं मम द्विरागमनाङ्गगृहप्रवेशकर्म्मणि निर्विघ्नतासिद्ध्यर्थं श्रीगणपतेर्द्वारमातॄणांच पूजनं करिष्ये इति संकल्प्य यथाविधि गणेशं द्वारमातॄश्च सम्पूज्य लग्नदानं कुर्य्यात् । अद्येह अमुकशर्म्मा सपत्नीकोऽहं मम द्विरागमनाङ्गगृहप्रवेशलग्नाद्यत्र-कुत्रस्थाने स्थितानाम् आदित्यादिनवग्रहाणां मध्ये शुभानां शुभफलाधिक्यप्राप्तये दुष्टानां दुष्टदोषोपशान्त्यर्थम् इदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा पुरोदितदैवज्ञादिब्राह्मणेभ्यो दास्ये ॐतत्सन्नममेति संकल्प्य दक्षिणां दत्त्वा (शान्तिपाठ) स्वस्तिवाचनपुरस्सरं गृहं प्रविश्य भित्तिलिखितजीवमातॄणां सविधे गत्वा विधिवत्ताः सम्पूज्य आचाराद्रूलशं संस्थाप्य वध्वा सह तं प्रदक्षिणीकृत्य दक्षिणासंकल्पं कुर्यात् । अद्येह अमुकशर्म्मा सपत्नीकोऽहं द्विरागमनाङ्गगृहप्रवेशकर्म्मण उत्तराङ्गत्वेन भित्तिलिखितकल्याण्या-

---

*संस्कारगणपतौ स्मृत्यन्तरे, वामे सिन्दूरदाने च वामे चैव द्विरागमे । वामे ऽशनैकशय्यायां भवेज्जाया प्रियार्थिनी ॥ इति अथेनामभिमन्त्रयते सुमङ्गलीरियं वधूरितिसूत्रव्याख्याने ॥

द्विजीवमातृपूजाकर्म्मणः साङ्गतासिद्ध्यै इमां दक्षिणां ब्राह्मणाय दास्ये ॐ तत्सत् न मम । दक्षिणां दत्त्वा अभिषेकतिलकमन्त्रपाठादि कारयित्वा अञ्चलग्रन्थिं विमोच्य तत्रैव दधिगुडफेणिकादि भुक्त्वा मुखं प्रक्षाल्य वधूवरौ यथासुखं विहरेताम् ॥ इति द्विरागमनम् ॥

अथाऽर्कविवाहप्रयोगः ॥

तृतीयविवाहात्प्राग् दिनचतुष्टयाधिकव्यवहिते रविवासरे शनिवासरे वा हस्तर्क्षे ऽन्यस्मिन् शुभर्क्षे वा चन्द्रानुकूल्यादिसहिते ग्रामात् प्राच्यामुदीच्यां वा फलपुष्पादियुक्ताऽर्कसविधे गत्वा तदधस्तात्स्थण्डिलं निर्म्माय अर्कसमीपमुपविश्य अर्कवृक्षस्य समन्तात्प्रागाद्यष्टदिक्षु तण्डुलपिष्टोदकेनाष्टदलानि विरचय्य अर्कविवाहसामग्रीं सम्पाद्य दीपं प्रज्वलय्य आचम्य प्राणानायम्य शान्तिपाठं ( स्वस्तिवाचनं ) कृत्वा गणेशादिदेवेभ्यः पुष्पाञ्जलिं समर्प्य गणेशं पूजयेत् । अद्येहाऽमुकोऽहम् अर्कविवाहकर्म्मणि निर्विघ्नताप्राप्त्यै भगवतो श्रीगणेशस्य पूजनं करिष्ये इति संकल्प्य गणेशं सम्पूज्य प्रधानसंकल्पं कुर्य्यात् । अद्येहेत्यादि सं० अमुकोऽहं मम तृतीयमानुषीपरिणयनदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थम् अर्कविवाहं करिष्ये । तत्पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये । तदङ्गत्वेन आचार्य्यस्य पूजनं वरणं च करिष्ये इति संकल्प्य मातृपूजां, हेम्ना नान्दीश्राद्धं, पुण्याहवाचनं च यथाविधि विधाय कर्मोपदेशार्थं स्वकुलार्यं वृत्वा, दानार्थम् अन्यस्याचार्य्यस्य पूजनम्, एभिर्गन्धादिभिः अर्ककन्यादानार्थं त्वामहं वृणे इति वरणं च कृत्वा प्रार्थयेत्—कन्यापिता यथा सूर्यो देवानां च प्रजापतिः ।

तथा त्वमर्कदानार्थमाचार्यस्त्वं कुरु द्विज ॥इति। ततः दानाचार्यः वरं मधुपर्कयज्ञोपवीतालंकारादिभिः पूजयेत्—ततः एभिर्गन्धादिभिः अर्ककन्यामतिग्रहार्थं त्वामहं वृणे इति वरं वृणुयात्। एवं वृतो वरः अर्कस्य पुरतस्तिष्ठन् सूर्यं प्रार्थयेत–त्रिलोकव्यापिन्सप्ताश्व च्छायया सहितो रवे। तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥ सूर्यमेवं सम्प्रार्थ्य ततोऽर्कवृक्षे एव वा, तदधस्तात् कलशविधिना कलशं संस्थाप्य तत्राग्न्युत्तारणपूर्वकं सुवर्णप्रतिमां संस्थाप्य तत्र वा छायासहितमर्कम् आकृष्णेनेति आवाह्य श्वेतवस्त्रसूत्राभ्यामर्कमावेष्टय नाममन्त्रेण ध्यात्वा सम्पूज्य च आपोहिष्ठेत्यादिमन्त्रैरभिषिच्य गुडौदनं ताम्बूलं च समर्प्य प्रदक्षिणीकुर्वन्मन्त्रं पठेत्—

मम प्रीतिकरा चेयं मया सृष्टा पुरातनी। अर्कजा ब्रह्मणा सृष्टा अस्माकं परिरक्षतु ॥ इति पठित्वा पुनः वक्ष्यमाणमन्त्रेण प्रदक्षिणीकुर्यात्—

नमस्ते मङ्गले देवि नमः सवितुरात्मजे। त्राहि मां कृपया देवि पत्नीत्वं मइहागता॥ इति। ततोऽर्कं प्रार्थयेत–अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च। वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः ॥ तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय। इति। ततः पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य वरः प्राङ्मुखः अर्कसमीपे तिष्ठेत्। अस्मिन् समये अन्तःपटं धृत्वा कर्मोपदेशकाचार्यादिब्राह्मणैः मङ्गलपद्यानां पाठोऽपि सति सम्भवे कार्यः। अथोत्तरतोऽन्तःपटमपसार्य अर्ककन्यावरयोः समञ्जनं कारयेत् दानाचार्यः। ततः कर्माचार्यादिब्राह्मणाः स्वस्तिन इत्यादिशान्तिपाठोक्तान् (स्वस्तिवाचनोक्तान्) मन्त्रान्पठेयुः। ततो दानाचार्यः काश्यपगोत्राम् काश्यपावत्सारनैध्रुवेतित्रिप्रवरा-

निवनामादित्यस्य प्रपौत्रीं सवितुः पौत्रीम् अर्कस्य पुत्रीम् इमां कन्याम् अमुकप्रपौत्राय अमुकपौत्राय अमुकपुत्राय अमुकगोत्राय अमुकप्रवराय अमुकनाम्ने वराय इति गोत्रोच्चारं कुर्यात् । ततः सुमुहूर्ते वरः 'स्वस्ति न' इति सूक्तं पठित्वा कन्यां निरीक्षेत । अथ दानाचार्यो विप्रैः सहाशिषो दत्त्वा पूर्ववद्गोत्रोच्चारं कृत्वा दानं कुर्यात्—अद्येह काश्यपगोत्राम् आदित्यस्य प्रपौत्रीं सवितुः पौत्रीं ममार्कस्य कन्याम् अमुकशर्मणः प्रपौत्रायामुकशर्मणः पौत्रायामुकशर्मणः पुत्राय अमुकगोत्राय अमुकप्रवराय अमुकशर्मणे वराय तुभ्यमहं सम्प्रददे इति वरहस्ते जलं दत्त्वा दानवाक्यं पठेत्—

अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ इति । दानप्रतिष्ठासिद्ध्यर्थं सुवर्णं दद्यात् । वरस्तु ॐयज्ञो मे कामः समृद्ध्यताम् । ॐधर्मो मे कामः समृद्ध्यताम् । ॐयशो मे कामः समृध्यताम् इति त्रीन् अक्षताञ्जलीन् अर्कोपरि क्षिपेत् । ततः गायत्र्या, *ॐपरि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।

---

*गीर्भिः वननीयो भजनीयो मण्डपाभिमाती इन्द्र गिर्वणाः दीर्घमाधच्छान्दस । हे गिर्वण हे इन्द्र इमा स्तोत्रशस्त्ररूपा गिरः विश्वतः सर्वतः पटरूपेण त्वा त्वाम् परिभवन्तु परिगृह्णन्तु । कीदृशं त्वाम्, वृद्धायुम्-वृद्धा आयुवो मनुष्या यस्य तम् । कीदृश्यो गिरः, अनुवृद्धय-अनु प्रातःसवनादिक्रमेण वृद्धिर्यासां ता । किंच जुष्टयोऽस्मत्सेवाः तव जुष्टा प्रिया भवन्तु ॥ प्रस्तरेऽर्के इन्द्रस्य समारोप्य मन्त्र सगमनीय ॥ य. म अ ५म २९ इत उत्तरम् इन्द्रस्य स्वूरसीत्यादय तिरः स्वाहेत्यन्ता नवान्ये मन्त्राः क्वचित्पद्धतौ, क्वचित्त माहिंसिरेत्यन्ता अन्ये पञ्च मन्त्रा परिपठने उक्ता तयोभयत्रापि दृश्यमाणानुपलब्धेरस्माभिः प्रयोगे न स्थापिता इति बोध्यम् इति न्यूनस्य प्राञ्जीयम् । गदाधरसंस्कारनृसिंहाद्विभिरस्वीकाराच्च ॥

व्यृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः १ इतिमन्त्रेण वा पञ्चवारमर्कवृक्षोपरि सूत्रमावेष्ट्य पुनः तत्सूत्रं पञ्चगुणं कृत्वा अर्कस्कन्धे बद्धा (आश्वला.श्रौ.सू.पू.प.अ.४खं.१२)

ॐबृहत्साम क्षत्रभृद्वृद्धवृष्ण्यं त्रिष्टुभौजः शुभितमुग्रवीरम्। इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष-इति रक्षां प्रकल्पयेत्। ततो वरः अष्टदिक्षु कलशान्संस्थाप्य वस्त्रेण त्रिगुणसूत्रेण वा कलशकण्ठे आवेष्ट्य हरिद्रादि निक्षिप्य तेषु कलशेषु सुवर्णप्रतिमायाम् इदं विष्णुरिति विष्णुमावाहयेत्। ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे इत्यावाह्य अनेनैव पाद्यादिभिर्नैवेद्यान्तैरुपचारैः पूजयेत्। ततो ब्रह्मवरणादिपर्युक्षणान्तं कृत्वा अर्कस्योत्तरे स्थण्डिले पञ्चभूसंस्कारपूर्वकं पूर्वं स्थापितमग्निम् एतन्तइत्यादिना (अर्कविवाहस्य शान्तिस्वरूपत्वात्) वरदनामाग्ने इहागच्छेह तिष्ठेति प्रतिष्ठाप्य नाममन्त्रेण ध्यानादिभिः सम्पूज्य देवताभिध्यानं कुर्यात्। अद्येह अर्कविवाहकर्मणाऽहं यक्ष्ये। तत्र प्रजापतिम्,इन्द्रम्, अग्निं, सोमं, बृहस्पतिं, अग्निम्,अग्निं, वायुं, सूर्यं,प्रजापतिम्, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणंसवितारं विष्णुं विश्वान् (देवान्) मरुतः स्वर्कान्, वरुणं, प्रजापतिम्, अग्निंस्विष्टकृतं चाज्येनाहं यक्ष्ये इति। अनन्तरं दक्षिणं जानु निपात्य मनसा प्रजापतिं ध्यात्वा ॐप्रजापतये स्वाहा इदं प्रजापतये न ममेति हुत्वा ॐइन्द्राय स्वाहा इदमिन्द्राय न मम। ॐअग्नये स्वाहा-इदमग्नये न मम। ॐसोमाय स्वाहा-इदं सोमाय न ममेति आघारादिहोमं कृत्वा (सङ्गोभिरित्यस्याङ्गिराऋषिस्त्रिष्टुप्छन्दो

बृहस्पतिर्देवता आज्यहोमे विनियोगः)।

ॐसङ्गोभिराङ्गिरसो नक्षमाणो भगइवेदर्यमणंनिनाय। जने मित्रो न दम्पती अनक्ति बृहस्पतये वाजयाऽऽशूँरिवाजौ-स्वाहा।(ऋ.सं.अ.८अ.२व.१७मं.२) इदं बृहस्पतये न मम। (यस्मैत्वेति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवताऽऽज्यहोमे विनियोगः)। (आश्वला.श्रौ.सू.उ.प.अ.२खं.१४)

ॐयस्मै त्वा काम कामाय वयं सम्राड्यजामहे। तमस्मभ्यं कामं दत्वाऽथेदं त्वं घृतं पिब स्वाहा—इदमग्नये न मम। (व्यस्तसमस्तव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि अग्निवायुसूर्यप्रजापतयो देवताः आज्यहोमे विनियोगः) ॐभूः स्वाहा इदमग्नये न मम। ॐभुवः स्वाहा इदं वायवे न मम। ॐस्वः स्वाहा इदꣳ सूर्याय न मम। ॐभूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम। इति षट् प्रधानाहुतीः हुत्वा ततो भूरादिनवाहुतिहोमं स्विष्टकृद्धोमं च विधाय पूर्णपात्रदानान्तं कर्म्म समापयेत्। विप्राः कुम्भोदकैर्वरमभिषिञ्चेयुः। वरः पुनः अर्कं प्रदक्षिणीकृत्य प्रार्थयेत्—

मया कृतमिदं कर्म्म स्थावरेषु जरायुणा। अर्काऽपत्यानि मे देहि तत्सर्वं क्षन्तुमर्हसि॥ इति सम्प्रार्थ्य शान्तिसूक्तं पठित्वा अर्कप्रतिष्ठितं सूर्यं विसृज्य कर्माचार्याय गोयुग्मं दक्षिणां दद्यात्। अन्येभ्योऽपि ब्राह्मणेभ्यो यथाशक्ति दक्षिणां दत्वा पूजोपकरणानि आचार्याय दत्वा दिनचतुष्टयम् अग्निम् अर्कं कुम्भाँश्च रक्षेत्। ततः पञ्चमे पूर्ववत्सम्पूज्य व्याधुपकरणतिलकमन्त्रपाठादिकं कारयित्वा अग्न्यादीन् वि-

*अथार्कविवाहे मूलवाक्यानि प्रदर्श्यन्ते। संस्कारप्रकाशे क-

सृज्य कर्मेश्वरार्पणं कुर्यात् । ततो मानुषीमुद्वहेत्* । इत्यर्क-विवाहप्रयोगः ॥

---

*वपः-तृतीयां मानुषीं नैव चतुर्थीन्तु समुद्वहेत् । इति । अत्र मानुषीं नोद्वहेदिति वदता आर्कीमुद्वहेदित्युक्तं भवति । आदित्यदिवसे चापि हस्तर्क्षे वा शनैश्चरे। शुभे दिने वा पूर्वाह्ने कुर्यादर्कविवाहकम् ॥ तत्रैव ब्रह्मपुराणे, ग्रामात्प्राच्यामुदीच्यां वा सपुष्पफलसंयुतम् । परीक्ष्य यत्नतोऽधस्तात्स्थण्डिलादि यथाविधि ॥ कृत्वाऽर्कं पुरतस्तिष्ठन् प्रार्थयेत द्विजोत्तमः । त्रिलोकवासिन्० सुखं कुरु । तत्राध्यारोप्य देवेशं छायया सहितं रविम् । धम्मैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेणैव पूजयेत् ॥ स्मृत्यन्तरे तत्रैव, श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभिः । गन्धपुष्पैः सम्भ्यर्च्य अप्लिङ्गैरभिषिच्य च ॥ गुडौदनं च नैवेद्यं ताम्बूलं च समर्पयेत् । तत्रैव व्यासः पूर्वोक्तं प्रकारमभिधाय विशेषमाह-अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत् पुरा । अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ॥ नान्दीश्राद्धे हिरण्येन अष्ट वर्गान् प्रपूजयेत् । पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ॥ अर्कं प्रदक्षिणं कुर्वन् जपेन्मन्त्रमिमं पुनः । मम प्रीतिकरा चेयम्० मृत्युं चाशु विनाशय ॥ ततश्च कन्यावरणं त्रिपुरुषं कुलमुच्चरेत् । आदित्यः सविता ऽऽचार्यः (चार्कः) पुत्री पौत्री च नप्त्रिका । गोत्रं काश्यप इत्युक्तं लोके लौकिकमाचरेत् । सुमुहूर्तेऽर्कं निरीक्षेत स्वस्तिसूक्तमुदीरयन् । आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥ अथाचार्यं समाहूय विधिना सम्प्रदाय ताम् । प्रतिगृह्य ततो होमं गृह्योक्तविधिनाऽऽचरेत् ॥ अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ ( इति मन्त्रेण आचार्येण दत्तां प्रतिगृह्य ) अञ्जल्यक्षतकर्माणि कृत्वा कङ्कणपूर्वकम् । यावत्पञ्चावृतं सूत्रं तावदर्कं प्रवेष्टयेत् ॥ स्वशाखोक्तेन मन्त्रेण गायत्र्या चाथवा जपेत् । पश्चात्कृत्य पुनः सूत्रं स्कन्धे बध्नाति मन्त्रतः ॥ बृहत्सामेति मन्त्रेण सूत्ररक्षां प्रकल्पयेत् । अर्कस्य पुरतः पश्चात् दक्षिणोत्तरयोस्तथा ॥ कुम्भांश्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये । सवस्त्रं प्र-

अथ कुम्भविवाहः ।

तत्र संस्कारप्रकाशे निर्णयसिन्धौ च मार्कण्डेयः—

बालवैधव्ययोगे तु कुम्भद्रुप्रतिमादिभिः । कृत्वा लग्नं ततः पश्चात्कन्योद्वाहेति चापरे-॥

द्रुरश्वत्थः । प्रतिमा विष्णोः सौवर्णी शिरोऽवयवादिसहिता।

तत्प्रकारोऽभिहितः सूर्यारुणसंवादे तत्रैव, विवाहात्पूर्वकाले च चन्द्रताराबलान्विते । विवाहोक्ते शुभे लग्ने कन्यां कुम्भेन चोद्वहेत् ॥ पिता संकल्प वाह्यं च विवाहविधिपूर्वकम् । सूत्रेणावेष्टयेत्पश्चाद् दशतन्तुविधानतः ॥ कुम्भमाऽलंकृतं देहं तयोरेकान्तमन्दिरे । ततः कुम्भं च निस्सार्य प्रभज्ज्य सलिलाशये ॥ ततोऽभिषेचनं कुर्यात् पञ्चपल्लववारिभिः । इति । आसमन्ताच्चन्दनादिभिरलंकृतं कुम्भं कन्यायाः देहं च सूत्रेण वेष्टयेदित्यन्वयः ।

---

तिकुम्भं च त्रिः सूत्रेणैव वेष्टयेत् ॥ हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम् । प्रतिकुम्भं महाविष्णुं पूजयेत्परमेश्वरम् ॥ पाद्यार्घ्यादि निवेद्यान्तं कुर्यात्तत्रैव मन्त्रवित् । इति । होमप्रकारमाह शौनकः, अर्कस्योत्तरदेशे तु समन्वारब्ध एतया । उल्लेखनादिकं कुर्यादाघारान्तमतः परम् ॥ आज्याहुतिं च जुहुयात्सं गोभिरनयैकया । यस्मैत्वाकामकामायेत्येतयर्चा ततः परम् ॥ व्यस्ताभिश्च समस्ताभिस्तनश्च स्विष्टकृद्भवेत् । इति । प्रार्थनायां विशेषं व्यासः, मया कृतमिदं कर्म० क्षन्तुमर्हसि ॥ इत्युक्त्वा शान्तिसूक्तानि जप्त्वा त विसर्जयेत्पुनः । गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ॥ इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि शक्तितः । तत्सर्वं गुरवे दद्यादन्ते पुण्याहमाचरेत् ॥ अत्र पञ्चमदिनकृत्यमुक्तं ब्रह्मपुराणे, चतुर्थे दिवसेऽतीते पूर्ववच्चं प्रपूजयेत् । विसृज्य होममग्निं च विधिना मातुर्षीं पराम् ॥ उद्वहेदन्यथा नैव पुत्रपौत्रादिवृद्धिमान् । इति ।

तत्र पुनर्भूदोषाभाव उक्तो विधानखण्डे तत्रैव, स्वर्णाम्बु पिप्पलानां च प्रतिमा विष्णुरूपिणी । तया सह विवाहे तु पुनर्भूत्वं न जायते ॥ इति। अत्राम्बुशब्देन जलपूर्णो घटो गृह्यते।

अथ प्रयोगः। कन्यादानकर्त्ता पित्रादिः एकान्ते विष्णुमन्दिरं गत्वा स्वासने प्राङ्मुख उपविश्य स्वदक्षिणतः कन्यामुपवेश्य दीपं प्रज्वाल्य आचम्य प्राणानायम्य शान्तिपाठं ( स्वस्तिवाचनं ) कृत्वा देवेभ्यः पुष्पाञ्जलिं समर्प्य यथाविधि गणेशं पूजयित्वा प्रधानसंकल्पं कुर्यात् । तद्यथा-देशकालौ संकीर्त्य अद्येह अमुकगोत्राया अमुकराशेरस्याः कन्याया अमुकस्थानस्थितदुष्टग्रहसूचितवैधव्यदोषोपशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कुम्भविवाहं करिष्ये । तत्पूर्वाङ्गत्वेन मातृपूजाभ्युदयिकश्राद्धपुण्याहवाचनानि करिष्ये । इति संकल्प्य मातृपूजादिपुण्याहवाचनान्तं कर्म्म कृत्वा आचार्यं वृत्वा फलशविधिना कलशं संस्थाप्य तत्र कलशे नवग्रहानावाह्य सम्पूज्य विष्णुवरुणयोः सुवर्णप्रतिमे अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य एतन्तइत्यादिना ॐभूर्भुवःस्वः सुवर्णप्रतिमायां वरुण इहागच्छ इह तिष्ठ सुप्रतिष्ठितो भव इति प्रतिष्ठाप्य तथैव विष्णुं प्रतिष्ठाप्य प्रतिमे कलशे संस्थाप्य पूजासंकल्पं कुर्यात् । अद्येह अमुकगोत्रः अमुकराशिरमुकशर्माऽहम् अस्याः कन्यायाः वैधव्यदोषपरिहारार्थं कलशे सुवर्णप्रतिमयोः विष्णुवरुणयोः पूजनं करिष्ये इति संकल्प्य ॐवरुणाय नमः ॐविष्णवे नमः इति नाममन्त्राभ्याम्-

ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न ऽआयुः प्रमोषीः-इति, ॐविष्णोरराटमसि

विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा-इति च वैदिकमन्त्राभ्यां च ध्यानादिनीराजनान्तं विष्णुवरुणौ सम्पूज्य प्रार्थयेत । वरुणाङ्गस्वरूपस्त्वं जीवनानां समाश्रय । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥ देहि विष्णो वरं देव कन्यां पालय दुःखतः । पतिं जीवय कन्यायाश्चिरं देहि तथा सुखम् ॥ इति सम्प्रार्थ्य मधुपर्कवस्त्रालङ्कारान् समर्प्य कन्याकुम्भान्तराले ऽन्तःपटं धृत्वा मङ्गलपद्यानां पाठं कृत्वा कन्यया वस्त्रोपवस्त्रे परिधाप्योत्तरतः अन्तःपटमपसार्य समञ्जनं कारयित्वा ॐविष्णुः३ इत्यादि सं० अस्याः कन्याया वैधव्यदोषपरिहारद्वारा श्रीरमेश्वरप्रीत्यर्थम् श्रीविष्णुवरुणस्वरूपिणे कुम्भाय इमां श्रीरूपिणीं वरार्थिनीं कन्यां सम्प्रददे इति संकल्प्य-गौरीं कन्यामिमां श्लक्ष्णां यथाशक्ति विभूषिताम् । ददामि विष्णवे तुभ्यं सौभाग्यं देहि सर्वदा ॥ इति दद्यात् । ततः-

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः ॥ इति—

मन्त्रेणाधस्तादुपरिष्टाच्च दशतन्तुकेन सूत्रेण कन्यां कुम्भञ्च मन्त्रावृत्त्या परिवेष्ट्य ततः वेष्टितसूत्रात् कुम्भं निःसार्य सलिलाशये विसृजेत् । ततः पञ्चपल्लवसहितेन जलेन समुद्रज्येष्ठाइत्यादिमन्त्रैः स्वस्तिनइत्यादिमन्त्रैर्वा कन्यामभिषिच्य शुद्धे वाससी परिधाप्य दक्षिणासंकल्पं कुर्यात्-अद्येह अमुकराशेरस्याः कन्यायाः अमुकस्थानस्थितदुष्टग्रहसूचितवैधव्यदोषपरिहारद्वारा सौभाग्यफलप्राप्तये कृतस्य कुम्भविवाहकर्मणः साङ्गुण्यार्थम् इमे सुपूजिते विष्णुवरुणयोः प्रतिमे वैवाह्यवस्त्रादिकामिमां दक्षिणां च

आचार्याय दास्ये । तथा इमां भूयसीं दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये । तथा सिद्धान्नेन यथासंख्याकान् ब्राह्मणाँश्च तर्पयिष्ये ॐतत्सत् न मम इति संकल्प्य आचार्याय प्रतिमां सदक्षिणां दत्त्वा ब्राह्मणेभ्यो भूयसीं दक्षिणां विभज्य दत्त्वा अभिषेकतिलकमन्त्रपाठादिकं कारयित्वा यथाशक्ति ब्राह्मणान् भोजयित्वा कन्याविवाहं कुर्यात् । एवं कृते सति शुभं भवेत् ॥

इति कुम्भविवाहप्रयोगः ॥

अथ विष्णुप्रतिमाविवाहपूर्वकदानविधिः ॥

तत्र कर्त्ता सुस्नातः स्वाचान्तः स्वासने प्राङ्मुख उपविश्य दक्षिणतः कन्यामुपवेश्य पूर्ववद् विष्णुप्रतिमाविवाहाङ्गत्वेन गणेशं सम्पूज्य प्रधानसङ्कल्पं कुर्यात् । अद्येहेत्यादि सं० अमुकोऽहम् अमुकराशेरस्याः कन्याया जन्मलग्नादिस्थानस्थितैर्ग्रहैः सूचितवैधव्यदोषनिवृत्तिपूर्वकसौभाग्यप्राप्तिद्वारा श्रीपरमेश्वरप्रीतये विष्णुप्रतिमया विवाहं करिष्ये । कन्यया तस्या दानं च करिष्ये । तत्प्रतिग्रहार्थम् आचार्यस्य पूजनपूर्वकं वरणं करिष्ये । इति सङ्कल्प्य आचार्यं सम्पूज्य एभिर्गन्धादिभिः विष्णुमूर्तिप्रतिग्रहार्थं त्वामहं वृणे इति वृत्वा सति संभवे मातृपूजादिकं कृत्वा सुवर्णपलादिनिर्मितां चतुर्भुजां शङ्खाद्यायुधसहितां विष्णुप्रतिमाम् अग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य तण्डुलपूर्णताम्रपात्रे संस्थाप्य एतन्तइति प० ॐभूर्भुवः स्वः सुवर्णप्रतिमायां विष्णो इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्राणप्रतिष्ठां विधाय अद्येह अमुकगोत्राया ममास्याः कन्याया जन्मलग्नादिस्थितैर्ग्रहादिभिः सूचितवैधव्याद्यरिष्टनिवृत्तिपूर्वकसौभाग्यसमृद्धिद्वारा श्रीपरमेश्वरप्रीतये सुवर्णप्रतिमायां श्रीविष्णोः षोडशोपचारैः पूजनं

करिष्ये इति सङ्कल्प्य—

निर्मितां रुचिरां शङ्खगदाचक्राब्जसंयुताम् । दधानां वाससी पीते कुमुदोत्पलमालिनीम् ॥ इति ध्यात्वा—

ॐतद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ (य० सं० अ० ६ मं० ५) ॐत्रीणि पदा विचक्रमे विष्णुर्गोपा ऽअदाभ्यः । अतो धर्माणि धारयन् ॥ (य० सं० अ० ३४ मं० ४३) ॐतद्विप्रासो विपन्यवो जागृवाꣳसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ (य० सं० अ० ३४ मं० ४४) इति वैदिकैर्मन्त्रैः ॐविष्णवे नम इति नाममन्त्रेण च ध्यानादि नीराजनान्तं सम्पूज्य प्रार्थयेत्—देहि विष्णो वरं देव कन्यां पालय दुःखतः । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥ इति सम्प्रार्थ्य मधुपर्कादीन् समर्प्य कन्याप्रतिमान्तरालेऽन्तःपटं धृत्वा मङ्गलपाठं कारयित्वा उत्तरतोऽन्तःपटमपसार्य समञ्जनं कारयित्वा ॐविष्णुः ३ इत्यादिपूर्ववत्संकीर्त्य इमां कन्यां विष्णवे तुभ्यं समर्पयामि इति दत्त्वा परित्वेति (१८९) पूर्वोक्तेन मन्त्रेण अधस्तादुपरिष्टाच्च दशतन्तुकेन सूत्रेण कन्यां प्रतिमां च मन्त्रावृत्त्या परिवेष्ट्य क्षणं विरमेत् । ततः प्रतिमां निस्सार्य वैधव्यदोषनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृतस्य विष्णुप्रतिमाविवाहकर्मणः साङ्गतासि॰ इमां सुवर्णदक्षिणां विष्णवे संप्रददे इति समर्पयेत् । तथैतत्कर्मणो न्यूनातिरिक्तदोषपरिहाराय इमां दक्षिणां भूयसीत्वेन नानागोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये । तथाऽमुकसंख्याकान् ब्राह्मणान् भोजयिष्ये । ॐतत्सत् । ततो विष्णुप्रतिमादानं कन्या कुर्यात् । अद्येहेत्यादि सं० अमुकगोत्राऽमु-

कारा।शिरमुकदेव्यहं मम 'जन्मसमयत्रचिलग्नादौ स्थितैर्ग्रहादिभिः सूचितारिष्टनिवृत्तिपूर्वकसौभाग्यमाप्तिद्वारा 'श्रीपरमेश्वरप्रीतये इमां सौवर्णी सुपूजितां विष्णुप्रतिमां सर्वोपस्करयुताम् अमुकगोत्राय अमुकशर्म्मणे आचार्य्याय तुभ्यमहं सम्मददे ॐतत्सत् न मम । दानवाक्यम्-यन्मया प्राचि जनुषि घ्नत्या पतिसमागमम् । विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया १ प्राप्यमाणं महाघोरं यशःसौख्यधनापहम् । वैधव्याद्यतिदुःखौघं तन्नाशाय सुखाप्तये २ बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् । सौवर्णी निर्म्मितां शक्त्या तुभ्यं सम्मददे द्विज ३ इति द्विजकरे प्रतिमां दत्त्वा अनघाऽद्याहमस्मीति निवेदेत् । ब्राह्मणश्च "द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु"–ॐस्वस्ति इति प्रतिगृह्य कोऽदादिति पठित्वा ॐअनघा भव इति निवेदेत् । ततः कृतैतत्प्रतिमादानप्रतिष्ठासिद्ध्यर्थम् इदं सुवर्ण सुवर्णनिष्क्रयीभूतं द्रव्यं वा आचार्याय तुभ्य संमददे इति दत्त्वा अभिषेकतिलकमन्त्रपाठादि कारयित्वा यथासुखं विहरेदिति ।

यद्यपि संस्कारकौस्तुभादौ दानमात्रमुक्तं तथापि–"स्वर्णाम्बुपिप्पलानां च प्रतिमा विष्णुरूपिणी । तया सह विवाहे तु पुनर्भूत्वं न जायते ॥ इतिविधानखण्डोक्तवचनसिद्धत्वात् संस्कारप्रकाशे उक्तत्वाच्च विष्णुप्रतिमाविवाहप्रकारोऽप्यभिहितः इति बोध्यम् ॥

इति वैधव्यहरविष्णुप्रतिमाविवाहपूर्वकदानविधिः ।

विवाहप्रयोगः समाप्तः ॥

अथ पारस्कराचार्येण "तामुदुह्य यथर्तु प्रवेशनम्"-इति सूत्रेण विवाहानन्तरं गर्भाधानसंस्कारस्योक्तत्वात्-

गर्भाधानसंस्कारो निरूप्यते।

गर्भाधानं च, "षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्। ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्" ॥ इति-याज्ञवल्क्येन रजोदर्शनमारभ्य षोडश दिनानि यावत् गर्भधारणयोग्यावस्थोपलक्षिते ऋतुसंज्ञके काले आद्याश्चतस्रो रात्रीर्वर्जयित्वा अन्यासु रात्रिषु विहितम्। तत्र पुत्रकामनायां समासु तत् कर्तव्यतया चोदितम्। दुहितृकामनायान्तु विषमासु। तत्रापि षष्ठीसप्तम्यौ मध्यमे, एकादशीत्रयोदश्यौ अधमे। तिथिषु ४।६।८।१४।१५।३०। एताः गर्भाधाने वर्ज्याः॥ वारेषु रविभौमशनिवाराः वर्ज्याः॥ नक्षत्रेषु ।४।१२।१३।१५।१७।१९।२१।२२।२४।२६।२७। एतानि शुभानि, ३।५।७।८।१४।२३ एतानि मध्यमानि, २।३।६।९।१०। ११।१६।१८।२०।२५। एतानि अधमानि। याज्ञवल्क्येन तु १९ मूलस्य अधमत्वमुक्तम्। क्वचित् रेवत्या अपि वर्ज्यत्वमुक्तम्।

तत्र प्रथमरजोदर्शने मासादौ दुष्टे सति गर्भाधानस्य शान्तिपूर्वकमनुष्ठेयत्वात् शान्तिं वक्तुं तत्र दुष्टमासाद्यभिधीयते। तत्र चैत्रज्येष्ठाषाढभाद्रपौषाः अशुभाः। आश्विनोर्जौ मध्यमौ। शेषाः शुभाः। शुक्लपक्षः शुभः। तिथिषु १।४।६।८।९। १२।१४।१५।३० एताः अशुभाः। वारेषु रविभौममन्दा अशुभाः। नक्षत्रेषु २।३।६।९।१०।११।१६।१८।२०।२५। अशुभानि, अन्यानि शुभानि। योगेषु परिघपूर्वार्ध-वैधृतिव्यतीपाता विशेषतो ऽशुभाः। वज्रं मध्यमम्, अन्ये शुभाः। भद्रां विना करणानि शुभानि। लग्नेषु ३।५।६।

७।८।१२। शुभानि, ९।१०।११। मध्यमानि, १।२।४। अधमानि । दिवसस्याद्यो भागः शुभः, द्वितीयो मध्यमः, तृतीयोऽधमः । सन्ध्ये अशुभे । रात्रिरपि अशुभा । निशीथस्तु विशेषतो ऽशुभः । संक्रान्तिरविचन्द्रोपरागाः अशुभाः । मरणाशौचमशुभम् । भर्तुः भार्यायाश्च चतुर्थाष्टमद्वादशस्थः चन्द्रोऽशुभः । परिहितानि जीर्णरक्तनीलकृष्णवस्त्राणि अशुभानि । निद्रावस्थाऽशुभा । पित्रादिगृहं चाशुभम्-इत्यादि ॥

रजोदर्शनात्पूर्वं "प्राक् रजोदर्शनात् पत्नीं नेयात् गत्वा पतत्यधः । व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात्"-इति निर्णयसिन्ध्वादौ आश्वलायनेन गमननिषेधात् रागौत्कट्यादिना गमने चान्द्रायणादिरूपप्रायश्चित्तं गर्भादिमत्याम्नायद्वारा अनुष्ठाय शान्त्यादिकं कार्यम् ।

रजस्वलाधर्मानाह व्यासः,

रजसो दर्शनान्नारी सर्व्वमेव परित्यजेत् । सर्वैरलक्षिता शीघ्रं लज्जिता स्वगृहे वसेत् ॥ एकाम्बरधरा दीना स्नानालङ्कारवर्जिता । मौनिन्यधोमुखी चक्षुष्पाणिपद्भिरचञ्चला ॥ अश्नीयात्केवलं नक्तं भक्तं मृण्मयभाजने । स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम् ॥ स्नायात्तु सा त्रिरात्रान्ते सचैलमुदिते रवौ । विलोक्य भर्तृवदनं शुद्धा भवति धर्म्मतः ॥४॥ निर्णयसिन्धौ मरीचिः, शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यतीति ॥ ५ ॥ यत्त्वत्रिः, रजस्वला यदा स्नाता पुनरेव रजस्वला । अष्टादशदिनादर्वागशुचित्वं न विद्यते-इत्यादि, तत्तु प्रायोविंशतिदिनोत्तरभाविरजोदर्शनव्रतीविषयमिति मिताक्षरायां विस्तरः ॥

शान्तिमाह नारदः, निन्द्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते। तत्र शान्तिः प्रकर्त्तव्या घृतदूर्वातिलाक्षतैः ॥ तत्प्रत्येकमष्टशतं गायत्र्या जुहुयात् ,ततः। स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये॥ इति । अक्षता यवाः ।

## अथ प्रथमरजोदर्शनशान्तिप्रयोगः ।

चन्द्रतारानुकूले शुभे दिने भर्त्ता मातरभ्यङ्गपूर्वकं स्नात्वा, तत्पूर्वदिने सायंकाले गोमयोदकेनोपलिप्तायां भूमौ धान्यराशिं कृत्वा तत्र यथाविधि स्थापितकलशोदकेन ग्रहयागान्ते उक्तैः देवस्यत्वेत्यादिभिः, स्वस्तिन इत्यादिभिर्वा, द्यौः शान्तिरित्यनेनैव मन्त्रेण वा ब्राह्मणद्वाराऽभिषेकपूर्वकं सुखोष्णोदकेन वधूं स्नापयित्वा शुभासन उपविश्य दक्षिणतः पत्नीमुपवेश्य (रजोदर्शनात्पूर्वं गमने कृच्छ्रादिप्रायश्चित्तं विधाय) दीपं प्रज्वाल्याचम्य स्वस्तिवाचनं (शान्तिपाठं) कृत्वा गणेशपूजनं कुर्यात् । पूजनसामग्रीं सम्पाद्य अर्घं संस्थाप्य सङ्कल्पं कुर्यात्। अद्येहेत्यादि सं० अमुकोऽहं ममास्याः पत्न्याः निन्द्यतिथ्यादिषु जातप्रथमरजोदर्शनदोषशान्त्यर्थं करिष्यमाणे शान्तिकर्मणि गर्भाधानाख्यसंस्कारकर्मणि च निर्विघ्नतासिद्धये श्रीभगवतो गणेश्वरस्य यथामिलितोपचारैः पूजनं करिष्ये इति सङ्कल्प्य यथाविधि सम्पूज्य प्रधानसङ्कल्पं कुर्यात् । ॐअद्येहेत्यादि सं० अमुकोऽहं ममास्याः भार्यायाः प्रतिगर्भसंस्कारातिशयद्वारा अस्यां जनिष्यमाणसर्वगर्भाणां बीजगर्भसमुद्भवैनोनिबर्हणद्वारा च श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानसंस्कारं, तत्रादौ ममास्याः पत्न्याः 'मासर्क्षतिथिवारयोगकरणमुहूर्त्तसमयवस्त्रादिषु यत्र-

कुत्रचिद्दुष्टे जातप्रथमरजोदर्शनसूचितारिष्टनिवृत्तिद्वारा श्रीप-रमेश्वरप्रीत्यर्थं नारदसंहितोक्तशान्तिं चैकतन्त्रेण करिष्ये । तत्पूर्वाङ्गत्वेन मातृपूजा-नान्दीश्राद्ध-पुण्याहवचनानि अग्नि-स्थापनं प्रधानदेवतास्थापनं कलशस्थापनं तत्र ब्रह्मवरुण-पूजनपूर्वकं ग्रहपूजनं, रक्षाविधानं च करिष्ये इति संकल्प्य यथाविधि मातृपूजादि पुण्याहवाचनान्तं विधाय स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य आचार्यादीन् वृणुयात् । अद्येह करिष्यमाणप्रथमरजोदर्शनशान्तिकर्म्मणि आचार्यादीनां पूजनपूर्वकं वरणं करिष्ये इति संकल्प्य नमोऽस्त्वनन्तायेति नमो ब्रह्मण्यदेवायेत्यादिना च गन्धपुष्पाक्षतादिभिः सम्पूज्य वरणसामग्रीं करे गृहीत्वा एभिर्गन्धाक्षतपुष्पपूगीफलद्रव्यवासो-भिः प्रथमरजोदर्शनशान्तिकर्म्मणि आचार्यत्वेन त्वामहं वृणे इति वृत्वा, आचार्यस्त्विति तं प्रार्थयेत । ततः ब्रह्मवरणं कु-र्य्यात् । पूर्ववत्संपूज्य वरणसामग्रीं करे गृहीत्वा प्रथमरजोदर्श-नशान्तिकर्मणि ब्रह्मत्वेन त्वामहं वृणे इति वृत्वा यथा च-तुर्मुख इत्यादिना प्रार्थयेत । दूर्वा-तिल-यवहोमार्थं, मासा-दिषु बहुषु दुष्टेषु प्रथमरजोदर्शने जाते सति रुद्राभिषेकार्थं नवचण्डीपाठार्थं शान्तिकाध्यायादिपाठार्थं च अन्यान् ब्राह्म-णांश्चैवमेव वृणुयात् । ततो यजमानः आचार्यो वा सुवर्णप्रतिमां हिमस्यतेरेत्यग्न्युत्तारणपूर्वकं पञ्चामृतेन संस्नाप्य अग्नेरीशाने -कलशं संस्थाप्य तत्र वा, तण्डुलपूर्णताम्रादिपात्रे एव वा तां प्रतिमां संस्थाप्य तत्र सवितृरूपां भुवनेश्वरीमावाह्य गाय-त्र्या, आकृष्णेनेति मन्त्रेण, ॐ भुवनेश्वर्यै नम इतिनाममन्त्रेणच ध्यानादिनीराजनान्तं सम्पूजयेत । भुवनेश्वरीत उत्तरे कलश-विधिना कलशं संस्थाप्य तत्र उक्तरीत्या ब्रह्मवरुणसहिता-

दिग्पाल नवग्रहानावाह्य सम्पूज्य रक्षाविधानेन रक्षासूत्रं चाभिमन्त्र्य कलशं संस्थापयेत्। तत्र आचार्यो ब्रह्मोपवेशनादि पर्युक्षणान्तं कर्म्म निर्वर्त्य एतंते इत्यादिना (तारण)-वरदनामानमग्निं प्रतिष्ठाप्य ॐचत्वारि० इति ध्यात्वा ॐअग्ने-नयेति मन्त्रेण नाममन्त्रेण च नीराजनान्तं सम्पूज्य रेखा जिह्वाश्च पूजयेत्।

ततो यजमानो देवताभिध्यानपूर्वकं द्रव्यत्यागं कुर्यात्। अग्नेह प्रथमरजोदर्शनशान्तिकर्म्मणाऽहं यक्ष्ये। तत्र प्रजापतिम्, इन्द्रम्, अग्निम्, सोमम्, आज्येन—सवितृरूपां भुवनेश्वरीम् आज्येन आज्याक्तैः दूर्वा-तिल-यवद्रव्यैश्च-अग्निंस्विष्टकृतमाज्यादिद्रव्यैः-अग्निं, वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणंसवितारं विष्णुं विश्वान् (देवान्) मरुतः स्वर्कान्, वरुणं, प्रजापतिम्, अग्निं वैश्वानरं चाज्येनाहं यक्ष्ये। इदमाज्यम् आघाराज्यभागदेवताभ्यः, तथेदं घृतं घृताक्तं दूर्वा-तिल-यव द्रव्यं च पृथक्पृथगष्टोत्तरशतसंख्यया सवितृरूपायै भुवनेश्वर्यै, शेषं स्विष्टकृते, इदमाज्यं महाव्याहृतिदेवताभ्यःसर्वप्रायश्चित्तदेवताभ्यः प्रजापतये ऽग्नये च मया परित्यक्तं यथादैवतमस्तु ॐतत्सत् मम इति। एवं यजमानेन कृते द्रव्यत्यागे आचार्यः ब्रह्मान्वारब्धः ॐप्रजापतये स्वाहा इति मनसा हुत्वा, ॐइन्द्राय स्वाहा ॐअग्नये स्वाहा ॐसोमाय स्वाहा इति आघारावाज्यभागौ च हुत्वा अन्यैः सह प्रधानहोमं कुर्यात्। संस्रवं प्रणीताग्न्योर्मध्ये स्थापिते प्रोक्षणीपात्रे निक्षिपेत्। (इदं प्रजापतये न ममेत्यादिकंत्यागमदृष्टार्थं कुर्यात् इति केचित्। वस्तुतस्तु नैव कुर्यात्, यजमानेन पूर्वमेव त्यागस्य कृतत्वेन प्रयोजनाभावादिति द्वैतनिर्णये वा-

चस्पतिमिश्राः)। (गायत्रीमन्त्रस्य विश्वामित्रऋषिः गायत्रीछन्दः सविता देवता आज्यादिहोमे विनियोगः)। ॐ भूर्भुवः स्वः० प्रचोदयात् इति गायत्र्या आज्य-दूर्वा-तिल-यवैः १०८ प्रधानहोमानन्तरं ब्रह्मणा ऽन्वारब्धः शेषैराज्यादिद्रव्यैः स्विष्टकृतं हुत्वा भूरादिव्याहृतिहोमं सर्वप्रायश्चित्तहोमं च कुर्यात्। ततः संस्रवप्राशनम्, पवित्राभ्यां मुखमार्जनम्, पवित्रयोरग्नौ प्रतिपत्तिः, प्रणीताविमोकः। यजमानः पूर्णपात्रदानं कुर्यात्। अद्येह अमुको ऽहं कृतस्य प्रथमरजोदर्शनशान्तिहोमकर्म्मणः साद्गुण्यार्थम् अपूर्णपूरणार्थंच इदं पूर्णपात्रं सहिरण्यं सदक्षिणं ब्रह्मणे तुभ्यं सम्प्रददे। अक्रन्कर्मेतिमन्त्रपाठः। ॐ तनूपा ऽअग्ने ऽसीत्यादिभिरङ्गान्यालभेत। ततः आचार्यः पूर्णाहुतिं जुहुयात्। त्र्यायुषं कृत्वा यजमानः देशकालकीर्त्तनान्ते अमुकोऽहं ममास्याःवध्वाः मासतिथिनक्षत्रवारयोगकरणमुहूर्त्तसमयवस्त्रेषु यत्रकुत्रचिद्दुष्टे जातप्रथमरजोदर्शनसूचितारिष्टनिवृत्तिसकलसौभाग्यप्राप्तिद्वारा श्रीपरमेश्वरप्रीतये कृतस्यभुवनेश्वरीशान्तिकर्म्मणः साङ्गतासिद्ध्यै इदं सुवर्णं वह्निदैवतम्, इमां गां रुद्रदैवताम्, इमां भूमिं विष्णुदैवताम्, सोमदैवतम् इदं तिलपात्रं च तत्तन्निष्क्रयीभूतं द्रव्यं वा तथा कलशे आवाहितानामादित्यादिग्रहाणां ब्रह्मवरुणयोश्च पूजनकर्मणः साद्गुण्यार्थमिमां दक्षिणां, तथा सुपूजितामिमां सौवर्णीं भुवनेश्वरीप्रतिमां च आचार्यादिभ्यो होमकर्तृभ्यो ब्राह्मणेभ्यो विभज्य दास्ये इति संकल्पयेत्॥ शान्तिकाध्यायपाठादिकरणे तथा शान्तिकाध्यायपाठकर्म्मणः साद्गुण्यार्थमिमां दक्षिणां, तथा नवावृत्तिचण्डीपाठकर्म्मणः साङ्गफलप्राप्तये इमां दक्षिणां, तथा रुद्रैकादशिन्याः साङ्गतासिद्ध्यै इमां दक्षिणां ब्राह्मणेभ्यो दास्ये। तथा कृतैतच्छान्तिकर्म्मणः न्यूनातिरि-

त्कदोषपरिहारार्थमिमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दास्ये। तथा सकलकर्म्मणां साङ्गतासिद्ध्यै यथासंख्याकान् ब्राह्मणान् भोजयिष्ये इति सङ्कल्प्य, दक्षिणां दत्त्वा क्षेत्रपालाय बलिं दत्त्वा अग्निं सपूज्य विसृजेत्। यजमानस्य गर्भाधानमन्त्राणामज्ञाने स रात्रौकर्तव्यगर्भाधानमन्त्रान् वक्ष्यमाणान् आचार्येण शिक्षित्वा "विजिहीथां द्यावापृथिवी"-इति मन्त्रम्, "इन्द्रियेण ते रेतसा रेत ऽआदधामि"इति मन्त्रम्, "विष्णुर्योनिम्" इत्यादीन् मन्त्रान्, "यचे सुसीमे" इति मन्त्रं च बध्वा नाभिदेशे हस्तं स्थापयित्वा इदानीमेवापकृष्य पठित्वा देवता विसृजेत्। तत आचार्यादयः कुम्भजलेन स्वस्तिनइत्यादिवैदिकैः सुरास्त्वामभिषिञ्चन्त्वित्यादिपौराणैश्च मन्त्रैः सपत्नीकं यजमानमभिषिञ्चेयुः। तिलकरक्षासूत्रबन्धनमन्त्रपाठादिकं च कुर्य्युः। यजमानश्च घृते छायादर्शनं तद्दानं च विधाय दश यथाशक्ति वा ब्राह्मणान्भोजयित्वा स्वयं च इष्टैः सह भुञ्जीत।

(नारदसंहितायाम् इन्द्राण्याः इन्द्रस्य च पूजनस्यानुक्तत्वात् क्वचित् क्वचित् प्रयोगे उक्तमपि तत्पूजनादिकमस्माभिः प्रयोगे न स्थापितम्। यद्यपि तत्र "गायत्र्या जुहुयात्"इत्येव श्रुतं न-तु भुवनेश्वरीनामोल्लेखः तथापि चिद्रूपायास्तस्याः सकलजगदुत्पादकत्वरूपसवितृत्वस्य सत्त्वाद् गायत्रीमन्त्रप्रतिपाद्यत्वेन पूज्यत्वात् तन्मन्त्रकरणहोमोद्देश्यत्वमुचितम्, संस्कारकौस्तुभे च सवितृत्वेन भुवनेश्वर्या एव होमोद्देश्यत्वमिति स्पष्टमेवोक्तम्, अतो नारदोक्तशान्तिप्रकारेऽस्माभिः भुवनेश्वर्येव पूज्यत्वेनोक्तेति बोध्यम्॥ शौनकाद्युक्तप्रकारा अन्यशाखिनामिति नास्माभिः परिगृहीताः)॥ इति प्र. र. शान्तिः॥

अथ सुलग्ने रात्रौ भर्ताऽऽचम्य प्राणानायम्य गणेशादीन् नत्वा स्वलङ्कृतो द्विगुणानुरागः अनुरागिणीं स्वलङ्कृतां स्त्रियम् अभिगच्छेत् । तद्यथा–"*विजिहीथां द्यावापृथिवी" इति मन्त्रेण भार्याया ऊरू विश्लिष्टौ कृत्वा स्त्रिया उपस्थे प्रजननेन्द्रियं निक्षिप्य चुम्बनादिपूर्वकम् "इन्द्रियेण ते रेतसा रेत ऽआदधामि÷" इति मन्त्रं पठित्वा ( अपान्याभिप्राण्यात् ) विहरेत् । एवं ग्राम्यधर्मान्ते +ॐविष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि

---

* श० ब्रा० कां० १४ अ० ९ ब्रा० ४ कण्डिका २० । अथास्या ऽऊरू विहापयति 'विजिहीथां द्यावापृथिवी' इति तस्यामर्थं निष्ठाप्य मुखेन मुखꣳसन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिमिति।

'विजिहीथां द्यावापृथिवी'इत्यनेन अस्या भार्याया ऊरू सक्थिनी विहापयति विश्लेषयति । द्यावापृथिवी इत्यूर्वोः सम्बोधनम् । हे द्यावापृथिवी द्यावापृथिव्यौ हेऊरू युवां विजिहीथां विश्लिष्टे भवतमित्यर्थः ।

÷तस्याम् अर्थं प्रजननेन्द्रियं निष्ठाप्य निक्षिप्य मुखेन मुखं सन्धाय चुम्बित्वा पूर्वोक्तेन "इन्द्रियेण ते रेतसा रेत ऽआदधामि" इति मन्त्रेण ( अस्मिन्नेव ब्राह्मणे दशमकण्डिकोक्तेन ) रेतः सिञ्चेत् । स्वकीयपञ्चमेन्द्रिये तदीयपञ्चमेन्द्रियाद्रेतः स्वीकृत्य तत्र पुत्रोत्पत्तिसमर्थं जातमिति मत्वा स्वकीयरेतसा सह तस्मिन्निक्षिपेत् । तदिदम् अपाननम् । प्राणनं च तत्पूर्वकं रेतःसेचनम् । एवं ग्राम्यधर्मान्ते कर्तव्यशेषमुपादिशति, त्रिरेनामिति । एनां योनौ प्रक्षिप्तरेतस्कां भार्याम् अनुलोमां मूर्द्धानमारभ्य पादान्तं मन्त्रमुच्चरन् त्रिवारं पाणिनाऽनुमार्ष्टि विष्णुर्योनिमित्यादिभिः प्रतिमन्त्रम् । अन्ते नाम गृह्णाति असाविति ।

+विष्णुः व्यापनशीलो भगवान् नारायणस्तव योनिं कल्पयतु पुत्रोत्पत्तिसमर्थां करोतु । त्वष्टा सविता तव मम च सुतस्य रूपाणि अवयवान् पिंशतु विभागशः दर्शनयोग्यान् करोतु । प्रजापतिर्विरा-

पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते १ *गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके। गर्भं ते ऽअश्विनौ देवावाधत्तां पुष्करस्रजौ २ +हिरण्ययी ऽअरणी याभ्यान्निर्मन्थतामश्विनौ देवौ। तं ते गर्भं दधामहे दशमे मासि सूतवे॥ ÷यथा ऽग्निगर्भा पृथिवी द्यौरिन्द्रेण गर्भिणी। वायुर्दिशां यथा गर्भ ऽएवं गर्भं दधामि तेऽसुकदेवि ३ इत्येतैः प्रतिमन्त्रं शिर आरभ्य पादपर्यन्तं योनौ भक्षिप्तरेतस्कां भार्यां पाणिना ऽनुमार्ष्टि। ततः-(ऋ. मं. अष्ट. ४। अ. ७ व. ३३ मं. २)।

ॐरूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयः

---

ङात्मा मदात्मना स्थित्वा त्वयि रेतः समासिञ्चतु प्राक्षिपतु। धाता पुनः सूत्रात्मा ते त्वदीयकर्म त्वदात्मना स्थित्वा दधातु पुष्णातु ॥ १ ॥

*हेसिनीवालि अन्नवति पत्नसंज्ञे या देवि त्वं निषिक्तगर्भं धारय। पृथुर्विस्तीर्णा स्तुका स्तुतिर्यस्यास्तस्याः सम्बुद्धिर्हेपृथुष्टुके हेमहास्तुते त्वं गर्भं धारय। अश्विनौ च देवौ सूर्याचन्द्रमसौ स्वकीयरश्मिमालिनौ पुष्करस्रजौ सुवर्णकमलाभरणौ तव गर्भं मदात्मना स्थित्वा समाधत्ताम् ॥ २ ॥

+हिरण्ययी हिरणमय्यौ ज्योतिर्मय्यौ अरणी, प्राग् बभूवतुरिति शेषः। याभ्यामरणिभ्यां पुराऽमृतरूपं गर्भमश्विनौ निर्मन्थताम् निर्मथितवन्तौ। तं तथाभूत गर्भं ते तव जठरे दधामहे धारयामहे दशमे मासि सूतवे प्रसोतुम्। (तुमर्थेसेसे इति सूत्रेण सूधातोस्तवेङ्प्रत्ययः)॥

÷यथा पृथिवी अग्निगर्भा, यथा द्यौः इन्द्रेण सूर्येण गर्भिणी, यथा वायुर्दिशां गर्भः तथा ते गर्भं दधामहे असुकसुन्दरि इति भार्याया नामग्रहणम्। असावित्ति पत्युर्वा नामग्रहणम् ॥ ३ ॥

शता दश-इति मन्त्रं समाचारात् पठित्वा शौचं विधायाचम्य वधूं वामत उपवेश्य बध्वा दक्षिणांसस्योपरि हस्तं नीत्वा हृदयमालभेत-

*ॐयत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्। तद्वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतम्-इति। ततः ताम्बूलचर्वणं कृत्वा शयीत इति ॥ एकस्यां रात्रौ सकृदेव गमनमिति याज्ञवल्क्यः। तत उत्तरेऽह्नि प्रातर्नित्यकर्म समाप्य स्थापितदेवता गन्धाद्युपचारैः संपूज्य प्रणम्य विसृज्याचम्य कृतं कर्मेश्वरायार्पयेत् ॥ इति गर्भाधानप्रयोगः ॥

(इदं च गर्भाधानं प्रथमर्तौ मलमासशुक्रास्तादावपि कार्यम्। द्वितीयादौ तु नेति निर्णयसिन्ध्वादौ स्पष्टम्। गर्भाधानसंस्कारं विना गर्भधारणे गां तन्निष्क्रयं वा दत्त्वा पुंसवनादिकं कार्यम्। पारस्कराचार्येण अमन्त्रकाभिगमनस्यैवोपदेशात् तदनन्तरमपि हृदयालम्भमात्रस्यैव विधानात् हरिहरपद्धतौ गदाधरपद्धतौ च तावन्मात्रमेव कर्तव्यत्वेन निर्दिष्टम्। अर्वाचीनेषु संस्कारभास्करादिषु पारस्करगृह्ये प्रक्षिप्तं शाखान्तरीयं खण्डं कात्यायनपरिशिष्टत्वेनोल्लिख्य तदुक्तेतिकर्तव्यता निर्दिष्टा। अस्माभिस्तु शतपथब्राह्मणे प्रत्यक्षमुपदिष्टेतिकर्तव्यतैव प्रदर्शिता। प्रत्यक्षश्रुतिमूलकत्वादियमेव विद्वद्भिर्ग्राह्येति दिक्। केचित्तु गृह्यकारेण शतप-

*हे सुसीमे शोभनसीमन्तिनि यत् ते तव हृदयं मनः दिवि वर्तमाने चन्द्रमसि श्रितं स्थितं मनसश्चन्द्राधिष्ठितत्वात् तदहं वेद जानीयां, तच्च मनः मां विद्यात्। एवं मिथोऽनुरक्तहृदया वयं शतं शरदो वर्षाणि पश्येमेत्यादि पूर्ववत् ॥

थोक्तायाः समन्त्रिकाया अभिगमनेतिकर्तव्यताया अनुपदेशात् समन्त्रिकायाः कुशकण्डिकाया इव समन्त्रकाभिगमनेतिकर्तव्यताया अपि परित्याग एवोचितः स्मार्ते कर्मणि। शतपथोक्ता तु आरण्यकोपदिष्टत्वादुपासकानामुपासनाकर्मणि नियता। तस्मात् हरिहराद्युक्तेतिकर्तव्यता सुधीभिर्ग्राह्या, शाखान्तरीया तु सर्वथा न ग्राह्येत्याहुः)॥

(२)अथ पुंसवनम्॥

गर्भधारणतो द्वितीये तृतीये वा मासे यस्मिन्नहनि चन्द्रमाः पुंनक्षत्रेण पुनर्वसुपुष्यश्रवणहस्तादिना युक्तः तस्मिन् चन्द्रताराऽनुकूले रिक्तापर्वाणि वर्जयित्वा सूर्यभौमगुरुवारेषु गर्भिणीं संस्नाप्य तत्पतिः स्वयं च स्नात्वा उभावप्युपोषितौ भूत्वा गर्भिणीमेवबोपवास्य अहते धौते वाससी परिधाप्य प्रथमं(स्वस्तिवाचनं) शान्तिपाठं कृत्वा दीपं प्रज्वल्याचम्य प्राणानायम्य देवेभ्यः पुष्पाञ्जलिं समर्प्य उक्तविधिना गणेशं सम्पूज्य प्रधानसङ्कल्पं कुर्यात्। अमुकोऽहं ममास्यां भार्यायाम् उत्पत्स्यमानापत्यगर्भस्य बीजगर्भसमुद्भवैनोनिबर्हण–पुंरूपताज्ञानोदयप्रतिरोधिकर्मनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म करिष्ये। पुंसवनकर्मणः पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये इति सङ्कल्प्य मातृपूजादि विधाय अस्तमये वटवृक्षस्यावरोहान् अधोभागे जायमानानङ्कुरान्, शुङ्गान् अग्रपल्लवान्मुकुलाकारांश्च उदकं यथा स्यात् तथा पिष्ट्वा शुभ्रवस्त्रेण निष्पीड्य तद्रसं गर्भिण्या दक्षिणनासिकायामासिञ्चति— (हिरण्यगर्भः, अद्भ्यः संभृतः इत्यनयोः क्रमेण प्रजापत्युत्तरनारायणौ ऋषी त्रिष्टुप्छन्दः प्रजापतिपुरुषौ देवते नासिकायां रसासेके विनियोगः)।

*ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक ऽआसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम १

+ॐ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे। तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे॥ इति मन्त्राभ्याम् उदरमाप्तिक्षममासिञ्चेत्॥

स यदि "वीर्य्यवान् पुत्रः स्यात्" इति कामयेत तदा उदकपूर्णं शरावं भार्याया अङ्के धृत्वा गर्भाभिमन्त्रणं कुर्य्यात्। अनामिकाऽग्रेण गर्भाशयं स्पृशन्—(सुपर्णोऽसीति प्रजापतिऋषिः कृतिश्छन्दः गरुत्मान् देवता गर्भाभिमन्त्रणे विनियोगः)।

---

*य.सं.अ. १३ मं ४ हिरण्यगर्भः हिरण्यगर्भाख्यः पुरुषः समवर्तत समभवत् अग्रे प्रथमम्। यो हिरण्यगर्भो जातो जातमात्रो भूतस्य प्राणिजातस्य एकोऽद्वितीयः पतिरासीत् स्वामी बभूवेत्यर्थः। एवंभूतः स पृथिवीं दाधार धृतवान्, न केवलं पृथिवीम् उत अपि इमां द्याम् अन्तरिक्षम्। एवंभूताय कस्मै काय प्रजापतये देवाय हविषा हविर्विधेम दद्मः॥

+य. सं. अ. ३१ मं. १७ यो विष्णुः अग्रे प्रथमम् अद्भ्यः जलात् पृथिव्यै च पृथिव्या अपि चकारो भिन्नक्रमः सम्भृतः समवर्त्तत उत्पन्नोऽभवत्। जलपृथिव्योरुपादानं पञ्चभूतोपलक्षणार्थम्। कुतो निमित्तकारणात्, विश्वकर्म्मणः—विश्वं सर्वं कर्म्म यस्य तस्य रसात्—कामात् सिसृक्षारूपात्। तस्य विष्णो रूपं मूर्तिं विदधत् धारयन् त्वष्टा आदित्यः अग्रे पुरतः सर्वेषाम् अपरोक्षम् इत्यर्थः य एति आगच्छति तद्रूपं मर्त्यस्य मनुष्यस्य देवत्वेनैव भवति। किम्भूतम्, आजानं यावज्जीवम्। विष्णुः सृष्ट्यादौ पञ्चमहाभूतेभ्य उपादानकारणेभ्यः सिसृक्षां निमित्तकारणं प्राप्य उदपद्यत, तदनु आदित्यः तस्य विष्णोर्यद्रूपं तद् धारयन् गच्छतीति सर्वेषां प्रत्यक्षम्। तद्रूपं मनुष्यस्य देवत्वेन भवतीति वाक्यार्थः॥

*ॐसुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ ॥ स्तोम ऽआत्मा छन्दाᳬंस्यङ्गानि यजूᳬंषि नाम ॥ साम ते तनूर्वामदेव्यं, यज्ञायज्ञियं पुच्छं, धिष्ण्याः शफाः ॥ सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत ॥ इति मन्त्रं जपति । ततो दक्षिणासङ्कल्पः । अद्येहामुकोऽहं कृतस्यास्य पुंसवनकर्म्मणः साद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये ॐ तत्सत् । तथा दश यथाशक्ति वा ब्राह्मणान् भोजयिष्ये । ततोऽभिषेकमन्त्रपाठादि कारयेत् ॥ इदं स्वकालेऽकृतं चेत् सीमन्तेन सहैव कार्यम् । इति पुंसवनकर्म्म ॥

## (३)अथ सीमन्तोन्नयनम् ।

तच्च प्रथमगर्भे गर्भधारणप्रभृति षष्ठेऽष्टमे वा मासि पुष्यादिपुंनक्षत्रयुक्ते चन्द्रे चन्द्रताराद्यनुकूले दिवसे कार्यम् । तत्र पूर्वं गणेशपूजनं कृत्वा प्रधानसङ्कल्पं कुर्यात्–अद्येहामुकोऽहम् अस्यां

मम भार्याया गर्भाभिवृद्धिपरिपन्थिपिशितप्रियाऽलक्ष्मीभूतराक्षसगणनिरसनक्षम–सकलसौभाग्यनिदान–महालक्ष्मीसमावेशनद्वारा प्रतिगर्भं बीजगर्भसमुद्भवैनोनिबर्हणद्वारा च श्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररूपं सीमन्तोन्नयनाख्यं कर्म करिष्ये इति । तत्पूर्वाङ्गत्वेन गणपतिसहितगौर्यादिषोडशमातॄणां पूजनं नान्दीश्राद्धं पुण्याहवाचनं च करिष्ये इति सङ्कल्प्य यथाविधि मातृपूजनादि विधाय बहिः शालायां स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य तदीशाने कलशविधिना कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य उक्तविधिना सम्पूज्य रक्षासूत्रमभिमन्त्र्य कलशे संस्थाप्य अग्नेः पश्चादागत्योपविश्य स्वदक्षिणतो गर्भिणीं स्त्रियमुपवेश्य आचार्यब्रह्मणोर्वरणं कृत्वा ब्रह्मोपवेशनादिपरिस्तरणान्ते पवित्रच्छेदनानि त्रीणि कुशतरुणानि, द्वे पवित्रे, प्रोक्षणीपात्रम्, आज्यस्थाली, चरुस्थाली, संमार्जनकुशाः पञ्च, उपयमनकुशास्त्रिप्रभृतयः, समिधस्तिस्रः, स्रुवः खादिरः, आज्यम्, तण्डुलाः मुद्गाः तिलाः पृथक्पृथक्, पूर्णपात्रं, कर्मोपयोगिनी दक्षिणा एतानि वस्तूनि अग्नेरुत्तरतः प्राक्संस्थानि उदगग्राणि स्थापयेत् । अत्र विशेषोपकल्पनीयानि–मृदुपीठम्, अपक्वाद्यादियुग्मफलवती औदुम्बरसमित्, पवित्रलक्षणास्तिस्रो दर्भपिञ्जूलयः, त्र्येणी शलली, शरैषीका अश्वत्थशङ्कुर्वा, सूत्रपूर्णं सूत्रकर्त्तनसाधनं, वीणागाथिनौ चेति । ततः त्रिभिर्दर्भैः द्वे प्रच्छिद्य प्रोक्षणीपात्रं प्रणीतात उत्तरतो निधाय तत्र दक्षिणहस्तेन त्रिः प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय प्रोक्षणीपात्रं दक्षिणेन सव्ये धृत्वा मध्यमानामिकाग्रमध्यपर्वभ्यां तज्जलमुच्छाल्य प्रणी-

तोदकेन पवित्राभ्यां तज्जलं प्रोक्ष्य तेन जलेन, आज्यस्थालयादीन् प्रत्येकं प्रोक्ष्य विशेषोपकल्पनीयानि मृदुपीठादीनि न प्रोक्षेत् । तण्डुलादीन् त्रिस्त्रिः प्रक्षाल्य आज्यस्थाल्यामाज्यमग्नावधिश्रित्य चरुस्थाल्यां प्रणीतोदकमासिच्य तत्र पूर्वं मुद्गान् प्रक्षिप्य अग्नावारोप्य ईषत्पक्वेषु मुद्गेषु तिलतण्डुलान् प्रक्षिप्य अर्धश्राणे चरौ ज्वलदुल्मुकम् आज्यस्य समन्ताद्भ्रमयित्वा चरोः समन्ताद्भ्रमयेत् । उदकं स्पृष्ट्वा स्रुवं प्राञ्चं प्रतप्य उ. स्पृ. कुशाग्रैः उत्तानं मूलतोऽग्रपर्यन्तं, मूलैः अधः अग्रतोमूलपर्यन्तं संमार्ज्याभ्युक्ष्य पुनः प्रतप्य उ. स्पृ. हस्तेन संमार्ज्य दक्षिणतोनिधाय अर्द्धश्राणेषु मुद्गेषु तिलमिश्रतण्डुलान् क्षिपेत् । एवं चरुं श्रपयित्वा आज्यं चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः संस्थाप्य चरुमाज्यस्य पश्चिमतो नीत्वाऽऽज्यस्योत्तरतः संस्थाप्य ततः आज्यमग्नेः पश्चान्निधाय तदुत्तरतश्चरुं निधाय आज्यमुत्पूयावेक्ष्य प्रोक्षणीश्चोत्पूय पवित्रे तत्र निधाय उपयमनकुशानादाय घृताक्तास्तिस्रः समिधोऽग्नौ तूष्णीं तिष्ठन् प्रक्षिप्योपविश्य प्रोक्षणीजलेनेशानाद्युत्तरपर्यन्तमभ्युक्ष्य पवित्रे प्रणीतायां निधाय प्रोक्षणीपात्रं संस्रवधारणार्थं प्रणीताग्न्योर्मध्ये धारयेत् ।

ततो देवताभिध्यानं कुर्यात् । अत्रेह सीमन्तहोमकर्मणा यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमम् आज्येन–प्रजापतिं तिलमिश्रितमुद्गस्थालीपाकेन—अग्निं स्विष्टकृतम् आज्यस्थालीपाकाभ्याम्—अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् (देवान्) मरुतः स्वर्कान्, वरुणं, प्रजापतिं आज्येन यक्ष्ये इति । ॐएतन्तेइति प० मङ्गलनाम्नि सुमंतिष्ठितो वरदो भवेति अग्निं प्रतिष्ठाप्य चत्वारीति ध्यात्वा अत्तेन-

येति ॐमङ्गलनामाग्नये नम इति च पाद्यादिभिः सम्पूज्य आघारावाज्यभागौ च हुत्वा स्थालीपाकेनाज्यमिश्रितेन जुहोति ॐप्रजापतये(इति मनसा) स्वाहा इदं प्रजापतये न मम। ततः ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम। तत आज्येन भूरादिनवाहुति होमं कृत्वा संस्रवप्राशनादि पूर्णपात्रदानं च विधाय ततोऽग्नेः पश्चाद्भर्त्तुर्वामतो भद्रपीठोपरि मृद्वासने स्थितायाः स्त्रियाः सीमन्तकेशे अपक्वौदुम्बरफलयुग्मवत्या समिधा, तिसृभिर्दर्भपिञ्जूलीभिः,श्येण्या शलल्या,शरेषीकया, सूत्रपूर्णलोहकीलेन च ललाटान्तरमारभ्य द्विधा करोति। तद्यथा (व्याहृतीनां प्रजापतिऋषिः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः विनयने विनियोगः)।

*ॐभूर्विनयामि ॐभुवर्विनयामि ॐस्वर्विनयामि इति त्रिर्विनयनं कृत्वा अथ औदुम्बरादिपञ्चकं पुञ्जीकृतं तस्या वेण्यामावध्नाति-(अयमूर्जावत इत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः फलिनी देवता वेणीबन्धने विनियोगः)।

+ॐअयमूर्ज्जावतो वृक्ष ऽऊर्ज्जीव फलिनी भव- इति मन्त्रेण बध्नीयात्—वेण्यां त्रिवृत्कुर्य्यात्। अथ वीणागाथिनौ प्रेषयति "सोमꣳराजानं गायताम्"इति। तौ च प्रेषितौ वीणामादाय (सोममित्यस्य प्रजापतिर्ऋषिः गायत्री छन्दः सोमो देवता गाने विनियोगः)। ॐसोम ऽएव नो-

---

*हेस्त्रि भूरादिलोकत्रयम्, वेदत्रयम्, अग्नित्रयं, प्राणत्रयं वा तव सुखार्थं स्वत्सीमन्तं विनयामि प्रापयामि॥

+हेस्त्रि यतोऽयं वृक्षः, ऊर्जावान् इति शेषः। हलन्ताट्टाप् निशा दिशेतिवत्। अतोऽस्य ऊर्जावतो वृक्षस्य ऊर्जीव सफलशाखेव त्वमपि फलानी फलवती भव॥

राजेमा मानुषीः प्रजाः । अविमुक्तचक्रऽआसीरँस्तीरे तुभ्यम्*-गङ्गे इति गायतः । गर्भिणी यस्या नद्याः समीपे स्थिता भवति तस्याः गङ्गे, यमुने इति वा संबुद्ध्यन्तं नाम तैव गृह्णीयादिति हरिहरः । ततो दक्षिणासङ्कल्पः । अद्येहामुकोऽहम् अस्या भार्यायाः सीमन्तोन्नयनकर्म्मणः साङ्गुण्यार्थम् इमां दक्षिणामाचार्यादिभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् इति सङ्कल्प्य दक्षिणां दत्त्वा दश यथाशक्ति वा ब्राह्मणान् भोजयिष्ये इत्येवं सङ्कल्प्य अभिषेकतिलकरक्षाबन्धनघृतच्छायादर्शनव्याहृत्युपमन्त्रपाठादिकं कारयेत् । ततो ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीत ॥

इति सीमन्तोन्नयनप्रयोगः ॥

## (४)अथ क्रमप्राप्तं जातकर्मोच्यते ।

तत्र तावत्सुखप्रसवार्थं सोष्यन्तीकर्म्म । सोष्यन्तीं (प्रसवशूलवतीं) प्रसवोन्मुखीं स्त्रियम् अद्भिरभ्युक्षति । (एजत्विति प्रजापतिर्ऋषिः महापङ्क्तिश्छन्दः गर्भो देवता अभ्युक्षणे विनियोगः) ।

+ॐएजतु दशमास्यो गर्भो जरायुणा सह । यथा-

---

*सोमश्चन्द्र एव नोऽस्माकं राजा प्रभुः, अतः इमाः प्रजाः मानुषीः मानुष्यः सौम्याः न तु राक्षस्यः । 'यथा राजा तथा प्रजा' इति स्मृतेः । हे गङ्गादिनदि तुभ्य-तव सोमरूपायास्तीरे प्रजा आसीरन् त्वामाश्रित्य स्थिताः । कीदृशे, अविमुक्तचक्रे अनुल्लङ्घितराजाज्ञे । 'चक्रं रथाङ्गे व्यूहे च राजाज्ञायां प्रवर्तने' इत्यभिधानात् ॥

+य. स. अ ८ मं. २८ दश मासा जाता यस्य स दशमास्यो गर्भः जरायुणा गर्भवेष्टनेन सह एजतु कम्पतां चलतु । तत्र दृष्टान्तः-यथा येन प्रकारेणायं वायुरेजति चलति, यथा च स-

ऽयं वायुरेजति यथा समुद्र ऽएजति । एवायं दशमास्यो ऽअस्त्रज्जरायुणा सह-इत्यभ्युक्ष्य (अवैत्विति प्रजापतिर्ऋषिः बृहती छन्दः अग्निर्देवता अवपाते विनियोगः) ।

*ॐअवैतु पृश्नि शेवलᳬ शुने जराय्वत्तवे । नैवमाᳬसेन पीवरि । न कस्मिँश्चनायतमव जरायु पद्यताम्-इति मन्त्रं पठेत् । एतच्च गर्भमात्रविमोक्षणे कार्य्यम् ॥

## अथ जातकर्म्मप्रयोगः ।

अथ पुत्रे जाते पिता पुत्रस्य मुखमवलोक्य नद्यादौ, स्वर्णयुक्तेनोद्धृतशीतजलेन वा शीघ्रं सचैलं स्नायात् । अद्येह अमुकोऽहं पुत्रजननिमित्तकं सचैलं स्नानं करिष्ये इति सङ्कल्प्य स्नात्वा शुभे नवे धौते वाससी परिधाय प्राङ्मुख उपविश्याचम्य दीपं प्रज्वलय्य (स्वस्तिवाचनं) शान्तिपाठं कृत्वा इष्टदेवेभ्यः पुष्पाञ्जलिं समर्प्य नालच्छेदनात्पूर्वं गणेशपूजनं कु-

---

मुद्रः सागर एजति, एव्-एवम् अयं दशमास्यः संपूर्णावयवो गर्भो जरायुणा सह अस्रत्-स्रंसतां निर्गच्छतु । यद्यप्ययं गर्भो दशमास्यः कदाचिन्न भवति तथापि संपूर्णस्यैव निर्गमनमाशास्यते इति भाष्ये विस्तरः ॥

*हे स्रोष्यन्ति तव जरायु पेशी अवैतु अधः पततु । किम्भूतं, पृश्नि पिङ्गलरूपम् । "आयं गौः पृश्निः" इत्यादौ तथा व्याख्यानात् । पुनः किम्भूतं, शेवल-पिच्छलं श्लेपचितं वा । किमर्थं, शुने-शुनः (षष्ठ्यर्थे चतुर्थी) अत्तवे भक्षणाय । अद् भक्षणेऽस्मात्तुमर्थे तवेप्रत्ययः । हे पीवरि गर्भधारणेन पुष्टाङ्गि तव जरायु मांसेनान्त्ररूपेण सह आयतं संबद्धं नैवावपद्यतां मा पततु, न कस्मिंश्चन गर्भोपघातके निमित्ते सत्यपीति । आयत्तमिति पाठे कस्मिंश्चन कार्ये निमित्ते आयत्तं अधीनम् । अधीनो निघ्न आयत्त इत्यभिधानात् । गर्भोपचयाधीनमित्यर्थः ॥

ननिमित्तं* नान्दीश्राद्धं करिष्ये इति सङ्कल्प्य पूर्वोक्तवि-धानेन नान्दीश्राद्धं विदध्यात् । तत्रामान्नसकल्पस्थाने युग्मब्राह्मणभोजनपर्याप्तान्नसमर्थधान्यतश्चतुर्गुणं (चतुर्गुणधान्यलाभसमर्थ) द्विगुणं समं वा हिरण्यं ब्राह्मणाय दास्ये तद्द्वो नमो, नमो वृद्धि २ श्रियै इत्यूहः कार्यः ।

ततः पुण्याहं वाचयेत् । तद्यथा—अमुकोऽहं जातस्य पुत्रस्य करिष्यमाणजातकर्म्माख्यसंस्कारकर्म्मणि सकलमङ्गलाभिवृद्ध्यर्थं ब्राह्मणद्वारा पुण्याहं वाचयिष्ये तदङ्गत्वेन चतुर्णां ब्राह्मणानां पूजनं वरणं च करिष्ये इति संकल्प्य कृत्वा पुण्याहं वाचयित्वा कलशे ब्रह्मवरुणसहितनवग्रहानावाह्य सम्पूज्य रक्षासूत्रमभिमन्त्र्य पुत्रस्य मेधाजननाख्यं कर्म्म कुर्यात् ।

तत्र सुवर्णादितैजसे पात्रे मधुघृते मेलयित्वा केवलं घृतं वा सुवर्णान्तर्हितया ऽनामिकयाऽऽदाय जातं कुमारं सकृत्प्राशयति । जातस्य जिह्वामनुमार्ष्टीत्यर्थः । (व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि अग्निवायुसूर्यप्रजापतयो देवताः प्राशने विनियोगः) ।

+ॐभूस्त्वयि दधामि ॐभुवस्त्वयि दधामि ॐस्व-

---

*नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम् । पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः ॥ इति निर्णयसिन्ध्वादौ मार्कण्डेयपुराणवचनेन पुत्रजननिमित्तकस्यैव नान्दीश्राद्धस्य विधानात्, "न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु" । इति छन्दोगपरिशिष्टवचनेन तत्रैव जातकर्मणि तन्निषेधाच्च न जातकर्माङ्गतया सङ्कल्पवाक्ये तदुल्लेख इति बोध्यम् । तुल्यन्यायात् मातृपूजने पुण्याहवाचने च तथैवोल्लेख समाचारादिति दिक् ॥

+हे कुमार भूरादिलोकत्रय वेदत्रय प्राणत्रय वा त्वयि त्वदधीनं दधामि स्थापयामि । मेधाजननार्थमिति शेषः ॥

स्त्वयि दधामि ॐभूर्भुवःस्वः सर्वं त्वयि दधामि-इति सकृत्प्राशयेत् । इति मेधाजननम् ।

अथास्यायुष्यकरणम् । तद्यथा-जातस्य कुमारस्य नाभिसमीपे दक्षिणकर्णसमीपे वा जपति-(अग्निरायुष्मानित्यादीनामष्टानां मन्त्राणां प्रजापतिर्ऋषिः गायत्री छन्दः लिङ्गोक्ता देवताः आयुष्यकरणे विनियोगः) । (त्र्यायुषमित्यस्य नारायण ऋषिः उष्णिक् छन्दः शिवो देवता आयुष्यकरणे विनियोगः) ।

+ॐअग्निरायुष्मान्त्स वनस्पतिभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि १ ॐसोम ऽआयुष्मान्त्सौषधीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि २ ॐब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत् तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि. ३ ॐदेवा ऽआयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ४ ॐऋषय ऽआयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि५ॐपितर ऽआयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ६ ॐयज्ञ ऽआयुष्मान् स दक्षिणाभिरायुष्माँस्तेन त्वा·

---

+स प्रसिद्धोऽग्निरायुष्मान् अस्ति । कथं, वनस्पतीभिरिध्मादिभि (छान्दसो दीर्घ ) काष्ठैरिष्ट आयुष्मान् भवति । तेनाग्न्यायुषा हे कुमार त्वा त्वाम् आयुष्मन्तं निर्दोषदीर्घायुषं करोमि-इति वाक्यार्थ उत्तरमन्त्रेष्वपि सम्बध्यते । सोम ओषधीभिः फलपाकान्तैर्व्रीह्यादिभिः तदधिपत्वात् ( सौषधीभिरित्यत्र सन्धिरार्ष ) । ब्रह्म वेदो ब्राह्मणैरध्येतृभिः । देवा इन्द्रादयोऽमृतेन सुधया । ऋषयो व्रतैः कृच्छ्रादिभि । पितरः स्वधाभिः श्राद्धान्नै । यज्ञो दक्षिणादिभि । समुद्रः स्रवन्तीभिर्नदीभि-इत्येतावान् विशेष ॥

ऽऽयुषाऽऽयुष्मन्तं करोमि ७ ॐसमुद्र ऽआयुष्मान्त्स स्रवन्तीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ८ इति त्रिर्वा सकृद्वा जपेत् ॥ ॐत्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषं तन्नो ऽअस्तु त्र्यायुषम् ॥ इति च त्रिर्वा सकृद्वा जपेत् इति ॥

एतदायुष्यकरणम् ॥

अथ यदि पितुः कुमारस्य सर्वायुष्मासिकामना स्यात्तदा दिवस्परित्येकादशभिर्मन्त्रैः कुमारं सर्वाङ्गेष्वभिमृशति—

(दिवस्परीत्येकादशानां मन्त्राणां वत्सप्रीर्भालन्दनऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता जाताभिमर्शने विनियोगः)

ॐदिवस्परि प्रथमं जज्ञे ऽअग्निरस्मद् द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा ऽअजस्रमिन्धान ऽएनं जरते स्वाधीः ॥ १ ॥ विद्मा ते ऽअग्ने

---

य. सं. अ. १२ मं १८–२८ अग्निः प्रथमं दिवस्परि दिवः सकाशात् जज्ञे जातः । जातवेदाः अग्निः द्वितीयं द्वितीयवारम् अस्मत्परि अस्मत्सकाशात् ब्रह्मणो जज्ञे जातः । नृषु मनो यस्य सः नृमणाः प्रजापतिः (छान्दसं णत्वम्) अजस्रम् अनुपक्षीणमग्निम् अप्सु जलेषु अन्तर्व्यवस्थितं तृतीयं तृतीयवारमजनयत् । एवं बहुजन्माऽग्निः । स्वाधीः शोभना आहिताः धीर्बुद्धिर्यस्य स यजमानः एनं बहुजन्मानमग्निमिन्धानो दीपयन् सन् जरते जीर्यति । अग्निः प्रथमं द्युलोकस्योपरि सूर्यरूपेण उत्पन्नः । द्वितीयवारमस्मदीयमनुष्यलोकस्योपरि प्रसिद्धवह्निरूपेण जातः । तृतीयवारं समुद्रे वडवानलरूपेण जातः । त्रिष्वपि जन्मसु अग्निं पुरोडाशादिना दीपयन् यजमानः जरते जीर्यति जरापर्यन्तं परिचरतीत्यर्थः ॥ १ ॥

हे अग्ने यानि पूर्वं त्रेधा स्वरूपाण्युक्तानि आदित्याग्निवड-

त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा । विद्मा ते नाम परमं गुहा यद् विद्मा तमुत्सं यत ऽआजगन्थ ॥२॥ समुद्रे त्वा नृमणा ऽअप्स्वन्तर्नृचक्षा ऽईधे दिवो ऽअग्नऽऊधन् । तृतीये त्वा रजसि तस्थिवाꣳसमपामुपस्थे महिषा ऽअवर्द्धन् ॥३॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।

---

धानलरूपाणि तानि त्रयाणि त्रिसंख्याकानि ते त्वत्संबन्धीनि रूपाणि वयं विद्म—विद्म जानीमः । किञ्च ते तव पुरुत्रा बहुषु प्रदेशेषु गार्हपत्याहवनीयादिषु विभृता विभृतानि धाम धामानि स्थानान्यपि वय विद्म । किञ्च ते तव परममुत्कृष्टं गुहा गुहायां व्यवस्थितं गोप्यं नाम यदस्ति तदपि विद्म । किञ्च यतः उत्सात् अब्रूपात्स्थानात् त्वमाजगन्थ वैद्युतरूपेणागतोऽसि तमुत्समुत्स्यन्दनं जलरूपं स्थानं वय विद्म ॥ २ ॥

हे अग्ने नृमणाः प्रजापतिः समुद्रे वडवानलरूपेण तस्थिवांसं वर्तमानं त्वा त्वामीधे दीपयांचकार । तथा नृचक्षाः—नृषु वर्तत्सु चष्टे मन्त्रान्विस्पष्टं वक्तीति नृचक्षाः प्रजापतिः अप्सु वृष्टिरूपासु अन्तर्मध्ये विद्युद्रूपेण स्थितं त्वामीधे दीपितवान् । तथा दिवः द्युलोकस्य ऊधन् ऊधस्थानीये तृतीये समुद्र-वृष्ट्यपेक्षया तृतीयस्थाने रजसि रञ्जनात्मके तेजोमण्डले आदित्यात्मना तस्थिवांसं त्वां नृचक्षा एव ईधे । किञ्च महिषाः महान्तः प्राणाः अपामुपस्थे उत्सङ्गे नाव्यानामपां मध्ये स्थितं त्वामवर्धन् ॥ ३ ॥

द्यौरिव मेघ इव स्तनयन् गर्जन् शब्दं कुर्वाणः, क्षामा—क्षामां क्षमाम् पृथिवीं रेरिहत्—लेलिहत् अत्यन्तं लिहन् भूमिमभिव्याप्नुवन्, वीरुधः ओषधीः स्वकीयज्वालासमूहेन व्याप्नुवन् अक्रन्दत् क्रन्दति विस्फूर्जति । वर्तमाने लङ् । किञ्च हि यस्मात् जज्ञानः उत्पद्यमानः सन् सद्य एव इद्धः दीप्तश्च सन् व्यख्यत् विख्याति विख्यापयति इदं सर्वं विविधं प्रकाशयति । किञ्च अयमग्निः रोदसी द्यावापृथिव्योः अन्तः मध्ये भानुना रश्मिना स्वयमाभाति समन्तात्प्रकाशते । हिं ईम् इतिच्छेदः । ईम् निपातः पादपूरणे ॥४॥

सद्यो जज्ञानो व्वि हीमिद्धो ऽअख्यदा रोदसी भानुना भात्यन्तः ॥४॥ श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । व्वसुः सूनुः सहसो ऽअप्सु राजा व्विभात्यग्र ऽउषसामिधानः ॥५॥ व्विश्वस्य केतुर्भुवनस्य गर्भ ऽआ रोदसी ऽअपृणाज्जायमानः । व्वीडुञ्चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥ ६ ॥ उशिक्पावको ऽअरतिः सुमे-

श्रीणां गवाश्वादिसम्पदामुदारः अत्यर्थं दाता, रयीणां धनानां धरुणो धारयिता, मनीषाणां मनोऽभिलषितानां प्रार्पणः प्रकर्षेणार्पयिता, सोमगोपाः–सोमं गोपायतीति सोमगोपाः यजमानकर्तृकसोमयागस्य रक्षिता, वसुः सर्वस्य निवासहेतुः, सहसः बलस्य मन्थनवेगरूपस्य सूनुः पुत्रः मन्थनोत्पद्यमानत्वात्, अप्सु वृष्टिरूपासु राजा विद्युद्रूपेण दीप्यमानः, उषसामग्रे प्रातःकाले इधानः आदित्यात्मना दीप्यमानः–एवंविधः अग्निः विभाति ॥ ५ ॥

यत्–यम् अग्निं पञ्च जनाः विप्राश्चत्वारो निषादश्च अयजन्त यजन्ते सोऽग्निः जायमानः विश्वस्य केतुः प्राणिजातस्य विज्ञानभूतः अन्यात्मना, भुवनस्य भूतजातस्य गर्भः गर्भवत् अन्तरवस्थितो वाय्वात्मना, जायमानः सूर्यात्मना प्रकटीभवन् रोदसी द्यावापृथिव्यौ आ अपृणात् सर्वतः तेजसा पूरयति । किञ्च यः परायन् इन्दुरूपेण परापरतो गच्छन् वीडुं चित् दृढमपि (वीडुशब्दो दृढार्थः चिच्छब्दोऽप्यर्थः) अद्रिम् अदारणीयम् मेघम् अभिनत् भिनत्ति विदारयति ॥ ६ ॥

योऽग्निः मर्त्येषु मरणधर्मसु देवैः निधायि निहितः । कीदृशः, उशिक्–उश्यते काम्यते इति उशिक् कान्तः, पावकः पावयिता, अरतिः दुष्टेषु प्रीतिरहितः, सुमेधाः शोभनयज्ञः, अमृतः अमरणधर्मा, भरिभ्रत् बिभ्रत् जगद्धारयन्, शुक्रेण शोचिषा निर्मलतेजसा प्रभारूपेण द्याम् आकाशम् इनक्षन् व्याप्नुवन्–एवंभूतोऽग्निः अरुषम् अरोषं चक्षुराद्युपद्रवरहितं धूमम् उदियर्ति उद्गमयति ॥ ७ ॥

धर्ता मर्त्येष्वग्निरमृतो निधायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ ७ ॥ दृशानो रुक्म उर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥८॥ यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने । प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥९॥ आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने । प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥ त्वामग्ने यजमाना अनु

---

दृशानः दृश्यमानः, श्रिये जनेभ्यः श्रियं दातुं दुर्मर्षमन्यैर्धर्षितुमशक्यमायुः जीवनं रुचानः रोचमानः रुक्मः आभरणविशेष उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतते । सोऽयमग्निः वयोभिः अन्नैः पुरोडाशप्रभृतिभिः अमृतोऽमृतधर्माऽभवत्, यत् यस्मात् कारणात् सुरेताः शोभनं रेतः अग्निरूपं यस्याः सा सुरेताः द्यौः द्युलोकवासी देवगणः एनमग्निम् अजनयत् ॥ ८ ॥

हे भद्रशोचे हे कल्याणदीप्ते हे देव अग्ने अद्य प्रतिपदि यः पुमान् ते तव घृतवन्तं घृतयुक्तमपूपं पुरोडाशं कृणवत् कृणोति करोति—हे यविष्ठ युवतम तं यजमानं प्रतरमतिशयेन वसिष्ठ वस्यः स्थानमुत्तमलोकम् प्रनय प्रणय । अच्छाभिमुख्येन देवभक्तं देवैः सेवितं सुम्नं सुखञ्चाभिनय प्रापय ॥ ९ ॥

सौश्रवसेषु शोभनकीर्तिहेतुषु यज्ञकर्मसु उक्थे उक्थे निष्केवल्यप्रउगाद्यादिरूपे च शस्यमाने हे अग्ने त्वं तं यजमानमाभज सेवस्व—कर्माणि शस्त्रे च प्रेरयेत्यर्थः । एवं त्वया सेवितोऽयं यजमानः सूर्ये सूर्यस्य प्रियो भवाति भवतु । अग्ना अग्नेश्च प्रियोऽस्तु । तथा जातेनोत्पन्नेन पुत्रेण उद्भिनदत् उद्भेदम् उदयं वृद्धिमाप्नोतु । तथा जनित्वैः जनिष्यमाणैश्च पौत्रादिभिरुद्भिनदत् । भविष्यदर्थे औणादिक इत्वप्रत्ययः ॥ १० ॥

हे अग्ने त्वामनुवर्तमाना त्वा सचमाना यजमाना घून्

**शून्विश्वा व्वसु दधिरे व्वार्य्याणि। त्वया सह द्रविणमिच्छमाना व्व्रजं गोमन्तमुशिजो व्विवव्रुः ११** इति एकादश ऋचः पठित्वा अस्ताव्यग्निरिति द्वादशीमृचमनुवाकान्तर्गतामपि न पठेत् । दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टीति पारस्करगृह्यात् ॥

अथ कुमारस्य पूर्वादिचतुर्दिक्षु मध्ये च एवं पञ्च ब्राह्मणान्संस्थापयेत् । पञ्चमो मध्ये नैर्ऋत्यां वा स्थाप्यः । "इममनुप्राणित" इति प्रैषं तान्पिता ब्रूयात् । ततः पूर्वदिक्स्थितो विप्रः कुमारसम्मुखस्तिष्ठन् तं लक्षीकृत्य *प्राण इति तारस्वरं ब्रूयात् । ततः दक्षिणदिक्स्थितोऽपि तथा तिष्ठन् *व्यान इति तथा ब्रूयात् । ततः पश्चिमदिक्स्थितोऽपि तथैव *अपान इति ब्रूयात् । उदक्संस्थित *उदान इति ब्रूयात् । मध्यमस्तूपरिष्टादवेक्षमाणः *समान इति ब्रूयात् । पञ्चब्राह्मणाभावे स्वयमेव तत्रतत्र गत्वा कुमाराभिमुखः प्राण इत्यादि ब्रूयात् । अस्मिन्पक्षे प्रैषो न भवति ।

अथ यस्मिन्देशे कुमारो जातो भवति तं देशम् अना-

---

दिनानि दिनेषु सर्वदा वार्याणि वरणीयानि प्रार्थ्यानि विश्वा विश्वानि वसु वसूनि धनानि हिरण्यादीनि दधिरे धारयन्ति-यथेष्टं धनं प्राप्नुवन्तीत्यर्थः । किञ्च त्वया सह स्थितास्ते यजमानाः द्रविणं यज्ञफलमिच्छमाना इच्छन्तः उशिजो मेधाविनो विद्याकर्मसमुच्चयकारिणः गोमन्तं रविमण्डलमध्यगं देवयानमार्गं व्रजं विवव्रुः विभिदुः ॥ ११ ॥

इत्थं स्तुतोऽग्निः कुमारं दीर्घायुषं करोत्विति प्रार्थना वाक्यार्थः॥

*भोः कुमार त्वं प्राणः हृदि सुस्थितप्राणो भव, तव सर्वाङ्गेषु सुस्थो व्यानः, गुदे सुस्थो ऽपानः, कण्ठे सुस्थ उदानः, नाभौ सुस्थः समानः । एवमेते वायवोऽस्य सुजीवनं कुर्वन्त्विति वाक्यार्थः ॥

मिकया स्पृशन् एतं मन्त्रं पठति—(वेद ते भूमि हृदयम् इत्यस्य प्रजापतिऋषिरनुष्टुप्छन्दः भूमिर्देवता जन्मभूम्यभिमन्त्रणे विनियोगः)।

*ॐवेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतम् ॥ इति भूमिमभिमन्त्र्य कुमारं सर्वशरीरे स्पृशति—( अश्मा भवेत्यस्य प्रजापतिऋषिरनुष्टुप्छन्दः लिङ्गोक्ता देवता अभिमर्शने विनियोगः )।

+ॐअश्मा भव परशुर्भव हिरण्यमस्रुतं भव । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्॥इति। (जातकर्म स्वकालेऽकृतं चेत् आयुष्यकरणादि अश्माभवेत्येतन्मन्त्राभिमर्शनान्तं कालान्तरेऽपि भवति । "अनुमाणनवारसमाभिमर्शनानुमन्त्रणे । कालान्तरेऽपि कुर्वीत आयुष्यकरणं तथा" ॥ इति वृद्धोक्तेः । संस्काररूपत्वाच्च । मेधाजननं तु न भवतीति पूर्वं (७२) निर्णीतम्)।

---

*हेभूमि हेभूमे (गुणाभाव आर्षः)ते तव हृद्-हृदयम् अयं प्रत्यगात्मा सूर्यो वेद । कीदृशं हृत्, दिवि वर्तमाने चन्द्रमसि श्रितं प्रसादरूपेण स्थितं, यद्वा कलङ्करूपेण चन्द्रमसि श्रित 'तच्चन्द्रमसि न्यदधत्'इति श्रुतेः । अहमपि तत्ते हृदयं वेद । तच्च कर्तृभूतं मां विद्यादुपकर्तुं जानातु। अतस्त्वद्दत्तपुत्रेण सह वयं पश्येम शरदः शतमित्याद्युक्तार्थम्॥

+हे कुमार त्वमश्मा वज्रपाषाण इव भव । दृढत्वस्थिरत्वाभ्यां सादृश्यम् । परशुः कुठार इवापकर्तृनाशको भव । किञ्च अस्रुतम् अक्षीणं हिरण्यं भव-यथा धात्वन्तरासंभिन्नं सुवर्णं शुद्धं तथा निर्दोषत्वं भवेत्यर्थः । यतस्त्वं पुत्रनामा आत्माऽसि अतः स त्वं वै निश्चयेन शरदः शतं जीव प्राणिहि ॥

अथास्य मातरं दृष्ट्वा पठति–(इडासीत्यस्य प्रजापतिर्ऋषि-रनुष्टुप्छन्दः इडा देवता अभिमन्त्रणे विनियोगः)।

*ॐइडाऽसि मैत्रावरुणी वीरे वीरमजीजनथाः। सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरत्–इति। अथ मातुर्दक्षिणं स्तनं प्रक्षाल्य कुमाराय प्रयच्छति–(इमꣳस्तनमूर्ज्जस्वन्तमित्यस्य प्रजापतिऋषिः त्रिष्टुप्छन्दः अग्निर्देवता स्तनप्रदाने विनियोगः)।

+ॐइमꣳ स्तनमूर्ज्जस्वन्तं धयापां प्रपीनमग्ने स-रिरस्य मध्ये। उत्सञ्जुषस्व मधुमन्तमर्वन्त्स-मुद्रियꣳ सदनमाविशस्व–इति। ततो वामं स्तनं प्र-क्षाल्य प्रयच्छति–(यस्ते स्तन इति दीर्घतमा ऋषिस्त्रिष्टुप्छन्दः वाग्देवता स्तनदाने विनियोगः)।

÷ॐयस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसु-

---

*हे वीरे आरब्धान्तगामिनि त्वम् इडा–मानवी यज्ञपात्री वा-ऽसि, मैत्रावरुणी मित्रावरुणयोरंशोत्पन्ना चासि। यथा इडायां पुरूरवा उत्पन्नो, यथावा यज्ञपात्र्यां पुरोडाशो भवति, यथा च मित्रावरुणयोरगस्त्यो वसिष्ठश्चोत्पन्नस्तथा त्वय्ययं पुत्र इति भावः। यतस्त्वं वीरं पुत्रम् अजीजनथाः असौषीः अतः सा त्वं वीरवती जीवत्पतिपुत्रा भव, या त्वमस्मान् वीरवतः जीवद्बहुपुत्रा-नकरत् अकरोः। पुरुषव्यत्ययश्छान्दसः॥

+हे अग्ने सरिरस्य लोकस्य मध्ये वर्तमानः त्वम् ऊर्जस्वन्तं विशिष्टरसयुक्तम्, अपाम् अद्भिः दुग्धैः (अप्शब्देन लक्षणया दुग्ध-मुच्यते) प्रपीनं पूर्णम् इमं स्तनं धय पिब पायय स्तनपाने बालकं प्रेरयेत्यर्थः। हे अर्वन् सर्वतोगमन हे कुमार मधुमन्तं मधुस्वादयु-क्तमुत्समुत्स्यन्दतं मातृस्तनं जुषस्व सेवस्व। किञ्च समुद्रियं समुद्र-मिव अक्षोभ्यं सदनं मातृशरीरं तृप्तः सन् आविशस्व सेवस्वेत्यर्थः॥

÷हे सरस्वति यस्ते तव स्तनः शशयः सुप्त इवास्ते अन्यैरनुपभु-

विश्वः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः—इति ॐ इमᳫं स्तनमिति च द्वाभ्यां वाम प्रयच्छति ॥

अथ सूतिकायाः शिरःप्रदेशे खट्वाऽधोभूमौ जलपूर्णं कुम्भं निदधाति । तं च दशदिनपर्यन्तं तत्रैव संरक्षेत् । ( आपोदेवेष्वित्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः आपो देवताः सूतिकायाः शिरःप्रदेशे रक्षार्थोदककुम्भस्थापने विनियोगः ) ।

*ॐ आपो देवेषु जाग्रथ, यथा देवेषु जाग्रथ एवमस्याᳫं सूतिकायाᳫं सपुत्रिकायां जाग्रथ—इति ।

ततः सूतिकाद्वारदेशे वेदीं कृत्वा पञ्चभूसंस्कारपूर्वकमग्निं स्थापयेत् । अत्र प्रणीताप्रणयनादयो न भवन्ति । "एष एव विधिर्यत्र क्वचिद्धोम" इत्यनेन होमोपदेशे एव तस्या इतिकर्तव्यताया विधानेन अत्र च आवसथ्यनेनाग्न्युपदेशेन प्रणयनादीनामप्राप्तेः । परिसमूहनादयस्तु भवन्त्येव । तेषां भूसंस्कारार्थ-

---

त्वस्थात्, यश्च स्तन मयोभूः सर्वभूतानां सुखोत्पादकः, यश्च रत्नधाः रत्नानां रमणीयधनानां धारयिता, यश्च वसुविद् धनप्रापकः, यश्च सुदत्रः अन्यदानादानधनदाता, येन च स्तनेन विश्वा विश्वानि सर्वाणि वार्याणि वरणीयानि वस्तूनि त्वं पुष्यसि पुष्णासि—तं स्तनं बालकस्य धातवे पानाय ( धापानेऽस्तवेतन्प्रत्ययः ) अकः कुरु प्रयच्छेत्यर्थः । सरस्वत्यनुग्रहात्मा तु स्तनं यथागुणविशिष्टं भूयात् बालकः स्तन्यं पुष्णात्विति याचना वाक्यार्थः ॥

*हे आपः यूयं देवेषु देवकार्यनिमित्तं जाग्रथ प्रदेवनिष्ठा स्थ । एवं वस्तुस्थितिमुक्त्वा तद्दृष्टान्तेन दार्ष्टान्तिकमाह—यथा देवेषु जाग्रथ एव—तथा सपुत्रिकायां सपुत्रस्य सपुत्रिका तस्यां अस्यां सूतिकायां प्रसवित्र्यां हिते जाग्रेत्यर्थः ॥

स्वात् । स्थापितमग्निम् एतन्त इति ("प्रगल्भो जातकर्मणि" इति वचनात्) ॐभूर्भुवः स्वरिति प्रगल्भत्वेनावाह्य ॐप्रगल्भनामाग्नये नम इति पाद्यादिभिः सम्पूज्य होमं कुर्यात् तण्डुलकणमिश्रान्सर्षपान्गृहीत्वा । ( शण्डामर्का इति प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता सूतिकाद्वारागौ तण्डुलकणमिश्रसर्षपहोमे विनियोगः ) ।

*ॐशण्डा मर्का ऽउपवीरः शौण्डिकेय ऽउलूखलः । मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा–इदमग्नये न मम । (आलिखन्निति प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता सूतिकाद्वाराग्नौ तण्डुलकणमिश्रसर्षपहोमे विनियोगः) ।

+ॐआलिखन्ननिमिषः किंवदन्त ऽउपश्रुतिः । हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिः । हन्त्रीमुखः स-

---

*शण्डाः शण्डः, मर्काः मर्कः । वचनव्यत्यय आर्षः । शृणातीति शण्डः । मारयतीति मर्कः । उपघाते वीर उपवीरः । शौण्डिकेयः शौण्डे कुशलः । उलूखलवदाभिघातुकत्वादुलूखलः । मलिम्लुचः अतिमलिनाशयः । द्रोणासः वृक्षकोटरवन्नासा नासिका यस्य सः । द्रुद्रुमागपलाशिन इत्यभिधानम् । गुण आर्षः । च्यावयतीन्द्रियाणीति च्यवनः । अयं सर्वः इतः–सूतिकागृहहोमाग्नस्थलात् नश्यतु इति प्रत्येकमन्वयः । तुह्योस्तातङाशिष्यन्यतरस्यामिति तातङादेशः ॥

+आ समन्तालिखतीत्यालिखन् तक्षन् । अनिमिषदृष्टित्वादनिमिषः । अपकर्त्तुमुपशृणोतीत्युपश्रुतिः । किंवदन्ती विद्यते यस्य सः किंवदन्तः । अर्शआदिभ्योऽच् । किंवदन्ती जनश्रुतिरित्यभिधानम् । हर्यक्षः पिङ्गलाक्षः । कुम्भयति स्तम्भयतीति कुम्भी । नन्दिग्रहीति इनिप्रत्ययः । बालं शातयतीति शत्रुः । पात्रपाणिः खर्परहस्तः । नॄन्मिनोति हिनस्तीति नृमणिः । हन्त्री हिंसैव मुखं यस्य स हन्त्रीमुखः । सर्षपवदरुणः धूसर उग्रो वा । येनोपद्रुतश्च्यवतीति च्यवनः प्रकृतिभ्रंशकः । अयं सर्वोऽपि बालग्रह इतो नश्यतादित्यन्वयः ॥

र्षपारुणश्च्यवनो नश्यतादितः स्वाहा-इदमग्नये न मम ॥

( इदᳬ शण्डमर्कोपवीरशौण्डिकेयोलूखलमलिम्लुचद्रोणासश्च्यवनेभ्यो न मम । इति प्रथमाहुतौ त्यागः, इदमालिखदनिमिषकिंवदन्तोपश्रुतिहर्य्यक्षकुम्भिशत्रुपात्रपाणिनृमणिहन्त्रीमुखसर्षपारुणच्यवनेभ्यो न मम । इति द्वितीयाहुतौ त्याग इत्यपि केचित्) ।

स चाग्निरुत्थापनपर्यन्तं दशदिनावधि यथा निर्वापितो न भवति तथा कार्य्यम् । उत्थापनं च दशमादिने एव । एता आहुतयो दशदिनपर्यन्तं प्रत्यहं सायंप्रातराहुतिद्वयेन चत्वारिंशत्संख्याका भवन्ति । खट्वाधःकुम्भधारणादि द्वारहोमान्तं च कालान्तरे न भवति, नियतकालत्वात् ।

अथ यदि कुमारनामा बालग्रहो रोदनादिना कुमारमुपद्रुतं कुर्यात्तदा तदुपद्रवनिवृत्तये तं पित्रं मत्स्यजालेनोत्तरीयेण वा प्रच्छाद्याङ्के निधायेमं जपेत् —(कूर्कुर इत्यादीनां मन्त्राणां प्रजापतिर्ऋषिरनुष्टुप्छन्दः शुनको देवता जपे विनियोगः)

*ॐ कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः ।
चेच्चेच्छुनक सृज नमस्ते ऽअस्तु सीसरो लपेतापह्वर १

कूर्कुर. भषणाख्यो बालग्रह । सुकूर्कुर अतिभाषणः । कूर्कुरः कर्कशः । बालान्बध्नातीति बालबन्धन । सीसरोऽङ्कसारक । हेशुनक तुभ्य नमोऽस्तु । अतः पूर्वोक्तविशेषणविशिष्टस्त्व सृज एनं कुमार विसृज । सृज विसर्गे । लपत लापन रोदकेति यावत्, अपह्वर गात्रसंकोचक ह्वृ कौटिल्ये, चेच्चेत छुछुशब्द कुर्वन्नित्यामन्त्रणविशेषणानि ॥

*हेशुनक देवदूत तत्सत्यम्-तत्किंसत्य, कुमारमेवयाचूणीयाः वृतवानसि हिंसाविहारार्थं, देवाश्च ते तुभ्य तदेव वरमदद्दु. । शेपमुक्तार्थम् ॥

तत्सत्यं यत्ते देवा वरमददुः कुमारमेव वाऽवृणीथाः। चेचेच्छुनक सृज नमस्ते ऽअस्तु सीसरो लपेतापह्वर २ *तत्सत्यं यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ। चेचेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर- ३ इति। जपान्ते पिता बालकमभिमृशति-(न नामयतीत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः वायुर्देवता अभिमर्शने विनियोगः)।

+न नामयति न रुदति न हृष्यति न ग्लायति। यत्र वयं वदामो यत्र चाभिमृशामसि-इति मन्त्रेणाभिमृश्य दक्षिणासङ्कल्पं कुर्यात्। अद्येहामुकोऽहं जातस्य पुत्रस्य कृतैतज्जातकर्माख्यसंस्कारकर्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इमां दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सन्न मम। ततो भूयसीं सङ्कल्प्य ब्राह्मणेभ्यो दद्यात्। दश यथाशक्ति वा ब्राह्मणान् भोजयिष्ये इति संकल्प्य सूतकान्ते ब्राह्मणान् भोजयेत्। "पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम्" इति (नि०सिं०) व्यासोक्ते रात्रावपि स्नानदानादिकं भवत्येव। प्रथमेऽह्नि तथा षष्ठे दाता नाप्नोति सूतकमितिवचनात्तत्र दानप्रतिग्रहौ न दोषायेति। ततोऽष्टाङ्गुलं परित्यज्य नालच्छेदनं कुर्यात्। अभिषेकतिलकमन्त्रपाठादि च कारयेत्॥

इति जातकर्मप्रयोगः॥

---

*किञ्च यत्ते तव सरमा देवशुनी माता, सीसरश्च देवश्वा पिता, श्यामशबलौ भ्रातरौ तदपि सत्यम्। शिष्टं स्पष्टम्॥

+यत्र यस्मिन्कुमारे वयं वदामः जपामः। मन्त्रमिति शेषः। यत्र च अभिमृशामसि अभिमृशामः अभितः स्पर्शनं कुर्मः— स कुमारो न नामयत्यङ्गानि, न रुदति, न च भूताविष्टो हृष्यति, न च ग्लानो भवति॥

अथ षष्ठीमहोत्सवः।

जन्मदिनतः षष्ठदिने पिता प्रातरुत्थाय शुचिं शान्तं श्रौतस्मार्त्तक्रियापरं सपत्नीकं ब्राह्मणं विनयेनोपसृत्य "अद्य षष्ठीमहोत्सवार्थं युवामहं निमन्त्रये" इति तावुक्त्वा तथाऽस्त्विति ताभ्यामुक्ते स्वगृहमागच्छेत्। तौ चोपोषितौ तिष्ठेताम्। ताभ्यां षष्ठीमहोत्सवं कारयेत्। विशिष्टदक्षिणादानाशक्तौ उपवासपूर्वक उत्सवः स्वयं कार्य्यः। ततोऽपराह्णसमये ब्राह्मणो गोमयेन काष्ठपीठे पार्श्वयोः स्कन्दप्रद्युम्नयोः, मध्ये षष्ठीदेव्याः एवं तिस्रः प्रतिमाः विधाय शुक्लतण्डुलैर्यवैर्वा पूरयित्वा षष्ठ्याः कर्णप्रदेशे दूर्वापल्लवैः कुण्डले, सर्वाङ्गेषु षोडश कपर्दिका दद्यात्। ततः प्रदोषसमये पुत्रपिता स्नात्वा सन्ध्यादि विधाय पूजासामग्रीं सम्पाद्य द्वारसमीपमागत्य द्वारमातृपूजनं कुर्य्यात्। आचम्य अर्घं संस्थाप्य पूजासङ्कल्पः—अद्येहामुकगोत्रोऽमुकराशिरमुकोऽहम् अमुकराशेर्बालकस्य करिष्यमाणषष्ठीमहोत्सवकर्मणि पूर्वाङ्गत्वेन द्वारमातॄणां पूजनं करिष्ये इति। एतन्तइति प० ॐभूर्भुवः स्वः द्वारमातरः इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य ध्यानम्—कुमारी धनदा नन्दा विपुला मङ्गलाऽचला। पद्मा चैव तु नाम्नोक्ताः सप्तैता द्वारमातरः॥ इति ध्यात्वा ॐकुमार्यै नमः ॐधनदायै नमः ॐनन्दायै नमः ॐविपुलायै नमः ॐमङ्गलायै नमः ॐअचलायै नमः ॐपद्मायै नमः इति नाममन्त्रैः आवाहनासनपाद्यादिनीराजनान्तं सम्पूज्य दक्षिणां दत्त्वा स्वस्तिवाचनं पठन् अभ्यन्तरं गच्छेत्। तत्र प्रथमं गन्धघृतसर्षपसैन्धवनिम्बपत्रादिद्रव्यैः सूतिकाप्रदीपे धूपो देयः।

ततो गणेशं पूजयेत्। तद्यथा दीपं प्रज्वलय्याचम्य

माणानायम्य देवेभ्यः पुष्पाञ्जलिं समर्प्य अर्घं संस्थाप्य-पूजासङ्कल्पः । अद्येहेत्यादिदेशकालौ स्मृत्वा अमुकगोत्रः अमुकराशिरमुकशर्माऽहं जातस्य पुत्रस्य करिष्यमाणषष्ठीमहोत्सवकर्म्मणि निर्विघ्नतासिद्ध्यर्थं भगवतः श्रीगणेशस्य पूजनं करिष्ये इति सङ्कल्प्य पूर्वोक्तप्रकारेण गणेशं सम्पूज्य दक्षिणां दत्त्वा प्रार्थयेत्-सर्वविघ्नहरो देव एकदन्त गजानन ।

भक्त्या संपूजितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥
लम्बोदर महाभाग सर्वोपद्रवनाशन ।
त्वत्प्रसादादविघ्नेन चिरं जीवतु मे सुतः ॥ इति ।

अथ प्रधानसङ्कल्पः—अद्येहेत्यादिदेशकालौ स्मृत्वा अमुकगोत्रोऽमुकराशिरमुकशर्माऽहम् अमुकराशेः बालकस्य सर्वोपद्रवशान्तिपूर्वकदीर्घायुरारोग्यावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं षष्ठीमहोत्सवं करिष्ये । तत्पूर्वाङ्गत्वेन सर्वाभ्युदयप्राप्तये गणपतिसहितगौर्य्यादिषोडशमातृणां पूजनं करिष्ये इति सङ्कल्प्य पूर्वोक्तप्रकारेण मातॄः पूजयित्वा वसोर्धाराः पातयित्वा दक्षिणां दद्यात् । ततः पुण्याहवाचनसङ्कल्पः अद्येहामुकोऽहं जातस्य पुत्रस्य षष्ठीमहोत्सवकर्म्मणि सर्वाभ्युदयप्राप्तये ब्राह्मणद्वारा पुण्याहं वाचयिष्ये तत्पूर्वाङ्गत्वेन चतुर्णां ब्राह्मणानां पूजनं वरणं च करिष्ये इति सङ्कल्प्य वरणं कृत्वा उक्तप्रकारेण पुण्याहं वाचयित्वा कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य दक्षिणां दत्त्वा

स्कन्दप्रद्युम्नजन्मदाषष्ठीदेवीनां पूजनं कुर्य्यात् । अर्घं संस्थाप्य पूजासङ्कल्पः । अद्येहामुकोऽहं जातस्य पुत्रस्य सर्वोपद्रवशान्तिपूर्वकायुरारोग्यावाप्तये गोमयप्रतिमयोः स्कन्दप्रद्युम्नयोः षोडशोपचारैः पूजनं करिष्ये इति सङ्कल्प्य एतन्त-

इति प० ॐभूर्भुवःस्वः गोमयप्रतिमयोः स्कन्ददेव तथा प्रद्युम्नदेव इहागच्छतम् इह तिष्ठतं सुप्रतिष्ठितौ वरदौ भवतमिति प्रतिष्ठापयेत् ।

अथ स्कन्दध्यानम् । मयूरवरमारूढो द्विभुजो बालरूपधृक् । मुद्गरं वामहस्ते तु शक्तिं दक्षिणतो न्यसेत् ॥ वराभयकरः साक्षाद्विभुजः शिखिवाहनः । किरीटी कुण्डली देवो दिव्याभरणभूषितः ॥ अथ प्रद्युम्नध्यानम्—प्रद्युम्नस्तु चतुर्बाहुः शङ्खचक्रगदाधरः । चक्रं दक्षिणहस्ते ऽस्य वामहस्ते धनुस्तथा ॥ शङ्खं च दक्षिणे दद्याद्गदा वामे प्रदापयेत् । प्रद्युम्नं कारयेद्देवं सर्वलक्षणसंयुतम् ॥ स्त्रियौ चैवास्य कर्त्तव्ये सर्वलक्षणसंयुते । इति ध्यात्वा ॐस्कन्दाय नमः इति नाममन्त्रेण (य० सं० अ० १३ मं० ५)

*ॐद्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्व्वः । समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्तहोत्राः-इतिवेदमन्त्रेण च स्कन्दमावाह्य ॐप्रद्युम्नाय नमः इतिप्रद्युम्नं चावाह्य वक्ष्यमाणमन्त्रैः स्कन्दप्रद्युम्नाभ्यां नमः इति नाममन्त्रेण च पूजयेत् । आसनम्—षण्मुखाय नमस्तुभ्यं सेनाधिपतये नमः । पुष्पासनेन देवेश प्रसीद परमेश्वर ॥ पाद्यम्-गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् । पाद्यार्थं ते मया दत्तं गृहाण परमेश्वर ॥

*यद्यपि स्कन्दवेदस्य एतन्मन्त्रवाक्यार्थे समन्वयो नास्ति तथापि एतन्मन्त्रघटकस्कन्दपदादुपस्थितिर्भवितुमर्हत्येव । तावतैव च वैदिकमन्त्रेण देवतास्मरणादिष्टसिद्धि । दृष्टा च अग्न्यादितात्पर्येण प्रयुक्ताऽनलादिपदघटकनलादिपदेभ्यः दमयन्त्यादीनां नलराजाद्युपस्थितिः । एवमन्यत्राप्यूह्यम् ॥

माणानायम्य देवेभ्यः पुष्पाञ्जलिं समर्प्य अर्घं संस्थाप्य-पूजासङ्कल्पः। अद्येहेत्यादिदेशकालौ स्मृत्वा अमुकगोत्रः अमुकराशिरमुकशर्माऽहं जातस्य पुत्रस्य करिष्यमाणषष्ठीमहोत्सवकर्म्मणि निर्विघ्नतासिद्धये भगवतः श्रीगणेशस्य पूजनं करिष्ये इति सङ्कल्प्य पूर्वोक्तप्रकारेण गणेशं सम्पूज्य दक्षिणां दत्त्वा प्रार्थयेत्-सर्वविघ्नहरो देव एकदन्त गजानन।

भक्त्या संपूजितः प्रीत्या शिशुं दीर्घायुषं कुरु॥
लम्बोदर महाभाग सर्वोपद्रवनाशन।
त्वत्प्रसादादविघ्नेन चिरं जीवतु मे सुतः॥ इति।

अथ प्रधानसङ्कल्पः-अद्येहेत्यादिदेशकालौ स्मृत्वा अमुकगोत्रोऽमुकराशिरमुकशर्माऽहम् अमुकराशेः बालकस्य सर्वोपद्रवशान्तिपूर्वकदीर्घायुरारोग्यावाप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं षष्ठीमहोत्सवं करिष्ये। तत्पूर्वाङ्गत्वेन सर्वाभ्युदयप्राप्तये गणपतिसहितगौर्यादिषोडशमातृणां पूजनं करिष्ये इति सङ्कल्प्य पूर्वोक्तप्रकारेण मातॄः पूजयित्वा वसोर्धाराः पातयित्वा दक्षिणां दद्यात्। ततः पुण्याहवाचनसङ्कल्पः अद्येहामुकोऽहं जातस्य पुत्रस्य षष्ठीमहोत्सवकर्म्मणि सर्वाभ्युदयप्राप्तये ब्राह्मणद्वारा पुण्याहं वाचयिष्ये तत्पूर्वाङ्गत्वेन चतुर्णां ब्राह्मणानां पूजनं वरणं च करिष्ये इति सङ्कल्प्य वरणं कृत्वा उक्तप्रकारेण पुण्याहं वाचयित्वा कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य दक्षिणां दत्त्वा

स्कन्दप्रद्युम्नजन्मदाषष्ठीदेवीनां पूजनं कुर्यात्। अर्घं संस्थाप्य पूजासङ्कल्पः। अद्येहामुकोऽहं जातस्य पुत्रस्य सर्वोपद्रवशान्तिपूर्वकायुरारोग्यावाप्तये गोमयप्रतिमयोः स्कन्दप्रद्युम्नयोः षोडशोपचारैः पूजनं करिष्ये इति सङ्कल्प्य एतन्त-

इति प० ॐभूर्भुवःस्वः गोमयप्रतिमयोः स्कन्ददेव तथा प्रद्युम्नदेव इहागच्छतम् इह तिष्ठतं सुप्रतिष्ठितौ वरदौ भवतमिति प्रतिष्ठापयेत्।

अथ स्कन्दध्यानम्। मयूरवरमारूढो द्विभुजो बालरूपधृक्। कुक्कुटं वामहस्ते तु शक्तिं दक्षिणतो न्यसेत्॥ वराभयकरः साक्षाद्द्विभुजः शिखिवाहनः। किरीटी कुण्डली देवो दिव्याभरणभूषितः॥ अथ प्रद्युम्नध्यानम्—प्रद्युम्नस्तु चतुर्बाहुः शङ्खचक्रगदाधरः। चक्रं दक्षिणहस्ते ऽस्य वामहस्ते धनुस्तथा॥ शङ्खं च दक्षिणे दद्याद्गदां वामे प्रदापयेत्। प्रद्युम्नं कारयेद्देवं सर्वलक्षणसंयुतम्॥ स्त्रियौ चैवास्य कर्त्तव्ये सर्वलक्षणसंयुते। इति ध्यात्वा ॐस्कन्दाय नमः इति नाममन्त्रेण (य० सं० अ० १३ मं० ५)

*ॐद्रप्सश्चस्कन्द पृथिवीमनु द्यामिमंच योनिमनु यश्च पूर्व्वः। समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्तहोत्राः-इतिवेदमन्त्रेण च स्कन्दमावाह्य ॐप्रद्युम्नाय नमः इतिप्रद्युम्नं चावाह्य वक्ष्यमाणमन्त्रैः स्कन्दप्रद्युम्नाभ्यां नमः इति नाममन्त्रेण च पूजयेत्। आसनम्—षण्मुखाय नमस्तुभ्यं सेनाधिपतये नमः। पुष्पासनेन देवेश प्रसीद परमेश्वर॥ पाद्यम्-गङ्गाजलं समानीतं सुवर्णकलशे स्थितम्। पाद्यार्थं ते मया दत्तं गृह्यतां परमेश्वर॥

---

*यद्यपि स्कन्ददेवस्य एतन्मन्त्रवाक्यार्थे समन्वयो नास्ति तथापि एतन्मन्त्रघटकस्कन्दपदादुपस्थितिर्भवितुमर्हत्येव। तावतैवच वैदिकमन्त्रेण देवतास्मरणादिष्टविशेषसिद्धिः। दृष्टा च धन्यादितात्पर्येण प्रयुक्ताऽनलादिपदघटकनलादिपदेभ्यः दमयन्त्यादीनां नलराजाद्युपस्थितिः। एवमन्यत्राप्यूह्यम्॥

अर्घ्यम्-पञ्चरत्नसमायुक्तं सर्षपैः परिपूरितम्। पञ्चपल्लवसंयुक्तमर्घ्यं मे प्रतिगृह्यताम् ॥ आचमनीयं नाममन्त्रेण । स्नानम्-नर्मदाचन्द्रभागादिगङ्गासङ्गमजैर्जलैः । स्नापितोऽसि मया देव प्रीत्यर्थं प्रतिगृह्यताम्। आचमनीयम्-गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् । आचमनं स्कन्ददेव प्रीत्यर्थं प्रतिगृह्यताम् ॥ वस्त्रोपवस्त्रम्-वेदसूत्रसमायुक्ते यज्ञतानसमन्विते । सर्ववर्णप्रभे देव वाससी प्रतिगृह्यताम् ॥ वस्त्राङ्गमाचमनीयं नाममन्त्रेण ॥ गन्धम्-मलयाद्रिसमुद्भूतं नानागन्धसमन्वितम् । सुरासुरनरानन्दं गन्धं मे प्रतिगृह्यताम् ॥ अक्षताः-शुक्लांश्चातीव हृद्यांश्च सुगन्धींश्च विशेषतः । अक्षतांश्च प्रयच्छामि गृहाण परमेश्वर ॥ पुष्पाणि-जलजं स्थलजं वापि पुष्पं कालर्तुसम्भवम् । भक्त्या निवेदितं देव पुष्पं मे प्रतिगृह्यताम् ॥ धूपं-गुग्गुलं घृतसंयुक्तं दशाङ्गेन समन्वितम् ॥ धूपं गृहाण देवेश त्रैलोक्यानन्ददायकम् ॥ दीपम्-सद्वर्तिघृतसंयुक्तमन्धकारविनाशनम् । मया निवेदितं देव गृहाण परमेश्वर ॥ नैवेद्यम्-सत्पात्रसिद्धं सुहविर्विविधानन्दलक्षणम् । भोजनार्थं मया दत्तं नैवेद्यं प्रतिगृह्यताम् । आचमनीयं, भूषणार्थे द्रव्यं च समर्प्य नाममन्त्रेण जपं कृत्वा समर्प्य—ताम्बूलम्—मण्डनं सर्वभूतानां द्रव्यैः सौगन्धिकादिभिः । ताम्बूलं गृह्यतां देव प्रीतोऽस्माकं भव प्रभो ॥ अन्तस्तेजो बहिस्तेज इति नीराजनं कृत्वा ध्यानमन्त्रेण पुष्पाञ्जलिं समर्प्य प्रार्थयेत-तत्र प्रथमं स्कन्दप्रार्थना-

*ॐनमः कुमाराय महाप्रभाय स्कन्दाय ते स्कन्दितदानवाय ।*
नवार्कविम्बद्युतये नमोऽस्तु नमोऽस्त्वमोघोद्यतशक्तिपाणये १
नमो विशालाय विचारिणेऽस्तु नमोऽस्तु ते षण्मुख कामरूपिणे।
गुहाय गूढाभरणाय धर्त्रे नमोऽस्तु ते दानवदारणाय २

नमोऽस्तु ते स्कन्दपतिप्रभाय नमोऽस्तु गुह्याय गुहाय तुभ्यम्
नमोऽस्तु ते लोकभयापहाय नमोऽस्तु ते बालपराक्रमाय ३
नमो विशालायतलोचनाय नमो विशालाय महाव्रताय ।
नमो नमस्तेऽस्तु मनोरमाय नमो नमस्तेऽस्तु करोत्कटाय ४
नमो मयूरोज्ज्वलवाहनाय नमो धृतोद्ग्रपताकिनेऽस्तु ।
नमोऽस्तु केयूरधराय तुभ्यं नमः प्रभावप्रणताय तुभ्यम् ५
सेनानये पावकिने नमोऽस्तु क्रियापरीतामलदिव्यमूर्तये ।
कृपामयो यज्ञ इवामलस्त्वं नमोऽस्तु षष्ठीश नमोनमस्ते ६

एवं द्वात्रिंशन्नामभिः स्कन्दं सम्प्रार्थ्य—

ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च—इति मन्त्रेण स्कन्दोपरि दूर्वां समर्प्य—

प्रद्युम्नं प्रार्थयेत—भोः प्रद्युम्न महाबाहो लक्ष्मीहृदयनन्दन । कुमारं रक्ष मे भीतेः प्रद्युम्नाय नमोनमः १ त्रैलोक्यपूजितः श्रीमान्सदा विजयवर्द्धनः । शान्तिं कुरु गदापाणे प्रद्युम्नाय नमोनमः २ इति प्रद्युम्नं सम्प्रार्थ्य—

पट्कृत्तिकाः पूजयेत् । तत्र पूजासङ्कल्पः—अद्येह जातस्य पुत्रस्य षष्ठीमहोत्सवे सर्वोपद्रवशान्त्यर्थं दध्यक्षतपुञ्जेषु षट्कृत्तिकानां पूजनं करिष्ये। एवन्तइति प० ॐभूर्भुवःस्वः शिवे इहागच्छेह तिष्ठ सुप्रतिष्ठिता वरदा भव, ॐभू० सम्भूते इ० ॐभू० सन्नते इ० ॐभू० प्रीते इ० ॐभू० अनसूये इ० ॐभू०क्षमे इ० प्रतिष्ठाप्य नाममन्त्रैर्गन्धादिभिः पूजनम्। ॐशिवायै नमः ॐसम्भूत्यै नमः ॐसन्नत्यै नमः ॐप्रीत्यै नमः-ॐअनसूयायै नमः ॐक्षमायै नमः इति सम्पूज्य प्रार्थयेत—जगन्मातर्जगद्धात्रि जगदानन्दकारिणि । नमस्ते देवि कल्याणि प्रसीद मम कृत्तिके। इति प्रार्थ्य

ॐकार्त्तिकेयाय नमः ॐकार्त्तिकेय महाबाहो गौरीहृदयनन्दन। कुमारं रक्ष मे भीतः कार्त्तिकेय नमोऽस्तु ते ॥ इति कार्त्तिकेयं च प्रार्थ्य विष्णुं प्रार्थयेत्–त्रैलोक्यपूजितः श्रीमान्सदा विजयवर्द्धनः। शान्ति कुरु गदापाणे नारायण नमोऽस्तु ते ॥ इति । ॐखड्गाय नमः ॐशङ्खाय नमः ॐमन्थनाय नमः ॐवंशाय नमः इति खड्गाद्यायुधानि च सम्पूज्य दक्षिणां दद्यात् । अद्येहामुकोऽहम् अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्यावाप्तये कृतायाः स्कन्दप्रद्युम्नजन्मदानां पूजायाः साद्गुण्यार्थं श्रीस्कन्दप्रद्युम्नजन्मदानां प्रीतये इमां सुवर्णनिष्क्रयिणीं दक्षिणां ब्राह्मणाय दास्ये । ॐतत्सत् इति ॥

अथ षष्ठीपूजनम्—अर्घं संस्थाप्य प्राणानायम्य पूजासङ्कल्पः अद्येहामुकगोत्रोऽमुकराशिरमुकशर्म्माऽहम् अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्यावाप्तये सर्वोपद्रवशान्त्यर्थं च गोमयनिर्मितप्रतिमायां षष्ठीदेव्याः षोडशोपचारैः पूजनं करिष्ये इति संकल्प्य एतन्त इति प० ॐभूर्भुवःस्वः गोमयप्रतिमायां षष्ठीदेवि इहागच्छेह तिष्ठ सुप्रतिष्ठिता वरदा भव ॐआँह्रींक्रौंयँरँलँवँशँषँसँहँ हंसः सोहं षष्ठीदेव्याः प्राणा इहागत्य सुखं चिरन्तिष्ठन्तु जीव इह तिष्ठतु सर्वेन्द्रियाणीह तिष्ठन्तु इति प्राणप्रतिष्ठां च विधाय आत्मनि देवे च न्यासं कुर्य्यात्–ॐपां हृदयाय नमः ॐपीं शिरसे स्वाहा ॐपूँ शिखायै वषट् ॐपैं कवचाय हुम् ॐपौं नेत्रत्रयाय वौषट् ॐपः अस्त्राय फट् इति न्यासं विधाय ध्यायेत्–चतुर्भुजां महादेवीं तुङ्गपीनस्तनीं शिवाम्। मयूरवरमारूढां रक्तवस्त्रधरां शुभाम् ॥ शूलशक्तिवराभीतिहस्तां ध्यायेन्महेश्वरीम्। प्रफुल्लपद्मवदनामर्द्धपद्मासनस्थिताम् ॥ सर्वाङ्गभूषितां देवीं पीनोन्नतपयोधराम् ।। स्ववत्पीयूषवद्वक्त्रां

पीतकौशेयवाससाम् ॥ चतुर्भुजां दक्षिणेन धृतमन्थानवंशकाम् । नीलोत्पलं तु वामेन स्कन्दं तु दक्षतो तथा ॥ अधःस्थितकराभ्यां तु महाषष्ठीं विचिन्तयेत् ।

आवाहनम्—आयाहि पूज्यसे देवि महाषष्ठीति विश्रुते ।
शक्तिरूपेण मे बालं रक्ष जागरवासरे ॥

ॐअम्बे ऽअम्बिके ऽअम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ ॐषष्ठीदेव्यै नमः इतिनाममन्त्रेण च आसनम् पाद्यञ्च समर्प्य अर्घ्यं दद्यात्। अर्घ्यमन्त्रः—पत्रपुष्पफलाम्भोभी रत्नैश्च बहुभिर्युतम्। षष्ठि देवि मया दत्तमर्घ्यं गृह्ण नमोऽस्तु ते। ततो वैदिकपूर्वोक्तमन्त्रेण नाममन्त्रेण च आचमनीयं स्नानं स्नानोत्तराङ्गमाचमनीयं च समर्प्य वस्त्रम्—तन्तुसन्तानसंयुक्तं कलाकौशेयकल्पितम्। सर्वाङ्गावरणं श्रेष्ठं वसनं परिधीयताम् ॥ वस्त्राङ्गमाचमनीयम् । गन्धम्—कुङ्कुमं चन्दनं चैव सुगन्धं सुमनोहरम् । षष्ठि देवि मया दत्तं गन्धं गृह्ण नमोऽस्तु ते ॥ अक्षताः—सुगन्धा अतिशुभ्राश्च तण्डुलाः सुमनोहराः । अक्षतार्थं मया दत्ताः षष्ठि देवि नमोऽस्तु ते । पुष्पाणि—चतुर्वर्णानि पुष्पाणि सुगन्धीनि विशेषतः । मयाऽऽनीतानि पूजार्थं गृहाण परमेश्वरि ॥

ॐसमख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । मा मऽआयुः प्रमोषीर्मो ऽअहं तव वीरं विदेय तव देवि संदृशि १ ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्म ऽइषाण सर्वलोकम्मऽइषाण२ ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ३ इति मन्त्रैः दूर्वा-

समर्प्य धूपं समर्पयेत्—गुग्गुलुं घृतसंयुक्तं दशाङ्गेन समन्वितम्। षष्ठि देवि नमस्तुभ्यं धूपोऽयं प्रतिगृह्यताम् ॥ अष्टौ दीपान्प्रज्वलय्य–गव्येनाज्येन संयुक्तान् वर्त्या कर्पूरगर्भया। दीपान्देवि मया दत्तानिमान् गृह्ण नमोऽस्तु ते ॥ ततो द्वारदेशे वटकाष्ठकमालायुतम् अजासुतं कर्णवादनादिना भूतादिविद्रावणाय पुनःपुनः शब्दं कारयेत्। ततो नैवेद्यम्—मोदकानि विचित्राणि शुक्लतण्डुलकं दधि। विचित्रपक्वान्नयुतं तथाऽपूपसमन्वितम् ॥ फेणिकाघृतपूराढ्यं नैवेद्यं प्रतिगृह्यताम्। ॐ षष्ठीदेव्यै नम इति नाममन्त्रेण जपं विधाय गुह्यातीति समर्प्य नैवेद्याङ्गमाचमनीयं करोद्वर्त्तनार्थे गन्धं च समर्प्य नीराजनम्—अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्। आरार्त्तिकमिदं देवि गृहाण परमेश्वरि ॥ नमस्कारः–जय देवि जगन्मातर्जगदानन्दकारिणि। प्रसीद मम कल्याणि महाषष्ठि नमोऽस्तुते ॥ ततः पुष्पाणि सङ्गृह्य प्रार्थयेत–देवानां च ऋषीणां च मनुष्याणां च वत्सले। अमुं मम सुतं रक्ष षष्ठि देवि नमोऽस्तु ते ॥ पुरा देवैः पूजिताऽसि ब्रह्मविष्णुशिवादिभिः। आवाभ्यामपि देवि त्वं पूज्यसे भक्तिपूर्वकम् ॥ देह्यस्य बालकस्यायुर्दीर्घं तुभ्यं नमोऽस्तुते।

ततः पिता बालकस्य षष्ठीदेव्याः पुरःस्थितः।
बद्धाञ्जलिर्भक्तिनम्रो वाक्यमुच्चारयेदिदम् ॥
त्वं देवमाताऽदितिरब्धिजा त्वं गौरी त्वमेवासि धृतिः क्षमा त्वम्।
कीर्त्तिः समृद्धिर्भुवनस्य धात्री त्वमेव देवि प्रणतोऽस्मि तुभ्यम् ॥
यथा सर्व्वाणि भूतानि त्वयि स्यूतानि रत्नवत्।
चराचराणि भूतानि त्वत्तो जातान्यनेकशः ॥
पुमान्साक्षी भवत्येव तेन सत्येन बुद्धिमान्।

त्वं सृष्टिराद्या सृजसि प्रजास्त्वं स्थितिस्तथैनाः सकला बिभर्षि।
त्वामेव वाचा मनसा च कर्म्मणा समर्चयाम्यस्तु शिशुश्चिरायुः॥
स्वस्ति मेऽस्तु गृहे नित्यं त्वत्प्रसादात्सुरेश्वरि।
पुत्रोत्सवमहं नित्यं पश्येयं त्वदनुग्रहात्॥
ततोऽर्भकस्य जननी प्रार्थयेत्तामतन्द्रिता।
तव प्रसादात्तनयस्य वक्त्रं दृष्टं मया देवि नमोऽस्तु तुभ्यम्।
सौभाग्यमारोग्यमभीष्टसिद्धिं देहि प्रजायाश्चिरजीवितञ्च॥
गौर्य्याः पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया।
तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके नमः॥
षष्ठि देवि नमस्तुभ्यं सूतिकागृहवासिनि।
पूजितासि मया भक्त्या मबालां रक्ष सूतिकाम्॥
अथ वृद्धान्यवाः सर्व्वे स्वस्तिवाचनपुरःसरम्।
कामयन्तोऽर्भकस्यायुः प्रार्थयेयुः सयोषितः॥
ॐस्वस्ति दे-जननी सर्वसौख्यानां वर्द्धनी कुलसम्पदाम्।
साधनी सर्वसिद्धीनां जन्मदे त्वां नता वयम्॥

पिता पुनः प्रार्थयेत्-जननी सर्वभूतानां बालानां च विशेषतः। नारायणीस्वरूपेण बालं मे रक्ष सर्व्वतः॥ शक्तिस्त्वं सर्व्वदेवानां लोकानां हितकारिणी। मातृवद्रक्ष मे बालं महाषष्ठि नमोऽस्तु ते॥ रुद्राणी रुद्ररूपेण महाविघ्नविनाशिनी। प्राणदे वरदे देवि रक्ष बालं स्वपुत्रवत्॥ अमुं मम कुलोत्पन्नं रक्ष त्वं देवि बालकम्। पूजितासि महाभागे चिरं जीवतु बालकः॥ रक्षोभूतपिशाचेषु डाकिनीशाकिनीषु च। मातेव रक्ष मे बालं पन्नगश्वापदेषु च॥ त्वमेव वैष्णवी देवी ब्रह्माणी च व्यवस्थिता। रुद्रशक्तिरसमाख्याता महाषष्ठि नमोऽस्तुते॥ धात्री त्वं कार्त्तिकेयस्य स्त्रीरूपं मदनस्य च। त्वत्प्रसादा-

दाविघ्नेन चिरं जीवतु मे सुतः ॥

ततो मातुः सकाशाद्बालकमानाय्य गोमयोदकादिभिरभ्युक्ष्य सयत्नं बालकं भूमौ स्थापयित्वा हस्तेन स्पृष्ट्वा रक्षां पठेत् ।

ॐयद्बलं वासुदेवस्य विष्णोरमिततेजसः । भीमस्य ब्रह्मणश्चैव सर्वं भवतु मे सुते ॥ ततो ऽञ्जलिं बद्ध्वा प्रार्थयेत–चन्द्रार्कयोर्दिगीशानां यमस्य वरुणस्य च । निक्षेपार्थं मया दत्तं ते मे रक्षन्तु बालकम् ॥ अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा । रक्षन्तु सर्व्वदा सर्व्वे देवाः शक्रपुरोगमाः ॥ रक्ष त्वं वसुधे देवि सन्ध्ये च जगतः प्रिये । आयुष्प्रमाणं सकलं देहि देवि नमोऽस्तुते ॥ अन्तरा ह्यायुषस्तस्य ये केचित्परिपन्थिनः । विद्यारोग्यस्य वित्तानां निर्दहस्वाचिरेण तान् ॥

अथाथर्व्ववेदोक्तां रक्षां बालकसमीपे पठेत्–कृत्यानां परिरक्षार्थं तथा रक्षोभयस्य च । रक्षाकर्म्म करिष्यामि ब्रह्मा तदनुमन्यताम् ॥ नागाः पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः । अभिभवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान्सदा ॥ पृथिव्यामन्तरिक्षे च ये चरन्ति निशाचराः । विदिक्षु दिक्षु ये चान्ये पान्तु त्वां ते नमस्कृताः ॥ पान्तु त्वामृषयो ब्रह्मा दिव्या राजर्षयस्तथा । पर्वताश्चैव नद्यश्च तथा सर्वे च सागराः ॥ अग्नी रक्षतु ते जिह्वां प्राणान् रक्षन्तु वायवः । सोमो व्यानमपानन्तु पर्जन्यः परिरक्षतु ॥ उदानं विद्युतः पान्तु समानं स्तनयित्नवः । बलभित्ते बलं पातु वाचं वाचस्पतिस्तथा ॥ कामं ते पान्तु गन्धर्वाः सत्यमिन्द्रोऽभिरक्षतु । प्रज्ञां च वरुणो राजा समुद्रो नाभिमण्डलम् ॥ चक्षुः सूर्यो दिशः श्रोत्रं चन्द्रमाः पातु ते मनः । रेतस्ते पान्त्विमा आपो रोमाण्योषधयस्तथा ॥

आकाशं ते निशा पातु देहं तव वसुन्धरा । वैश्वानरस्तव शिरः पातु विष्णुः पराक्रमम् ॥ पौरुषं पुरुषश्रेष्ठो ब्रह्मा पातु भ्रुवौ तव । देहं देहविशेषेण तव पातु वसुन्धरा ॥ एतैर्वेदात्मकैर्मन्त्रैः कृता व्याधिविनाशिनी । मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि ॥ ब्रवीतु स्वस्ति ते ब्रह्मा विष्णुरुद्रौ तथैव च । स्वस्ति वायुस्तथा सूर्यः स्वस्ति देवा म होरगाः ॥ नारदश्च तथा स्वस्ति कुर्वन्त्वायुः सदैव हि ।

इति रक्षां पठित्वा बालकं कङ्कणादिभिर्विभूष्य स्वाङ्के निधाय सपत्नीकमाचार्यं वस्त्रालङ्कारादिभिः सम्पूज्य दक्षिणासङ्कल्पं कुर्यात्–अद्येत्यादिसङ्कीर्तनान्ते अमुकोऽहम् अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्यावाप्तये कृतायाः षष्ठीदेव्याः पूजायाः साद्गुण्यार्थं षष्ठीदेव्याः प्रीतये इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् न मम । दक्षिणां दत्त्वा भूयसीं सङ्कल्पयेत्–अद्येत्यादि सं० अमुकोऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये अमुकराशेर्जातस्य पुत्रस्य दीर्घायुरारोग्याभ्युदयप्राप्तये षष्ठीमहोत्सवकर्मणि कृतायाः स्कन्दप्रद्युम्नयोः षट्कृत्तिकानां षष्ठीदेव्याश्च पूजायाः साद्गुण्यार्थं न्यूनातिरिक्तदोषपरिहाराय च इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यः तथाऽन्येभ्यो दीनानाथेभ्यो नटनर्त्तकगायकेभ्यश्च विभज्य दातुमहमुत्सृजामि ॐतत्सत् न मम । भूयसीं विभज्य दत्त्वा घृतपक्वान्नेन ब्राह्मणांश्च तर्पयित्वा तिलकमन्त्रपाठादि कारयेत् ॥

अथ कुलाचाराद्देशाचाराद्वा सुलग्ने समागते अर्द्धरात्रे वा राहुवेधनं कुर्यात् । आचम्यार्घं संस्थाप्य पूजासङ्कल्पः-अद्येत्यादि सं० अमुकोऽहम् अमुकराशेः पुत्रस्य षष्ठीमहोत्सव-

कर्म्मण उत्तराङ्गत्वेन एतस्य बालकस्य परिरक्षार्थम् आयुर्वृद्धये सर्व्वोपद्रवशान्त्यर्थं च राहोर्वेधनं करिष्ये तदङ्गत्वेन धनुर्वाणयोः पूजनं करिष्ये इति सङ्कल्प्य हरिद्राद्रव्यपूगीफलगौरसर्षपादिभिर्मङ्गलद्रव्यैर्दृढां पोटलिकां विधाय गृहाधारदारुणि बध्वा वेधयेत् । एतन्त इति प० ॐभू० पोटलिके इहागच्छेह तिष्ठेति पोटलिकां प्रतिष्ठाप्य ॐभूर्भुवः स्वः धनुर्वाणौ इहागच्छतमिह तिष्ठतं सुप्रतिष्ठितौ वरदौ भवतम् इति धनुर्वाणौ प्रतिष्ठाप्य पूजयेत् । धनुषः पूजामन्त्रः—धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च । त्रयीमूर्त्तिगतं दिव्यं धनुः शस्त्रं नमाम्यहम् ॥ ॐधनुषे नमः । अथ बाणपूजामन्त्रः—कामदेवस्य ये बाणाः सफलाश्चार्जुनस्य च । रामस्य च यथा बाणास्तथाऽस्माकं भवन्त्विह ॥ ॐबाणाय नमः इति मन्त्राभ्यां धनुर्वाणौ सम्पूज्य बालकमङ्के गृहीत्वा स्वस्तिवाचनं पठन् धनुर्गृहीत्वा बाणेन संयोज्य घण्टाशङ्खवादनपुरस्सरं पोटलिकां बाणेन वेधयेत् । ततो दक्षिणासङ्कल्पः—अद्येहेत्यादि सं० अमुकराशेः पुत्रस्य सर्वोपद्रवशान्तये कृतस्य राहुवेधनकर्म्मणः साद्गुण्यार्थम इमां दक्षिणां ब्राह्मणेभ्यो दास्ये ॐतत्सत् इति दक्षिणां दत्त्वा तिलकमन्त्रपाठादि कारयेत् ।

ततो गव्यघृतसर्षपैः सैन्धवनिम्बपत्रैश्च सूतिकागृहे धूपो देयः । मुरा ऽहिकृतिनिर्गुण्डीवचाः कुष्ठं च सर्षपाः । बिल्वपत्रमयो धूपः कुमारायुःप्रपोषकृत् ॥ ततो यवप्ररोहणं सुवासिनीनां पूजनं यजमानस्य बालकस्य च महानीराजनं च विधाय बालकं मातृहस्ते समर्प्पयेत् । ततो गृहद्वारि रक्षकान् अपूपवटकमालायुक्तच्छाग–मुसलादिशस्त्रपाणीन् स्थापयेत् ॥

इति षष्ठीमहोत्सवपूजा ॥

अथ कथा ॥

ॐनारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥ युधिष्ठिर उवाच । पुत्रजन्मनि कन्याया उत्सवः को विधीयते । किं दानं कस्य पूजा च तन्मे ब्रूहि जनार्दन ॥ २ ॥ श्रीकृष्ण उवाच । शृणु पाण्डव यत्नेन सुतोत्पत्तिमहोत्सवम् । जन्मषष्ठदिने कार्या षष्ठीनाम्नी त्रिशूलिनी ॥ ३ ॥ पीठेऽपराह्णसमये गोमयीं प्रतिमां लिखेत् । कपर्दिकाः प्रदातव्याश्चाङ्गे चाङ्गे विशेषतः ॥ ४ ॥ कर्णयोः कुण्डले देये दूर्वापल्लवशोभिते । दिव्यवस्त्रपरीधानां तां देवीं पूजयेत्ततः ॥ ५ ॥ अग्रे दीपाष्टकं देयं नैवेद्यैर्विविधैः शुभैः । नालिकेरादिकं तद्देशकालोद्भवैः फलैः ॥ ६ ॥ कलशं स्थापयेत्तत्र अग्रतः पल्लवान्वितम् । द्विजन्मानं सपत्नीकं सदाचारसमन्वितम् ॥ ७ ॥ आहूय कारयेत्तस्यास्तयोर्हस्तेन पूजनम् । शुक्लतण्डुलवेद्यां तु तस्योपरि समारोपिताम् ॥ ८ ॥ नृत्यगीतविनोदेन वाद्येन च युधिष्ठिर । रात्रौ जागरणं कार्यं देवज्ञेन द्विजैः सह ॥ ९ ॥ वटकाष्ठकपालामिर्षद्ग्रीवमजाधुनम् । पुनःपुनर्महाशब्दं कारयेत्कर्णताडनात् ॥१०॥ डाकिन्यो यातुधानाश्च भूतप्रेतपिशाचकाः । बालग्रहाश्च नश्यन्ति तच्छब्दाकर्णनाद्ध्रुवम् ॥ ११ ॥ तत्र दानानि देयानि ब्राह्मणेभ्यो विशेषतः । प्रथमेऽहनि षष्ठे वा दाता नाप्नोति सूतकम् ॥ १२ ॥ दानप्रतिग्रहं तत्र श्राद्धं च क्रियते यतः । प्रभाते दीयते दानं नटनर्त्तकगायकान् ॥१३॥ स्त्रियः सभर्तृकाः पूज्या वस्त्रालङ्करणादिभिः । अनेन विधिना यस्तु षष्ठीदेवीं प्रपूजयेत् । आयुर्वृद्धिर्भवेत्तस्य संततेरपि पाण्डव ॥ १४ ॥ पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः । पितुः संवरस-

रदिने दानं कोटिगुणं भवेत् ॥ १५ ॥

॥ इति षष्ठीमहोत्सवपूजा कथा च ॥

(५)अथ नामकरणम् ।

तत्र पारस्करसूत्रं पूर्व्वमेव निर्दिष्टम्। सूतकान्ते नाम कुर्य्यादिति शङ्खः । तच्च सूतकं ब्राह्मणस्य दशाहं क्षत्रियस्य द्वादशाहं वैश्यस्य पञ्चदशाहं शूद्रस्य मासम् इति वर्णक्रमः । सर्व्ववर्णानां दशाहमेव वा देशाचारात् । वर्णक्रमपक्षे आनुपूर्व्येण एकादशे, त्रयोदशे, षोडशे, एकात्रिंशत्तमे दिवसे नामकरणम् । सर्ववर्णानां दशाहपक्षे सर्वेषाम् एकादशे एव । प्रचेताः–सूतिका सर्व्ववर्णानां दशाहेन विशुद्ध्यति । ऋतौ च न पृथग्धर्म्मः सर्व्ववर्णेष्वयं विधिः ॥ मनुः–नामधेयं दशम्यां च द्वादश्यां वाऽस्य कारयेत् । पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥ दशमे दिवसे स्नायाच्छुद्ध्यर्थं सा सबालिका–इति सर्ववर्णसाधारणम् । असम्भवेऽष्टादशे एकोनविंशे दिने शतरात्रे व्युष्टे अयने संवत्सरे गते वा नामकरणं भवति । पूर्वपूर्वासम्भवे सति एते व्यवस्थितविकल्पाः । तच्च नाम द्व्यक्षरं चतुरक्षरं कवर्गादिपञ्चवर्गाद्यक्षरत्रयादि हकारादि वा अन्तर्गतान्तस्थं कृत्प्रत्ययान्तमदीर्घसमासिकं पुरुषस्य, विषमाक्षरं तद्धितप्रत्ययान्तमाकारान्तं कवर्गादिपञ्चवर्गाद्यक्षरत्रयादि हकारादि वा अन्तर्गतान्तस्थं स्त्रीनाम कुर्य्यात् । कुलसम्बद्धं देवतासम्बद्धं नक्षत्राक्षरसम्बद्धं वा नाम कर्त्तव्यम्, तथा शङ्खोक्तेः । केचित्तु *मासनाम कुर्य्यादिति वदन्ति । सम्भवे समुच्चयं कुर्यादसम्भवेऽन्यतरत्स्वेच्छया कुर्यादिति ।*

अथ नामकर्म्मप्रयोगः ।

तत्र नामकर्म्मदिवसे प्रातः सबालां सूतिकां संस्नाप्य कृ-

ततः पिता पूर्वं गणेशपूजनं कुर्यात् । दीपं प्रज्वाल्य शुभा-
सनउपविश्याचम्य ( स्वस्तिवाचनं ) शान्तिपाठं कृत्वा अर्घं
संस्थाप्य प्राणानायम्य देवान्नमस्य पूजासङ्कल्पः अद्येत्यादि-
देशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकराशिरमुकशर्म्माऽहम् अमु-
कराशेः पुत्रस्य कन्याया वा करिष्यमाणनामकर्म्मणि* निष्क्र-
मणादिकर्म्मसु च निर्विघ्नतासिद्धये श्रीभगवतो गणेशस्य पूजनं
करिष्ये इति सङ्कल्प्य उक्तविधिना गणेशं सम्पूज्य प्रधा-
नसङ्कल्पं कुर्यात् । अद्येत्यादि देशकालौ सङ्कीर्त्य अमुक-
गोत्रोऽमुकराशिरमुकशर्म्माऽहम् +अमुकराशेरस्य बालकस्य
आयुर्वृद्धि-व्यवहारसिद्धि-बीजगर्भसमुद्भवैनोनिवर्हणद्वारा श्री-
परमेश्वरप्रीतये नामकर्म्म, तथाऽस्य पुत्रस्य श्रीवृद्धि-बी-
जगर्भसमुद्भवैनोनिवर्हणद्वारा श्रीपरमेश्वरप्रीतये सूर्यावलो-
कनसहितनिष्क्रमणकर्म्म, तथाऽस्य बालकस्यायुर्वृद्धिपनमा-
सिद्वारा श्रीपरमेश्वरप्रीतये भूम्युपवेशनं चैकतन्त्रेण करिष्ये ।
करिष्यमाणनामकर्म्म-सूर्यावलोकनसहितनिष्क्रमण-भूम्युपवे-
शनकर्म्मणां पूर्वाङ्गत्वेन मातृपूजा-नान्दीश्राद्ध-पुण्याहवाच-
नानि करिष्ये इति संकल्प्य पूर्वोक्तविधिना मातृपूजा-नान्दी-
श्राद्ध-पुण्याहवाचनानि विधाय वेदीं कृत्वा तत्र पञ्चभूसंस्कार-
पूर्वकमग्निं संस्थाप्य वेद्या ईशानदिग्भागे कलशविधिना कलशं *

---

* जन्मकाले जातकर्मणोऽकरणे जातकर्मादिसंस्कारकर्मेति
इत्यप्यूहनीयम् ।

+जातकर्मणि स्वकालेऽकृते सत्य बालकस्य गर्भाम्बुपा-
नजनितदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिवर्हणद्वारा
श्रीपरमेश्वरप्रीत्यर्थं जातकर्माख्यसंस्कारं करिष्ये इति सङ्कल्प्य
नामकर्मादिना सङ्कल्पः कार्यः । न सोष्यन्तीजातकर्मणि पूर्वोक्तनि-
षेधात् नान्दीश्राद्धादौ न तदङ्गापेक्षा ॥

संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य रक्षासूत्रमभिमन्त्र्य स्वयं होमकर्तृत्वे केवलं ब्रह्मणो वरणं कुर्य्यात्। स्वयं होमकर्तृत्वासंभवेतु आचार्यस्यापि। तत्र संकल्पः-अद्येत्यादि सं० अमुकराशेः पुत्रस्य करिष्यमाणशुद्ध्यर्थपञ्चगव्यपानाङ्गहोमकर्म्मणि आचार्य्यब्रह्मणोः पूजनं वरणं च करिष्ये इति संकल्प्य आचार्य्यब्रह्मणोर्वरणंकृत्वा तथा नामकर्म्माधिकारसिद्धये त्रीन् ब्राह्मणान्भोजयिष्ये इति संकल्प्य त्रीन्ब्राह्मणान् भोजयित्वा तेभ्यो भोजनयोग्यं मिष्टान्नम्, आमान्नं, तन्निष्क्रयीभूतं द्रव्यं वा संकल्प्य दत्त्वा ब्रह्मासनास्तरणादि पर्य्युक्षणान्तं कर्म्म समाप्य होमार्थं पानार्थं भूमोक्षणार्थं च पञ्चगव्यं कुर्य्यात्।

### अथ पञ्चगव्यविधिः।

( पराशरस्मृ० अ० ११ । श्लो० २८—३८ ॥ ) अथातः संप्रवक्ष्यामि पञ्चगव्यं यथाविधि । पावनार्थे द्विजातीनामिह लोके परत्र च ॥ १ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं च पवित्रं कायशोधनम् ॥ २ ॥ गोमूत्रे वरुणो देवो हव्यवाहस्तु गोमये । क्षीरे चन्द्रश्च भगवान्वायुर्दध्नि समाश्रितः ॥ ३ ॥ भानुराज्ये स्थितस्तद्वज्जले हरिरुदाहृतः । दर्भे देवाः स्थिताः सर्व्वे पवित्रं तेन नित्यशः ॥ ४ ॥ मूत्रं तु नीलवर्णायाः कृष्णाया गोमयं स्मृतम् । पयश्च ताम्रवर्णायाः श्वेताया दधि उच्यते ॥ ५ ॥ कपिलाया घृतं ग्राह्यं महापातकनाशनम् । अलाभे सर्व्ववर्णानां कपिलैका प्रशस्यते ॥ ६ ॥ मूत्रस्यैकपलं दद्याचदर्द्धं गोमयं स्मृतम् । क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ॥ ७ ॥ आज्यस्यैकपलं दद्यात्पलमे-

कं कुशोदकम् । सर्पिः कुशोदकं चैव पृथङ्मन्त्रैर्विधीयते ॥ ८ ॥

सर्व्वेषामलाभे सर्पिः कुशोदकं पय इति निर्णयः ।

गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ॥९॥ तेजोऽसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ।

सप्तावराश्च ये दर्भा अच्छिन्नाग्राः शुकत्विषः । एतैर्गृहीत्वा होतव्यं पञ्चगव्यं यथाविधि ॥ १० ॥ इरावती इदं विष्णुर्मानस्तोकेच शवती । गायत्री प्रजापतेनत्वेता आहुतयः स्मृताः ॥ ११ ॥ आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु । उदुधृत्य प्रणवेनैव त्रिः पिबेत्प्रणवेन तु ॥ १२ ॥ यद्यदस्थिगतं पापं देहे तिष्ठति देहिनाम् । ब्रह्मकूर्चो दहेत्सर्व्वं तद्यदाग्निरिवेन्धनम् ॥ १३ ॥ पालाशेनाथ पर्णेन स्वर्णपात्रेण वा पुनः । रौप्यपात्रेण ताम्रेण ब्रह्मतीर्थेन वै पिबेत्* ॥ १४ ॥

अथ पञ्चगव्याभिमन्त्रणम्—ॐभूः तत्सवितुरित्यादिकया गायत्र्या गोमूत्रं गृहीत्वा वरुणं ध्यायन्—

ताम्रपात्रे पलाशपत्रपुटे वा स्थापयेत् ।

ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम्—इति गोमयं संगृह्य अग्निं ध्यायन् तत्रैव स्थापयेत् ।

+ॐआप्यायस्व समेतु ते विश्वतः सोम वृ-

* प्राचीनपद्धतिपुस्तकस्थानुसारेणायं श्लोका उल्लिखिता । पराशरस्मृत प्रमाणतयाप्यासस्तु प्रायः समानार्थकत्वात् इति याध्यम् ।

+ऋ स म १२ म १९२।

हे सोम विश्वतः सर्वस्मात् वृष्ण्यं वीर्यं सर्वभूतोत्पत्ति

ण्यम्। भवा व्वाजस्य सङ्गथे ॥ इति दुग्धं संगृह्य सोमं ध्यायन् तत्रैव स्थापयेत्।

ॐदधिक्राव्णो ऽअकारिषं जिष्णोरश्वस्य व्वाजिनः। सुरभि नो मुखा करत्प्रण आयूᳬंषि तारिषत् ॥ इति दधि संगृह्य वायुं ध्यायंस्तत्रैव स्थापयेत्।

ॐतेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि—इति घृतं संगृह्य रविं ध्यायँस्तत्रैव स्थापयेत्।

*ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्-इति कुशोदकं संगृह्य हरिं ध्यायँस्तत्रैव स्थापयेत्। +ॐआपोहिष्ठेति तिसृभिरालोड्य ॐका-

---

ण्वीर्यं ते तव समेतु समागच्छतु, तेन च वीर्येण त्वमाप्यायस्व सर्वतो वर्द्धस्व। किञ्च वाजस्यान्नस्य संगथे सङ्गमने निमित्तं भव। अन्नमस्मासु सङ्गमयेत्यर्थः ॥

* देवस्यत्वेति व्याख्यातः प्रथमभागे २३८ पृष्ठे।

+ य. सं. अ. ११ मं. ५०

हे आपः यूयमेव मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ। तास्तादृश्यो यूयं नोऽस्मान् ऊर्जे रसाय भवदीयरसानुभवार्थं दधातन धत्त स्थापयत। तप्तनप्तनथनाश्चेति तनबादेशः। यथा वयं सर्वस्य भोग्यस्य रसस्य भोक्तारो भवेम तथा ऽस्मान् कुरुतेति भावः। किञ्च महे महते रणाय रमणीयाय चक्षसे दर्शनाय अस्मान् दधातन। अस्मान् ब्रह्मसाक्षात्कारयोग्यान् कुरुतेति भावः ॥

य. सं. अ. ११ मं ५१

हे आपः वः युष्माकं यः शिवतमः शान्ततमो रसो ऽस्ति इह अस्मिन् कर्मणि अस्मिन् लोके वा स्थितास्ततोऽस्मान् तस्य रसस्य भाजयत, भागिनः कुरुत-तं रसं पाययतेति भावः।

रेण कुशत्रयं साग्रं समूलं गृहीत्वा पुनरोङ्कारेण तद् गृहीत्वा जुहुयात् । इति पञ्चगव्यविधिः

अथ द्रव्यदेवताभिध्यानं कुर्यात्—अद्येह पञ्चगव्यपानाङ्ग होमकर्म्मणाऽहं यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमम् आज्येन—विष्णुं, विष्णु, रुद्रम्, अपः, सवितारं, प्रजापतिं पञ्चगव्येन—अग्निं, वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् (देवान्) मरुतः स्वर्कान्, प्रजापतिम्, अग्निꣳ स्विष्टकृतं चाज्येनाहं यक्ष्ये इति। (आचार्यस्य कर्तृत्वे त्यागमपि यजमानः स्वयं पूर्वमेव कुर्यात्—तद्यथा आघाराज्यभागदेवताभ्य इदमाज्यम्—विष्णवे, विष्णवे, रुद्राय, अद्भ्यः, सवित्रे, प्रजापतये च इदं पञ्चगव्यं—महाव्याहृतिदेवताभ्यः, सर्वप्रायश्चित्तदेवताभ्यः, प्रजापतये, अग्नये स्विष्टकृते च इदमाज्यं मया परित्यक्तं यथादैवतमस्तु) ।

---

तत्र दृष्टान्त उशतीर्मातर इव । यथा कान्तौ इत्यस्माच्छ शत्रन्तात्प्रत्ययान्ताडुगितश्चेति ङीप् । वा छन्दसीति पूर्वसवर्णदीर्घ । उशत्य कामयमाना प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरस बालं पाययन्ति तद्वत् ॥

य. स. अ ११ म ५२

हे आप यो युष्माकम्सम्बन्धिनस्तस्मै—तस्य, षष्ठ्यर्थे चतुर्थी। अरम्—अलम् पर्याप्तिं, लकारस्य रेफः छान्दस यथ गमाम गच्छेम । पर्याप्तिर्नाम रसविषयवैतृष्ण्यम्, सदा तृप्तिर्वा । यस्य क्षयाय—क्षयस्य, पूर्ववच्चतुर्थी निवासस्य जगतामाधारभूतस्य आहुतिपरिणामभूतस्य रसस्यैकदेशेन यूय ब्रह्मादिस्तम्बपर्यन्त जगत् जिन्वथ तर्पयथ । किञ्च नोऽस्मान् तत्र भोक्तृत्वेन जनयथोत्पादयत । तद्रसभोक्तृनस्मान् कुरुतेति आजानदेवत्वमाशास्यतइति भाव ॥

ततः *विधिनामानमग्निम् एतन्त इति ॐभूर्भुवः स्वः विधिनामाग्ने इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ॐतदेवाग्निरिति ध्यात्वा ॐविधिनामाग्नये नम इति नाममन्त्रेण आवाहनादिनीराजनान्तं सम्पूज्य दक्षिणं जान्वाच्य ब्रह्मणाऽन्वारब्धो जुहुयात्–ॐप्रजापतये स्वाहा इदं प्रजापतये न मम इति मनसा, ॐइन्द्राय स्वाहा इदमिन्द्राय न मम। ॐअग्नये स्वाहा इदमग्नये न मम। ॐसोमाय स्वाहा इद॰ सोमाय न मम–इत्याघारावाज्यभागौ च हुत्वा अन्वारम्भं त्यक्त्वा सप्ताधिकहरितदर्भतरुणैः पञ्चगव्यहोमं कुर्यात्। तत्र मन्त्राः–(इरावतीधेनुमती इत्यस्य वसिष्ठऋषिस्त्रिष्टुप्छन्दःविष्णुर्देवता पञ्चगव्यहोमे विनियोगः)।

+ॐइरावती धेनुमती हि भूत॰ सूयवसिनी म-

---

*पारस्कराचार्येण नामकर्मणि होमानुपदेशात् कतमोऽग्निर्ग्राह्य इत्याकाङ्क्षाया अभावेन "नाग्नि वै पार्थिवो नाम" इति नोपतिष्ठते। किंतु शुद्ध्यर्थपञ्चगव्यपानार्थं क्रियमाणे होमेऽग्न्याकाङ्क्षायां "प्रायश्चित्ते विधिश्चैव" इत्युपतिष्ठते। तस्मात् अत्र विधिनामाग्नेरेवावाहनं पूजनं चोचितम्। पार्थिवाग्नेरुल्लेखस्तु प्रमादेवेति सुधियो विभावयन्तु॥

+य. सं. अ. ५ मं. १६

हे रोदसी द्यावापृथिव्यौ युवाम् ईदृश्यौ भूतम् अभूतम् अभवतम्। अडभावः छान्दसः। किम्भूते युवाम्, इरावती– इरावत्यौ अन्नवत्यौ, धेनुमती बहुधेनुयुक्ते, सूयवसिनी सुष्ठु यवसानि अभ्यवहार्याणि वस्तूनि विद्यन्ते ययोस्ते सूयवसिनी सुयवसिन्यौ। छान्दसो दीर्घः। तथा मनवे दशस्या—मनुते जानातीति मनुर्यजमानस्तस्मै दशस्या दात्र्यो यज्ञसाधनानाम्। दाशृ दाने। दाशतस्ते दशस्या। असुन् प्रत्ययः, उपधाह्रस्वः, औविभक्तेर्यादेशश्च। एवं द्यावापृथिवी सम्प्रार्थ्य विष्णुमाह-

नवे दशस्या। व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा–इदं विष्णवे न मम। (इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः विष्णुर्देवता पञ्चगव्यहोमे विनियोगः)।

*ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा–इदं विष्णवे न मम। (मानस्तोके इत्यस्य परमेष्ठी ऋषिर्जगती छन्दः रुद्रो देवता पञ्चगव्यहोमे विनियोगः)।

+ॐमा नस्तोके तनये मा न ऽआयुषि मा नो

---

हे विष्णो एते रोदसी त्वं व्यस्कभ्ना विभज्य स्तम्भितवान् असि। किञ्च पृथिवीं मयूखैः स्वतेजोरूपैः नानाजीवैः वराहाद्यनेकावतारैर्वा अभितो दाधर्थ सर्वतो धारितवानसि। तस्मै विष्णवे स्वाहा हविर्दत्तम्॥

*य स अ ५ म १५

विष्णुः त्रिविक्रमावतारं कृत्वा इदं विश्वं विचक्रमे विभज्य क्रमते स्म। तदेवाह–त्रेधा पदं निदधे। भूमावेकं पदम्, अन्तरिक्षे द्वितीयं, दिवि तृतीयमिति क्रमादग्निवायुसूर्यरूपेणेत्यर्थः। पांसवो भूम्यादिलोकरूपा विद्यन्ते यस्य तत् पांसुरं तस्मिन् पांसुरे अस्य विष्णोः पदे समूढं सम्यगन्तर्भूतं, विश्वमिति शेषः। यद्वा अस्य विष्णोः पदं पद्यते ज्ञायत इति पदमद्वैताख्यं स्वरूपं समूढम् अन्तर्हितमज्ञातमहतात्मभिः, पांसुरे इव। लुप्तोपमानम्। पांसुले रजस्वले प्रदेशे निहितं पदं यथा न ज्ञायते तद्वत्। स्वाहा तस्मै विष्णवे हविर्दत्तम्॥

+य स अ १६ म १६

हे रुद्र नोऽस्माकं तोके पुत्रे, तनये पौत्रे मा रीरिषः मा हिंसीः। न आयुषि जीवने मा हिंसीः। नो गोषु धेनुषु मा हिंसीः। नो ऽश्वेषु तुरगेषु मा हिंसीः। भामिनः क्रोधयुतान् नः अस्माकं वीरान् भृत्यान् मा वधीः। यतो वयं सदमित्सदैव

गोषु मा नो ऽअश्वेषु रीरिषः । मा नो व्वीरान्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे–स्वाहा–इदꣳ रुद्राय न मम । उदकस्पर्शः ।

( शन्नोदेवीरित्यस्य दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्दः आपो देवताः पञ्चगव्यहोमे विनियोगः ) ।

ॐशन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये । शँय्योरभि स्रवन्तु नः–स्वाहा–इदमद्भ्यो न मम ।

(तत्सवितुरित्यस्य विश्वामित्रऋषिर्गायत्री छन्दः सविता देवता पञ्चगव्यहोमे विनियोगः) ॐभूर्भुवः स्वः तत्० गायत्र्या स्वाहान्तया इदꣳ सवित्रे न मम ।

(प्रजापतेनत्वेत्यस्य हिरण्यगर्भऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता पञ्चगव्यहोमे विनियोगः) ।

ॐप्रजापते न त्वदेतान्यन्यो व्विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो ऽअस्तु व्वयꣳ स्याम पतयो रयीणाम्–स्वाहा–इदं प्रजापतये न मम। इति पञ्चगव्यहोमं विधाय ब्रह्मणाऽन्वारब्ध आज्येन भूराद्या नवाहुतीर्हुत्वा पञ्चगव्यमिश्राज्येन स्विष्टकृद्धोमं च कृत्वा संस्रवप्राशनादिपूर्णपात्रदानान्तं कर्म्म समापयेत् । ततः अद्येह पञ्चगव्यपानाङ्गहोमकर्मणः साङ्गतासिद्ध्यर्थमिमां दक्षिणां पुरोहिताय ब्राह्मणाय दास्ये ॐतत्सत्र मम इति संकल्प्य दक्षिणां दद्यात् ।

ततः हुतशेषं पञ्चगव्यं सूतिकायै दद्यात् प्रसवगृहं च प्रोक्षेत् । सा च ब्राह्मतीर्थेन त्रिः प्राश्नाति । अत्राचारात् सूत्रं गन्धा-

---

त्वा त्वां हविष्मन्तः हविर्युक्ता हवामहे यागाय आह्वयामः । त्वदेकशरणा वयमिति भावः ॥

प्रजापत इति व्याख्यातः प्र. भा. पृ. २२७

क्षतपुष्पद्रव्यादिभिः सम्पूज्य ब्रह्मा स्रुवेणान्वारम्भं कृत्वा सूतिकां भर्तुः समीपमानयति । सा च बालकमङ्के गृहीत्वाऽग्निं प्रदक्षिणीकृत्य भर्तुर्वामतः* उपविशेत् गणेशाय नवग्रहेभ्यश्च पुष्पाञ्जलिं समर्पयेत् ।

जन्मकाले जातकर्म अकृतं चेत् "आशौचोपरमे कार्यम्" इति संस्कार प्र. विष्णुधर्मोत्तरवचनात्, "कालातीतानि कर्वीत विदध्यादुत्तराणि तु" इत्युक्तेश्च इदानीमेव जातकर्म कार्यम् । तच्च आयुष्यकरणादिकम् अश्मामवेत्येतन्मन्त्राभिमर्शनान्तं (२१३-२१९) पूर्वोक्तं कार्यम् । आयुष्यकरणानुमाणनमात्रं वा कार्यम् ।

ततो दैवज्ञबोधिते सुलग्ने समागते नव्यवस्त्रे कुङ्कुमपिष्टातकेन कुलदेवतासंबद्धं प्रथमं नाम,कृष्ण-अनन्त-अच्युत-चक्रधर-वैकुण्ठ-जनार्दन-उपेन्द्र-यज्ञपुरुष-वासुदेव-हरि-योगीश-पुण्डरीकाक्ष-एतदन्यतमं मार्गशीर्षादिक्रमेण द्वितीयं मासनाम, अवकहडचक्रानुसारेण तृतीयं नाक्षत्रनाम, घोषवदादीतिगृह्यसूत्रानुसारेण हकारवर्गतृतीयचतुर्थपञ्चमादि यरलवमध्यं चतुरक्षरं कृदन्तं चतुर्थं व्यावहारिकं नाम, स्वभीत्यनुसारेण पञ्चमं नाम एवं पञ्च नामानि बालकस्य लिखित्वा एतन्ते० ॐभूर्भुवःस्वः बालकनामानि सुप्रतिष्ठितानि भवन्त्विति प्रतिष्ठाप्य लग्नदानसंकल्पं कुर्यात्—अद्येत्यादि० अमुकराशेर्बालकस्य नामकर्मलग्नाद्यत्रकुत्रस्थाने स्थितानाम् आदित्यादिनवग्रहाणां शुभानां शुभफलाधिक्यप्राप्तये दुष्टानां दुष्टफलोपशान्त्यर्थम् इमां सुवर्णनिष्क्रयिणीं दक्षिणां दैवज्ञाय तुभ्यमहं सम्प्रददे इति । दक्षिणां दत्त्वा सुनवांशे समागते लिखितनामकं तन्नव्यवस्त्रं सद्रव्यशङ्खे

* "उत्तरतआयतनाद्धि स्त्री" इति औत्सर्गिकोपदेशात् ।

वेष्टयित्वा तेन बालस्य दक्षिणकर्णे पञ्चघोषपुरःसरम् अमुकशर्म्मोऽसि दीर्घायुर्भवेति क्रमेण नामानि श्रावयेत् । शर्म्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य गुप्तान्तं वैश्यस्य दासान्तं शूद्रस्य नाम कुर्य्यात् । ततो नामकरणदक्षिणासङ्कल्पः—अद्येहेत्यादि सं० अमुकराशेर्बालकस्य नामकर्माख्यसंस्कारकर्म्मणः साङ्गुण्यार्थम् इमां सुवर्णदक्षिणाम् आचार्याय तुभ्यमहं सम्प्रददे इति संकल्प्य नामकर्म्मदक्षिणां दद्यात्। अद्येहेत्यादिसं० अमुकराशेर्बालकस्य बैजिकगार्भिकदुरितोपशान्तये व्यवहारसिद्धये च कृतस्य नामकरणकर्म्मणः न्यूनातिरिक्तदोषपरिहारार्थम् इमां भूयसीं दक्षिणां ब्राह्मणेभ्यो दास्ये ॐतत्सत् ॥ तथा कृतस्य नामकर्माख्यसंस्कारकर्मणः साङ्गुण्यार्थं दश, यथासंख्याकान् वा ब्राह्मणान् भोजयिष्ये इति संकल्प्य अग्निं संपूज्य त्र्यायुषादि कृत्वाऽग्निं विसर्जयेत् ॥

## (६) अथ निष्क्रमणम् ।

तत्र पारस्करेण चतुर्थमासे विहितमपि शिष्टाः व्यवहारसौकर्यार्थं समाचारात् "द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात्" इति भविष्योत्तरवचनाच्च अपकृष्य नामकर्मदिवसे एवाचरन्ति । अतस्तस्मिन्नेव दिने निष्क्रमणं कुर्यात् । *तत्र विशेषः अद्येहेत्यादि सं० अमुकराशेरमुकशर्मणोऽस्य बालकस्य करिष्यमाणनिष्क्रमणकर्म्मणि सर्वारिष्टनिवृत्तये जले दिगीशानां दिशां चन्द्रस्य अर्कस्य वासु-

* "चतुर्थमासे कर्तव्यं शिशोर्निष्क्रमणं गृहात् । दिगीशानां दिशांचैव तथा चन्द्रार्कयोर्द्विजः ॥ पूजनं वासुदेवस्य गगनस्य च कारयेत् । इति सं० प्र० विष्णुधर्मोत्तरे पूर्वाङ्गत्वेन चन्द्रादीनां पूजो-क्तेरादौ तेषां पूजनं कार्यम् ।

देवस्य गगनस्य च पूर्वाङ्गत्वेन पूजनं करिष्ये। ॐएतन्ते० ॐभूर्भुवःस्वः जले दिगीशादिदेवा गगनपर्यन्ताः आगच्छन्तु तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु एवं प्रतिष्ठाप्य ॐदिगीशेभ्यो नमः ॐदिग्भ्यो नमः ॐचन्द्राय नमः ॐअर्काय नमः ॐवासुदेवाय नमः ॐगगनाय नमः इति नाममन्त्रैः ध्यात्वाऽऽवाह्य पाद्यादिभिः सम्पूज्य च प्रार्थयेत–चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च। निक्षेपार्थमिमं दद्मि ते मे रक्षन्तु बालकम्॥ अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापिवा। रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः(विष्णुध.)॥इति सम्प्रार्थ्य (शाकुन्तसूक्ते अपि निष्क्रमणकाले पठेत्॥ शाकुन्ते शकुन्तदेवताके। प्रदक्षिणिदभिगृणन्ति कारव इत्याद्येकम्। कनिक्रदज्जनुषं प्रब्रुवाण इत्यादि द्वितीयम्। ऋक्शाखायामेते प्रसिद्धे)। अथ शङ्खघण्टानादपूर्वकं (स्वस्तिवाचन) शान्तिपाठपूर्वकं मातुरङ्के स्थितं बालकं बहिरानीय आदित्यं पूजयेत्। तद्यथा–आचम्य अर्घं संस्थाप्य रक्तचन्दनेन ताम्रपात्रे सूर्यं लिखित्वा ॐएतं ते. इति प्रतिष्ठाप्य पूजासङ्कल्पः–अद्येहेत्यादिदेशकालौ सङ्कीर्त्य अमुकराशेः बालकस्य बैजिकगार्भिकदुरितोपशान्तये आदित्यस्य पूजनं करिष्ये। ध्यानम्–

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः।
केयूरवान्मकरकुण्डलवान्किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥ १

इति ध्यात्वा–

ॐआ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति

भुवनानि पश्यन्-इति वेदमन्त्रेण ॐआदित्याय नमः इति नाममन्त्रेण च आवाहनादिनीराजनान्तं सम्पूज्य ॐनमोऽस्तु सूर्यायेति, एहि सूर्यसहस्रांशो इति च अर्घ्यं दत्त्वा बालकं सूर्य्यं प्रदर्शयेत्-(तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिः ब्राह्मी त्रिष्टुप् (पुरउष्णिक्)छन्दः सूर्य्यो देवता सूर्य्यो-दीक्षणे विनियोगः)

ॐतच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शत$\overset{\smile}{\,}$शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्-इति मन्त्रेण बालकं सूर्य्यं प्रदर्श्य सङ्कल्प्य दक्षिणां दद्यात् ॥ अद्येह कृतस्य निष्क्रमणाख्यस्य संस्कारकर्मणः साङ्गतासिद्ध्यर्थं दश, यथासंख्याकान् वा ब्राह्मणान् भोजयिष्ये इति ब्राह्मणभोजनसंकल्पं च कुर्यात् ॥

इति सूर्य्यावलोकनसहितं निष्क्रमणम् ॥

अथ भूम्युपवेशनम् ।

इदमपि "पञ्चमे च तथा मासि भूमौ तमुपवेशयेत्" इति विष्णुधर्मोत्तरवचनेन पञ्चममासे विहितमपि नामकर्मदिवसे एवाचरन्ति । गोमयेन सुलिप्तायां भूमौ मृदा मण्डलं कृत्वा आचार्यं संस्थाप्य अद्येह भूम्युपवेशनकर्मणि पूर्वाङ्गत्वेन भूम्यादीनां पूजनं करिष्ये इति सङ्कल्प्य ॐएतंत इति प्रतिष्ठाप्य ॐपृथिव्यै नमः ॐवाराहाय नमः ॐकुलदेवतायै नमः इति नाममन्त्रैर्भूमौ पृथिवीं वाराहं कुलदेवतां च गन्धाद्युपचारैः सम्पूज्य "रक्षैनं वसुधे देवि सदा सर्वगते शुभे । आयुष्प्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥ अचिरादायुषस्तस्य ये केचित् परिपन्थिनः । जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण

तान् ॥ धारिण्यशेषभूतानां मातस्त्वमधिका ह्यसि । अजरा चाप्रमेया च सर्वभूतनमस्कृते ॥ त्वमेवाशेषजगतां प्रतिष्ठा चाश्रयो ह्यसि । कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम्" ॥ इति भूमिं संप्रार्थ्य शङ्खघण्टानादपूर्वकं बालकं भूमावुपवेशयेत् । आचाराद्गव्येऽपि पादस्थापनं कृत्वा दक्षिणां दत्त्वा तेन बालेन देवब्राह्मणान् प्रणमय्य तैराशीर्वादादिभिरभिनन्दितं प्रदक्षिणमार्गेण गृहाभ्यन्तर्नयेत् ॥

अथ जीवमातॄणां पूजनम्—आचम्य अर्घं संस्थाप्य पूजासंकल्पं कुर्यात्—अद्येत्यादि संकीर्त्य अमुकराशेरमुकनाम्नः पुत्रस्य नामकर्मादिकर्मणामुत्तराङ्गत्वेन भित्तौ पट्टे वा *लिखितानां कल्याण्यादिजीवमातॄणां पूजनं करिष्ये । ॐएतं* ते० ॐभूर्भुवः स्वः कल्याण्यादिसप्तजीवमातरः इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य ध्यायेत्—कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा । जया च विजया चैव वरदाभयपाणयः ॥ इति ध्यात्वा ॐकल्याण्यै नमः ॐमङ्गलायै नमः ॐभद्रायै नमः ॐपुण्यायै नमः ॐपुण्यमुख्यै नमः ॐजयायै नमः ॐविजयायै नमः इतिनाममन्त्रैरावाहनादिनीराजनान्तं सम्पूज्य गुडसर्पिर्भ्यां वसोर्धाराः पातयेत्—अद्येहामुकोऽहं जीवमातॄणां *प्रीतये गुडसर्पिर्भ्यां वसोर्धाराः पातयिष्ये ।*

ॐवसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः-इति मन्त्रेण भित्तौ पट्टे वा वसोर्धाराः पातयित्वा प्रार्थयेत्—

ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया

कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ।
वाराही घनघोरघर्घरमुखी चैन्द्री च वज्रायुधा
चामुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ॥ इति ।

दक्षिणा—अद्येहामुकोऽहम् अमुकराशेर्बालकस्य नामकर्मायुष्कराङ्गजीवमातृकापूजनकर्म्मणः साद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये ॥ अथ भूयसी दक्षिणा—अद्येहेत्याद्युच्चार्य अमुकोऽहम् अमुकराशेरमुकनाम्नोऽस्य बालकस्य दीर्घायुरारोग्यावाप्ति-बीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृतानां नामकरण-सूर्यावलोकनसहितनिष्क्रमण-भूम्युपवेशन-जीवमातृकापूजनकर्म्मणां साद्गुण्यार्थं, कलशे आवाहितानां ब्रह्मवरुणसहितादित्यादिनवग्रहाणां पूजायाः साद्गुण्यार्थं च, इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यस्तथाऽन्येभ्यो दीनानाथेभ्यो नटनर्त्तकगायकेभ्यो विभज्य दास्ये ॐतत्सत् । दक्षिणां दत्त्वा आचारान्महानीराजनादि कारयित्वा अभिषेकतिलकरक्षाबन्धनमन्त्रपाठादि कारयेत् । आवाहितदेवता विसृज्य कृतं कर्मेश्वरार्पणं कुर्यात् । ब्राह्मणान् स्वेष्टबन्धुवर्गादींश्च भोजयित्वा स्वयं भुञ्जीतेति ॥

( नामकरणं च यदि केनचित्प्रतिबद्धम् एकादशे द्वादशे वा दिवसे न जातं, तदा अस्तादिदोषवर्जिते काले एव कार्यम् । सूतिकाशुद्धिस्तु होमपूर्वकपञ्चगव्यप्राशनेन नामकर्मानुष्ठानं विनाऽपि भवितुमर्हत्येव । नहि शुद्ध्यर्थपञ्चगव्यप्राशनस्य नामकर्मप्रयोज्यत्वम्, येन तद्विना तदनुष्ठानं न स्यात् । अत एव बालकमरणेऽपि शुद्ध्यर्थं तत्प्राशनं तदङ्गभूतो होमश्चानुष्ठीयते एव शिष्टैरिति दिक् ॥ नामकर्मोत्तरमपि सूतिकायाः पुत्रप्रसवे विंशतिरात्रपर्यन्तं दै-

वपित्र्यकर्मसु नाधिकारः, कन्याप्रसवे तु मासम् । प्रसवदिनमारभ्य दिनगणनेति शङ्करभट्टादयः । एकादशदिनमारभ्येति कमलाकरः । तत्राद्यः पर्वतीयादिषु प्रचलति, द्वितीयो महाराष्ट्रादिष्विति बोध्यम्) ॥

इति नामकरण–सूर्यावलोकनसहितनिष्क्रमण–भूम्युपवेशनप्रयोगः ।

आचारप्राप्तं नद्यादौ जलपूजनं च गुरुशुक्रास्तचैत्रपौषाधिमासांस्त्यक्त्वा बुधचन्द्रगुरुवारेषु अरिक्तायां तिथौ श्रवणपुष्यपुनर्वसुमृगहस्तमूलानुराधासु मासान्ते विहितमपि पर्वतीया नामकर्मदिवसे एवाचरन्ति । अन्ये तु द्वितीयादिमासे एवाचरन्ति । जलपूजनप्रकारश्च चतुर्थीकर्मान्ते (१७८) उपदिष्टस्तत एवावगन्तव्यः ॥

अथ शिशोर्नवीनपर्यङ्कारोहणम् ।

तद्यथा–नामकर्मदिवसे, षोडशे, द्वात्रिंशे, अन्यस्मिन् शुभदिने वा मृदुध्रुवक्षिप्रनक्षत्रे कुलदेवतां संपूज्य हरिं स्मरन्त्यः सुवासिन्यः कुलयोषितः गीतवाद्यपुरःसरं स्वलंकृतं शिशुं नूतने पर्यङ्के, कण्डोले (डाला डलिया इति वा प्रसिद्धे वंशपात्रे), दोलायां वा प्राक्शिरसं न्यस्येयुः ॥

अथ दुग्धपानम् ।

एकत्रिंशे दिनेऽन्यस्मिन् वा शुभे दिने कुलदेवतापूजान्ते शङ्खेन गोक्षीरं माताऽन्या वा सुभगा बालकं पाययेदिति ॥

(७)अथान्नप्राशनम् ।

षष्ठेऽष्टमे दशमे द्वादशे वा मासि, संवत्सरे पूर्णे वा पुरुषस्यान्नप्राशनं कुर्यात्—स्त्रीणां तु पञ्चमे सप्तमे नवमे एका-

(शे वा मासि, संवत्सरे पूर्णे वा। तच्च ज्योतिःशास्त्रोक्ते १।४।
६।८।९।११।१२।१४।३०। तिथीः, रविभौमशनि-
वारान्, मेषवृश्चिकमीनं जामित्रलग्नाष्टमगृहलग्नं लग्नं च
वर्जयित्वा उत्तरात्रये रोहिण्यां श्रवणादित्रये स्वातौ पुन-
र्वस्वोः हस्तादित्रपुष्येषु मृगरेवतीचित्रानुराधासु च चन्द्रतारानु-
कूले दिवसे दशमभावशुद्धे लग्ने कुर्यात्।

बालकस्य पिता अन्नप्राशनादिनात् पूर्वम् अतृतीयेऽप-
ष्ठेऽनवमे दिवसे विवाहपूर्वाङ्गप्रयोगोक्तरीत्या(९३) गणेशं संपूज्य
सोहालिकापाकादिसर्वारम्भं कुर्यात्। तस्मिन्नेव दिने बा-
लकस्य हस्ते कङ्कणबन्धं च कारयेत्। कङ्कणौषधयश्च
तत्रैव (९९) द्रष्टव्याः।

*अथान्नप्राशनदिने कर्त्ता कृतनित्यक्रियः शुचिः शुक्लवासाः*
प्रथमं गणेशं पूजयेत्-स्वासने उपविश्याचम्य (स्वस्तिवाचनं)
शान्तिपठं कृत्वा दीपं प्रज्वल्याचम्यार्घं संस्थाप्य पूजा-
संकल्पः-अद्येत्यादि संकीर्त्य अमुकगोत्रोऽमुकराशिरमुकश-
र्माऽहम् मम अमुकराशेरस्य पुत्रस्य करिष्यमाणान्नप्राशनक-
र्म्मणि निर्विघ्नतासिद्ध्यर्थं भगवतः श्रीगणेशस्य पूजनं करिष्ये।
पूर्वोक्तप्रकारेण गणेशं सम्पूज्य प्रधानसंकल्पः-अद्येत्याद्युच्चार्य
अमुकोऽहम् मम अमुकराशेरस्य बालकस्य मातृगर्भमलप्राशनशुद्ध्य-
न्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनो-
निबर्हणद्वारा श्रीपरमेश्वरप्रीतये अन्नप्राशनाख्यं कर्म्म करिष्ये।
तत्पूर्वाङ्गत्वेन ग.स. गौर्यादिषोडशमातृणां पूजनं नान्दीश्राद्धं
पुण्याहवाचनं च करिष्ये इति सङ्कल्प्य पूर्वोक्तविधिना मा-
तृपूजन-नान्दीश्राद्ध-पुण्याहवाचनानि विधाय होमार्थं वेदीं
कृत्वा तत्र पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य,

स्वस्य कर्तृत्वे केवलं ब्रह्मणो वरणं कुर्यात् । असामर्थ्यादिना स्वस्य अकर्तृत्वे आचार्य्यब्रह्मणोर्वरणं कुर्य्यात् । अद्येहामुकोऽहम् अमुकराशेः पुत्रस्य अन्नप्राशनाङ्गहोमकर्म्मणि आचार्य्यब्रह्मणोः पूजनपूर्वकं वरणं करिष्ये इति सङ्कल्प्य आचार्य्यब्रह्मणोर्वरणं कृत्वा,

वेद्या ईशाने कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य रक्षासूत्रमभिमन्त्र्य,

अग्नेर्दक्षिणतस्त्रिभिः कुशैर्ब्रह्मणे आसनं दत्वा तत्राग्रेः पूर्वमार्गेण ब्रह्माणमुपवेश्य अग्नेरुत्तरत आसनद्वयं कल्पयित्वा प्रणीतापात्रं वामहस्ते कृत्वा उदकेन पूरयित्वा दर्भैराच्छाद्य ब्रह्ममुखमवलोक्य पश्चिमासने निधायालभ्य पूर्वासने निदध्यात्।ततः पूर्वपश्चिमयोरुत्तराग्रैः,दक्षिणोत्तरयोः पूर्वाग्रैः कुशैःपरिस्तरणं कृत्वा त्रीणि कुशतरुणानि, द्वे पवित्रे, प्रोक्षणीपात्रम्, आज्यस्थालीं, चरुस्थालीं, संमार्जनकुशान्, उपयमनकुशान्,समिधः, स्रुवम्, आज्यं, तण्डुलान्, पूर्णपात्रं, दक्षिणाम् एतानि वस्तूनि प्रावसंस्थानि उदगग्राणि अग्नेरुत्तरतः संस्थापयेत् ।

विशेषोपकल्पनीयानि—उद्धरणपात्रं सौवर्णं राजतं वा, मधुरादिसर्वरसान्, सर्वभक्ष्यं, मधु, घृतं, सुवर्णं च; शास्त्रं, शस्त्रं, लेखनीं, वस्त्रं, रजतं, सुवर्णं, भाण्डानि च ।

ततस्त्रिभिः द्वे संच्छिद्य प्रोक्षणीपात्रं प्रणीताया उत्तरतो निधाय तत्र प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षण्यां निधाय तत्पात्रं वामे कृत्वा तदुदकं दक्षिणेनोच्छाल्य प्रणीतोदकेन प्रोक्ष्य प्रोक्षण्युदकेन आज्यस्थाल्यादीनि दक्षिणान्तानि प्रत्येकं प्रोक्षेत्, ननु विशेषोपकल्पनीयानि उद्धरणपात्रादीनि । ततः आज्यस्थाल्यामाज्यं प्रक्षिप्य चरुस्थाल्यां

प्रणीतोदकमासिच्य त्रिः प्रक्षालितांस्तण्डुलांस्तत्र प्रक्षिप्य युगपदग्नावारोपयेत्—आज्यं ब्रह्मा, चरुं स्वयमाचार्यो वा ऽऽज्योत्तरतः। ज्वलदुल्मुकम् उभयोः समन्ताद्भ्रमयेत्। उदकस्पर्शः। स्रुवमधोमुखं प्रतप्य उ.स्प. कुशाग्रैर्मूलतोऽग्रपर्यन्तं, कुशमूलैरग्रतो मूलपर्यन्तं संमार्ज्य अभ्युक्ष्य पुनः प्रतप्य उ. स्प. दक्षिणतः कुशेषु निदध्यात्। आज्यमुत्थाप्य चरोः पूर्वेण नीत्वोत्तरतः संस्थाप्य चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वोत्तरतः संस्थाप्याज्यमग्नेः पश्चादानीय चरुं चानीयाज्यस्योत्तरतो निधाय पवित्राभ्यामाज्यमुत्पूय प्रोक्षणींचोत्पूय उपयमनकुशान् वामकरे कृत्वा तिष्ठन् घृताक्ताः समिधस्तूष्णीमग्नौ प्रक्षिप्य प्रोक्षण्युदकेन ईशानाद्युत्तरपर्यन्तं पर्युक्ष्य पवित्रे प्रणीतायां निधाय प्रोक्षणीपात्रं संस्रवधारणार्थं प्रणीताग्न्योर्मध्ये निधाय द्रव्यदेवताभिध्यानं कुर्यात्—

· अद्येहामुकोऽहम् पुत्रस्यान्नप्राशनहोमकर्म्मणा यक्ष्ये। तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमं, व्वाचं, व्वाचं व्वाजं च आज्येन—प्राणम्, अपानं, चक्षुः, श्रोत्रं च चरुणा—शेषेणाज्यचरुणा स्विष्टकृतम्—अग्निं, व्वायुं, सूर्य्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, व्वरुण॰ सवितारं व्विष्णुं व्विश्वान् (देवान्) मरुतः स्वर्कान्, व्वरुणं, प्रजापतिं च आज्येन यक्ष्ये। (आचार्यस्य होमकर्तृत्वे इदमाज्यं प्रजापत्यादिदेवताभ्यः, इदं चरुद्रव्यं प्राणादिदेवताभ्यः, इदं चर्वाज्यं स्विष्टकृते, इदमाज्यमग्न्यादिदेवताभ्यो मया परित्यक्तं यथादैवतमस्तु न मम इति त्यागं च यजमानः पूर्वमेव विदध्यात्)।

ततः शुचिनामानमग्निं संस्थाप्य ॐप्तन्ते॰ ॐभूर्भुवःस्वः शुचिनामाग्ने इहागच्छेह तिष्ठ सुप्रतिष्ठितो वरदो

भवेति प्रतिष्ठाप्य ॐतदेवाग्निरित्यादिना ध्यात्वा ॐशुचिनाम्ना-ग्नये नमः इति नाममन्त्रेणावाहनादि नीराजनान्तं सम्पूज्य ॐकराल्यै नमः ॐधूमिन्यै नमः ॐश्वेतायै नमः ॐलोहितायै नमः ॐमहालोहितायै नमः ॐसुवर्णायै नमः ॐपद्मरागायै नमः इति जिह्वाः सपूज्य ॐब्रह्मणे नमः ॐविष्णवे नमः ॐरुद्राय नमः इति रेखाश्च संपूज्य दक्षिणं जान्वाच्य ब्रह्मणाऽन्वारब्धो जुहुयात्—

ॐप्रजापतये स्वाहा—इदं प्रजापतये न ममेति मनसा, ॐइन्द्राय स्वाहा—इदमिन्द्राय न मम । ॐअग्नये स्वाहा—इदमग्नये न मम । ॐसोमाय स्वाहा—इद२ सोमाय न मम । अन्वारम्भं त्यक्त्वा ततो द्वे आज्याहुती जुहोति—( देवींवाचमिति भार्गवऋषिस्त्रिष्टुप्छन्दो वाग्देवता आज्यहोमे विनियोगः)

*ॐदेवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा—इदं वाचे न मम । (वाजो न इति देवा ऋषयस्त्रिष्टुप्छन्दः अन्नं देवता आज्यहोमे विनियोगः)

ॐदेवीं—वाचमिति पुनः पठित्वा—

---

*देवीं द्योतमानां वाचं देवाः प्राणादिवायवोऽजनयन्त उत्पादितवन्तः, ततस्तां वाचं वैखरीरूपां विश्वरूपा नानारूपाः पशवो मनुष्यादयो वदन्ति, "पशुरेव२ स देवानाम्" इति श्रुतेः। सा वाक् अस्मानुपैतु । किंभूता, नः अस्माकं मन्द्रा हर्षकरी, इषमन्नमूर्जं रसं च दुहाना पूरयमाणा ( दुह प्रपूरणे ) सर्वार्थदत्वाद्धेनुः, सुष्ठु मन्त्रैः स्तुता सुष्टुता (च)।

+ॐ व्वाजो नो ऽअद्य प्रसुवाति दानं व्वाजो देवाँ २॥ ऋतुभिः कल्पयाति । व्वाजो हि मा सर्व्ववीर जजान व्विश्वा ऽआशा व्वाजपतिर्जयेयम्-स्वाहा-इदं व्वाचे व्वाजाय च न मम । ततः स्रुवेण चरुमभिघार्य्य आज्यप्लुतेन स्थालीपाकेन जुहोति—(प्राणेनेत्यादीनां चतुर्णां प्रजापतिर्ऋषिर्यजुश्छन्दः अन्नं देवता होमे विनियोगः)

÷ॐ प्राणेनान्नमशीय स्वाहा-इदं प्राणाय न मम। ॐ अपानेन गन्धानशीय स्वाहा-इदमपानाय न मम । ॐ चक्षुषा रूपाण्यशीय स्वाहा-इदं चक्षुषे न मम । ॐ श्रोत्रेण यशोऽशीय स्वाहा-इदᳬं श्रोत्राय न मम । तत आज्यचरुभ्यां ब्रह्मणाऽन्वारब्धो जुहुयात्-ॐ अग्नये स्विष्टकृते स्वाहा-इदमग्नये स्विष्टकृते न मम। तत आज्येन अन्वारब्ध एव भूराद्या नवाहुतीर्जुहुयात्-(व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः होमे विनियोगः) ॐ भूः स्वाहा-इदमग्नये न मम । ॐ भुवः स्वाहा-इदं व्वायवे न मम । ॐ स्वः स्वाहा-इदᳬं सूर्य्याय न मम । (त्वन्नो

---

+य. सं. अ १८ मं.३३। अद्य अस्मिन्दिने वाजः-अन्नम् अन्नाधिष्ठात्री देवता नः अस्मान् प्रसुवाति प्रेरयतु दानं दानार्थम् । वाजः ऋतुभिः कालैः सह देवान् कल्पयाति यथास्थानं कल्पयतु । वाजो हि-वाजश्च मा मां सर्ववीरं पुत्रपौत्रादियुतं जजान जनयतु करोतु-इत्यर्थः । ततोऽहं वाजपतिः समृद्धान्नः सन् विश्वा आशाः सर्वा दिशो जयेयम् ॥

÷हे अग्ने प्राणेन वायुना त्वत्प्रसादादहमन्नमशीयादनानि, स्वाहा-सुहुतमस्तु । एवमुत्तराणि योज्यानि ॥

ऽग्ने, स त्वं नो ऽअग्ने इत्यनयोः वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सर्वप्रायश्चित्तहोमे विनियोगः) ।

ॐत्वं नो ऽअग्ने व्वरुणस्य व्विद्वान् देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचा नो व्विश्वा द्वेषाᳬंसि प्रमुमुग्ध्यस्मत्–स्वाहा–इदमग्नीवरुणाभ्यां न मम ।

ॐस त्वन्नो ऽअग्ने ऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ । अवयक्ष्व नो व्वरुणᳬ रराणो व्वीहि मृडीकᳬ सुहवो न ऽएधि–स्वाहा—इदमग्नीवरुणाभ्यां न मम ।

(अयाश्चाग्ने इत्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता सर्वप्रायश्चित्तहोमे विनियोगः ) ।

ॐअयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्त्वमया ऽअसि । अया नो यज्ञं व्वहास्ययानो धेहि भेषजᳬस्वाहा–इदमग्नये न मम ।

(येतेशतम इत्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दः व्वरुणः सविता व्विष्णुर्व्विश्वे ( देवाः ) मरुतः स्वर्काश्च देवताः सर्वप्रायश्चित्तहोमे विनियोगः ) ।

ॐये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा—इदं व्वरुणाय सवित्रे व्विष्णवे व्विश्वेभ्यो ( देवेभ्यो ) मरुद्भ्यः स्वर्केभ्यश्च न मम ।

(उदुत्तमम् इत्यस्य शुनःशेपऋषिस्त्रिष्टुप्छन्दः व्वरुणो देव-

ता सर्वमायश्चित्तहोमे विनियोगः ) ।
ॐउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो ऽअदितये स्याम-स्वाहा-इदं वरुणाय न मम। ॐअग्नये प्रजापतये स्वाहा-इदमग्नये प्रजापतये न मम । ततः संस्रवप्राशनम्, पवित्रप्रतिपत्तिः, प्रणीताविमोकः, ब्रह्मणे पूर्णपात्रदानम्। तत्र सङ्कल्पः-अद्येहेत्यादि सं०अमुकोऽहम् अमुकराशेः मम पुत्रस्यान्नप्राशनाङ्गहोमकर्म्मणः साद्गुण्यार्थम् अपूर्णपूरणार्थंच इदं पूर्णपात्रं सद्रव्यं ब्रह्मणे तुभ्यं सम्प्रददे । ब्रह्मा गृहीत्वा अक्रन्कर्म्मेति मन्त्राशिषं दद्यात् ।

ततः सुलग्ने समागते लग्नदानसङ्कल्पः—अद्येहेत्याद्युच्चार्य अमुकोऽहम् अमुकराशेः मम पुत्रस्यान्नप्राशनलग्नाद्यनक्षत्रस्थितानाम् आदित्यादिनवग्रहाणां दुष्टानां दुष्टफलोपशान्त्यर्थं शुभानां शुभफलाधिक्यप्राप्तये इदं सुवर्णं तन्निष्क्रयदक्षिणां वा ज्योतिर्विदे ब्राह्मणाय दास्ये ॐतत्सत् । दक्षिणान्दत्त्वा सर्व्वान् रसान् सर्व्वमन्नं मध्वाज्यसहितम् एकस्मिन् सुवर्णादिपात्रे कृत्वा सुवर्णान्तर्हितया ऽनामिकया मातुः स्वस्य वा उत्सङ्गे स्थितं स्वलंकृतं प्राङ्मुखं बालकं देवतापुरतो हन्तेति मन्त्रेण प्राशयेत्-"हन्तकारं मनुष्या"इति श्रुतेः। ततस्तूष्णीं पञ्चवारं प्राशयेत् । समन्त्रकं प्राशनं विधाय "पञ्चकृत्वस्तूष्णीं प्राशयेत्" इति जयन्तस्मरणात् । कन्यां तु तूष्णीमेव प्राशयेत् । ततो मत्स्याधारजलाशयोद्धृतजलेन त्रिवारं मुखं शोधयेत् । ततो माता बालकं पुस्तकादिवस्तुमध्ये स्वाङ्कादुत्सृजेत् । तदा स बालको वस्त्रशस्त्रलेखनीपुस्तकादिषु यत् प्रथमं गृह्णाति तेन तस्य जीविका भवेदिति ज्ञातव्यम् ।

ततो दक्षिणासङ्कल्पः—अद्येहामुकोऽहम् अमुकराशेः मम पुत्रस्य सहोमान्नप्राशनकर्म्मणः साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं चेमां दक्षिणाम् आचार्याय अन्येभ्यो ब्राह्मणेभ्यश्च विभज्य दास्ये । तथेमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यः अन्येभ्यो नटनर्त्तकगायकदीनानाथेभ्यश्च विभज्य दास्ये । तथा यथोपपन्नेनान्नेन दश, यथासंख्याकान् वा ब्राह्मणांश्च तर्पयिष्ये ॐतत्सत् इति संकल्प्य दक्षिणां दत्त्वा अग्न्यादीन्संपूज्य विसृज्य रक्षाबन्धनघृतच्छायाज्यायुष्करणाभिषेकतिलकमन्त्रपाठादि कारयित्वा जीवमातृपूजनं महानीराजनं च कृत्वा ईश्वरार्पणं कृत्वा ब्राह्मणान्भोजयित्वा इष्टबन्धुसहितः स्वयं भुञ्जीत ।

( गर्भाधानादीनि अन्नप्राशनान्तानि विहितमासादिकाले कथं चिन्न जातानि चेत् अस्तादिदोषवर्जिते काले एव कार्याणि । विहितमासादावपि सति सम्भवे दोषा वर्ज्या एवेति सिद्धान्तः) ॥

इत्यन्नप्राशनप्रयोगः ॥

## अथ अब्दपूर्तिकृत्यम् ।

तच्च प्रतिवर्षं जन्मदिवसे कार्यम् । "सर्वैः स्वजन्मदिवसे स्नातैर्मङ्गलवारिभिः । गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः" ॥ इति सं० प्र० ब्रह्मपुराणवचनात् । जन्मदिवसशब्देन च जन्मतिथिर्गृह्यते । "पक्षद्वये जन्मतिथिर्यदि स्यात् कुर्यात्तदा जन्मभसंयुतां च । असङ्गता तेन दिनद्वयेऽपि पूज्या परा या भवतीह यत्नात्" ॥ इति संस्कारप्रकाशे देवीपुराणात् ।

(इदं च यदि जन्ममासो ऽसंक्रान्तस्तदा शुद्धमासे एव

कार्यम् । यस्याधिकमासे जन्म तस्यापि सत्यपि तन्मासाधिक्ये शुद्धमासे एव, मलमासस्य शुभकर्मानर्हत्वात् । तत्र यदि अधिकशुक्ले जन्म तदा न संशयः । शुक्लस्य गौणमुख्यचान्द्रयोरेकत्वात् । यदि अधिककृष्णे जन्म यथा वैशाखस्याधिक्ये अधिकवैशाखकृष्णे जन्म तदा तस्याब्दपूर्तिकृत्यं प्रतिवर्षं किं "गौणचान्द्रवैशाखकृष्णे अर्थात् चैत्रपूर्णिमोत्तरकृष्णपक्षीयतिथौ कार्यम्, अथवा मुख्यचान्द्रवैशाखकृष्णे अर्थात् वैशाखपूर्णिमोत्तरकृष्णपक्षीयतिथौ कार्यम्" इति संशये मुख्यचान्द्रवैशाखकृष्णपक्षीयतिथावेव कार्यमिति सर्वनिबन्धसिद्धान्तः । अधिकमासस्य शुक्लादिमुख्यचान्द्रेणैव संभवात् । तद्विषये कृष्णादिचान्द्राश्रयणस्याशक्यत्वात् इति ।

एवम् आब्दिकश्राद्धमपि मलमासकृष्णमरणे तन्मासीयपूर्णिमोत्तरकृष्णपक्षीयतिथावेव कार्यम् । उल्लेखश्च तस्य गौणचान्द्रेण ज्येष्ठत्वेऽपि तस्य मुख्यचान्द्रानुसारेण वैशाखत्वेनैव कार्यः । विस्तरस्तु कृष्णभट्टकृतायां निर्णयसिन्धुटीकायां श्राद्धप्रकरणान्तर्गते आब्दिकश्राद्धप्रकरणे, वाचस्पतिमिश्रकृते द्वैतनिर्णये, नरहरिमिश्रकृते द्वैतनिर्णये, विनायकशास्त्र्यादिकृते चैत्राधिमासनिर्णये च द्रष्टव्यः । अधिकवैशाखादिकृष्णमृतस्य चैत्रादिपूर्णिमोत्तरकृष्णपक्षीयतिथौ विन्ध्योत्तरवासिना केषांचिद् गौडदाक्षिणात्यानामाब्दिकानुष्ठानं तु भ्रममूलकमेवेति कृतबुद्धय एव विदांकुर्वन्तु इत्यलम्) ॥

इदं च उपनयनात्पूर्वं बालस्य पिता कुर्यात्—तत्र ममेत्यस्य स्थाने मम बालस्येत्येवं संकल्पे उल्लेखः कर्तव्यः । अनन्तरं स्वयमेव कुर्यात् ।

तत्रैवं प्रयोगः ।

कर्ता सुगन्धतैलाभ्यक्तः सर्वौषधियुतशंनोदेवीरित्यभिमन्त्रितजलपूर्णसुपूजितकलशोदकेन स्नात्वा सन्ध्यादि नित्यकर्म विधाय दीपं प्रज्वलय्याचम्य जन्मदिने शनिभौमवासरसरे तत्सूचिताशुभपरिहाराय "अष्टमुष्टि भवेत्किञ्चित्"इति परिभाषितं किञ्चित् धान्यं ब्राह्मणाय दत्वा नवीनवस्त्रधारणं कुर्य्यात्-(परिधास्यैइत्याथर्वणऋषिः पङ्क्तिश्छन्दो वासो देवता वस्त्रपरिधाने विनियोगः) ।

ॐपरिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये-इति नवं धौतम् अधोवस्त्रं परिधाय उत्तरीयधारणं कुर्य्यात्-(यशसामेत्याथर्वणऋषिः पङ्क्तिश्छन्दः लिङ्गोक्ता देवता उत्तरीयपरिधाने विनियोगः ) ।

ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च मा ऽविन्दद्यशो मा प्रतिपद्यताम्-इति । तत आचम्य यथाविभवमलंकृतो निम्ब-गुग्गुलु-सिद्धार्थ-दूर्वा-गोरोचनान्वितां पोटलिकां कृत्वा ॐएतन्तइति पठित्वा ॐभूर्भुवःस्वः पोटलिके सुप्रतिष्ठिता वरदा भवेति प्रतिष्ठाप्य दक्षिणहस्ते बन्धयेत् । ततः शान्तिपाठपूर्वकं गणेशं सम्पूज्य सति संभवे मातृपूजनं कृत्वा कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितादित्यादिनवग्रहानावाह्य सम्पूज्य अर्घ संस्थाप्य प्रधानसङ्कल्पं कुर्यात्-अद्येहेत्यादिसं० अमुकगोत्रोऽमुकराशिरमुकशर्माऽहं ममायुरारोग्याभिवृद्धये वर्षवृद्धिकर्म करिष्ये तदङ्गत्वेन दध्यक्षतपुञ्जेषु कुलदेवतादीनां गुर्वादीनांचावाहनपूर्वकं पूजनं करिष्ये इति संकल्प्य ताम्रपात्रे नूतनं श्वेतवस्त्रं प्रसार्य

दध्यक्षतैः कुलदेवतादीन् उत्तरवृद्ध्या स्थापयेत्–ॐभूर्भुवःस्वः कुलदेवते इहागच्छ (पूजार्थं त्वाम् आवाहयामि) इत्यावाह्य इह तिष्ठेति स्थापयेत् । एवमुत्तरत्र सर्वत्र बोध्यम् । आवाहनस्थापनयार्भेदश्च प्रथमभागे (१९४) द्रष्टव्यः । १ ॐभूर्भुवःस्वः स्वनक्षत्रेश अमुक इहागच्छपू० इह तिष्ठ २ ॐभूर्भुवःस्वः मत्कातिपुरुषात्मकमातापितरौ इहागच्छतम् पू० युवाभ्या० इह तिष्ठतम् ३ ॐभू० प्रजापते इहागच्छ पू० इह तिष्ठ ४ ॐभूः० भानो इहा० पू० इह तिष्ठ ५ ॐभूः० विघ्नेश इहा० पू० इह तिष्ठ ६ ॐभूः० मार्कण्डेय इहा० पू० इह तिष्ठ ७ ॐभूः० वले इहा० पू० इह तिष्ठ ८ ॐभूः० व्यास इहा० पू० इह तिष्ठ ९ ॐभूः० जामदग्न्य, इहा० पू० इ० ति० १० ॐभूः० अश्वत्थामन् इहा० पू० इह तिष्ठ ११ ॐभूः० कृपाचार्य्य इहा० पू० इह तिष्ठ १२ ॐभूः० प्रह्लाद इहा० पू० इह तिष्ठ १३ ॐभूः हनुमन् इहा० पू० इह तिष्ठ १४ ॐभूः० विभीषण इहा० पू० इह तिष्ठ १५ ॐभूर्भुवःस्वः षष्ठीदेवि इहागच्छ पू० इह तिष्ठ १६ ॐभू० गुरव इहागच्छत पू० युष्माना० इह तिष्ठत १ ॐभू० देवता इहागच्छत पू० युष्माना० इह तिष्ठत २ ॐभू० अग्ने इहागच्छ पू० इह तिष्ठ ३ ॐभू० विप्राः इहागच्छत पू० युष्माना० इहतिष्ठत ४ ॐभू० पितर इहागच्छत पू० युष्माना० इह तिष्ठत ५ ॐभू० पञ्चभूतानि इहागच्छत पू० युष्मा० इह तिष्ठत ६ ॐभू० नवग्रहा इहागच्छत पू० युष्मा० इहतिष्ठत ७ ॐ० काल इहागच्छ पू० इह तिष्ठ ८ ॐभू० कलियुग इहागच्छ पू० इह तिष्ठ ९ ॐभू०संवत्सर- इहागच्छ पू० इह तिष्ठ १० ॐभू० मास इहागच्छ पू० इह तिष्ठ ११ ॐभू० पक्ष इहागच्छ पू० इह तिष्ठ १२ ॐभू० जन्म-

तिथे. इहागच्छ पू० इह तिष्ठ १३ ॐभू० अमुकजन्मनक्षत्र इहागच्छ पू० इह तिष्ठ १४ ॐभू० अमुकजन्मराशे इहागच्छ पू० इह तिष्ठ १५ ॐभू० शिवे इहागच्छ पू० इह तिष्ठ १६ ॐभू० संभूते इहागच्छ पू० इह तिष्ठ १७ ॐप्रीते इहागच्छ पू० इह तिष्ठ १८ ॐभू० सन्नते इहागच्छ पू० इह तिष्ठ १९ ॐभू० अनसूये. इहागच्छ पू० इह तिष्ठ २० क्षमे इहागच्छ पू० इह तिष्ठ २१ ॐभू० विप्रवति इहागच्छ पू० इह तिष्ठ २२ ॐभू० भद्रे इहागच्छ पू० इह तिष्ठ २३ ॐइन्द्र इहागच्छ पू० इह तिष्ठ २४ ॐभू० अग्ने इहागच्छ पू० इह तिष्ठ २५ ॐभू० यम इहागच्छ पू० इह तिष्ठ २६ ॐभू० निर्ऋते इहागच्छ पू० इह तिष्ठ २७ ॐभू० वरुण इहागच्छ पू० इह तिष्ठ २८ ॐभू० वायो इहागच्छ पू० इह तिष्ठ २९ ॐभू० धनद इहागच्छ पू० इह तिष्ठ ३० ॐभू० ईशान इहागच्छ पू० इह तिष्ठ ३१ ॐभू० अनन्त इहागच्छ पू० इह तिष्ठ ३२ ॐभू० ब्रह्मन् इहागच्छ पू० इह तिष्ठ ३३ ॐभू० कार्त्तिकेय इहागच्छ पू० इह तिष्ठ ३४ ॐभू० जन्मदेवते इहागच्छ पू० इह तिष्ठ ३५ ॐभू० स्थानदेवते इहागच्छ पू० इह तिष्ठ ३६ ॐभू० मत्स्यदेवते इहागच्छ पू० इह तिष्ठ ३७ ॐभू० वासुदेव इहागच्छ पू० इह तिष्ठ ३८ ॐभू० क्षेत्रपाल इहागच्छ पू० इह तिष्ठ ३९ ॐभू० पृथिवि पू० इह तिष्ठ ४० ॐभू० आप इहागच्छत पू० युष्माना० इह तिष्ठत ४१ ॐभू० तेजः इहागच्छ पू० इह तिष्ठ ४२ ॐभू० वायो इहागच्छ पू० इह तिष्ठ ४३ ॐभू० आकाश इहागच्छ पू० इह तिष्ठ ४४ ॐभू० ब्राह्मण इहागच्छ पू० इह तिष्ठ ४५ इत्यावाह्य* ॐएतन्तइति ॐभूर्भु-

* अत्र प्राक्संस्थपङ्क्तिक्रमेण उदक्संस्था देवताः संस्थापनी-

वास्त्वः कुलदेवतादिदेवताः गुर्वादिदेवताश्च इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य ॐवरदाभय पाणय इति सर्वेषां ध्यानम् ।

मार्कण्डेयध्याने विशेषः—ॐद्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् । मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतः सदा ॥ इति ध्यात्वा नाममन्त्रेण पूजनम्—ॐकुलदेवतायैनमः ॐजन्मनक्षत्रेशाय अमुकाय नमः ॐप्रकृतिपुरुषात्मकमातापितृभ्यां नमः ॐप्रजापतये नमः ॐभानवे नमः ॐविघ्नेशाय नमः ॐमार्कण्डेयायनमः ॐबलये नमः ॐव्यासाय नमः ॐजामदग्न्यरामाय नमः ॐअश्वत्थाम्ने नमः ॐकृपाचार्यायनमः ॐप्रह्लादाय नमः ॐहनूमते नमः ॐविभीषणाय ॐषष्ठीदेव्यै नमः १६ ॐगुरुभ्यो नमः ॐदेवताभ्यो नमः ॐअग्नये नमः ॐविप्रेभ्यो नमः ॐपितृभ्यो नमः ॐपञ्चभूतेभ्यो नमः ॐनवग्रहेभ्यो नमः ॐकालाय नमः ॐकलियुगाय नमः ॐअमुक संवत्सराय नमः ॐअमुकमासाय नमः ॐअमुकपक्षाय नमः ॐअमुकजन्मतिथये नमः ॐअमुकजन्मनक्षत्राय नमः ॐअमुकजन्मराशये नमः ॐशिवायै नमः ॐसंभूत्यै नमः ॐप्रीत्यै नमः ॐसन्नत्यै नमः ॐअनसूयायै नमः ॐक्षमायै नमः ॐविघ्नवरयै नमः ॐभद्रायै नम ॐइन्द्राय नमः ॐअग्नये नमः ॐयमाय नमः ॐनिर्ऋतये नमः ॐवरुणाय नमः ॐवायवे नमः ॐधनदाय नमः ॐईशानाय नमः ॐअनन्ताय नमः ॐब्रह्मणे नमः ॐकार्तिकेयाय नमः ॐजन्मदेवतायै नमः ॐस्थानदेवतायै नमः ॐप्रत्यक्षदेवतायै नमः ॐवासुदेवाय नमः ॐक्षत्रपालाय नमः ॐपृथिव्यै नमः ॐअद्भ्यो नमः ॐतेजसे नमः ॐवायवे

या. । "प्राच्च्युदीच्च वा कर्माणि" इति कात्यायनपरिभाषासूत्रात् ।

नमः ॐ आकाशाय नमः ॐ आत्मने नमः ४५ इति नाममन्त्रैः आवाहनासनपाद्यार्घ्यस्नानाचमनीयवस्त्रगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलफलभूषणादिभिः सम्पूज्य नाममन्त्रेण जपं विधाय नीराजनं कृत्वा ब्रह्मामुरारिरिति नवग्रहेभ्यः पुष्पाञ्जलिं समर्प्य—मार्कण्डेयाय पुष्पाञ्जलिं त्रिवारं वक्ष्यमाणमन्त्रेण समर्पयेत्—आयुष्मद महाभाग सोमवंशसमुद्भव । महातपो मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥ इति । ततः—

मार्कण्डेयं प्रार्थयेत्—मार्कण्डेय महाभाग सप्तकल्पान्तजीवन । आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव १ चिरजीवी यथा त्वं भो भविष्यामि तथा मुने । रूपवान्वित्तवाँश्चैव श्रिया युक्तश्च सर्वदा २ मार्कण्डेय नमस्तेऽस्तु सप्तकल्पान्तजीवन । आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने ३ चिरजीवी यथा त्वं तु मुनीनां प्रवर द्विज । कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम् ॥ ४ ॥

ततः षष्ठीं प्रार्थयेत्—जय देवि जगन्मातर्जगदानन्दकारिणि । प्रसीद मम कल्याणि महाषष्ठि नमोऽस्तु ते १ रूपं देहि यशो देहि भगं भगवति देहि मे । पुत्रान् देहि धनं देहि सर्वान्कामांश्च देहिमे २ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्माविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे ३ इति, मन्त्रहीनमिति च सम्प्रार्थ्य ततोऽर्घाञ्जलिना मार्कण्डेयाय निवेदितं पयः मन्त्रेण पञ्चवारं पिबेत्—तत्र मन्त्रः—सतिलं गुडसम्मिश्रमञ्जल्यर्द्धमितं पयः । मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुर्विवृद्धये ॥ इति पीत्वा मुखं प्रक्षाल्याचम्य दक्षिणासंकल्पः । अद्येहेत्यादि सं० अमुकराशिरमुकशर्म्माऽहम् आयुरारोग्याभिवृद्धये कृतायाः कुलदेवतादीनां गुर्वादीनाम् आदित्या-

दिनवग्रहाणां च पूजायाः साद्गुण्यार्थम् इमां दक्षिणां कर्मोपदेशकाय कुलपुरोहिताय श्रीगुरवे अन्येभ्यो ब्राह्मणेभ्यश्च विभज्य दास्ये* ॐतत्सन्न मम। तथा यथोपपन्नेनान्नेन ब्राह्मणाँश्च तर्पयिष्ये इति संकल्प्य दक्षिणां दत्त्वा यथासम्भवं तिलपात्रदानम्, अनिष्टग्रहदानं, तण्डुलदानम्, तुलादानं च कृत्वा अभिषेकतिलकमन्त्रपाठादिकं कारयित्वा घृतच्छायां विधाय आवाहितदेवता विसृज्य कर्मेश्वरार्पणं कृत्वा ब्राह्मणान्भोजयित्वा स्वयं भुञ्जीत। खण्डनं नखकेशानां मैथुनाध्वगमौ तथा। आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् इति सं० प्र० स्कन्दपुराणे। जन्मतिथिरौदयिकी ग्राह्या ॥ इति जन्मतिथ्युत्सवप्रयोगः ॥

(८)अथ कर्णवेधः ॥

("अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा पुष्येन्दुचित्राहरिरेवतीषु पूर्वाह्ने कुमारस्य मधुरं दत्त्वा प्रत्यङ्मुखायोपविष्टाय दक्षिणं कर्णमभिमन्त्रयते भद्रं कर्णेभिरिति, सव्यं वक्ष्यन्तीवेदेतिच। अथ भिन्द्यात्। ततो ब्राह्मणभोजनम्"—इति गृह्यपरिशिष्टखण्डेन यद्यपि कर्णवेधः तृतीयपञ्चमान्यतरवर्षे एव प्राप्नोति तथापि "अयुग्संवत्सरे प्राहुः कर्णवेधविधिं बुधाः" इति सं० प्र० राजमार्तण्डवचनात् अयुग्मवर्षे कार्यः। तत्रापि व्रतबन्धात्पूर्वमेव कार्यः। "कृतचूडेऽव्रते बाले कर्णवेधो विधीयते" इति व्यासवचनात्। "उपनीतया सहैववा" इति पक्षे चौलस्योपनयनसहभावित्वात्कर्णवेधस्य च तत्प्राग्भावित्वा-

---

* सर्वकर्मसु कर्मोद्देशकं कुलपुरोहितं, गुरुच दक्षिणादिभिरर्चयेत्। "तथोपदेष्टारमपि पूजयेच्च ततो गुरुम्। न पूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया"॥ इति संस्कारप्रकाशे पद्मपुराणात्।

स्कृतचूडत्वं न नियतम्। अतएव व्यासस्मृतौ नवमत्वेन निर्दिष्टोऽपि सः अत्राष्टमत्वेन निर्दिष्टः। चौलानुष्ठानस्य उपनयनेन सहैव पर्वतीयसमाचारासिद्धत्वात्। संस्कारप्रकाशे द्वादशदिवसादिरूपाः षष्ठादिमासरूपाश्चास्य काला उक्ताः।)

(यद्यप्ययं बहुषु स्मृतिषु षोडशसंस्कारेषु न परिगणितस्तथापि "गर्भाधानं पुंसवनं सीमन्तो जातकर्म च। नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया॥ १॥ कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः। केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः॥ २॥ त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृताः। नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः॥ ३॥ विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश" इति व्यासस्मृतौ षोडशसु परिगणनात् तदन्तर्गतत्वेन शिष्टैः परिगृह्यते। व्रतादेश उपनयनम्।

अत्र वेदारम्भादीनां षण्णां कर्मणां श्रौतस्मार्तपुरुषार्थाग्निहोत्रादिकर्मानुष्ठानप्रयोजकत्वेन संस्कारत्वम्। पापनिवृत्तिपूर्वकातिशयविशेषरूपसंस्काराधायकत्वरूपं पुरुषसंस्कारकर्मत्वं तु गर्भाधानादीनां व्रतबन्धान्तानां दशानामेव। तत्र गर्भाधानस्य क्षेत्रसंस्कारद्वारा, पुंसवनसीमन्तयोः क्षेत्रसंस्कारद्वारा गर्भसंस्कारद्वारा वा, जातकर्मादीनां चौलान्तानां षण्णां शरीरसंस्कारद्वारा। उपनयनस्य तु साक्षादतिशयविशेषाधायकत्वम्। अत एवोपनयनस्य प्राधान्यम्। स्त्रीशूद्रयोस्तु विवाहस्योपनयनस्थानीयत्वात्तस्यैव मुख्यसंस्कारत्वम्। अत एव "अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम्। पिता कुर्यात्" इति वचने विवाहादीनामनुल्लेख संस्कारकर्मत्वेन। तत्र कर्णवेधस्य पूर्वत्रानुक्तत्वात्तत्वानमुपन्यासः। शिष्टपरिग्रहाचास्याभिरुपन्यस्तस्तत्र।

अत एव दशसंस्कारकर्मपद्धतिरिति अभियुक्तानां प्रवादः । अत एव विवाहादिविधिषु न द्वितीयाश्रवणं पुरुषे । अध्ययनमपि "स्वाध्यायोऽध्येतव्य" इतिविधिप्रयुक्तमेव नाध्यापनविधिप्रयुक्तमिति न तत्रत्यया "वेदमध्यापयेदेनम्"इति द्वितीयया पुरुषसंस्कारकर्मत्वशङ्कावकाशः । अत एव विरक्तस्य न विवाहानुष्ठानम् । तदभावाच्च नोत्तरकर्मसु तदधिकारः । "जायमानो वै ब्राह्मण" इत्यस्य गृहस्थो जायमान इत्यर्थ इति न तद्विरोधः । समावर्तनं तु कलौ नैष्ठिकब्रह्मचर्यनिषेधादावश्यकम् । तस्मादुपनयनान्तानि दशैव पुरुषसंस्कारकर्माणि, अध्ययनादीनि तु पुरुषार्थानि, पुरुषार्थकर्मानुष्ठानप्रयोजकत्वात्तु संस्कारेषु परिगण्यन्ते इति दिक्) ।

## अथ कर्णवेधप्रयोगः ।

तत्र चन्द्रतारानुकूले शुभदिने कर्णवेधोक्तनक्षत्रे पिता प्रातरुत्थाय स्वकीयं प्रातः कृत्यं निर्वर्त्य गणेशपूजनं कुर्यात् । दीपं प्रज्वाल्याचम्य ( स्वस्तिवाचनं ) शान्तिपाठं कृत्वा प्राणानायम्य अर्घं संस्थाप्य पूजासंकल्पः । अद्येहेत्यादि सं० अमुकोऽहम् अमुकराशेः मम पुत्रस्य करिष्यमाणकर्णवेधकर्म्मणि निर्विघ्नताप्राप्तये श्रीगणेशस्य पूजनं करिष्ये । उक्तविधिना गणेशं सम्पूज्य प्रधानसंकल्पं कुर्यात्–अद्येहेत्याद्युच्चार्य अमुकगोत्रः अमुकराशिरमुकशर्म्माऽहम् अमुकराशेः पुत्रस्य बीजगर्भसमुद्भवैनोनिबर्हणपुष्ट्यायुःश्रीवृद्धिद्वारा श्रीपरमेश्वरप्रीतये कर्णवेधाख्यं कर्म्म करिष्ये । तत्पूर्वाङ्गत्वेन गणपतिसहितगौर्यादिषोडशमातृणां पूजनं नान्दीश्राद्धं पुण्याहवाचनं च करिष्ये इति सकल्प्य उक्तविधिना मातृपूजानान्दीश्राद्धपुण्याहवाचनानि कृत्वा कलशं संस्थाप्य तत्र ब्रह्मवरुणसहितनवग्रहानावाह्य

रक्षासूत्रमभिमन्त्र्य जले केशवादिदेवानां विष्णुधर्मोत्तरोक्तं पूजनं कुर्यात्—तत्र संकल्पः—अद्येत्यादि सं० अमुकराशेः मम पुत्रस्य कर्णवेधकर्म्मणि कलशे ब्रह्मवरुणसहितानाम् आदित्यादिनवग्रहाणां जले केशवादिदेवानां च पूर्वाङ्गत्वेन पूजनं करिष्ये इति संकल्प्य एतन्ते इति ॐभूर्भुवःस्वः कलशे ब्रह्मवरुणसहिता आदित्यादिनवग्रहाः जले केशवादिदेवा सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य नवग्रहान् नाममन्त्रेण ध्यानादिभिः पूजयित्वा—ॐकेशवाय नमः ॐइराय नमः ॐब्रह्मणे नमः ॐचन्द्राय नमः ॐसूर्याय नमः ॐदिगीशेभ्यो नमः ॐनासत्याभ्यां नमः ॐसरस्वत्यै नमः ॐब्राह्मणेभ्यो नमः ॐगवे नमः ॐगुरुभ्यो नमः इति नाममन्त्रैः ध्यानावाहनासनपाद्यार्घ्यस्नानाचमनवस्त्रगन्धाक्षतपुष्पधूपदीपनैवेद्यफलताम्बूलभूषणादिभिः संपूज्य जपं विधाय समर्प्य नीराज्य पुष्पाञ्जलिं समर्प्य ततः स्वेष्टदेवं भिषग्वरं ब्राह्मणान् सौचिकं च नमस्कृत्य मातुरुत्सङ्गस्थितस्य भूषणवस्त्रादिभिरलंकृतस्य बालकस्य,प्राङ्मुखस्य गुडमोदकादि भोजनार्थं दत्त्वा अद्येत्यादि सं० अमुकराशेरस्य मम बालकस्य कर्णवेधलग्नात्तत्कुत्रस्थानस्थितदुष्टग्रहैः सूचितारिष्टनिरस्त्यर्थं ग्रहाणां प्रीतये इमां दक्षिणां ब्राह्मणाय दास्ये इति लग्नदानं विधाय ततो दैवज्ञबोधिते शुभे लग्ने पिता सौचिकोऽन्यो वा सुवर्णसूच्या क्षत्रियस्य, रजतसूच्या विप्रवैश्ययोः, आयस्या सूच्या शूद्रस्य अष्टाङ्गुलया द्विगुणसूत्रसंलग्नया पुरुषस्य पूर्वं दक्षिणं कर्णम् अभिमन्त्र्य वेधयेत्—तत्रमन्त्रः—(भद्रंकर्णेभिरिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः लिङ्गोक्ता देवता दक्षिणकर्णाभिमन्त्रणे विनियोगः) ।

ॐभद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्ष-

भिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳬंसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ अथ वामकर्णाभिमन्त्रणम् (वक्ष्यन्तीवेदेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता वामकर्णाभिमन्त्रणे विनियोगः )।

*ॐ वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियᳬं सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताऽधिधन्वञ्ज्या ऽइयᳬं समने पारयन्ती—इत्यभिमन्त्र्य कर्णौ अलक्तकरसेनाङ्कयित्वा विध्येत् । स्त्रियास्तु वामं पूर्वं विध्वा दक्षिणं विध्येदमन्त्रकम् । स्त्रीणां नासावामभागे वेधोऽपि कर्तव्यः । "कन्याया घ्राणवेधः स्यात् सद्वारे विषमेऽब्दके । आद्ययामे सितेपक्षे मैत्रक्षिप्रोचराचरे" ॥ इति संस्कारगणपतौ वचनात् । ततः दक्षिणासङ्कल्पं कुर्यात्—अद्येहामुकोऽहम् अमुकराशेरस्य मम बालकस्य कर्णवेधकर्म्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं चेमां दक्षिणां ब्राह्मणेभ्यो विभज्य दास्ये ॐ तत्सन्न मम । तथा यथोपपन्नेनान्नेन दश, यथासङ्ख्याकान्वा ब्राह्मणांश्च तर्पयिष्ये इति सङ्कल्प्य दक्षिणां दत्त्वा अभिषेकतिलकरक्षाबन्धनघृतच्छायामन्त्रपाठादि कारयित्वा जीवमातृपूजनं महानीराजनं च

---

* य. सं. २९।४० वक्ष्यन्ती इव इत् आगनीगन्ति इति पदच्छेदः । इत् पादपूरणार्थः । इयं ज्या धन्वन् धनुषि अधिवितता उपरि विस्तारिता सती शिङ्क्ते अव्यक्तशब्दं करोति, वक्ष्यन्ती वक्तुमिच्छन्ती योषेव कामिनीव । कीदृशी ज्या. समने सङ्ग्रामे पारयन्ती सङ्ग्रामादुत्तारयन्ती विजयं कुर्वन्ती कर्णमागनीगन्ति योद्धुः कर्णं प्रति अत्यर्थमागच्छति, प्रियं सखायमिष्टं मित्रं बाणरूपं परिषस्वजाना आलिङ्गयन्ती । अन्योऽपि वक्तुमिच्छन् कर्णं प्रत्यागच्छति इयमपि तथेति उत्प्रेक्ष्यते ॥ विजयार्थं ज्यायाः कर्णागमनमिति कर्णस्य स्तुतिर्व्यज्यते इति कर्णाभिमन्त्रणमनेनोचितमिति बोध्यम् ॥

कुर्यात् ॥ आवाहितदेवता विसृज्य कृतं कर्मेश्वरार्पणं कुर्यात् ।

इति कर्णवेधप्रयोगः ॥

## अथाक्षरस्वीकारविद्यारम्भौ ॥

बालकस्य पञ्चमवर्षे कुम्भादित्यविवर्जिते उदगयने शुक्लपक्षे चन्द्रतारानुकूल्ये शुभे दिने अक्षरस्वीकारं विद्यारम्भं च कारयेत् । तत्प्रकारमाह संस्कारप्रकाशे—

मार्कण्डेयः—"अभ्यङ्गस्नानपूर्वन्तु गन्धाद्यैश्च विभूषितः । शुक्लवस्त्रं समास्तीर्य्य तण्डुलोपरि पूजयेत् ॥ पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् । स्वविद्यासूत्रकारांश्च स्वविद्यांश्च विशेषतः ॥ एतेषामेव देवानां नाम्ना च जुहुयाद् घृतम् । दक्षिणाभिर्द्विजाग्र्याणां कर्त्तव्यं चात्र पूजनम् ॥ प्राङ्मुखो गुरुरासीनो वरुणाशामुखं शिशुम् ॥ अध्यापयीत प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥ इति । स्वविद्याशब्देन स्वस्याध्येयाश्चत्वारो वेदाः पुराण–न्याय–मीमांसा–धर्मशास्त्रेत्येतदुपाङ्गचतुष्टयसहिताः शिक्षादिषडङ्गसहिता वैद्यशास्त्रादिचतुरुपवेदसहिता अष्टादशविद्यात्वेन प्रसिद्धा गृह्यन्ते । वैशेषिकस्य न्याये, वेदान्तस्य मीमांसायां, साङ्ख्यादीनां धर्मशास्त्रेऽन्तर्भावः । तत्तत्प्रवर्तका आचार्याश्च सूत्रकारशब्देनोच्यन्ते ।

### अथ प्रयोगः–

दीपं प्रज्वाल्याचम्य ( स्वस्तिवाचनं ) शान्तिपाठं कृत्वा अर्घं संस्थाप्य प्राणानायम्य उक्तविविधिना गणेशं सम्पूज्य प्रधानसंकल्पं कुर्य्यात्–अद्येत्यादि सं० अमुकोऽहम् अमुकराशेः मम पुत्रस्य सकलविद्याविशारदत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् अक्षरारम्भं विद्यारम्भं च करिष्ये । तत्पूर्वाङ्गत्वेन गणपतिस-

हितगौर्य्यादिषोडशमातॄणां पूजनं नान्दीश्राद्धं पुण्याहवाचनं च करिष्ये इति सङ्कल्प्य मातृपूजा—नान्दीश्राद्ध—पुण्याहवाचनानि विधाय कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य रक्षासूत्रं च कल्पयित्वा वेदिकायां ताम्रपीठे वा नवं शुक्लं धौतं वस्त्रं समास्तीर्य्य दध्यक्षतपुञ्जेषु गणेशहर्य्यादीन्देवानावाहयेत् । तत्र सङ्कल्पः—अद्येहामुकोऽहम् अमुकराशेरस्य मम बालकस्य अक्षरस्वीकारविद्यारम्भकर्म्मणोः पूर्वाङ्गत्वेन दध्यक्षतपुञ्जेषु गणेशहर्य्यादिदेवानां, वेदादिप्रवर्तकानां ब्रह्मादीनामाचार्य्याणां, वेदादिविद्यानां च आवाहनपूर्वकं पूजनं करिष्ये इति सङ्कल्प्य ॐभूर्भुवः स्वः गणेश इहागच्छ पूजार्थं त्वाम् आवाहयामि इत्यावाह्य इह तिष्ठेति स्वदक्षिणतः स्वाभिमुखं स्थापयेत् १ गणेशदक्षिणपार्श्वे ॐभूर्भुवः स्वः विष्णो इहा. २ तद्दक्षिणपार्श्वे ॐभू० लक्ष्मि इहा. ३ तद. ॐभू० देवि इहा. ४ तद० ॐभू० सरस्वति इहागच्छ ५ द्वितीयपङ्क्तौ गणेशात्पूर्वे ॐभू० ब्रह्मन् इहा. ६ ब्रह्मद० ॐभू० व्यास इहा. ७ तद० ॐभू० गौतम इ. ८ तद० ॐभू० जैमिने इ. ९ तद० ॐभू० मनो इ. १० तद० ॐभू० पाणिने इ. ११ तद० ॐभू० कात्यायन इ. १२ तद० ॐभू० पतञ्जले इहा० १३ तद० ॐभू० यास्क इहागच्छ. १४ तद० ॐभू० पिङ्गल इ. १५ तद० ॐभू० गर्ग इ. १६ तृतीयपङ्क्तौ ब्रह्मणः पूर्वे ॐभू० कणाद इ. १७ तद० ॐभू० कपिल इ. १८ तद० ॐभू० वाल्मीके इ. १९ तद० ॐभू० वामन इ. २० तद० ॐभू० धन्वन्तरे इ. २१ तद० ॐभू० कृशाश्व इ. २२ तद० ॐभू० भरत इ. २३ तद० ॐभू० विश्वकर्म्मन् इ. २४ तद० ॐभू० बृहस्पते इहागच्छ० २५ तद० ॐभू० नकुल इहागच्छ० २६ तद० ॐभू० गो-

भिल इहागच्छ० २७ चतुर्थपङ्क्तौ कणादात्पूर्वे ॐभू० वेदाः इहागच्छन्तु पूजार्थं युष्मानावाहयामि इह तिष्ठन्तु २८ तद० ॐभू० पुराणानि इहागच्छन्तु पू० युष्माना० इह तिष्ठन्तु २९ तद० ॐभू० न्याय इ. ३० तद० ॐभू० मीमांसे इ. ३१ तद० ॐभू० धर्मशास्त्र इहा. ३२ तद० ॐभू० शिक्षे इ. ३३ तद० ॐभू० कल्प इ. ३४ तद० ॐभू० व्याकरण इहा. ३५ तद० ॐभू० निरुक्त इ. ३६ तद० ॐभू० छन्दांसि इहागच्छन्तु. पू० युष्माना० इह तिष्ठन्तु ३७ तद० ॐभू० ज्योतिष इ. ३८ पञ्चमपङ्क्तौ वेदेभ्यः पूर्वे ॐभू० वैशेषिक इहा० ३९ तद० ॐभू० वेदान्तइ. ४० तद० ॐभू० सांख्य- इ. ४१ तद० ॐभू० पातञ्जल इ. ४२ तद० ॐभू० काव्य इ. ४३ तद० ॐभू० अलङ्कार इ. ४४ तद० ॐभू० वैद्यशास्त्र इ. ४५ तद० ॐभू० धनुर्वेद इ. ४६ तद० ॐभू० गान्धर्ववेद इ. ४७ तद० ॐभू० शिल्पशास्त्र इ. ४८ तद० ॐभू० *पालकाप्य इहा. ४९ तद० ॐभू० †शालिहोत्र इहा. ५० तद० ॐभू० ÷श्यैनिक इ. ५१ इतिसम्बुद्ध्यन्तनाममन्त्रैः क्रमेणावाह्य ॐएतन्तइति ॐभूर्भुवःस्वः गणेशादिश्यैनिकान्ता देवताः सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठापयेत् ।

---

* पालकाप्यं गजशास्त्रम् । गजलक्षणप्रस्तावे "तदुक्त पालकाप्ये" इति बहुषु स्थलेषु वीरमित्रोदये लक्षणप्रकाशे अभिधानात् । एतत्प्रवर्तक आचार्यो बृहस्पतिरिति तत्रैव स्पष्टम् ॥

† शालिहोत्रमश्वशास्त्रम् । अश्वलक्षणप्रकरणे "तदुक्त शालिहोत्रे" इति तत्रैवाभिधानात् । तत्प्रवर्तक आचार्यो नकुलः इत्यपि तत्रैव स्पष्टम् ॥

÷ श्यैनिकं मन्त्रशास्त्रम्, तत्प्रवर्तक आचार्यो गोभिल इत्यभियुक्ताः ॥

अथ सरस्वत्यावाहने विशेषः—भूमौ गोचर्ममात्रं विलिप्य पालाशदण्डोद्धृतां मृदमानीय सैकतं स्थण्डिलं निर्माय तस्योपरि तया मृदा पञ्चकोणं षट्कोणं वा सरस्वतीयन्त्रं निर्माय तस्मिन्सरस्वतीमावाहयेत् ॐभूर्भुवः स्वः भुवनमातः सर्ववाङ्मयरूपे सरस्वति इहागच्छ पूजार्थं त्वामावाहयामि इत्यावाह्य ॐएतन्ते० ॐभूर्भुवः स्वः अस्यां मृन्मयमूर्तौ सरस्वति सुप्रतिष्ठिता वरदा भव इति प्रतिष्ठापयेत् ।

अथ ध्यानम्—तत्रपूर्वं गणेशध्यानम्—धृतपाशाङ्कुशकल्पलतासुरदश्च बीजपूरयुतः । शशिशकलकलितमौलिस्त्रिलोचनोऽरुणवपुश्च गजवदनः ॥ भास्वरभूषणदीप्तो बृहदुदरः पद्मविष्टरोल्लसितः । ध्येयोऽनायतदोःपदसरसिरुहः सदा मनुजैः ॥१॥

अथ विष्णोर्ध्यानम्—

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभो—
द्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥ २ ॥

अथ लक्ष्मीध्यानम् ।

कान्त्या काञ्चनसन्निभा हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमाना श्रियम् ।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां
क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविन्दास्थिताम् ॥ ३ ॥

अथ देवीध्यानम् ।

अध्यारूढा मृगेन्द्रं सजलजलधरश्यामला हस्तपद्मैः
शूलं बाणं कृपाणं त्वरिजलजगदाचापपाशान्वहन्तीम् ।

चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरभितः खेटकं बिभ्रतीभिः
कन्याभिः सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि॥४॥

अथ सरस्वतीध्यानम्।

अङ्कोन्मुक्तशशाङ्ककोटिसदृशीमापीनतुङ्गस्तनीं
चन्द्रार्द्धाङ्कितशेखरां मधुमदामालोलनेत्रत्रयाम्।
बिभ्राणामनिशं वरं जपवटीं विद्यां कपालं करै-
राद्यां यौवनगर्वितां लिपितनुं वागीश्वरीमाश्रये॥ ५॥

इति ध्यात्वा ॐवरदाभयपाणय इति सर्वेषां ध्यानम्। ततश्चतुर्थ्यन्तैर्नाममन्त्रैः सर्वेषां पूजनम् ॐगणेशाय नमः ॐविष्णवे नमः ॐलक्ष्म्यै. ॐदेव्यै. ॐसरस्वत्यै. ॐब्रह्मणे. ॐव्यासाय. ॐगौतमाय. ॐजैमिनये. ॐमनवे. ॐपाणिनये. ॐकात्यायनाय. ॐपतञ्जलये. ॐयास्काय. ॐपिङ्गलाय. ॐगर्गाय. ॐकणादाय. ॐकपिलाय. ॐवाल्मीकये ॐवामनाय. ॐधन्वन्तरये. ॐकुशाश्वाय. ॐभरताय. ॐविश्वकर्म्मणे. ॐ बृहस्पतये नमः ॐनकुलाय नमः ॐगोभिलाय नमः ॐवेदेभ्यः. ॐपुराणेभ्यः. ॐन्यायाय. ॐमीमांसायै. ॐधर्मशास्त्राय. ॐशिक्षायै ॐकल्पाय. ॐव्याकरणाय. ॐनिरुक्ताय. ॐछन्दोभ्यो नमः ॐज्योतिषाय नमः ॐवैशेषिकाय नमः ॐवेदान्ताय. ॐसांख्याय. ॐकाव्याय. ॐअलङ्काराय. ॐवैद्यशास्त्राय. ॐधनुर्वेदाय. ॐगान्धर्ववेदाय. ॐशिल्पशास्त्राय. ॐपालकाप्याय. ॐशालिहोत्राय. ॐवैनिकाय नमः इति नाममन्त्रैः–

ॐगणानान्त्वा. ॐतद्विष्णोः. ॐश्रीश्चते. ॐसरस्वती योन्यां गर्भमन्तरश्विभ्याम्पत्नी सुकृतं बिभर्ति।

अपाँरसेन व्वरुणो न साम्नेन्द्रँश्रियै जनयन्नप्सु राजा-(य.मं.अ.१९।९४)इतिवैदिकमन्त्रैश्च सर्वेषाम् आसनपाद्यार्घ्यस्नानाचमनवस्त्रयज्ञोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यफलताम्बूलभूषणनीराजनान्तं पूजनं विधाय नाममन्त्रैः पुष्पाञ्जलिं समर्प्य ॐसर्ववाङ्मयरूपिण्यै श्रीसरस्वत्यै नम इति सरस्वत्यै पुष्पाञ्जलिं समर्प्य नमस्कारप्रदक्षिणाः कुर्यात् ॥ ततः सति संभवे-

(वेद्यां पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य आचार्यब्रह्मणोर्वरणं कृत्वा ब्रह्मोपवेशनादिपर्युक्षणान्तं कर्म समाप्य द्रव्यदेवताभिध्यानं कुर्यात्—अद्येहामुकराशेरस्य बालस्याक्षरारम्भविद्यारम्भहोमकर्मणाऽहं यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निम्, सोमम्, गणेशम्, विष्णुं, लक्ष्मीं, देवीं, सरस्वतीं, ब्रह्माणं, व्यासं,गौतमं जैमिनिं, मनुं,पाणिनिं, कात्यायनं,पतञ्जलिं, यास्कं, पिङ्गलं, गर्गं, कणादं, कपिलं, वाल्मीकिं, वामनं, धन्वन्तरिं, कृशाश्वं, भरतं, विश्वकर्माणं, बृहस्पतिं, नकुलं, गोभिलं, वेदान, पुराणानि, न्यायं, मीमांसां, धर्मशास्त्रं, शिक्षां, कल्पं, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषं, वैशेषिकं, वेदान्तं, सांख्यं, पातञ्जलं, काव्यम्, अलंकारं, वैद्यशास्त्रं, धनुर्वेदं, गान्धर्ववेदं, शिल्पशास्त्रं, पालकाप्यं, शालिहोत्रं, श्यैनिकम्, अग्निं, व्वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निम् व्वरुणं सवितारं व्विष्णुं व्विश्वान् ( देवान् ) मरुतः स्वर्कान्, प्रजापतिम्, अग्निँस्विष्टकृतं चाज्येनाहं यक्ष्ये ।

( अन्यस्य होमकर्तृत्वे इदमाज्यं आघाराज्यभागदेवताभ्यो गणेशादिदेवताभ्यो महाव्याहृतिदेवताभ्यः सर्वप्रायश्चित्तदेवताभ्यः प्रजापतये अग्नयेस्विष्टकृते च मया परित्यक्तं यथादैवतमस्तु न मम इति यजमानः पूर्वमेव त्यागं कुर्यात्) ।

ॐएतन्ते० ॐभूर्भुवःस्वः पुष्टिवर्द्धननामाग्ने सुप्रतिष्ठितो वरदो भवेति अग्निं प्रतिष्ठाप्य ॐतदेवाग्निरिति ध्यात्वा ॐपुष्टिवर्द्धननामाग्नये नमः इति मन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य जिह्वापूजनं रेखापूजनं च कृत्वा ॐप्रजापतये स्वाहा–इदं प्रजापतये न ममेति मनसा, ॐइन्द्राय स्वाहा–इदमिन्द्राय न मम। ॐअग्नये स्वाहा–इदमग्नये न मम। ॐसोमाय स्वाहा–इदस्सोमाय न मम–इत्याघारावाज्यभागौ च हुत्वा प्रधानहोमं कुर्यात्–ॐगणेशाय स्वाहा इत्यादि शैवेनिकान्तं चतुर्थ्यन्तस्वाहान्तमन्त्रैरेकैकामाज्याहुतिं हुत्वा ततो भूरादिनवाहुतिहोमं स्विष्टकृद्धोमं च कृत्वा संस्रवप्राशनादिपूर्णपात्रदानान्तं विधाय होमदक्षिणां संकल्पयेत्। अद्येहामुकराशेः पुत्रस्य अक्षरारम्भविद्यारम्भकर्म्मणोः एतद्धोमकर्म्मणः साद्गुण्यार्थम् इमां दक्षिणाम् आचार्याय दास्ये इति सं० दत्त्वा) धात्रीं वस्त्रभूषणादिभिः सन्तोष्य आचार्यं वस्त्रालंकारादिभिः सम्पूज्य लग्नदानं कुर्यात्–अद्येहामुकराशेः पुत्रस्याक्षरस्वीकारविद्यारम्भलग्नाच्चतुरस्थानस्थितानां ग्रहाणां शुभानां शुभफलाभिवृद्धये दुष्टानां दुष्टफलनिवारणार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये इति लग्नदानं विधाय ब्राह्मणान् सन्तोष्य अभ्यङ्गस्नानपूर्वकवस्त्रगन्धालंकारादिभिर्भूषितं बालकं गणेशादिदेवान् प्रणमय्य प्राङ्मुखो गुरुः पश्चिमाभिमुखं बालकं प्रणवपूर्वकं—

अक्षरस्वीकारं कारयेत्। तत्र प्रथमं गुरुनमस्कारः ॐअज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ ततः पाञ्चाशदण्डोद्धृतमधुधूलिसंपुटे शुभपीठे पञ्चकोणं षट्कोणं वा सारस्वतीयन्त्रं विलिख्य तत्र

सरस्वतीं प्रणमेत् ॐसरस्वति नमस्तुभ्यं वरदे कामरूपि-
णि । विश्ववन्द्ये विशालाक्षि विद्यान्देहि नमोऽस्तु ते ॥ इति
प्रणम्य गन्धाक्षतपुष्पपूगीफलादिभिः सम्पूजयेत् । ततो गुरुः
सुवर्णशलाकया रौप्यशलाकया वा अकारादिक्षकारान्तान्वर्णान्
लिखित्वा संपूज्य ग्राहयेत्-यथा ॐनमः सिद्धं अआ इई उऊ
ऋॠ लृॡ एऐ ओऔ अंअः कखगघङ चछजझञ टठडढण पफ-
बभम यरलवशषसह क्ष इति । पुनः प्राङ्मुखं कृत्वा अक्षराणि
त्रिवारं वाचयित्वा विद्यारम्भं कारयेत् वागर्थाविवेति । एवं
पिता पाठयित्वा गुरुं दक्षिणादिभिः सन्तोष्य प्रणम्य भूयसीं
संकल्पयेत्-अद्येहामुकराशेर्बालकस्य अक्षरस्वीकारविद्यारम्भ-
कर्मणोरङ्गत्वेन अक्षतपुञ्जेषु गणेशादिदेवानां पूजनस्य हो-
मकर्मणश्च साद्गुण्यार्थं साङ्गफलप्राप्त्यर्थं चेमां दक्षिणां
नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् मम ।
तथा यथोपपन्नेनान्नेन ब्राह्मणान् भोजयिष्ये इति संकल्प्य द-
क्षिणां दत्त्वा अग्निम् मातृः ग्रहान् गणेशादिदेवांश्च विसृज्य रक्षा-
बन्धनश्यायुपकरणाभिषेकतिलकमन्त्रपाठादि कारयित्वा ब्राह्म-
णान्भोजयित्वा स्वयं भुक्त्वा यथासुखं विहरेत् ॥

इत्यक्षरस्वीकारविद्यारम्भौ ॥

अथ "तृतीये पञ्चमे वाऽपि चौलकर्म प्रशस्यते । प्राग्वाऽसमे सप्तमे वा सहोपनयनेन वा"॥ इति आश्वलायनवचनमाश्रित्य, "सावित्रीग्रहणादूर्ध्वं तद्दिने वा चतुर्थके । तृतीये द्वादशे वाऽपि वत्सरे व्रतमुत्सृजेत्" ॥ इति (सं. भा.)वचनमाश्रित्य च—

## चूडोपनयनवेदारम्भसमावर्त्तनाख्यकर्मणां सहप्रयोगो लिख्यते ॥

तत्र चौलोपनयनादिनात्पूर्वं तृतीयषष्ठनवमदिनानि वर्जयित्वा चन्द्रतारानुकूले शुभदिने माणवकस्य पित्रादिः सर्वारम्भं कुर्यात् । तद्यथा–विवाहपूर्वाङ्गप्रयोगोक्तरीत्या (९३) माणवकं संस्नाप्य सुस्नातः सुप्रक्षालितपाणिपादो दीपं प्रज्वाल्याचम्य स्वदक्षिणतः परिहितधौतवाससं माणवकमुपवेश्य (स्वस्तिवाचनं) शान्तिपाठं कृत्वा अर्घं संस्थाप्य प्राणानायम्य देवेभ्यः पुष्पाञ्जलिं समर्प्य गणेशपूजनं कुर्यात् । तत्र सङ्कल्पः अद्येह अमुकशर्माऽहम् अमुकराशेरमुकशर्मणोऽस्य माणवकस्य करिष्यमाणचूडोपनयनवेदारम्भसमावर्त्तनाख्यकर्मणां सर्वसामग्रीसंपादनकर्मणि निर्विघ्नतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं यथालब्धोपचारैः श्रीमहागणपतेः पूजनं करिष्ये इति सङ्कल्प्य गणेशं सम्पूज्य आचारात्तिस्रो वस्त्रखण्डपोटलिकाः कृत्वा चुल्लीदर्वीकटाहेषु एकैकां बध्वा त्रिशूलचुल्लीस्थताम्रकटाहके शक्तश्रीणिकफोणिपुंस्त्रीद्वारा पिष्टातकस्व-

[illegible]

च कुर्यात् । केचित् कङ्कणबन्धनमपि वटुहस्ते तन्मातृहस्ते च अस्मिन्नेव दिने कुर्वन्ति । पूर्वाङ्गदिवसे त्वन्ये । क-

इणौषधयश्च दूर्वा-यवाङ्कुरोशीर-चूतपल्लव-हरिद्राद्वय-सर्षप-मयू-रपक्ष-सर्पत्वचः।

ततः तस्मिन्नेव दिने माणवकहस्तेन विंशतिहस्तदीर्घां दशहस्तविशालां शालां कुर्यात्। स्थलसङ्कोचे षोडशहस्तां द्वादशहस्तां दशहस्तां वा कुर्यात्।

तत्राग्नेयादिचतुर्षु कोणेषु अवटपूर्वं स्तम्भनिखननादयः शालाकर्मोक्तरीत्या (पा. गृ. कां. ३ कं. ५) कर्तव्याः। भूमिशोधनादिप्रकारः ग्रहस्थापनवेदिग्रहहोमवेदिनिर्माणप्रकारश्च प्रथमभागे (१८९) द्रष्टव्यः। शालामध्ये वटुहस्तेन हस्तमितं अङ्गुलोच्छ्रायमङ्गुलमात्रोच्छ्रायं वा स्थण्डिलचतुष्टयं दक्षिणोपक्रममुदक्संस्थं कुर्यात्।

ततः चूडाकर्माद्यहःपूर्वाह्णे माणवकस्य पित्रादिः माणवकं सर्वारम्भोक्तरीत्या संस्नाप्य कृताभ्यङ्गस्नानः शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः संस्कार्यमुपवेश्य दीपं प्रज्वलय्याचम्य* शान्तिपाठं (स्वस्तिवाचनं) कृत्वा गणेशादीन्

---

*अत्र माणवकस्य पित्रादिःउपनयनात् पूर्वदिने कृतमङ्गलस्नानःकृतधौतवस्त्रपरिधानश्च माणवकं कृतमङ्गलस्नानं स्वदक्षिणतःउपवेश्य आचम्य प्राणानायम्य अर्घं संस्थाप्य तिलयवकुशजलान्यादाय देशकालौ संकीर्त्य अमुकोऽहमस्य कुमारस्य गर्भाधानादिसंस्काराणां यथाविधि स्वस्वकाले अकृतानां कालातिपत्तिदोषपरिहारेण उपनयनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रतिसंस्कारं कृच्छ्रात्मकप्रायश्चित्तमित्येवमेतावत्कृच्छ्रप्रायश्चित्तम् अमुकप्रत्याम्नायेनाहं करिष्ये—इति संकल्प्य ब्राह्मणं सम्पूज्य देयद्रव्यं च संप्रोक्ष्य सम्पूज्य कुशजलसहितं द्रव्यं गृहीत्वा पूर्ववत् देशकालादि उल्लिख्य 'ममास्य कुमारस्य' इत्यादि 'श्रीपरमेश्वरप्रीतये'इत्यन्तं चोल्लिख्य एतावत्प्राजापत्यकृच्छ्रप्रत्याम्नायभूता इमा गा रुद्रदेवताकाः, त-

प्रणम्य पुष्पाञ्जलिं तेषु समर्प्य श्रीगणेशं पूजयेत् । तत्र सङ्कल्पः अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्यकुमारस्य श्वः करिष्यमाणचूडोपनयनवेदारम्भसमावर्तनाख्यकर्मसु अ-द्यकरिष्यमाणग्रहयागकर्मणि च निर्विघ्नतासिद्ध्यर्थं श्रीमहागणपतेः

---

निष्क्रयभूतानि इमानि सुवर्णखण्डानि रजतखण्डानि वा अमुकदैवतानि अमुकनामगोत्रेभ्यो ब्राह्मणेभ्यः सम्प्रददे इति "यज्ञसाधनभूताया." इतिमन्त्रमुच्चरन् दद्यात् । दानप्रतिष्ठार्थं किञ्चिद्रजत ताम्रखण्ड वा दद्यात् ॥

मम सकलपापक्षयपूर्वकमस्य कुमारस्योपनयनेऽधिकारसि-द्धिद्वारा श्रीपरमेश्वरप्रीतये कृच्छ्रत्रयप्रायश्चित्तं प्रत्याम्नायद्वारा-ऽहं करिष्ये इति सङ्कल्प्य ब्राह्मणं सम्पूज्य देयद्रव्यं च सम्प्रो-क्ष्य सम्पूज्य कुशादिकं गृहीत्वा पूर्ववत् सङ्कल्प्य कुलपुरोहिताय दद्यात् ।

एव माणवकोऽपि कामचारादिदोषपरिहारेण स्वस्योपनेयत्वा-धिकारसिद्धये कृच्छ्रत्रयप्रायश्चित्त प्रत्याम्नायद्वारा कुर्यात् ।

माणवकस्य पिता सति सम्भवे ऽयुतगायत्रीजप च उपनयना-धिकारसिद्ध्ये स्वय कुर्यात् ।

स्वस्याशक्तौ ब्राह्मणेन कारयेत् ।

संस्काराणां कालातिपत्तिदोषपरिहारार्थम् अनादिष्टहोमं च ग्रहहोमात् पूर्वमेव चतुर्थीकर्मप्रयोगटिप्पण्युक्तरीत्या कुर्यात्(१७३) ।

गौणकालसद्भावे एव प्रायश्चित्त कृत्वा लुप्तकर्मणामनुष्ठानम्, तदभावे तु प्रायश्चित्तानुष्ठानमात्रमेव । तदाह संस्कारप्रकाशे भृगुः, गर्भाद्यसंस्कृतस्यापि कर्तव्य चोपनायनम् । प्रायश्चित्ते ॥ पूर्वेषां नैपनायनिकस्य तु ॥ श्रौतस्मार्ताधिकारो स्यान्नौपनायनिक विना । इति ॥ संस्काराणां गौणकालश्च स्वकालादुत्तर उत्तरसंस्कारात् पूर्वकालः । एव चोपनयनकाले चौलकर्णवेधयोरेवानुष्ठानमाव-श्यकम्, अन्येषां तावत्पर्यन्तमकृतानां तु प्रायश्चित्तानुष्ठानमा-त्रमिति बोध्यम् ॥

पूजनं करिष्ये इति सङ्कल्प्य विधिवत्संपूज्य प्रधानसङ्कल्पं कुर्य्यात् ।

तद्यथा. अद्येह अमुकशर्म्माऽहम् अमुकशर्मणोऽस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणबलायुर्वर्चोभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यै श्वः उपनयनसंस्कारात्प्राक् चौलसंस्कारं करिष्ये. तथा अस्य द्विजत्वसिद्ध्या वेदाध्ययनाद्यधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वेदारम्भात्प्रागुपनयनसंस्कारं करिष्ये. तथा अस्य कुमारस्य श्रौतस्मार्त्तकर्मानुष्ठानाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीतये वेदारम्भसंस्कारं करिष्ये । तथाऽस्य गृहस्थाश्रमार्हतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्त्तनसंस्कारं करिष्ये इति सङ्कल्प्य. अत्रैव ग्रहयागप्रयोगोक्तरीत्या ग्रहयागसंकल्पं च कृत्वा करिष्यमाणचूडोपनयवेदारम्भसमावर्त्तनग्रहयागकर्म्मणां पूर्वाङ्गत्वेन तन्त्रेण मातृपूजाभ्युदयिकश्राद्धपुण्याहवाचनानि करिष्ये इति सङ्कल्प्य तानि क्रमेण कुर्यात् ।

तत्र मातृपूजने अर्घं संस्थाप्य प्रतिज्ञासङ्कल्पः अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्य कुमारस्य करिष्यमाणचूडोपनयनवेदारम्भसमावर्त्तनग्रहयागकर्मणां पूर्वाङ्गत्वेन गणपतिसहितगौर्यादिषोडशमातॄणां पूजनं करिष्ये इति सङ्कल्प्य यथाविधि तद्विधाय-

नान्दीश्राद्धं कुर्यात् । तत्र कर्मपात्रं संस्थाप्य प्रतिज्ञासंकल्पः—अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्य कुमारस्य करिष्यमाणचूडोपनयनवेदारम्भसमावर्त्तनाख्यकर्मणां ग्रहयागकर्मणश्च पूर्वाङ्गत्वेन अमुकगोत्राणाम् अस्मन्मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानाम् अमुकगोत्राणाम् अस्मत्पितृपितामहप्रपितामहाना-

ममुकामुकदेवानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानाम् अमुकगोत्राणाम् अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकदेवानां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां नान्दीमुखानां सत्यवसुसंज्ञकविश्वेदेवपूर्वकं सङ्कल्पविधिना आमान्नेन आभ्युदयिकश्राद्धं करिष्ये इति सङ्कल्प्य, यथाविधि तद्विधाय

ब्राह्मणद्वारा पुण्याहं वाचयेत्. तत्र सङ्कल्पः अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्य कुमारस्य करिष्यमाणचूडोपनयनवेदारम्भसमावर्त्तनाख्यकर्मणां ग्रहयागकर्मणश्च पूर्वाङ्गत्वेन ब्राह्मणद्वारा पुण्याहं वाचयिष्ये, तत्र ब्राह्मणानां पूजनं वरणं च करिष्ये इति सङ्कल्प्य चतुरश्चतुरो द्विजान्संपूज्य तेषां वरणं च विधाय, तांस्तथा वाचयित्वा प्रथममागोक्तरीत्या (१८९)

ग्रहयागं कुर्यात्। तत्र ग्रहपूजनान्ते रक्षासूत्रम् "पादाङ्गुष्ठं समारुह्य केशानां च नरर्षभ। रक्षासूत्रं प्रकर्तव्यं सर्वत्र शुभकर्मणि॥ इति स्कन्दपुराणीयवचनसिद्धं रक्षाविधानोक्तप्रकारेणाभिमन्त्र्य कलशोपरि स्थापयेत्। कर्मान्ते दक्षिणहस्ते बन्धयेत्।

ततस्तस्मिन्नेव दिने समाचारात् रात्रौ केशाधिवासनं कुर्यात्। तत्रादौ गणेशपूजनं. तत्र सङ्कल्पः अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्य कुमारस्य करिष्यमाणकेशाधिवासनकर्मणि निर्विघ्नतासिद्ध्यर्थं श्रीमहागणपतेः पूजनं करिष्ये इति सङ्कल्प्य विधिवत्संपूज्य, केशानधिवासयेत्। तत्र सङ्कल्पः अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्य कुमारस्य श्वःकरिष्यमाणचूडाकर्मसिद्ध्यै अद्य रात्रौ केशानामधिवासनं करिष्ये इति सङ्कल्प्य, नव्यपीतवस्त्रस्य द्वादश खण्डानि विधाय तेषु गन्धाक्षतहरितदूर्वासिद्धार्थहरिद्रा

दि प्रक्षिप्य त्रिगुणितेन सूत्रेण द्वादश पोटलिका बध्वा गणाधिपं नमस्कृत्येत्यादिमन्त्रैस्ता अभिमन्त्र्य एकया पोटलिकया पूर्वं दृढतरं कुमारस्य शिखां बध्वा तत एकैकया एकैकां जुटिकामित्येवं माणवकस्य शिरोदक्षिणभागे, पश्चाद्भागे, वामभागे च क्रमेण तिस्रस्तिस्रो जुटिकाः कृत्वा तिसृभिस्तिसृभिर्जुटिकाभिरेकैकं गोदानं संपाद्य आचारादेकां क्षुरं एकां कर्तरीं च बध्वा एतत्तइति प्रतिष्ठाप्य. शिरस्यान्केशान्पीतोष्णीषादिना सुदृढं बध्वा सयत्नं स्थापयेत् ।

ततस्ताम्रपात्रे आनडुहमद्रवमपर्युषितं गोमयं, गव्यं नवनीतं घृतं दधि वा, त्रिगुणसितसूत्रवेष्टितं सुप्रतिष्ठितं ताम्रपरिष्कृतं तिग्मधारं लोहक्षुरं,त्र्येणी अखण्डा शलली,कुशपत्रत्रयनिर्मितानि त्रिगुणासितसूत्रवेष्टितानि नव कुशतरुणत्रिकाणि च स्थापयेत् । तत आचाराद्दक्षिणादानं, तत्र सङ्कल्पः अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्य कुमारस्य चूडाकर्मसिद्ध्यै कृतस्यास्य केशाधिवासनकर्मणः साङ्गतासिद्ध्यै इमां दक्षिणां ब्राह्मणेभ्यो विभज्य दातुमुत्सृजामि इति सङ्कल्प्य तेभ्यो दद्यात्।

अथ चौलप्रयोगः ।

ततः कुमारस्य पिता प्रातरुत्थाय स्नात्वा नित्यकर्म समाप्य शङ्खतूर्यमङ्गल्यशब्दपुरःसरं पश्चिमद्वारेण शालां कुमारमादाय प्रविश्य. तत्र स्थण्डिले पञ्चभूसंस्कारान्कृत्वा तत्र सभ्यनामकमग्निं संस्थाप्य. गणेशं मातॄः कलशे वेद्यां चावाहितदेवता गन्धाद्युपचारैः सम्पूज्य समाचारात् कर्मोपदेशादिसहायतार्थमाचार्यस्य वरणं कुर्यात् । तत्र संकल्पः—अद्येहामुकोऽहमस्य माणवकस्य करिष्यमाणचौलोपनयनवेदारम्भसमावर्तनकर्मसु आचार्यकर्मकरणायाचार्यस्य पूजनपूर्वकं वरणं

करिष्ये इति संकल्प्य एभिर्गन्धाक्षतपुष्पपूगीफलयज्ञोपवीतद्रव्यवासोऽलंकरणैः पुत्रस्य करिष्यमाणचूडोपनयनवेदारम्भसमावर्तनकर्मसु आचार्यकर्मकरणाय त्वामहं वृणे इति वृत्वा 'वृतोऽस्मि' इति तेनोक्ते आचार्यास्त्विति प्रार्थयेत । अद्य अमुकोऽहं कुमारस्य करिष्यमाणचूडाकर्मणः पूर्वाङ्गत्वेन त्रीन्ब्राह्मणान्भोजयिष्ये, भोजनपर्याप्तं मिष्टान्नं तन्निष्क्रयद्रव्यं वा दास्ये इति संकल्प्य तेभ्यः हृद्य भोजन तन्निष्क्रयद्रव्य वा दत्त्वा माणवकस्य पित्रादिः स्वस्यैव होमादिमर्तृकर्तृत्वे केवलं ब्रह्मणः वरणं विधाय तस्मै दक्षिणत आसन दत्त्वा तत्र तमग्नेः पूर्वमार्गेणोपवेशयेत् । ततस्तस्यादूर कुमारस्य माता सुखोष्णजलेन कुमारं संस्नाप्य तस्मै अहत वाससी परिधाप्य समङ्के आदाय अग्नेः पश्चिमतः कर्मकर्तुर्वामभागे उपविशति ।

ततः कर्त्ता प्रणीताप्रणयनादिपूर्णपात्रासादनान्त कर्म कृत्वा ततस्तास्य कुण्डिकाद्वय, कोष्णं शीतल च जलम्, अधिवासितवस्तूनि(आनडुहगोमय-गव्यनवनीतान्यतमपिण्ड-क्षुर-शमलीनवसंख्याककुशतरुण(त्रिकाणि),अशुचिउष्णखण्डं कांस्यपात्रं,पटु-नापितश्च इमानि उपकल्प्य पवित्रकरणादिपर्युक्षणान्तं कर्म कृत्वा

द्रव्यदेवताभिध्यान कुर्यात् । अद्येत्यादिसं० अमुकोऽहम् अमुकराशेः पुत्रस्य चूडाङ्गहोमकर्मणा यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निं सोमम, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुण सवितारं विष्णु विश्वान् (देवान्) मरुतः स्वर्कान्, वरुणं, प्रजापतिम्, अग्निं स्विष्टकृतंचाज्येनाहं यक्ष्ये ।

(अन्यस्य होमकर्तृत्वे यजमानः पूर्वमेव त्यागम् "इदमाज्यं प्रजापत्यादिदेवताभ्यो मया परित्यक्तं यथादैवतमस्तु न मम" इति कुर्यात्) ।

ॐएतन्तइति ॐभूर्भुवःस्वः सभ्यनामाग्ने सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठाप्य तदेवाग्निरिति चत्वारिंशद्भाइति च ध्यानावाहनासनपाद्यादिनीराजनान्तं सम्पूज्य रेखापूजनं जिह्वापूजनं च कृत्वा दक्षिणं जान्वाच्य ब्रह्मणाऽन्वारब्धो जुहुयात्—ॐप्रजापतयेस्वाहा-इदं प्रजापतये न मम इति मनसा, ॐइन्द्राय स्वाहा-इदमिन्द्राय न मम । ॐअग्नये स्वाहा-इदमग्नये न मम । ॐसोमाय स्वाहा-इदꣳ सोमाय न मम । इत्याघारावाज्यभागौ च हुत्वा भूरादिहोमं कुर्यात् ।

(व्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः चूडाङ्गहोमे विनियोगः) । ॐभूः स्वाहा-इदमग्नये न मम । ॐभुवः स्वाहा-इदं वायवे न मम । ॐस्वः स्वाहा-इदꣳसूर्य्याय न मम । (त्वन्नो अग्नइति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते चूडाहोमे विनियोगः) ।

ॐत्वन्नो ऽअग्ने वरुणस्य विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्-स्वाहा-इदमग्नीवरुणाभ्यां न मम । (सत्वन्नइति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते चूडाङ्गहोमे विनियोगः) ।

ॐस त्वन्नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ । अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न ऽएधि-स्वाहा-इदमग्नीवरुणाभ्यां न मम । (अयाश्चाग्नइति वामदेवऋषिस्त्रिष्टुप्छन्दो ऽग्निर्देवता चूडाहोमे विनियोगः) ।

ॐअयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया

ऽअसि। अया नो यज्ञं व्वहास्यया नो धेहि भेषजᳫं स्वाहा–इदमग्नये न मम। (येतेशतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो व्वरुणः सविता व्विष्णुर्व्विश्वे (देवा) मरुतः स्वर्काश्च देवताः चूडाहोमे विनियोगः)।

ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः। तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा–इदं व्वरुणाय सवित्रे व्विष्णवे व्विश्वेभ्यो (देवेभ्यो) मरुद्भ्यः स्वर्केभ्यश्च न मम। (उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः व्वरुणो देवता चूडाहोमे विनियोगः)।

ॐ उदुत्तमं व्वरुण पाशमस्मदवाधमं व्वि मध्यमᳫं श्रथाय। अथा व्वयमादित्य व्व्रते तवानागसो ऽअदितये स्याम–स्वाहा–इदं व्वरुणाय न मम।

ॐ प्रजापतये स्वाहा–इदं प्रजापतये न मम। ॐ अग्नये-स्विष्टकृते स्वाहा–इदमग्नये स्विष्टकृते न मम। इत्यमाज्याहुतिहोमं संस्रवप्राशनं मार्जन–पवित्रप्रतिपत्ति–प्रणीताविमोकाँश्च विधाय ब्रह्मणे पूर्णपात्रं दद्यात्। तत्र संकल्पः अद्येह अमुकशर्मा-ऽहम् अमुकशर्मणोऽस्य कुमारस्य चूडाकर्माङ्गहोमकर्मणः साङ्गतासिद्ध्यै इदं पूर्णपात्रं सदक्षिणं ब्रह्मणे तुभ्यं सम्पददे ॐ तत्सत् न मम इति तस्मै दद्यात्। ततो दैवज्ञशोधिते शुभे लग्ने लग्नदानं कुर्यात्। तत्र सङ्कल्पः–अद्येहामुकोऽहमस्य कुमारस्य चूडाकर्मलग्नाद् दुष्टानाममुकग्रहाणां दुष्टदोषोपशान्त्यै इदं सुवर्णमग्निदैवतं तत्प्रत्याम्नायीभूतमन्यदैवतमन्यद् द्रव्यं वा ब्राह्मणाय दास्ये-ॐ तत्सत् मम इति सङ्कल्पं विधाय ब्राह्मणाय दद्यात्।

ततः उपकल्पितपात्रे शीतास्वप्सु उष्णा अप आसिञ्चति

वक्ष्यमाणमन्त्रेण-(उष्णेनेति परमेष्ठी ऋषिः प्रतिष्ठा छन्दः लिङ्गोक्ता देवता उष्णोदकासेके विनियोगः) ।

*ॐउष्णेन वाय उदकेनेह्यदिते केशान्वप-इति । तत्र तूष्णीं नवनीतपिण्डं, घृतपिण्डं, दधिपिण्डं वा प्रक्षिपेत् । तज्जलमादाय उदङ्मुखः पिता स्ववामभागे स्थितायाः मातुर्दक्षिणभागे स्थितस्य प्राङ्मुखस्य कुमारस्य पूर्वे मूलभागे दक्षिणगोदानाधःस्थितामेकां जुटिकामार्द्रीकरोति वक्ष्यमाणमन्त्रेण-(सवित्रेति प्रजापतिऋषिः गायत्री छन्दः आपो देवता उन्दने, विनियोगः)

+ॐसवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूम् । दीर्घायुत्वाय वर्चसे-इति । ततस्त्र्येण्या (त्रिषु स्थानेषु एतया कर्बुरया) शलल्या तूष्णीं केशान्मध्ये विनीय (विरलान् कृत्वा) ऊर्ध्वमूलानि शिरोऽग्राणि त्रीणि कुशतरुणान्यन्तर्दधाति-वक्ष्यमाणमन्त्रेण-(ओषधे इत्यस्य प्रजापतिऋषिर्यजुश्छन्द ओषधिर्देवता कुशतरुणान्तर्धाने विनियोगः ) ।

÷ॐओषधे त्रायस्व (स्वधिते मैनꣳ हिꣳसीः) इति । ततः सकुशतरुणान्केशान्वामकरे गृहीत्वा दक्षिणकरेण क्षुरं गृह्णाति वक्ष्यमाणमन्त्रेण-( शिवोनामेत्यस्य प्रजापतिऋषिः

---

* हे वायो हे अदिते अखण्डित एहि आगच्छ, आगत्य चोष्णेन जलेन सहितेनेतरोदकेन केशार्द्रीकरणद्वारा केशान्वप छिन्धि ॥

+हे कुमार सवित्रा सूर्येण प्रसूता उत्पादिता दैव्या दिवि भवा आपः ते तव तनूं चूडाख्यमङ्गम् उन्दन्तु क्लेदयन्तु तव दीर्घायुत्वाय चिरकालं निर्दुष्टजीवनाय, वर्चसे प्रतापाय पेदवर्याय वा ॥

÷य. सं. अ ४ कं. १ ख. ४ ओषधे त्रायस्वेत्येतावानेव अन्तर्धाने मन्त्र इति संस्कारनृसिंहादयः । युक्तं चैतत्, लिङ्गानुरूपत्वात् । हे ओषधे ओषधिदेवते त्वम इमं कुमारं त्रायस्व क्षुराद्रक्ष ॥ (हे स्वधिते क्षुर एनं कुमारं मा हिंसीः) ॥

यजुश्छन्दः क्षुरो देवता लौहक्षुरग्रहणे विनियोगः)

*ॐशिवो नामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिंसीः-इति। ततस्ताम्रपरिष्कृतमायसं क्षुरमादाय कुशतरुणान्तर्हितेषु केशेषु निदधाति वक्ष्यमाणमन्त्रेण-(निवर्तयामीत्यस्य प्रजापतिऋषिः यजुश्छन्दः क्षुरो देवता केशेषु क्षुरनिधाने विनियोगः)।

+ॐनिवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय-इति। ततः सकेशानि कुशतरुणानि÷क्षुरेण प्रच्छिनत्ति वक्ष्यमाणमन्त्रेण-(येनावपदित्यस्य आलम्बायन ऋषिः पङ्क्तिश्छन्दः सविता देवता केशच्छेदने विनियोगः)

**ॐयेनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुण·

---

*हे क्षुर यस्त्वं शिवो नामासि मङ्गलनामा भवसि, ते तव स्वधितिः शतकोटिः पिता, अतस्ते तुभ्यं नमोऽस्तु । जन्यजनकयोरुभयोरप्युत्तमत्वं नमस्कारे प्रयोजकम् । अत एव नतं मा मां मा हिंसीः मा विनाशय ॥

+हे क्षुर आयुषे, अन्नाद्यायान्नादनाय,प्रजननाय गर्भोत्पत्त्यै,रायस्पोषाय धनस्य पुष्ट्यै, सुप्रजास्त्वाय शोभनापत्यजननाय, सुवीर्यायेन्द्रियपाटवाय च निवर्तयामि मुण्डनार्थं केशांस्त्वां संसृजामि । सौत्रः प्रपूर्वो वपतिः संसर्गे वर्तते उत्तरत्र छेदनोपदेशात् ॥

÷क्षुरप्रतिनिधिना कर्तरेण सौकर्याय छेदनमिति सम्प्रदायः ।

**हे ब्रह्माणो ब्राह्मणाः येन कारणेन क्षुरेण वा विद्वान् सर्वज्ञः सविता सूर्यः राज्ञः सोमस्य वरुणस्य च शिरोऽवपत राजसूयदीक्षायै अमुण्डयत् तेन कारणेन क्षुरेण वा ऽस्य कुमारस्येदं शिरो यूयं वपत मुण्डयत । यथाऽयं कुमार आयुष्मान् जरदष्टिर्वृद्धश्च गुणतोऽसत् भवतु [illegible] । आयुष्यमिति बहुसमतपाठ आयुषे हितमिति शिरोविशेषणम् ॥

स्य विद्वान् । तेन ब्रह्माणो व्यपतेदमस्यायुष्यं जरदष्टिर्यथाऽसत्–इति। ततश्छिन्नानि सकेशानि कुशतरुणानि पिता प्रागग्राणि शिशुमातृहस्ते निदधाति। सा च प्रागग्राण्यानडुहे वामभागे स्थापितस्य कांस्यपात्रस्योपरि स्थापिते गोमयपिण्डे निदधाति। प्रागग्रत्वनियमोऽयं प्रथमजुटिकायामेव। छिन्नकेशस्पर्शनिमित्तो जलस्पर्शः। एवमेव इतरजुटिकाद्वयस्यापि प्रत्येकं पूर्वोक्तरीत्या आर्द्रीकरणं, शलल्या पृथक्करणं, कुशतरुणत्रिकान्तर्धानं, क्षुरग्रहणं, जुटिकायां क्षुरसंलग्नीकरणं, सकेशकुशतरुणत्रिकप्रच्छेदनम्, आनडुहगोमयपिण्डनिधानं च मन्त्ररहितं कुर्यात्। छिन्नकेशस्पर्शनिमित्तो जलस्पर्शः सर्वत्र बोध्यः।

अथ पश्चिमगोदाने एकस्या दक्षिणभागस्थिताया जुटिकायाः–'सवित्रा प्रसूता' इतिमन्त्रेण उन्दनं, तूष्णीं विनयनम्, 'ओषधे त्रायस्व' इति मन्त्रेण कुशतरुणान्तर्धानं च कुर्यात्। क्षुरस्तु मन्त्रेण गृहीतत्वान्न पुनर्मन्त्रसंस्कारमर्हति। द्रव्याभेदात्। "एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनम्" इति कात्यायनपरिभाषासूत्रात्। क्षुरनिधानं च पूर्वोक्त–निवर्तयामीतिमन्त्रेण कुर्यात्।

छेदने मन्त्रविशेषः—(त्र्यायुषमित्यस्य नारायणऋषिरुष्णिक्छन्दो ऽग्निर्देवता केशच्छेदने विनियोगः)।

ॐत्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषन्तन्नो ऽअस्तु त्र्यायुषम्॥ इति छित्वा पूर्ववद्गोमयपिण्डे निदध्यात्। जलस्पर्शः। एवम् इतरयोः पश्चिमगोदानस्थजुटिकयोः प्रत्येकम् उन्दनं, विनयनं, कुशतरुणान्तर्धानम्, क्षुरादानं, क्षुरनिधानं, छेदनं, गोमयपिण्डे प्रासनं च तूष्णीं कुर्यात्। जलस्पर्शः।

अथोत्तरगोदाने ऽपि एकस्या ऊर्ध्वस्थिताया जुटिकायाः– 'सविता प्रसूता' इति उन्दनं, शलल्या तूष्णीं विनयनम्, 'ओषधे त्रायस्व'–इति कुशतरुणान्तर्धानं, क्षुरादानं तूष्णीं,' 'निवर्तयामि' इति क्षुरनिधानं च पूर्ववत्कुर्यात् ।

छेदने तु मन्त्रविशेषः–(येनेति वामदेव ऋषिर्यजुश्छन्दः क्षुरो देवता केशच्छेदने विनियोगः) ।

*ॐ येन भूरिश्चरा दिवञ्ज्योक्च पश्चाद्धि सूर्य्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये–इति मन्त्रेण छित्त्वा गोमयप्रासनम्पूर्ववत् । जलस्पर्शः ।

एवम् इतरयोरुत्तरगोदानस्थजुटिकयोः प्रत्येकम् उन्दनं, विनयनं, कुशतरुणान्तर्धानं, क्षुरादानं, क्षुरनिधानं, छेदनं, गोमयपिण्डप्रासनं च तूष्णीं कुर्यात् ॥ जलस्पर्शः ।

अथ शिरसः समन्तात्प्रदक्षिणं क्षुरभ्रमणं सकृन्मन्त्रेण द्विस्तूष्णीम् । तत्र मन्त्रः–(यत्क्षुरेणेति वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता क्षुरपरिहरणे विनियोगः)

+ॐ यत्क्षुरेण मज्जयता सुपेशसा वप्त्रा वा वपति

---

*हे कुमार येन ब्रह्मणा मन्त्रेण तपसा वा भूरिश्चराः बहुचराः सूर्यरश्मयः (छुडागम आर्षः) दिवं द्युलोकं पश्चादनन्तरं सूर्यं विश्वं च ज्योक् आकल्पं व्याप्नुवन्तीति शेषः तेन ब्रह्मणा ते तव जीवातवे घर्मोदर्ये जीवातुर्जीवनौषधमित्यभिधानात्, जीवनाय प्राणनाय, सुश्लोक्याय शोभनयशसे श्लोको यशसि पद्ये चेत्यभिधानात्, स्वस्तये मङ्गलाय च वपामि–शिर इति शेषः ॥

+हे क्षुर यत् यस्मात्त्वया वपनसाधनेन क्षुरेण त्वया नापितः केशान्वपति–कीदृशेन–मज्जयता एनं कुमारं संस्कुर्वता, सुपेशसा शोभयता धाराग्रः चार्थे, अतोऽस्य केशानेव छिन्धि मुण्डय । शिरः

केशाँश्छिन्धि, शिरो माऽस्यायुः प्रमोषीः–इति मन्त्रेण सकृत्सूपयित्वा द्विस्तूष्णीं भ्रमयेत् । अथोष्णोदकशेषेण जलेन सर्वं शिर आर्द्रीकृत्य सुखवपनार्थं नापिताय क्षुरं प्रयच्छति वक्ष्यमाणमन्त्रेण–(अक्षण्वन्नित्यस्य वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता क्षुरप्रदाने विनियोगः) ।

*ॐअक्षण्वन् परिवप–इति । परिवपामीति नापितो वदेत् । अथ नापितः प्राङ्मुखस्य कुमारस्य शिखादि, शिखान्तं प्रापसं स्थम् उदकसंस्थं वा यथाकुलाचारं शिखावर्ज्जं केशानां वपनं कृत्वा ततः सकेशं गोमयपिण्डं पल्वले गोष्ठे उदकान्ते वा निधापयेत् । मातृपीठोत्थापनसमये एव पल्वलादिषु निधापनमिति समाचारः । मातृपीठाद्युत्थापनं च चूडादिवसाच्चतुर्थदिने, तस्मिन्नेव च दिने जलपूजनमिति शिष्टाः । ततः पर्य्युप्तशिरसं सुस्नातं पुष्पमालादिभिश्चालङ्कृतं माणवकम् विप्रादिसमीपमानीय अग्नेः पश्चाद् वस्थापयेत् । अथ पिता स्वाचार्य्याय वरं ददाति कुमारस्याचार्याभावात् । अद्येहेत्यादि सं० अमुकराशेरमुकनाम्नः पुत्रस्य चूडाकर्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं च इदं सुवर्णम् अग्निदैवतम् आचार्य्याय तुभ्यमहं सम्प्रददे ॐतत्सन्नममेति सङ्कल्प्य दद्यात् । आचार्य्यश्च मन्त्राशिषं दद्यात् ॥ अद्येहामुकोऽहममस्य कुमारस्य चूडाकर्मणः साङ्गतासिद्ध्यर्थं दश, यथाशक्ति वा ब्राह्मणान् भोजयिष्ये इति संकल्प्य सभ्याग्निं संपूज्य विसृजेत् ।

---

आयुश्च मा प्रमोषीः माहिंसीः । मुष स्तेये प्रशब्दयोगाद्धिंसार्थः । केशान्ते [illegible] मुखमिति मन्त्रान्ते वाच्यं, वपेतिपाठे नापित इत्यर्थः । वप्त्वेति पाठे आङः प्रश्लेषेण मुण्डयित्वा आवपति गोमयपिण्डे प्रक्षिपतीत्यर्थः ॥

*हे नापित त्वम् अक्षण्वन् क्षतमकुर्वन् परिवप । यद्वा हेअक्ष-

इति चूडाकर्मप्रयोगः ॥

(१०) अथोपनयनप्रयोगः ।

तत्रोपनेता पूर्वाह्लादिनेऽकृतप्रायश्चित्तश्चेत् स्वस्योपनेतृत्वाधिकारसिद्धये प्रथमं प्रायश्चित्तं कुर्यात् । तत्र सङ्कल्पः— अद्येहेत्यादि सं० अमुकोऽहं स्वस्योपनेतृत्वयोग्यतायै कृच्छ्रत्रयप्रत्याम्नाय—गोत्रय—निष्क्रयीभूतानि सुवर्णखण्डानि रजतखण्डानि वा ब्राह्मणाय दास्ये । तथोपनेयोऽपि प्रायश्चित्तसङ्कल्पं कुर्यात् अद्येहेत्यादि सं० अमुकोऽहं स्वस्योपनेयत्वयोग्यतायै कृच्छ्रत्रयप्रत्याम्नाय—गोत्रय—निष्क्रयीभूतानि सुवर्णखण्डानि रजतखण्डानि वा ब्राह्मणाय दास्ये ॐतत्सन्न ममेति दद्यात् ।

अथाचार्यः पिता (क्षत्रियवैश्ययोराचार्यत्वेन वृतोऽन्यो ब्राह्मणः पुरोहितादिः) उपनयनवेदीसमीपमागत्य—कटिसूत्रम्, नवीनं कौपीनं* वासः, प्रावरणवासः, मौञ्ज्यादिरूपा मेखला, संस्कृतं यज्ञोपवीतम्, अजिनं चतुरङ्गुलविस्तीर्णं त्र्यङ्गुलविस्तीर्णं वा—सति सम्भवे अष्टचत्वारिंशदङ्गुलदीर्घम्—अखण्डं त्रिखण्डं वा—त्रिखण्डपक्षे चतुर्विंशत्यङ्गुल एकः खण्डः अष्टाङ्गुलो द्वितीयः षोडशाङ्गुलस्तृतीयः त्रिभिः स्यूतैरष्टचत्वारिंशदङ्गुलं परिमण्डलं

---

यथन् हे पटुनेत्र । मरिचदधिसकच्यरणामनाडित्यतद् । मक्षपयन्तः कर्णयन्त इत्यादौ दर्शनात् ॥

* "वाससी ते स्वगुरवे मेधाजननकर्माणि । दद्यात्तावत्प्रभृत्येव कौपीनेन प्रवर्तयेत्" इत्याश्वलायनवचनात् कौपीनमेवाधोवस्त्रं ब्रह्मचारिणः । तावत् प्रभृति कौपीनेनैव प्रवर्तयेदित्यन्वयः । "कौपीनं कटिसूत्रं च यतेः स्याद्ब्रह्मचारिणः । नाद्यं नैव गृहस्थस्य श्रौते स्मार्ते च कर्मणि" इति स्मृत्यर्थसारवचनाच्च ॥

सम्पद्यते, पालाशादिरूपो दण्डः, भिक्षापात्रं च इमानि स्वनिकटे आनाय्य वेद्यां पञ्चभूसंस्कारपूर्व्वकं समुद्भवनामानमग्निं संस्थाप्य अद्येत्यादि सं० अमुकराशिरमुकशर्म्माऽहम् अमुकराशेरस्य पुत्रस्य उपनयनाख्यकर्म्मणः पूर्व्वाङ्गत्वेन त्रीन्ब्राह्मणान्भोजयिष्ये इति, भोजनपर्य्याप्तं मिष्टं तन्निष्क्रयद्रव्यं वा दास्ये इति वा संकल्प्य ब्राह्मणाभोजयित्वा मिष्टं निष्क्रयं वा दत्त्वा कुमारं च पयंशादि भोजयेत् । अथ मुण्डितशिरसं कुमारं मङ्गलद्रव्यैः स्नापयित्वा यथासंभवं सौवर्णाद्यलंकारैः पुष्पमालादिभिश्चालङ्कृत्य वेद-गीत-वाद्य-घोषपुरस्सरं प्रदक्षिणमग्निं परिक्रममाणम् आचार्य्यसमीपमानयन्त्याचार्य्यपुरुषाः ।

अथाचार्य्यो माणवकं स्वस्य दक्षिणतोऽग्नेः पश्चात् उदङ्मुखम् उपवेश्य "ब्रह्मचर्य्यमागाम्" इति ब्रूहि इति प्रेषयति । ततः "ब्रह्मचर्य्यमागाम्" इति माणवको वदेत् । पुनराचार्य्यः "ब्रह्मचार्य्यसानि" इति ब्रूहि इति प्रेषयति । माणवकोऽपि "ब्रह्मचार्य्यसानि" इति प्रतिब्रूयात् । अथाचार्य्यो माणवकं कटिसूत्रं तूर्ष्णीं धारयित्वा शाणादिरूपं कार्पासं वा क्षौमं वासः परिधापयति वक्ष्यमाणमन्त्रेण–( येनेन्द्रायेत्याङ्गिरा ऋषिर्बृहती छन्दो बृहस्पतिर्देवता वासःपरिधापने विनियोगः । )

*ॐ येनेन्द्राय बृहस्पतिर्व्वासः पर्य्यदधादमृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे-

---

*हे कुमार येन विधिना इन्द्राय बृहस्पतिर्देवगुरुर्वासः पर्यदधात् परिधापितवान् तेन विधिना त्वा त्वाम् अमृतमहतं वासः परिदधामि परिधापयामि । उभयत्रान्तर्भूतो णिच् ज्ञेयः ॥ किमर्थमत आह आयुषइत्यादि । दीर्घायुत्वाय चिरजीवनाय, बलाय देहशक्तये, वर्चसे इन्द्रियशक्तये तेजस्वतायै वा ॥

इति। आचार्यस्यैव मन्त्रपाठः। तेन त्वा परिदधामीति मन्त्रलिङ्गात्। अथ द्विराचमनं, "वासो विपरिधायच" इति वचनात्। तच्च द्विवारं तालुस्पर्शमात्रजलप्राशनमात्रम्। न तु निराटतहृदयस्पर्शमात्रजलप्राशनस्य द्विराङ्गचिः। अत्रापि गायत्र्युपदेशाभावेन शूद्रसमत्वात्। "शूद्रेण हि समस्तावद्यावद्वेदे न योजितः" इति वचनात्। उक्तहेतोरेव तदप्यमन्त्रकम्।

अथ मेखलां बध्नीते वक्ष्यमाणमन्त्रेण—(इयंदुरुक्तमिति वामदेवऋषिस्त्रिष्टुप्छन्दो मेखला देवता मेखलाबन्धने विनियोगः)।

*ॐइयं दुरुक्तं परिबाधमाना वर्णम्पवित्रम्पुनती मऽआगात्। प्राणापानाभ्याम्बलमादधाना स्वसा देवी सुभगा मेखलेयम्—इति मन्त्रं पठतो माणवकस्य कटिप्रदेशे मेखलां त्रिरावेष्ट्य प्रवरसङ्ख्यया ग्रन्थीन्करोति। (माणवकस्यैव मन्त्रपाठः, मऽआगादिति मन्त्रलिङ्गात्—इति हरिहरादयः। गदाधरस्तु बन्धनरूपपदार्थकर्तृत्वेन तदङ्गमन्त्रपाठोऽपि आचार्यस्यैव, लिङ्गं तु लक्षणयोपपादनीयमित्याह। अत्रायमेव गोभिलगृह्यसंमतः। तत्र मेखलाश्च "मौञ्जी रशना ब्राह्मणस्य, धनुर्ज्या राजन्यस्य, मौर्वी वैश्यस्य" इति क्रमेण सूत्रोक्ता ग्राह्याः।)

अत्रावसरे प्रणवपूर्वया गायत्र्या शिखाबन्धनं कुर्यात्।

---

*इयमिति इदंशब्द आद्यन्तयोर्वाक्यालंकारार्थः। इयं मेखला माम् आगात् आगच्छतु। कीदृशी—दुरुक्तम् उपलक्षणत्वात् कामचारकामवादकामभक्षादिकं दोषं परिबाधमाना विनाशयन्ती, पवित्रं वर्णं ब्राह्मणत्वादिकं पुनती साधुयन्ती, मे मम प्राणापानाभ्यां बलं सामर्थ्यमादधाना, स्वसेव सहादिना, देवी द्योतमाना, सुभगा सौभाग्यप्रदा(च)॥

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च" इति वचनात् । यद्यप्यत्र यज्ञोपवीताजिनधारणे सूत्रकारेण नोपात्ते तथापि "बिभृयाद्दण्डकौपीनोपवीताजिनमेखलाः" इति व्यासवचनात्ते कार्य्ये । अवसराकाङ्क्षायामौचित्यान्मेखलाबन्धनानन्तरम् ब्राह्मणाय यज्ञोपवीतं दत्त्वा एकं यज्ञोपवीतं धारयेत् । "उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते" इति सं० म० भृगुवचनात् ।

(अथ प्रसङ्गात् ससंस्कारो यज्ञोपवीतनिर्माणप्रकारः छन्दोगपरिशिष्टाद्युक्तः । तत्र सति संभवे ब्राह्मणेन, सधवया ब्राह्मण्या वा निर्मितं सूत्रं ग्राह्यम् । तदसंभवे ब्राह्मणीभिर्विधवाभिः कन्याभिश्च निर्मितं सूत्रं ग्राह्यम् । संहृतचतुरङ्गुलिमूलेषु षण्णवत्या सूत्रमावेष्ट्य तत्त्रिगुणीकृत्य ऊर्ध्ववृत्तं वलितं कृत्वा पुनरधोवृत्तं त्रिगुणीकृतं तत्सूत्रं नवतन्तुकं सम्पद्यते । तत्त्रिरावेष्ट्य दृढग्रन्थिं कुर्य्यात् । ग्रन्थिसम्पादनमन्त्रो यथा—*ॐप्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः । तेनान्नेनाप्यायस्व-इति (नारायणोपनिषदि उक्तः) । सिद्धे मन्त्राः प्रयोक्तव्या इति न्यायेन सम्पादिते ग्रन्थौ स्पृष्ट्वा पाठ एव । एवं सिद्धं यज्ञोपवीतं कलशाद्युपरि ॐभूर्भुवः स्वरोम् इति संस्थाप्य ॐयज्ञोपवीतं प्रतिष्ठापयामीति वदेत् । एतन्तइति-प्रतिष्ठाप्य ॐॐकारदैवत्याय प्रथमतन्तवे नमः ॐअ-

* हे हृदयवर्तिन् अहंकार त्वं वायुरूपाणामिन्द्रियरूपाणां च प्राणानां ग्रन्थिरसि परस्परमविश्लेषाय ग्रथनहेतुरसि । तादृशस्त्वं रुद्र- देवतारूपः अन्तक- दुःखस्य विनाशको भूत्वा मा मां विश मच्छरीरे प्रविष्टो भव । तेन मद्भुक्तेनान्नेनाप्यायस्व मामभिवर्धय । उपवीतग्रन्थौ अहंकाररूपत्वाध्यासान्मन्त्रार्थसमन्वयः ॥

ग्निदैवत्याय द्वितीयतन्तवे नमः ॐनाग(नाग)दैवत्याय तृतीयतन्तवे नमः ॐसोमदैवत्याय चतुर्थतन्तवे नमः ॐपितृदैवत्याय पञ्चमतन्तवे नमः ॐप्रजापतिदैवत्याय षष्ठतन्तवे नमः ॐवायुदैवत्याय सप्तमतन्तवे नमः ॐसूर्यदैवत्यायाष्टमतन्तवे, नमः ॐसर्वदैवत्याय नवमतन्तवे नमः इति तन्तुदेवताः सम्पूज्य ग्रन्थित्रयाधिपान् हरिब्रह्मेश्वरान्सम्पूजयेत्-ॐहरये नमः ॐब्रह्मणे नमः ॐईश्वराय नमः ॐयज्ञोपवीताकारस्याधिपाय परब्रह्मणे नम इति च सम्पूज्य तदादाय ॐआकृष्णेनेतिमन्त्रेण आदित्यं प्रदर्शयेत्। पुनः कलशोपरि संस्थाप्य अनामिकया स्पृशन् अष्टोत्तरशतकृत्वः प्रणवं, सकृद्गायत्रीं च जपेत्। ततः प्राणानायम्य त्र्यम्बकमन्त्रं जपन्दक्षिणहस्तेन स्पृशेत्। ततो दशकृत्वः सावित्र्या आपोहिष्ठेत्यादिभिश्चाऽभिमन्त्रिताभिरद्भिः सिञ्चेत्)।

एवं संस्कृतं यज्ञोपवीतं धारयेत् शाखान्तरीयवक्ष्यमाणमन्त्रेण-(यज्ञोपवीतमिति परमेष्ठी ऋषिः त्रिष्टुप्छन्दः लिङ्गोक्ता देवता श्रौतस्मार्त्तकर्म्मानुष्ठानसिद्धये यज्ञोपवीतपरिधाने विनियोगः) (यज्ञोपवीतमसीति प्रजापतिर्ऋषिः यजुश्छन्दः यज्ञोपवीतं देवता यज्ञोपवीतपरिधाने विनियोगः)।

*ॐयज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्ता-

*हे आचार्य इदं ब्रह्मसूत्रम् अहं प्रतिमुञ्च प्रतिमुञ्चामि धारयामि। पुरुषव्यत्यय आर्षः। किम्भूत-यज्ञोपवीतं यज्ञाय कर्मानुष्ठानार्थमुपवीतं रचितं, परमं पवित्रं तत्साधनत्वात्, प्रजापतेर्यद्वेधे पुरस्तात्सहजम् आदौ प्रजापतिना धृतमित्यर्थः, आयुषे हितमायुष्यम्, अग्र्यं मुख्यं, शुभ्रं शुद्धम्, ईदृशं धृतं यज्ञोपवीतं तेजो बलं चास्तु तत्साधनं भूयादित्यर्थः। हेब्रह्मसूत्र त्वं यज्ञोपवीतमसि अतस्त्वा त्वां यज्ञोपवीतेन रूपेणाहमुपनह्यामि बध्नामि। अहं बन्धनं दिग्रादिः॥

त् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि—एवं मन्त्रं पठितवतो माणवकस्य दक्षिणं बाहुमुद्धृत्य वामांसोपरि निदध्यात् । अत्र आचमनद्वयं माणवकस्य पूर्ववत् । ततः प्रदक्षिणमग्निं परीत्य ब्राह्मणादिः माणवकोऽग्नेः पश्चात्स्थित्वा आचमनं कृत्वा स्वस्ववर्णोक्तम् ऐणेयादि+ चर्म बहिर्लोम यज्ञोपवीतवत्परिदध्यात् वक्ष्यमाणमन्त्रेण—(मित्रस्य चक्षुरिति वामदेवऋषिस्त्रिष्टुप्छन्दः अजिनं देवता अजिनधारणे विनियोगः)

*ॐ मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजोयशस्वि स्थविरꣳ समृद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम्—इति मन्त्रेण ऐणेयं ब्राह्मणः, रौरवं क्षत्रियः, मेषचर्म्म वैश्यः परिदध्यात् । अथाचार्यः, पादादिकेश-ललाट-घ्राणप्रमाणं तत्तद्वर्णोक्तं पालाशबैल्वौदुम्बरजातं दण्डं तत्तद्वर्णाय माणवकाय तूष्णीं प्रयच्छति । स च वक्ष्यमाणमन्त्रेणादत्ते (योमेदण्डइति प्रजापतिर्ऋषिः यजुश्छन्दः दण्डो देवता दण्डग्रहणे विनियोगः) ।

÷ॐ यो मे दण्डः परापतद्वैहायसोऽधिभूम्या-

---

*हे आचार्य वाजी अन्नवान् अहमिममजिनमैणेयं परिदधे धारयामि । कीदृशं-मित्रस्य देवस्य चक्षुस्तत्स्थानीयं, बलीयो बलवत्तरं, धरुणं धारकं, तेजोयशस्वि उभयसाधनं, स्थविरं वृद्धं, समृद्धमृद्धिसाधनम्, अनाहनस्यम् अनाहनसे हितम् अनाहनस्यम् । आहना इत्युग्रनाम । अनुग्रम् अतिमृद्धित्यर्थः । आहनस्-शब्दाद्यत्-पूर्वोद्धितार्थे स्यत् । वसनमाच्छादनं, जयिष्णु जयसाधनं राज्ञो मुनेश्च ॥ +योग्याजिनाभावे कार्पासं परिदध्यात् ।

÷हे आचार्य यो दण्डः मे मदर्थे परापतत् आभिमुख्येनागतः कस्मात्कुत्रेत्यत आह—वैहायसोऽधिभूम्याम्—आकाशादुत्तमभूमौ प-

म् । तमहं पुनराददऽआयुषे ब्रह्मणे ब्रह्मवर्चसाय— इति प्रतिगृह्य वक्ष्यमाणमन्त्रेणोच्छ्रयति (उच्छ्रयस्वेति प्रजापतिर्ऋषिर्यजुश्छन्दो दण्डो देवता दण्डोच्छ्रयणे विनियोगः)

*ॐ उच्छ्रयस्व वनस्पतऽऊर्ध्वो मा पाह्यꣳहस ऽआऽस्य यज्ञस्योदृचः—इति ।

अथाचार्य्योऽद्भिः स्वमञ्जलिमापूर्य्य तेन माणवकाञ्जलिमापूरयति वक्ष्यमाणमन्त्रैः (आपो हि ष्ठेत्यादितिसृणां सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवताः माणवकाञ्जलिपूरणे विनियोग )

ॐ आपो हि ष्ठा मयोभुवस्ता न ऽऊर्ज्जे दधातन । महे रणाय चक्षसे १ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः २ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ३ इति ।

अथाचार्य्यो माणवकं प्रति सूर्य्यमुदीक्षस्वेति प्रैष ददाति । माणवकः सूर्य्यमुदीक्षमाणोऽञ्जलिस्थं जलं सूर्य्याय प्रक्षिप्योर्ध्वबाहुरादित्यमुपतिष्ठते वक्ष्यमाणमन्त्रेण—(तच्चक्षुरिति दध्यङ्ङाथर्वणऋषिः ब्राह्मी त्रिष्टुप् (पुरउष्णिक्)छन्दः सूर्यो देवता सूर्य्योदीक्षणे विनियोग )

ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम श-

---

रदः शतम् । छान्दसत्वाद्वृद्धिः । तं दण्डमहमायुषे निर्दोषजीवनाय, ब्रह्मणे वेदग्रहणाय,ब्रह्मवर्चसाय याजनाध्यापनोत्कर्षतेजसे पुनराददे॥

* हे वनस्पते वृक्षावयव दण्ड उच्छ्रयस्व उन्नतो भव । ऊर्ध्वो भूत्वा मा माम् अंहस पापात् अस्य अनुष्ठीयमानस्य यज्ञस्य उदृच उत्तमाया समाप्तिं गताया ऋच आ समाप्तिपर्यन्त पाहि रक्ष ॥ य स म ४ क १० ख ३

रदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्—इति। अथाचार्य्यो माणवकस्य दक्षिणांसोपरि स्वदक्षिणहस्तं नीत्वा हृदयमालभते वक्ष्यमाणमन्त्रेण-(ममव्रतेत इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो बृहस्पतिर्देवता हृदयालम्भने विनियोगः)।

ॐमम व्रते ते हृदयन्दधामि मम चित्तमनुचित्तं ते ऽअस्तु। मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्-इति।

अथाचार्यो माणवकस्य साङ्गुष्ठं* दक्षिणहस्तं गृहीत्वा "कोनामासि"इत्याह। अमुकशर्म्माऽहं भो३ः इति ब्रह्मचारी प्रत्याह। पुनराचार्य्यो माणवकं पृच्छति "कस्य ब्रह्मचार्य्यसि" इति। भवतः इति माणवको वदेत्। माणवकेन भवत इत्युच्यमाने—(इन्द्रस्येति प्रजापति ऋषिर्यजुर्लिङ्गोक्ता देवता पाठे विनियोगः)।

+ॐइन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तव अमुकशर्म्मन्-इति वटुनामान्तमुक्त्वा अथैनं भूतेभ्यः परिददाति वक्ष्यमाणमन्त्रेण (प्रजापतयेत्वेति प्रजापतिर्ऋषिः पञ्चजृंषि लिङ्गोक्ता देवताः रक्षणे विनियोगः)।

÷ॐप्रजापतये त्वा परिददामि देवाय त्वा

---

* साङ्गुष्ठमित्येव युक्तः पाठः। आश्वलायनगृह्ये, हिरण्यकेशिगृह्ये, गोभिलगृह्ये, शौनकस्मृतौ, हरिहरभाष्येच तथैवोल्लेखात्॥ निरङ्गुष्ठमिति पाठो लेखकप्रमादात्॥

+हे कुमार त्वमिन्द्रस्य ब्रह्मचार्यसि अग्निराचार्यस्तवास्ति अहमपि तवाचार्योऽस्मि असावमुकशर्मन् इति कुमारनामग्रहणम्॥

÷हे कुमार अरिष्ट्यै रक्षायै त्वा त्वां प्रजापतये परिददामि।

सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यान्त्वा परिददामि विश्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै—इति ।

अथ कुमारोऽग्निं प्रदक्षिणं परीत्य आचार्य्यस्योत्तरत उपविशति । अथाचार्यो ब्रह्मोपवेशनादि वरासादनान्तं कृत्वा भिक्षापात्रमुपकल्प्य पवित्रकरणादि पर्युक्षणान्तं कर्म कृत्वा द्रव्यदेवताभिध्यानं करोति । अद्येहामुकोऽहम् अस्य वटोरुपनयनकर्म्मणा यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमम्, अग्निं, वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं२ सवितारं विष्णुं विश्वान्(देवान्)मरुतः स्वर्कान्, वरुणं, प्रजापतिं, स्विष्टकृतञ्चाज्येन यक्ष्ये ।

(पित्रादेरन्यस्य वृतस्याचार्यस्य होमकर्तृत्वे पित्रादिः "एतद्धोमद्रव्यं तत्तद्देवतायै मया परित्यक्तं ॐतत्सद्यथादैवतमस्तु न मम"इति त्यागमपि पूर्वमेव कुर्यात्) ।

ततः समुद्भवनामानमग्निम् ॐएतन्त इति ॐभूर्भुवः स्वःसमुद्भवनामाग्ने सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ततोऽग्नेःपूजनम् अद्येहामुकोऽहम् उपनयनकर्म्माङ्गहोमकर्म्मणि समुद्भवनामाग्नेः पूजनं करिष्ये इति संकल्प्य ॐचत्वारिशृङ्गाइति ध्यात्वा अग्निं प्रज्वलितमित्यादिना गन्धादिभिः सम्पूज्य रेखापूजनं जिह्वापूजनं च कृत्वा आघाराद्याश्चतुर्दशाहुतीः ब्रह्मणाऽन्वारब्धो जुहुयात्—

ॐप्रजापतये स्वाहा—इदं प्रजापतये न मम इति मनसा, ॐइन्द्राय स्वाहा—इदमिन्द्राय न मम। ॐअग्नये स्वाहा—

---

पदद्वयस्योरप्यपि योज्यम् । विश्वेभ्यो भूतेभ्यः पृथिव्यादिपञ्चभूतेभ्यः, सर्वेभ्यो भूतेभ्यो देवविशेषेभ्य इत्यर्थानरुक्तम् ॥

इदमग्नये न मम । ॐसोमाय स्वाहा-इदꣳसोमाय न मम—इत्याघारावाज्यभागौ च हुत्वा (व्याहृतीनां प्रजापतिऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः उपनयनहोमे विनियोगः) ॐभूः स्वाहा-इदमग्नये न मम। ॐभुवः स्वाहा-इदं वायवे न मम। ॐस्वः स्वाहा-इदꣳ सूर्याय न मम। त्वं नोऽअग्ने, सत्वंनोऽअग्ने इत्यनयोर्वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते उपनयनहोमे विनियोगः)।

ॐत्वं नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्-स्वाहा-इदमग्नीवरुणाभ्यां न मम।

ॐस त्वं नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ। अवयक्ष्व नो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवो न ऽएधि-स्वाहा-इदमग्नीवरुणाभ्यां न मम। (अयाश्चाग्नेइति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता उपनयनहोमे विनियोगः)

ॐअयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित् त्वमया ऽअसि। अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा-इदमग्नये न मम। (येतेशतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो व्वरुणः सविता व्विष्णुर्व्विश्वे (देवा) मरुतः स्वर्काश्च देवताः उपनयनहोमे विनियोगः)।

ॐये ते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः। तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा-इदं

व्वरुणाय सवित्रे व्विष्णवे व्विश्वेभ्यो (देवेभ्यो) मरुद्भ्यः स्वर्केभ्यश्च न मम । (उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः व्वरुणो देवता उपनयनहोमे विनियोगः )।
ॐउदुत्तमं व्वरुण पाशमस्मदवाधमं व्वि मध्यमᳫं श्रथाय। अथा व्वयमादित्य व्रते तवानागसो ऽअदितये स्याम–स्वाहा–इदं व्वरुणाय न मम ।

ॐप्रजापतये स्वाहा–इदं प्रजापतये न मम। ॐअग्नये स्विष्टकृते स्वाहा–इदमग्नये स्विष्टकृते न मम ।

इत्थमाज्याहुतिहोमं संस्रवप्राशनं मार्जन–पवित्रप्रतिपत्ति–प्रणीताविमोकाँश्च विधाय ब्रह्मणे पूर्णपात्रं दद्यात् । तत्र संकल्पः–अद्येह अमुकशर्माऽहम् अमुकशर्मणोऽस्य कुमारस्य उपनयनाङ्गहोमकर्मणः साङ्गुण्यार्थम् अपूर्णपूरणार्थं च इदं पूर्णपात्रं ससुवर्णं ब्रह्मन् तुभ्यं सम्प्रददे इति दद्यात् ।

अथाचार्यो बटुं शिक्षयति—यथा "ब्रह्मचार्यसि" इत्याचार्यो वदेत् । "असानि" इति बटुः । "अपोऽशान" इत्याचार्यः । "अश्नानि" इति बटुः । "कर्म कुरु" इत्याचार्यः । "करवाणि" इति बटुः । "मा दिवा सुषुप्थाः" इत्याचार्यः । "न स्वपानि" इति बटुः । "व्वाचं यच्छ" इत्याचार्यः । "यच्छानि" इति बटुः । "समिधमाधेहि" इत्याचार्यः । "आदधानि" इति बटुः । पुनः "अपोऽशान" इत्याचार्यः । "अश्नानि" इति बटुः । (एषा व्याख्याताः ७१–७२)

अथ दैवज्ञबोधिते दीक्षालग्ने लग्नदानं कुर्यात्–अद्येहामुकोऽहम् अमुकराशेरस्य पुत्रस्य सावित्रीग्रहणलग्नात् अमुकस्थानस्थितैः अमुकग्रहैः सूचितारिष्टनिवृत्तिद्वारा शुभफलप्राप्तये

ग्रहाणां प्रीतये च इदं सुवर्णं सुवर्णनिष्क्रयीभूतं द्रव्यं वा दैवज्ञाय अन्यब्राह्मणेभ्यश्च दास्ये ॐ तत्सन्न मम इति।

(अत्र ताम्रादिपात्रस्थिततण्डुलेषु सुवर्णरजतान्यतरशलाकया गणेशं, कुलदेवतां, प्रणवव्याहृतिपूर्वकगायत्र्यक्षराणि च लिखित्वा तत्पूजनं संस्कारगणपत्यादावुक्तम्। गदाधरनृसिंहादिभिर्नोक्तम्। नचास्मद्देशेषु प्रचलति)।

अथास्मै दक्षिणकर्णे पूर्वाभिमुखो गुरुः विश्वामित्रदृष्टां गायत्रीछन्दस्कां सवितृदेवतां तत्सवितुरिति ऋचं प्रणवव्याहृतिपूर्विकामुपदिशेदुत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टाय, पुष्पमालादिभिर्गुरुमभ्यर्च्य श्रीफलादिकं समर्प्य "अमुकगोत्रोऽमुकशर्माऽहं भो अभिवादये" इत्युक्त्वा कर्णौ स्पृष्ट्वा दक्षिणोत्तरपाणिभ्यां गुरोः पादौ गृहीत्वा कृतशिरोनमनाय, गुरुं समीक्षमाणाय स्वयं गुरुणाच समीक्षिताय। दक्षिणतस्तिष्ठत आसीनाय वा इति पक्षान्तरम्। (प्रणवस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः परमात्मा देवता। व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः। तत्सवितुरिति विश्वामित्रऋषिर्गायत्री छन्दः सविता देवता सर्वेषां माणवकोपदेशने विनियोगः) इत्यार्षादिकं स्मृत्वा शङ्खादिस्वे जायमाने वाससाऽऽच्छादनं कृत्वा (आश्वला० स्मृ०) प्रणवव्याहृतिपूर्वां गायत्रीं प्रथमं पच्छो ब्रूयात्। तद्यथा—

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यम्—इति प्रथमं पादं श्रावयित्वा यथाशक्ति वाचयेत्। ततः, भर्गो देवस्य धीमहि—इति द्वितीयं पादं श्रावयित्वा तमपि यथाशक्ति वाचयेत्। ततः, धियो यो नः प्रचोदयात्—इति तृतीयं पादं श्रावयित्वा यथाशक्ति वाचयेत्।

ततो द्वितीयवारम्–ॐभूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि–इति अर्धर्चं श्रावयित्वा यथाशक्ति वाचयित्वा, धियो यो नः प्रचोदयात्–इति द्वितीयमर्धर्चं श्रावयित्वा यथाशक्ति वाचयेत् ।

ततः तृतीयवारम् ॐभूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्–इति सर्वां गायत्रीं श्रावयित्वा यथाशक्ति वाचयेत्* इति ।

क्षत्रियाय बृहस्पतिदृष्टां त्रिष्टुप्छन्दस्कां सवितृदेवतां देवसवितरित्यादिकामृचं ब्रूयात् (य.सं. ९।१)। यथा ॐदेव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु–इति। वैश्याय श्यावाश्वदृष्टां जगतीछन्दस्कां सवितृदेवतां विश्वा रूपाणीति ऋचं (य. सं. १२।३) ब्रूयात् । ॐविश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो विराजति—इति । सर्वेभ्यो वा गायत्रीच्छन्दस्कामेव पूर्वोक्तामुपदिशेदिति पक्षान्तरम् ।

ततो ब्रह्मचारी स्वाचार्याय समाचारात् अस्मिन्नवसरे गुरुदक्षिणां दद्यात् । अद्येह अमुकराशिरमुकशर्म्मा अमुकवर्मा

---

* अत्र प्रथमं पादमात्रम्, द्वितीयवारम् अर्धर्चमात्र, तृतीयवारं सर्वां सावित्रीमुपादिशेत्–इत्युल्लेखस्तु "पच्छोऽर्धर्चश"इति गृह्यसूत्रस्थवीप्सार्थकशस्प्रत्ययाविरोधात्, तदीयसर्वभाष्याविरोधात्, त्रिवारं गायत्रीमुपदिशेत् इत्यक्षरस्वारस्याविरोधात्, हिरण्यकेशिगृह्ये स्पष्ट त्रिवारं सम्पूर्णगायत्रीपाठविरोधात्, सकलशिष्टाचारविरोधाच्चासङ्गत एवेति बोध्यम् ॥

अमुकगुप्तो वा अहं कृतैतद्गायत्रीग्रहणकर्म्मणः साद्गुण्यार्थम् इदं सुवर्णमग्निदैवतं वररूपेणाचार्याय तुभ्यमहं सम्प्रददे इति सङ्कल्प्य गुरोः पादयोः प्रणिपत्य समर्पयेत। गुरुरप्याशीर्भिरभिनन्दयेत्।

*ततो ब्रह्मचारी कालोपस्थितां मध्याह्नसन्ध्यामुपासीत।

यावद्वेदोपदेशो न तावत्सन्ध्यादिकं न च।

ततो मध्याह्नसन्ध्यादि सर्वं कर्म समाचरेत्॥इति जै.वचनात्।

अथ उपनयनाग्नौ समिदाधानं कुर्य्यात्। तत्रोपयुक्तानि वस्तून्यासादयेत्-इन्धनं काष्ठरूपं गोमयपिण्डरूपं वा संधुक्षणार्थं पञ्चधा विभक्तम्, पर्युक्षणार्थमुदकम्, समिधस्तिस्रः, संधुक्षणपर्युक्षणार्थं पुनरिन्धनवारिणी। ततो ब्रह्मचारी अग्नेः पश्चादुपविश्य प्रथमतोऽग्निं वक्ष्यमाणैः पञ्चभिर्मन्त्रैः पाणिना परिसमूहति (सन्धुक्षयति) (अग्नेसुश्रवइत्यादीनां पञ्चानां ब्रह्मा ऋषिः पञ्च यजूंषि अग्निर्देवता परिसमूहने विनियोगः)।

+ॐअग्ने सुश्रवः सुश्रवसम्मा कुरु।इत्येकं काष्ठं गोम·

---

* गायत्र्युपदेशानन्तरमपि अधीत्यानिराकरणं (पारस्करगृह्ये तृतीयकाण्डे पञ्चदश्यां कण्डिकायामन्ते उपदिष्टं) कर्तव्यत्वेन क्वचित्पुस्तके निर्दिष्टम्। तदत्रानावश्यकमित्यधो लिख्यते।

अधीत्यानिराकरणं कारयेत्। यथा-अथातोऽधीत्याधीत्यानिराकरणम्-प्रतीकस्मे विचक्षणं, जिह्वा मे मधु यद्वचः, कर्णाभ्यां भूरि शुश्रुवे, मा त्वं हार्षीः श्रुतम्मयि, ब्रह्मणः प्रवचनमसि, ब्रह्मणः प्रतिष्ठानमसि, ब्रह्मकोशोऽसि, सनिरसि शान्तिरस्यनिराकरणमसि, ब्रह्मकोशम्मे विश, वाचा त्वा पिदधामि वाचा त्वा पिदधामि, स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु, आप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बल, यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॐ। इति बटुं वाचयेत्। एतदधीत्यानिराकरणं नाम॥

+हे अग्ने हे सुश्रवः शोभनकीर्त्ते मा मां सुश्रवसं सुकीर्त्तिं कुरु।

यपिण्डं वाऽग्नौ प्रक्षिप्य, ॐ यथा त्वमग्ने सुश्रवः सुश्रवा ऽअसि २ इति द्वितीयम्, ॐ एवम्माᳫं सुश्रवः सौश्रवसं कुरु ३ इति तृतीयम्, ॐ यथा त्वमग्ने देवानां यज्ञस्य निधिपा ऽअसि ४ इति चतुर्थम्, ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ५ इति पञ्चमं प्रक्षिपेत्। इत्यग्निं परिसमुह्य तत उपकल्पितोदकेन प्रदक्षिणमग्निम् ईशानादुत्तरपर्यन्तं पर्युक्ष्योत्थाय अग्नय इति वक्ष्यमाणमन्त्रेणाग्नौ समिधमादधाति।

(अग्नयइति प्रजापतिर्ऋषिराकृतिश्छन्दः समिद्देवता समिदाधाने विनियोगः)। घृताक्तामेकां समिधं गृहीत्वा—

*ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस ऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे। जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासᳫं स्वाहा—इत्यनेन

---

किञ्च हे सुश्रवोऽग्ने यथा येन प्रकारेण त्वं सुश्रवा असि एवं गुणाधानेन मां सुश्रवः सौश्रवसं सुश्रवस्सु सुकीर्तिषु मध्ये सौश्रवसं उत्तमकीर्तिं कुरु। स्वार्थेऽण्। अपि च हे अग्ने यथा देवानां यज्ञस्य निधिपा असि तद्भागरक्षकोऽसि एवमहमपि मनुष्याणां वेदस्य मनुजैरधीयमानस्य वेदस्य निधिपो रक्षको भूयासम्॥

*हे देवाः इमां समिधमग्नये तदर्थम् आहार्षम् आहृतवानस्मि। किंभूताय बृहते पूर्णाय जातवेदसे जातधनाय। वेद इति धननाम। हे ऽग्ने यथा समिधा जात्यैकवचनम् समिध्यसे दीप्तो भवसि, एवमहमायुरादिना समिन्धे दीप्ये। न केवलमहमेव किन्तु ममाचार्यो जीवपुत्रोऽस्तु अहं तत्प्रसादान्मेधावी अनिराकरिष्णुर्गुरूपदिष्टवेदाद्यविस्मरणशीलो ब्रह्मवर्चसी याजनादिप्रभावयुक्तश्च भूयासम्। शिष्टं स्पष्टम्॥

अग्नौ आदध्यात् । अनेनैव मन्त्रेण द्वितीयां तृतीयां च समिधम् आदध्यात । ततस्तूष्णीमुपविश्य पूर्ववत् अग्नेसुश्रव इत्यादिपञ्चभिर्मन्त्रैः इन्धनप्रक्षेपेण परिसमूहनम्, उपकल्पिताभिरद्भिः प्रदक्षिणं पर्युक्षणं च विधाय तूष्णीं हस्तौ प्रतप्य वक्ष्यमाणैः मुखं विमार्ष्टि (ललाटादि चिबुकान्तं प्रोञ्छति) यथा (तनूपाऽग्नेइत्यादीनां बृहद्देवा ऋषयः यजुश्छन्दोऽग्निर्देवता मुखविमार्जने विनियोगः)।

ॐतनूपा ऽअग्नेऽसि तन्वं मे पाहि १ॐ आयुर्दाऽअग्नेऽस्यायुर्मे देहि २ॐवर्चोदा ऽअग्ने ऽसि वर्चो मे देहि ३ ॐअग्ने यन्मे तन्वा ऽऊनं तन्मऽआपृण ४ *ॐमेधां मे देवः सविता–आदधातु ५ ॐमेधां देवी सरस्वती–आदधातु ६ ॐमेधामश्विनौ देवावाधत्तां पुष्करस्रजौ७ इति सप्तभिर्मन्त्रैः प्रतिमन्त्रं ललाटाच्चिबुकपर्यन्तं मुखं प्रोञ्छति।(अङ्गानीत्यादीनां प्रजापतिर्ये. लिं. अङ्गाप्यायने)।

+ ॐअङ्गानि च मऽआप्यायन्ताम्–इति बाहुभ्यां शिरस आपादं सर्वाङ्गमालभ्य जपति।ॐवाक्च मऽआप्यायताम्–इति मुखम् । ॐप्राणश्च मऽआप्यायताम्–इति नासिकारन्ध्रे युगपत् । ॐचक्षुश्चमऽआप्यायताम्-इति नेत्रे युगपत् । ॐश्रोत्रं च मऽआप्यायताम्–इति दक्षिणवामे श्रोत्रे

*देवो दीप्यमानः सविता सूर्यो मे मेधाम्–आदधात्विति विपरिणम्य योजनीयम् । तथा देवी सरस्वती मे मह्य मेधामादधातु । देवौ पुष्करस्रजौ सुवर्णकमलमालिनौ मे मह्यं मेधां धारणबुद्धिमाधत्ताम् । एतानि सप्त कर्माणि ।

+मे ममाङ्गानि करचरणदीन्याप्यायन्तां सुखं तिष्ठन्तु । वाङ्मआप्यायतां प्राणो मे आप्यायतामितिक्रियाविपरिणामेन पञ्चमन्त्रा अन्वेतव्याः ॥

क्रमेण मन्त्रावृत्त्या। ॐयशो बलं च मऽआप्यायताम् इति बाहू परस्परव्यत्यासेन। बाह्वोर्बलाधिष्ठानत्वात्। अङ्गालम्भनिमित्तक उदकस्पर्शः। ततः स्रुवमूले अग्नेर्भस्म ऐशान्या गृहीत्वा दक्षिणानामिकया ललाटादिषु तेन भस्मना त्र्यायुषं तिलकं कुरुते—(त्र्यायुषमिति नारायणऋषिरुष्णिक्छन्दोऽग्निर्देवता त्र्यायुषकरणे विनियोगः)।

ॐत्र्यायुषञ्जमदग्नेः—इति ललाटे। ॐकश्यपस्य त्र्यायुषम्—इति ग्रीवायाम्। ॐयद्देवेषु त्र्यायुषम्—इति दक्षिणांसे। ॐतन्नो ऽअस्तु त्र्यायुषम् इति हृदि।

अथाग्न्यभिवादनम्—अग्ने त्वामभिवादये अमुकगोत्रो ऽमुकप्रवरो यजुर्वेदान्तर्गतामुकशाखाध्यायी अमुकशर्म्माऽहं भो३ः इति। ततो गुरुम् "अभिवादये अमुकगोत्रोऽमुकप्रवरो यजुर्वेदान्तर्गताऽमुकशाखाध्यायी अमुकशर्म्माऽहं भो३ः" इति वाक्यमुक्त्वा कर्णौ स्पृष्ट्वा दक्षिणेन पाणिना दक्षिणं पादं वामेन वामं गृहीत्वा शिरसाऽभिवादयेत्। अभिवादितो गुरुश्च "आयुष्मान्भव सौम्यामुकशर्म्म३न्" इत्याशिषं दद्यात्। इति गुरुवन्दनं विधाय अथान्यानप्यभिवादयेत्। ते च विद्यावयस्तपोवृद्धा अभिवाद्याः।

तत्र स्मृतयः—

ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन्।
मातुलाश्च पितृव्याश्च श्वशुरास्तत्त्विजस्तथा।
प्रत्युत्थायाभिवाद्याः स्युर्ज्येष्ठभ्रातर एव च॥
गुरुर्माता स्तन्यदात्री पित्रादित्रयमेव च।
अन्नदाता भयत्राता मन्त्रविद्योपदेशकः॥
एते नित्याऽभिवाद्याः स्युः सपत्नीकाः शुभार्थिना।
विप्रोष्य तूपसङ्ग्राह्या ज्ञातिसम्बन्धियोषितः॥

विप्रोष्य विप्रं कुशलं पृच्छेन्नृपमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेवच ॥
अथाभिवादनानर्हाः—
उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् ।
पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ॥
नास्तिकं कितवं स्तेनं कृतघ्नं नाभिवादयेत् ।
मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् ॥
वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ।
अभ्यक्तं शिरसि स्नानं कुर्वन्तं नाऽभिवादयेत् ॥
जपयज्ञस्थलस्थं च समित्पुष्पकुशानलान् ।
उदपात्रार्घभैक्षान्नं वहन्तं नाभिवादयेत् ॥
अभिवाद्य द्विजश्चैतानहोरात्रेण शुद्ध्यति ।
शूद्राभिवादने तु त्रिरात्रेण । इत्यभिवादनम् ॥

अत्रावसरे नव्यपीतवस्त्रनिर्मितावविमुक्तौ स्यूतौ दक्षिणांसे निधाय कुक्षिपृष्ठैकदेशावलम्बितौ कृत्वा दण्डं गृहीत्वा ब्रह्मचारी भिक्षार्थं गच्छेत्। तदुक्तं याज्ञवल्क्येन—(अ.१।श्लो.२९।३०)

दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।
ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥ इति ।

सूत्रंच—"भवत्पूर्वां ब्राह्मणो भिक्षेत, भवन्मध्यां राजन्यो, भवदन्त्यां वैश्यः,तिस्रोऽप्रत्याख्यायिन्यः, षट् द्वादशा-परिमिता वा, मातरं प्रथमामेक" इति ।

तत्र पूर्वं मातरम् "भवति भिक्षां देहि मातः" इति ब्राह्मणो याचेत । "भिक्षां भवति देहि मातः" इति

राजन्यः । "देहि भिक्षां भवति मातः" इति वैश्यः । अन्यां प्रति भिक्षणे मातः इति न वाच्यम् । पुरुषं प्रति भिक्षणे "भवन् भिक्षां देहि" इति वाच्यम् । तत्र "भवान् भिक्षां ददातु" इत्येवं प्रयोगोऽपि केषांचित् । माता तण्डुलान् सफलान् सोहालिकादिपक्वान्नसहितान् सुवर्णादिधातुपात्रे वंशपात्रे वा निधाय भिक्षां दद्यात् । सति सम्भवे रत्नादिभिक्षांच दद्यात् । "सुवर्णं रजतं रत्नं सा पात्रेऽस्य विनिक्षिपेत्" इति संस्कारप्रकाशे शौनकवचनात् । ब्रह्मचारी दत्तां भिक्षां ॐस्वस्तीत्युक्त्वा प्रतिगृह्य आचार्याय निवेदयेत् । भोगुरो इयं भिक्षा मया लब्धा इति निवेद्य आचार्यानुज्ञया आत्मभोजनार्थं स्वीकुर्यात् । भिक्षालब्धं द्रव्यादिकं पित्रादिः ब्राह्मणेभ्यो विभज्य समर्पयतीति पर्वतीयसमाचारः । इति भिक्षाचरणम् ॥

अत्रावसरे केचित् मध्याह्नसंध्यां कारयन्ति ॥

अनाश्रमस्थितिप्रयुक्तप्रत्यवायपरिहारप्रायश्चित्तापेक्षया ब्रह्मचर्यव्रतलोपप्रयुक्तप्रत्यवायपरिहारप्रायश्चित्तस्य गुरुत्वात् यथाविधिभिक्षाचरणादिनियमानामशक्त्ये एकस्मिन्नपि दिने दुःशकत्वं मन्यमानैरभियुक्तैः "सावित्रीग्रहणादूर्ध्वं तद्दिने वा चतुर्थके । तृतीये द्वादशे वाऽपि वत्सरे व्रतमुत्सृजेत्" ॥ इति संस्कारभास्करोक्तकारिकावचनाश्रयणेन प्रथितस्य "उपनयनदिने एव वेदारम्भपूर्वकं समावर्तनम्" इति पक्षस्याश्रयेण समावर्तनस्यानुष्ठास्यमानत्वात्कालापकर्षं कृत्वा ब्रह्मचारी सायंसन्ध्यामुपास्य उपनयनाग्नावेव पूर्ववत्समिदाधानं कृत्वा अभिवादनं कुर्यात् ।

ततो होमदक्षिणा—अद्येहामुकोऽहम् अमुकराशेः पुत्रस्योपनयनाङ्गहोमकर्मणः साद्गुण्यार्थम् इदं सुवर्णं वररूपेण

आचार्याय तुभ्यं सम्प्रददे ॐतत्सत् इति कर्मोपदेशकायाचार्याय दत्त्वा आशिषं प्रतिगृह्णीयात् ।

(पञ्चाशन्मेखलादिविधौ इति यज्ञपार्श्वपरिशिष्टवचनात्) अद्येह कृतस्यास्य पुत्रस्योपनयनकर्मणः साङ्गतासिद्ध्यर्थं पञ्चाशतं यथाशक्ति वा ब्राह्मणान् भोजयिष्ये इति सङ्कल्प्य समुद्भवनामानमग्निं सम्पूज्य विसृजेत् ॥

अक्षारालवणाशनादयो नियमास्त्रिरात्रमनुष्ठेयाः, दण्डधारणादयो यावद्व्रतमनुष्ठेयाश्च सूत्रव्याख्यावसरे उपात्ता व्याख्याताश्च तत्रैवेति तत एवावगन्तव्याः (७८)। उपनयनदिने समावर्तनपक्षे बहवोऽनुपयुक्ता इति नात्र पुनः प्रदर्श्यन्ते । केचन अनृतवर्जनाद्य आवश्यका अपि विष्टपेषणभिया नोपात्तास्तत उद्धृत्य श्रावणीयाः ॥

इत्युपनयनम् ॥

## ( ११ ) अथ वेदारम्भः ॥

अध्ययनारम्भस्तु प्रथमं स्ववेदस्यैव कार्यः ।
तदाह संस्कारप्रकाशे वसिष्ठः—
यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत्।
तच्छाखाध्ययनं कार्यमन्यथा पतितो भवेत् ॥
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।
पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ।
एवमध्ययनं कुर्वन् ब्रह्मसायुज्यमाप्नुयात् ॥

सपरिबृंहणः साङ्गः । यो वेद इति यच्छब्दोऽध्याहार्यः । वेदशब्देन स्वशाखामात्रम् ।

वेदारम्भस्तूपनयनानन्तरं कार्यः । तत्र योगियाज्ञवल्क्यः-
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् इति ॥

## अथ प्रयोगः ।

आचार्यो वेदारम्भवेदीसमीपगतोपविश्याचम्य गणेशादीन् नमस्कृत्य पञ्चभूसंस्कारपूर्वकमग्निस्थापनं विधाय अर्घं संस्थाप्य ब्रह्मोपवेशनादिपर्युक्षणान्तं कर्म्म कृत्वा सङ्कल्पं कुर्यात् । अद्येहेत्यादि सं. अमुकराशेरस्य वटोः यजुर्वेदादिक्रमेण वेदारम्भं करिष्ये इति प्रतिज्ञाय द्रव्यदेवताभिध्यानंकरोति-अद्येह अस्य वटोः वेदारम्भकर्मणाऽहं यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमम्, अन्तरिक्षं, व्वायुं, ब्रह्माणं, छन्दाᳬसि, पृथिवीम्, अग्निम्, ब्रह्माणं, छन्दाᳬसि, दिवं, सूर्यं, ब्रह्माणं, छन्दाᳬसि, दिशः, चन्द्रमसं, ब्रह्माणं छन्दाᳬसि, प्रजापतिं, देवान्, ऋषीन्, श्रद्धां, मेधां, सदसस्पतिम्, अनुमतिम्, अग्निं, व्वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, व्वरुणᳪ सवितारं व्विष्णुं व्विश्वान् (देवान्) मरुतः स्वर्कान्, व्वरुणं, प्रजापतिं, स्विष्टकृतं चाज्येनाहं यक्ष्ये ।

(वृतस्याचार्यस्य होमकर्तृत्वे पित्रादिः "इदमाज्यं अमुकदेवतायै मया परित्यक्तं यथादैवतमस्तु न मम इति त्यागं पूर्वमेव कुर्यात्) ।

ॐएतन्तइत्यादि प० ॐभूर्भुवः स्वः हरिनामाग्ने सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य अथाग्नेः पूजनम् । अद्येहेत्यादि सं. अमुकोऽहम् अमुकराशेरस्य वटोः वेदारम्भहोमकर्म्मणि हरिनामाग्नेः पूजनं करिष्ये इति संकल्प्य अद्देवाग्निरिति मन्त्रेण नाममन्त्रेण च ध्यानावाहनासनपाद्यादिनीराजनान्तं सम्पूज्य रेखापूजनं जिह्वापूजनं च ।

ब्रह्मचारिणमग्नेः पश्चात् स्वस्योत्तरतः समुपवेश्य दक्षिणं जान्वाच्य ब्रह्मणाऽन्वारब्धो जुहुयात्–ॐप्रजापतये स्वाहा–इदं प्रजापतये न मम इति मनसा, ॐइन्द्राय स्वाहा—इदमिन्द्राय न मम । ॐअग्नये स्वाहा—इदमग्नये न मम । ॐसोमाय स्वाहा—इदꣳसोमाय न मम ॥

अन्वारम्भं त्यक्त्वा अथ यजुर्वेदाहुतयः—ॐअन्तरिक्षाय स्वाहा—इदमन्तरिक्षाय न मम । ॐवायवे स्वाहा—इदं वायवे न मम । ॐब्रह्मणे स्वाहा—इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा—इदं छन्दोभ्यो न मम ॥

अथ ऋग्वेदाहुतयः—ॐपृथिव्यै स्वाहा–इदं पृथिव्यै न मम । ॐअग्नये स्वाहा—इदमग्नये न मम । ॐब्रह्मणे स्वाहा–इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा—इदं छन्दोभ्यो न मम ॥

अथ सामवेदाहुतयः–ॐदिवे स्वाहा–इदं दिवे न मम । ॐसूर्य्याय स्वाहा–इदꣳसूर्य्याय न मम। ॐब्रह्मणे स्वाहा–इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा–इदं छन्दोभ्यो न मम ।

अथाथर्व्ववेदाहुतयः–ॐदिग्भ्यः स्वाहा–इदं दिग्भ्यो न मम । ॐचन्द्रमसे स्वाहा–इदं चन्द्रमसे न मम । ॐब्रह्मणे स्वाहा–इदं ब्रह्मणे न मम। ॐछन्दोभ्यः स्वाहा–इदं छन्दोभ्यो न मम ॥

अथ तन्त्रेण सर्वसामान्याहुतयः—ॐप्रजापतये स्वाहा—इदं प्रजापतये न मम । ॐदेवेभ्यः स्वाहा—इदं देवेभ्यो न मम । ॐऋषिभ्यः स्वाहा—इदम् ऋषिभ्यो न मम । ॐश्रद्धायै स्वाहा—इदꣳ श्रद्धायै न मम।

ॐमेधायै स्वाहा—इदं मेधायै न मम। ॐसदसस्पतये स्वाहा—इदꣳ सदसस्पतये न मम। ॐअनुमतये स्वाहा—इदमनुमतये न मम* ॥ ब्रह्मणाऽन्वारब्धः—(व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः वेदारम्भहोमे विनियोगः)।

ॐभूः स्वाहा—इदमग्नये न मम। ॐभुवः स्वाहा—इदं वायवे न मम। ॐस्वः स्वाहा—इदꣳ सूर्याय न मम। (त्वं नोऽअग्ने, सत्वंनो अग्ने इत्यनयोर्वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते वेदारम्भहोमे विनियोगः)।

ॐत्वं नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः। यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्-स्वाहा-इदमग्नीवरुणाभ्यां न मम।

ॐस त्वं नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ। अवयक्ष्व नो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवो न ऽएधि-स्वाहा-इदमग्नीवरुणाभ्यां न मम। (अयाश्चाग्नेऽइति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता वेदारम्भहोमे विनियोगः)।

ॐअयाश्चाग्ने ऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया ऽअसि। अया नो यज्ञं व्वहास्यया नो धेहि भे-

---

* प्रजापतये इत्याद्याः सप्ताहुतयः तन्त्रेणैव होतव्या, नतु प्रतिवेदं पृथक्पृथगिति सूत्रव्याख्यायां निरूपितम् (८५)। एतासां सप्ताहुतीनां प्रतिवेदं पृथगुल्लेखस्तु उपाकरणसूत्रस्थसकलभाष्यविरोधात् संस्कारनृसिंहादिसकलपद्धतिविरोधात् प्राचीनलिखितपद्धतिविरोधाच्चासंगत एवेति बोध्यम् ॥

पजᳬ स्वाहा–इदमग्नये न मम । (येतेशतमिति वामदेवऋ- षिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वे (देवा) मरुतः स्वर्काश्च देवताः वेदारम्भहोमे विनियोगः) ।

ॐये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो ऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा–इदं वरु- णाय सवित्रे विष्णवे विश्वेभ्यो (देवेभ्यो) मरुद्भ्यः स्वर्केभ्य- श्च न मम । (उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः वरुणो देवता वेदारम्भहोमे विनियोगः) ।

ॐउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमᳬ श्रथाय । अथा वयमादित्य व्रते तवानागसो ऽअदितये स्याम—स्वाहा—इदं वरुणाय न मम । ॐप्रजापतये स्वाहा–इदं प्रजापतये न मम । ॐअग्नये स्विष्टकृते स्वाहा–इदमग्नये स्विष्टकृते न मम । संस्रवप्राशनम्, मुखमार्जनं, पवित्रप्रतिपत्तिः, प्रणीताविमोकः । ब्रह्मणे पूर्णपात्र- दानम् । तत्र सङ्कल्पः–अद्येहामुकोऽहम् अमुकराशेरस्य पुत्रस्य वेदारम्भाङ्गहोमकर्म्मणः साङ्गफलप्राप्तये अपूर्णपूरणार्थं च इदं पूर्णपात्रं ससुवर्णं ब्रह्मन् तुभ्यं सम्प्रददे इति दद्यात् । ब्रह्माच अक्रन्कर्म्मेति मन्त्राशिषं दद्यात् ।

अथ ब्रह्मचारी—

"आदौ गणपतिं चेष्ट्वा संपूज्य च सरस्वतीम् ।
गुरुपूजां ततः कृत्वा विद्याः सर्वाः समारभेत्" ॥

इति संस्कारप्रकाशे सङ्ग्रहवचनात्,

"प्राशनादिविमोकान्ते कृत्वा विघ्नेशपूजनम् ।
सरस्वतीं हरिं लक्ष्मीं स्वविद्यां पूजयेत्ततः" ॥

इति कारिकावचनाच्च प्रथमं गणेशादीन् पूजयेत् ॥ तद्यथा अद्यहामुकोऽहम् वेदारम्भकर्म्मणः पूर्वाङ्गत्वेन गणेशादीनाम् आवाहनस्थापनपूजनानि करिष्ये इति स. ताम्रस्थाल्यादौ दध्यक्षतान्गृहीत्वा उत्तरत्वद्वा स्थापयेत्-ॐभूर्भुवः स्वः गणेश इहागच्छ पूजार्थं त्वामावाहयामि इह तिष्ठ । ॐभूर्भुवः स्वः विष्णो इहा० ॐभूर्भुवः स्वः सरस्वति इहा० ॐभूर्भुवः स्वः लक्ष्मि इहा० ॐभूर्भुवः स्व. स्वविद्ये इहा० एत-तइतिप्रतिष्ठाप्य नाममन्त्रेण ध्यानादिनीराजनान्तं सम्पूज्य गुरुं च गन्धपुष्पादिभिरभ्यर्च्य पूर्ववत्पादोपसङ्ग्रहणं कुर्यात् । गुरुश्च ततो ब्रह्मचारिणं यथाविधि वेदमध्यापयेत् । तद्यथा अग्रेरुत्तरतो ब्रह्मचारिणमुदङ्मुखं प्राङ्मुखं वा प्रागग्रेषु कुशेषूपवेश्य स्माचाचमनं प्राणायामं ब्रह्माञ्जलिं च कारयित्वा प्रणवमहाव्याहृतिपूर्वां गायत्रीं पाठयित्वा स्ववेदारम्भं कुर्यात् ।

तत्र (ॐइषेत्वादिखम्ब्रह्मान्तस्य माध्यन्दिनीयकस्य वाजसनेयकस्य यजुर्वेदाम्नायस्य विवस्वान्ऋषिर्गायत्र्यादीनि सर्वाणिच्छन्दांसि सर्वाणि यजूंषि लिङ्गोक्ता देवता स्वाध्यायाध्ययने विनियोगः) ॐहरि ॐ ॐभूर्भुवः स्वः तत्स. ॐइषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मण ऽआप्यायध्वमघ्न्याऽइन्द्राय भागम् प्रजावतीरनमीवा ऽअयक्ष्मा मा वस्तेन ऽईशत माघशंसो ध्रुवाऽअस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ वसो. पवित्रम् इति स्वल्पारम्भ कारयित्वा अध्यायादीन्ब्रूयात् ।

ॐकृष्णोसि. २ ॐसमिधाऽग्निम्. ३ ॐएदम. ४ ॐअग्नेस्तनूः. ५ ॐदेवस्य त्वा. ६ ॐवाचस्पतये. ७ ॐउपयामगृहीतोऽसि ८ ॐ. देव सवितः. ९ ॐअपोदेवाः १० ॐयुञ्जानः प्रथमम्. ११ ॐइशानोरुक्रमः. १२ ॐमयि गृह्णामि. १३ ॐ. ध्रुवक्षितिर्ध्रुवयोनिः. १४ ॐअग्ने जातान्. १५ ॐनमस्ते. १६ ॐअश्मन्नूर्जम्. १७ ॐवाजस्य. १८ ॐस्वाहीन्स्वर्. १९ ॐक्षत्रस्य योनिः. २० ॐइममग्ने. २१ ॐतेजोऽसि. २२ ॐहिरण्यगर्भः सम्. २३ ॐअश्वस्तूपरः. २४ ॐशार्दन्दाद्भिः. २५ ॐअ. ग्निश्च. २६ ॐसमास्त्वा. २७ ॐहोता यक्षत् २८ ॐसमिद्धो ऽअञ्जन्. २९ ॐदेव सवितः. ३० ॐस. हस्रशीर्षा पुरुषः. ३१ ॐतदेव. ३२ ॐअस्याज. रासः. ३३ ॐब्रह्माग्रतः ३४ ॐअपेतः। जलस्पर्शः विष्णोर्वा स्मरणम् ३५। ॐऋचं व्वाचम्. ३६ ॐदेव. स्य त्वा. ३७ ॐदेवस्य त्वा. ३८ ॐस्वाहा प्राणे. भ्यः ३९ ॐईशाव्वास्यम् ४०

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। यो. ऽसावादित्ये पुरुषः सोसावहम् ॐखम्ब्रह्म ४०

ॐव्रतमुपैष्यन्नन्तरेणाहवनीयञ्च गार्हपत्यञ्च प्रा.

ह निष्ठश्प ऽउपस्पृशति तद्यदप ऽउपस्पृशत्यमेध्यो वै पुरुषो यदनृतं व्वदति तेन पूतिरन्तरतो मेध्या वा ऽआपो मेध्यो भूत्वा व्व्रतमुपायानीति पवित्रं वा ऽआपः पवित्रपूतो व्व्रतमुपायानीति तस्माद्वा ऽअप ऽउपस्पृशति ॥ १ ॥ सोऽग्निमेवाभीक्षमाणो व्व्रतमुपैति ।

*ॐप्राश्नीपुत्रादासुरिवासिनःप्राश्नीपुत्र ऽआसुरायणादासुरायणऽआसुरेरासुरिर्य्याज्ञवल्क्याद्याज्ञवल्क्य ऽउद्दालकादुद्दालकोऽरुणादरुण ऽउपवेशेरुपवेशिः कुश्रेः, कुश्रिर्व्वाजश्रवसो, व्वाजश्रवा जिह्वावतो बाद्ध्योगाज्जिह्वावान्बाद्ध्योगोऽसितादार्षिगणादसितो व्वार्षिगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः, कश्यपो नैध्रुविर्व्वाचो, व्वागम्भिण्या, ऽअम्भिण्यादित्याद्, आदित्यानीमानि शुक्लानि यजूᳬषि व्वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते २ इत्येवं यजुर्वेदारम्भं परिसमापयेत् ।

(अथ ऋग्वेदादिमन्त्रस्य मधुच्छन्दा ऋषिर्गायत्री छन्दो-

---

* इद पूर्वान्वयि । प्राश्नीपुत्र आसुरायणादित्यारभ्य आसमाप्ति प्रथमान्तवोध्य शिष्य, पञ्चम्यन्तबोध्य आचार्य । विद्यां लेभे इत्यध्याहार्यम् । तथा च प्राश्नीपुत्र आसुरायणाद्विद्यां लेभे इत्यादिर्वाक्यार्थ । एव सर्वत्र यथोक्तेषु व्याख्यान ज्ञेयम् ॥

ऽग्निर्देवता स्वाध्यायाध्ययने विनियोगः)

ॐअग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्—इति ऋग्वेदारम्भः।

(अथ सामवेदादिमन्त्रस्य गौतम ऋषिर्गायत्रीछन्दोऽग्निर्देवता स्वाध्यायाध्ययने विनियोगः) ॐअग्नआयाहि वीतये। गृणानो हव्यदातये। निहोता सत्सि बर्हिषि॥ इति सामवेदारम्भः।

(शन्नोदेवीरिति अथर्ववेदादिमन्त्रस्य दध्यङ्ङाथर्वणऋषिर्गायत्रीछन्दोऽग्निर्देवता स्वाध्यायाध्ययने विनियोगः) ॐशन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः—इत्यथर्ववेदारम्भः॥ पुनः पूर्ववत् प्रणवमहाव्याहृतिपूर्विकां गायत्रीं पठित्वा "ॐविरामोऽस्तु" इति वदन्तं गुरुं शिष्यः पादोपसङ्ग्रहणपूर्वकं प्रणम्य विरमेत्॥ ततः—

अधीत्यानिराकरणमन्त्रान्पठेत्। ॐअथातोऽधीत्याधीत्यानिराकरणम्। प्रतीकम्मे विचक्षणं, जिह्वा मे मधु यद्वचः, कर्णाभ्यां भूरि शुश्रुवे, मा त्वं हार्षीच्छ्रुतम्मयि, ब्रह्मणः प्रवचनमसि, ब्रह्मणः प्रतिष्ठानमसि, ब्रह्मकोशोऽसि, सनिरसि शान्तिरस्यनिराकरणमसि, ब्रह्मकोशम्मे विश, वाचा त्वा पिदधामि वाचा त्वा पिदधामि, स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्म्मयि भवतु, आप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुः श्रोत्रं यशो बलं, यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॐ इति। (पार. गृ. ३।१५)

अथाचारात् अस्मिन्नवसरे बटुं पाठार्थं वाराणसीं प्रस्थापयन्ति।

अथ अध्ययननियमाः। आचार्य्येणाहूतोऽधीयीत। आचार्येणाहूत उत्थाय प्रतिवचनं दद्यात्। शयानं चेदाह्वयति तदाऽऽसीनः। आसीनं चेत्तिष्ठन्। तिष्ठन्तं चेदभिमुखं गच्छन्। अभिमुखमागच्छन्तं चेदभिधावन्। गुरुमेवं वर्त्तमानो ऽध्येता ब्रह्मभूयाय कल्पते इति॥

अथ दक्षिणासङ्कल्पः। अद्येहामुकोऽहम् अमुकशर्म्मणो बटोः वेदारम्भकर्म्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इदं सुवर्णमग्निदैवतं वररूपेणाचार्य्याय कर्मोपदेशकाय तुभ्यं सम्प्रददे इति दद्यात्। आचार्य्यश्चाशिषं दद्यात्॥ ततः विप्रादिः दशयथाशक्ति वा ब्राह्मणान् भोजयिष्ये इति सङ्कल्पं कृत्वा हरिनामानमग्निं संपूज्य विसृजेत्॥

॥ इति वेदारम्भविधिः॥

## (१२) अथ समावर्त्तनम्।

तत्र विधिस्तु वेदारम्भवत्कार्य्यः। "एतदेव व्रतादेशनविसर्गेषु" इति पारस्करवचनात्। अथ स्नास्यन् वररूपेण गवादिकमाचार्य्याय दद्यात्। "गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया" इति याज्ञवल्क्यवचनात्। तत्र सङ्कल्पः—अद्येहामुकोऽहं स्नानाधिकारसिद्ध्ये इमां गां, गोप्रत्याम्नायीभूतं सुवर्णं रजतं वा आचार्य्याय तुभ्यं सम्प्रददे इति संकल्प्य गुरवे वरं दत्त्वा "भो गुरो अहं स्नास्यामि" इति सम्प्रार्थ्य "स्नाहि" इति लब्धानुज्ञः वक्ष्यमाणविधिना स्नायात्। अत्र स्नानादौ ब्रह्मचार्य्येवाधिकारी, स्नायादिति कर्त्रर्थकलकारश्रवणात्॥

अथाचार्य्यः समावर्त्तनवेदीसमीपमागत्य प्राङ्मुख उपविश्य स्वदक्षिणत उदङ्मुखं ब्रह्मचारिणमुपवेश्य गणेशादीन् प्रणम्य

वेद्यां पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य प्रतिज्ञासङ्कल्पं कुर्यात् । अद्येह अमुकोऽहम् अमुकराशेरस्य वटोः स्नातकत्वसिद्ध्यै समावर्त्तनकर्म्म करिष्ये इति सङ्कल्प्य ब्रह्मोपवेशनादिपूर्णपात्रासादनान्ते-

विशेषोपकल्पनीयानि-इन्धनं पञ्चधा विभक्तम्, पर्युक्षणार्थमुदकं, समिधस्तिस्रः, पुनरिन्धनम् पञ्चधा विभक्तम् पर्युक्षणार्थमुदकं च, हरिताः कुशाः स्नानाधिकरणभूताः, सर्वौषधिमिश्रितीर्थवारिपूर्णा अष्टौ कुम्भा दक्षिणोपक्रमा उदक्संस्थाः, सहस्रधारा, सूर्य्योपस्थानार्थं वस्त्रम्, भोजनार्थं दधि, क्षौरार्थं नापितः स्नानार्थं शीतं वारि, औदुम्बरं दन्तधावनम्, उत्सादनीयद्रव्यम्, स्नानार्थम् उष्णमुदकम्, चन्दनम्, अहते वाससी, यज्ञोपवीतं, पुष्पमाला, शिरोवेष्टनम्, कञ्चुकादीनि परिधानवस्त्राणि, कर्णवेष्टकौ, अञ्जनम्, दर्पणः, छत्रम्, उपानहौ, वैणवो दण्डश्चेति ।

ततः पवित्रच्छेदनादि पर्य्युक्षणान्तं कर्म्म कृत्वा द्रव्यदेवताभिध्यानं कुर्य्यात्-अद्येह अस्य वटोः समावर्त्तनकर्म्मणाऽहं यक्ष्ये । तत्र प्रजापतिम्, इन्द्रम्, अग्निं, सोमम्, अन्तरिक्षं, वायुं, ब्रह्माणं, छन्दांऽसि, पृथिवीम्, अग्निं, ब्रह्माणं, छन्दांऽसि, दिवं, सूर्य्यं, ब्रह्माणं, छन्दांऽसि, दिशः, चन्द्रमसं, ब्रह्माणं, छन्दांऽसि, प्रजापतिं, देवान्, ऋषीन्, श्रद्धां, मेधां, सदसस्पतिम्, अनुमतिम्, अग्निं, वायुं, सूर्य्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान्(देवान्) मरुतः स्वर्कान्, वरुणम्, प्रजापतिं, स्विष्टकृतं चाज्येनाहं यक्ष्ये ।

(पित्रादेरन्यस्य वृतस्याचार्यस्य होमकर्तृत्वे पित्रादिः "इदमाज्यं तत्तद्देवतायै मया परित्यक्तं यथादैवतमस्तु न मम" इति त्यागं पूर्वमेव कुर्यात्) ।

ततः *राजपुत्रनामानमग्निम् ॐएतन्तइत्यादि प० ॐभूर्भुवः स्वः राजपुत्रनामाग्ने सुप्रतिष्ठितो वरदो भव इति प्रतिष्ठाप्य ॐतदेवाग्निरित्यादिभिर्मन्त्रैर्नाममन्त्रेण च ध्यानावाहनपाद्यादिनीराजनान्तं सम्पूज्य रेखापूजनं जिह्वापूजनं च कृत्वा दक्षिणं जान्वाच्य ब्रह्मणाऽन्वारब्धो जुहुयात्-ॐप्रजापतये स्वाहा–इदं प्रजापतये न मम इति मनसा, ॐइन्द्राय स्वाहा–इदमिन्द्राय न मम । ॐअग्नये स्वाहा—इदमग्नये न मम । ॐसोमाय स्वाहा—इदꣳसोमाय न मम । इति आघारावाज्यभागौ च हुत्वा अन्वारम्भं त्यक्त्वा वेदारम्भवत्प्रधानाहुतीर्जुहुयात् ॥

तत्र पूर्वं यजुर्वेदाहुतयः–ॐअन्तरिक्षाय स्वाहा–इदमन्तरिक्षाय न मम । ॐवायवे स्वाहा—इदं वायवे न मम । ॐब्रह्मणे स्वाहा—इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा—इदं छन्दोभ्यो न मम ।

अथ ऋग्वेदाहुतयः—ॐपृथिव्यै स्वाहा–इदं पृथिव्यै न मम । ॐअग्नये स्वाहा–इदमग्नये न मम । ब्रह्मणे स्वाहा–इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा—इदं छन्दोभ्यो न मम ।

अथ सामवेदाहुतयः–ॐदिवे स्वाहा–इदं दिवे न मम । ॐसूर्याय स्वाहा—इदꣳ सूर्याय न मम । ब्रह्मणे

---

*"व्रतमध्ये हरिर्नाम व्रतान्ते राजपुत्रकः"—इति लिखितपर्वतीयपद्धतिपुस्तकस्थकारिकावचनमाश्रित्य वेदारम्भे हरिनामाग्निः, समावर्तने च राजपुत्रनामाग्निः निर्दिष्टः । गृह्यासप्रहादौ तु अयमर्थो न दृश्यते । तन्मते वेदारम्भे समुद्भवनामाग्निः, "व्रतादेशे समुद्भव" इति वचनात् । समावर्तने तु वैश्वानरः । "वैश्वानरो विसर्गे तु" इति तत्र पाठात् ॥

स्वाहा—इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा-इदं छन्दोभ्यो न मम ॥

अथाथर्ववेदाहुतयः–ॐदिग्भ्यः स्वाहा–इदं दिग्भ्यो न मम। ॐचन्द्रमसे स्वाहा–इदं चन्द्रमसे न मम। ॐब्रह्मणे स्वाहा–इदं ब्रह्मणे न मम। ॐछन्दोभ्यः स्वाहा–इदं छन्दोभ्यो न मम।

अथ तन्त्रेण सर्वसामान्याहुतयः–ॐप्रजापतये स्वाहा–इदं प्रजापतये न मम । ॐदेवेभ्यः स्वाहा–इदं देवेभ्यो न मम। ॐऋषिभ्यः स्वाहा—इदम् ऋषिभ्यो न मम। ॐश्रद्धायै स्वाहा—इदᳬ श्रद्धायै न मम । ॐमेधायै स्वाहा —इदं मेधायै न मम। ॐसदसस्पतये स्वाहा— इदᳬ सदसस्पतये न मम । ॐअनुमतये स्वाहा–इदमनुमतये न मम।

इत्थं प्रधानाहुतीर्हुत्वा ब्रह्मणाऽन्वारब्धः—(व्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः समावर्तनहोमे विनियोगः)।

ॐभूः स्वाहा—इदमग्नये न मम । ॐभुवः स्वाहा-इदं वायवे न मम। ॐस्वः स्वाहा—इदᳬ सूर्याय न मम। (त्वं नोऽअग्ने, सत्वंनो ऽअग्ने इत्यनयोर्वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते समावर्तनहोमे विनियोगः)।

ॐत्वं नो ऽअग्ने वरुणस्य विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत्—स्वाहा-इदमग्नीवरुणाभ्यां न मम।

ॐस त्वं नो ऽअग्नेऽवमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ। अवयक्ष्व नो वरुणᳬ रराणो

र्वीहि मृडीकꣳ सुहवो न ऽएधि-स्वाहा—इदमग्नीवरुणाभ्यां न मम। (अयाश्चाग्ने इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता समावर्तनहोमे विनियोगः)।

ॐअयाश्चाग्ने ह्यनभिशस्तिपाश्च सत्यमित्त्वमया ऽअसि। अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा-इदमग्नये न मम। (ये॑तशतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वे (देवा) मरुतः स्वर्काश्च देवताः समावर्तनहोमे विनियोगः)।

ॐये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो ऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा-इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो (देवेभ्यो) मरुद्भ्यः स्वर्केभ्यश्च न मम। (उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः वरुणो देवता समावर्तनहोमे विनियोगः)।

ॐउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो ऽअदितये स्याम-स्वाहा-इदं वरुणाय न मम। ॐप्रजापतये स्वाहा-इदं प्रजापतये न मम। ॐअग्नये स्विष्टकृते स्वाहा-इदमग्नये स्विष्टकृते न मम। संस्रवप्राशनम्, मुखमार्जनं, पवित्रप्रतिपत्तिः, प्रणीताविमोकः। ब्रह्मणे पूर्णपात्रदानम्। तत्र सङ्कल्पः-अद्येत्यादि सं. अमुकोऽहम् अमुकराशेरस्य बटोः समावर्तनाङ्गहोमकर्म्मणः साङ्गफलप्राप्तये अपूर्णपूरणार्थं च इदं पूर्णपात्रं समुवर्णं ब्रह्मन् तुभ्यं सम्प्रददे इति संकल्प्य दद्यात्। अक्रन्कर्मेतिमन्त्रपाठः।

ततो ब्रह्मचारी पूर्ववद्गुरुमभिवाद्य अग्नेसुश्रवइत्यादिमन्त्रैः

अग्निपरिसमूहनं कुर्यात्। (अग्नेसुश्रवइत्यादीनां पञ्चानां ब्रह्मा ऋषिर्यजुश्छन्दोऽग्निर्देवता परिसमूहने विनियोगः)।

ॐअग्ने सुश्रवः सुश्रवसं मा कुरु १ इत्येकं काष्ठं गोमयपिण्डं वाऽग्नौ प्रक्षिप्य, ॐयथा त्वमग्ने सुश्रवः सुश्रवा ऽअसि२इति द्वितीयम्, ॐएवं माᳬ सुश्रवःसौश्रवसं कुरु ३ इति तृतीयम्, ॐयथा त्वमग्ने देवानां यज्ञस्य निधिपा ऽअसि ४ इति चतुर्थम्, ॐएवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ५ इति पञ्चमं प्रक्षिपेत्। ततः प्रदक्षिणमग्निं पर्युक्ष्योत्थाय घृताक्ताम् एकां समिधमादाय तिष्ठन् (अग्नये समिधमिति प्रजापतिर्ऋषिराकृतिश्छन्दः समिद्देवता समिदाधाने विनियोगः।)

ॐअग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यसऽएवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे। जीवपुत्रो ममाचार्य्यो मेधाव्यहमसान्यनिराकरिष्णुर्य्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासᳬस्वाहा-इति मन्त्रेण अग्नौ आदध्यात्। एवं द्वितीयां तथा तृतीयां च समिधम् आधाय उपविश्य—

अग्नेसुश्रवइत्यादिपञ्चभिर्मन्त्रैः पूर्ववत्परिसमूहनं पर्युक्षणं च विधाय तूर्ष्णीं पाणी प्रतप्य मुखं विमार्ष्टि वक्ष्यमाणमन्त्रैः (तनूपाऽअग्ने इत्यादीनां मन्त्राणां बृहद्देवा ऋषयः यजुश्छन्दः अग्निर्देवता मुखप्रोञ्छने विनियोगः।)

ॐतनूपा ऽअग्नेऽसि तन्वं मे पाहि १ ॐआयुर्दा ऽअग्नेऽस्यायुर्मे देहि २ ॐवर्चोदा ऽअग्नेऽसि वर्चो मे देहि ३ ॐअग्ने यन्मे तन्वा ऽऊनं तन्मऽआपृण ४

ॐमेधाम्मे देवः सविता-आदधातु ५ ॐमेधां देवी सरस्वती-आदधातु ६ ॐमेधामश्विनौ देवावाधत्तां पुष्करस्रजौ ७ इति सप्तभिर्मन्त्रैः प्रतिमन्त्रं ललाटाच्चिबुकपर्यन्तं मुखं मोञ्छति। ततः (अङ्गानीत्यादीनां प्रजापतिर्ऋषिर्यजुश्छन्दः लिङ्गोक्ता देवताः अङ्गाप्यायने विनियोगः) इत्येवमृष्यादिकं स्मृत्वा ॐअङ्गानि च मऽआप्यायन्ताम्-इति शिरस आपादमङ्गान्यालभ्य जपेत्। ॐवाक्च मऽआप्यायताम्-इति मुखम्। ॐप्राणश्च मऽआप्यायताम्-इति नासिकारन्ध्रे युगपत्। ॐचक्षुश्च मऽआप्यायताम्-इति चक्षुषी युगपत्। ॐश्रोत्रं च मऽआप्यायताम्—इति दक्षिणवामे श्रोत्रे मन्त्रावृत्त्या क्रमेण। ॐयशो बलञ्च मऽआप्यायताम्-इति परस्परव्यत्यासेन बाहू। तत उदकस्पर्शः। अथानामिकयाऽग्नेर्भस्म गृहीत्वा त्र्यायुषाणि कुरुते वक्ष्यमाणमन्त्रैः—(त्र्यायुषमिति नारायणऋषिरुष्णिक्छन्दः अग्निर्देवता त्र्यायुषकरणे विनियोगः)।

ॐत्र्यायुषञ्जमदग्नेः-इति ललाटे। ॐकश्यपस्य त्र्यायुषम्-इति ग्रीवायाम्। ॐयद्देवेषु त्र्यायुषम्-इति दक्षिणांसे। ॐतन्नो ऽअस्तु त्र्यायुषम्—इति हृदि। अथाग्न्यभिवादनं व्यस्तपाणिभ्यां कार्य्यम्। "अमुकगोत्रोऽमुकैतावत्-प्रवरोऽमुकवेदान्तर्गतामुकशाखाध्यायी अमुकशर्म्मा अहं भो अग्ने त्वामभिवादये" इत्यग्निमभिवाद्य ततः व्यस्तपाणिभ्याम् कर्णौ स्पृष्ट्वा अमुकगोत्रइत्यादि पूर्ववदभिवादनवाक्यमुक्त्वा भो गुरो त्वामभिवादये इति गुरुमभिवादयेत्। गुरुश्च आयुष्मान्भव सौम्यामुकशर्मन् इत्याशिषं

दद्यात् ॥ अत्रैव क्वचित्पुस्तके पूर्णाहुतिहोमो निर्दिष्टः । अस्माभिस्तु स्नातकस्य नियमश्रावणान्ते निर्देक्ष्यते ।

अथ परितः कटादिनाऽऽच्छादितस्य स्थलस्यैकदेशेऽग्नेरुत्तरतः दक्षिणोत्तरायतानामाम्रादिपल्लवमुखानां ताम्रादिमयानामनुपहतानाम् उदक्संस्थानां जलपूर्णानां कुम्भानां पुरस्तात् प्रागग्रान् हरितान् कुशानास्तीर्य तेषु उदङ्मुखः स्थितो ब्रह्मचारी "प्राञ्चि उदञ्चि वा कर्माणि भवन्ति" इति न्यायात् दक्षिणस्य प्रथमत्वं परिकल्प्य प्रथमादुदकुम्भादप आदत्ते वक्ष्यमाणमन्त्रेण । येऽप्स्वन्तरिति प्रजापतिर्ऋषिर्यजुश्छन्दः आपो देवताः अपामादाने विनियोगः)

*ॐ येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूखो मनोहाऽस्खलो विरुजस्तनूदूषिरिन्द्रियहा तान्विज-

---

*हे ऽग्नयः ये भवन्तो ऽप्स्वन्तः प्रविष्टाः प्रकृतेषूदकुम्भेषु स्थिताः जलमध्ये कारणत्वेन स्थिता इत्यर्थः। अग्नेरापः इतिश्रुतेः । तत्र ये गोह्यादयोऽत्यमङ्गलाः सन्ति तान्विजहामि प्रक्षिपामि निरस्यामीत्यर्थः । यश्च रोचनः सुमङ्गलस्तमनेन जलेन सह इह कर्मणि गृह्णामि । गूहति संवृणोति प्राणिन इति गोह्यः । ऊदुपधाया गोह इत्यूकाराभावश्छान्दसः । गुहू संवरणे । तथा उपगोह्योऽङ्गतापनः । मयूभिर्विकृतमुखान्कृत्वोक्षयतीति मयूखः । तुरङ्गवदनो मयुरित्यभिधानम् । यद्वा सूर्यमयूखवत्संतापकत्वान्मयूखः । मनस उत्साहं हन्तीति मनोहा । अस्खलः अस्खलनः अप्रतिकार्यः । विविधं रुजतीति विरुजः । तनूः शरीरावयवान्दूषयतीति तनूदूषिः । तनूदूषिः, तनूदुषुरिति वा क्वचित्पाठः । तत्र दुष वैकृत्ये ऽस्मादौणादिक इप्रत्ययः उप्रत्ययो वा । इन्द्रियाणि हन्तीतीन्द्रियहा । एतानमङ्गलानग्नीन् निरस्य मङ्गलं रोचनं गृह्णामीति तात्पर्यार्थः ।

गोह्यादयोऽग्नयो ह्यष्टावमेध्यास्त्वशुभावहाः ।
शुभकृद्रोचनस्त्वेको मेध्यो दीप्तिकरः परः॥ इति वृद्धमनुस्मृतेः ॥

हामि यो रोचनस्तमिह गृह्णामि—इति मन्त्रेण प्रथमोदक-कुम्भादसिगचुलुकेन अपो गृहीत्वा आत्मानमभिषिञ्चति वक्ष्य-माणमन्त्रेण—( तेनेति प्रजापतिर्ऋषिर्यजुश्छन्दः आपो देवताः अभिषेचने विनियोगः )

*ॐतेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्र-ह्मवर्चसाय—इति ॥ १ ॥

अथ द्वितीयोदककुम्भात् पूर्ववत् येऽप्स्वन्तरिति ज-लादानम्। अभिषेचने तु मन्त्रविशेषः—( येनेति प्रजापतिर्ऋ-षिरनुष्टुप्छन्द आपो देवताः अभिषेचने विनियोगः)

+ॐयेन श्रियमकृणुतां येनावमृशताᳪं सुराम्। ये-नाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यशः—इति ॥ २ ॥

अथ तृतीयोदककुम्भात् येऽप्स्वन्तरिति पूर्ववदपो गृहीत्वा (आपोहिष्ठेत्यादितिसृणां सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवताः अभिषेचने विनियोगः)

ॐआपो हि ष्ठा मयोभुवस्ता न ऽऊर्ज्जे दधातन। महे रणाय चक्षसे—इत्यभिषिञ्चेत् ॥ ३ ॥ अथ चतुर्थकुम्भा-त् येऽप्स्वन्तरिति पूर्ववज्जलमादाय—

---

*तेन रोचनाधिष्ठितेन मङ्गलजलेनाहं मामात्मानमभिषिञ्चामि। किमर्थमत आह—श्रियै संपत्त्यर्थं, यशसे कीर्त्यै, ब्रह्मणे वेदार्थ-ज्ञानार्थं, ब्रह्मवर्चसाय तद्वीर्यवत्त्वाय च॥

+हे अश्विनौ येन जलेन जलप्रभावेन भवन्तौ सुराणां श्रियं संपदम् अकृणुताम् अकुरुताम्। (विकरणव्यत्यय आर्षः)। श्रियास्तोयत उत्पन्नत्वात्। येन च सुराम् अमृतम् अवमृशतां युवां प्रापतुः, येन च अक्ष्यौ उपमन्योरक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ, यच्च जलं वां युवयोः तत् प्रसिद्धम् यशः यशोरूपं, तेन मामभिषिञ्चामीत्यनुषङ्गः॥

ॐयो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः-इति अभिषिञ्चेत् ॥ ४ ॥ अथ पञ्चमकुम्भात् येऽप्स्वन्तरिति पूर्ववज्जलमादाय—

ॐतस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः-इति शिरोऽभिषिञ्चेत् ॥ ५ ॥

ततः षष्ठात् ६ सप्तमात् ७ अष्टमाच्च ८ उदककुम्भात् क्रमेण येऽप्स्वन्तरिति मन्त्रेणापो गृहीत्वा तूष्णीं शिरोऽभिषेचनं कुर्यात्।

ततोऽभिषेकावशिष्टेन जलेन समाचारात् सहस्रधारां शिरसि धृत्वा स्नायात्।

अथ पूर्वधृतां मेखलां बटुः वक्ष्यमाणमन्त्रं पठन् स्वयमेव शिरोमार्गेण निस्सारयेत्-(उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः वरुणो देवता मेखलोन्मोके विनियोगः)

ॐउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो ऽअदितये स्याम—इति शिरोमार्गेण मेखलामुन्मुच्य, दण्डं निधायेति सूत्रात् साहचर्याच्च उदगग्रं दण्डमजिनं च तूष्णीं निधाय उपकल्पितमन्यद्वासस्तूष्णीं परिधाय द्विराचम्य आदित्यमुपतिष्ठते वक्ष्यमाणमन्त्रैः-(उद्यन्भ्राजभृष्णुरिति प्रजापतिर्ऋषिः शक्वरी छन्दः आदित्यो देवता आदित्योपस्थाने विनियोगः)

*ॐउद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिः

*हे सूर्य यथा इन्द्रः प्रातर्यावभिः प्रातःसवने गमनशीलैर्मरुद्भिर्देवविशेषैः सेवितस्तिष्ठति, तथा भवान् प्रातः प्रातः काले उद्यन् उदयं गच्छन् यावभिः गमनशीलैर्ऋष्यादिसमगणैः (या प्रापणेऽस्मात् क्वनिप्) सेवितः अस्थात् तिष्ठति। व्यत्ययः आर्षः।

भिरस्थाद्दशसनिरसि दशसनिं मा कुर्व्याविदन्मा गमय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा याव-भिरस्थाच्छतसनिरसि शतसनिं मा कुर्व्याविदन्मा ग-मय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं याव-भिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्व्याविद-न्मागमय–इति मन्त्रैः ऊर्ध्वबाहुः सूर्योपस्थानं कुर्यात्।

ततो दधि तदभावे तिलान् दक्षिणहस्तमध्यगतसोमतीर्थेन प्राश्य *जटालोमनखानि संहृत्य वपननिमित्तकं शीतलोदकेन

---

किंभूतो भवान्, भ्राजभृष्णु भ्राजभरणशील। भ्राजृ दीप्तौ-अस्माद्‌च्। भ्राज विभर्त्तीति भ्राजभृष्णु। डुभृञ् धारणेऽस्मा ष्णुच। किञ्च यतस्त्वं प्रातःसवने दश गाः सनोति ददातीति दशसनिरसि। षणु दाने क्रिप्रत्ययः। अतो मामपि दशसनिं दशगोदक्षिणादातारं कुरु। अलिङ्गे गौ सर्वत्रेति कात्यायनेन परिभाषितत्वात्सङ्ख्यानुवृत्तौ गावः प्रत्यतव्याः। किञ्च हे आविदन् आसमन्ताद्वेत्तीति वा विन्दतीतिवेति विग्रहः। हे सर्वज्ञ मा मा गमय प्रापय। सर्वज्ञत्वमिति शेषः। किञ्च दिवाया-वभिर्माध्यन्दिनसवनानुगामिभिर्मरुद्भिः सह माध्यन्दिने सवने इन्द्रो यथा ऽस्थात् तिष्ठति तथा भवानपि मध्याह्ने उद्यन् ऊ-र्ध्वं यन् अस्थात्तिष्ठति। यतस्त्वं तत्र शतसनिरसि अतो मामपि शतसनिं कुर्वित्यादि पूर्ववत्। एवं सायंयावभिस्तृतीयसव-नानुयायिभिर्मरुद्भिः सहेत्याद्यपि व्याख्येयम्॥

* इदं द्वादशवार्षिकादिव्रतान्ते समावर्त्तनपक्षे। उपनयन-दिने एव समावर्तनानुष्ठाने तु केशमुण्डनस्य पूर्वं जातत्वेन मुखलोम्नामनुद्गमेन कश्चित् उद्गमेऽपि केशान्तसंस्कारस्यापि स-मावर्त्तनसंस्कारात्पूर्वमनुष्ठेयत्वेन तद्दिने एव पूर्वं मुखलोम्नामपि वपनस्य जातत्वेन प्रयोजनाभावात् केशश्मश्रुवपनं निवर्तते। एवमेव चौलसंस्कारे मुण्डनस्य जातत्वेन उपनयनेऽपि मुण्डनं निवर्तते। नखकर्तनमात्रं समावर्तने कार्यमित्येके। पक्ष रामाण्डा-

स्नात्वा आचम्य ततः ब्राह्मणः द्वादशाङ्गुलदीर्घेण, क्षत्रियो दशाङ्गुलेन, वैश्योऽष्टाङ्गुलेन कनिष्ठिकाग्रस्थूलेन उदुम्बरकाष्ठेन दन्तधावनं वक्ष्यमाणमन्त्रेण कुर्यात्–(अन्नाद्यायेत्याथर्वणऋषिरनुष्टुप्छन्दः सोमो देवता दन्तधावने विनियोगः)

*ॐअन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत् । स मे मुखं प्रमाक्ष्यते यशसा च भगेन च–इति । तत आचम्य सुगन्धिद्रव्ययुक्तेन कटुतैलयुक्तयवादिचूर्णेन शरीरोद्वर्तनं कृत्वा तप्तोदकेन सशिरस्कं स्नात्वाऽऽचम्य चन्दनाद्यनुलेपनं गृहीत्वा अनुलेपनेन हस्तावुपलिप्य नासिकयोर्मुखस्य चोपगृह्णीते वक्ष्यमाणमन्त्रेण (प्राणापानाविति प्रजापतिर्ऋषिर्यजुश्छन्दः लिङ्गोक्ता देवता चन्दनोपसंग्रहणे विनियोगः)

+ॐप्राणापानौ मे तर्पय–इति नासिकायाम् । ॐचक्षुर्मे तर्पय–इति चक्षुषोः । ॐश्रोत्रं मे तर्पय–इति श्रोत्रयोः । ततः अपसव्यं विधाय पाणी प्रक्षाल्य तदवनेजनं दक्षिणाभिमुखः पितृतीर्थेन दक्षिणस्यां दिशि निषिञ्चेत् वक्ष्यमाणमन्त्रेण—

---

त्यादिसंमतः । प्रयोजनाभावेऽपि स्पर्शसंस्कारमात्रं क्षुरेण कार्यमेवेत्यपरः उपेन्द्रादिसंमतः वृद्धसंमतश्च । इदं च पक्षद्वयं मिताक्षराटीकायां(३७पृ.) बालंभट्टेन प्रदर्शितम इत्यधिकं तत एवावगन्तव्यम् ॥

*हे दन्ताः यूयम् अन्नाद्याय अन्नभक्षणाय व्यूहध्वम् आत्मशुद्ध्यर्थम् एकपङ्क्तिनिविष्टा भवत । यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत्, अतः स एव मे मुखं प्रमार्क्ष्यते शोधयिष्यति यशसा कीर्त्या, भगेन भाग्येन च । च-द्वयं मिथः समुच्चये । दन्तधावनस्य नित्यकाम्यत्वादुभयफलसम्बन्धः ॥

+भो अनुलेपनाधिदेवते मे प्राणापानौ वायू गन्धेन तर्पय प्रीणय । तृप प्रीणने । एवं चक्षुर्मे इत्यादौ चक्षुस्तर्पणं रूपेण, श्रोत्रतर्पणं सच्छब्दश्रवणेनेति द्रष्टव्यम् ॥

(पितर इति प्रजापत्यश्विसरस्वत्य ऋषयो यजुश्छन्दः पितरो देवताः निषेचने वि०)

*ॐपितरः शुन्धध्वम्-इति पाण्योरवनेजनजलं भूमौ निषिञ्चेत् । पित्र्यत्वात्सव्येनोदकस्पर्शः ॥ ततोऽनुलेपानन्तरं केशवादिनामभिर्द्वादश तिलकान्धारयेत् । यथा ॐकेशवाय नमः ललाटे १ ॐनारायणाय नमः उदरे २ ॐमाधवाय नमः हृदये ३ ॐगोविन्दाय नमः कण्ठकूपके ४ ॐविष्णवे नमः दक्षिणकुक्षौ ५ ॐमधुसूदनाय नमः दक्षिणबाहौ ६ ॐत्रिविक्रमाय नमः कर्णमूलयोः ७ ॐवामनाय नमः वामकुक्षौ ८ ॐश्रीधराय नमः वामबाहौ ९ ॐपद्मनाभाय नमः पृष्ठदेशे १० ॐदामोदराय नमः ककुदि ११ ॐवासुदेवाय नमः मूर्ध्नि १२ इति । ललाटे वंशपत्राकृतिकं मध्यशून्यं धारयेदिति च । एवं तिलकान् धृत्वा वक्ष्यमाणमन्त्रं जपेत् । (सुचक्षा इति प्रजापतिर्ऋषिः यजुश्छन्दः सविता देवता जपे विनियोगः)

+ॐसुचक्षा ऽअहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासम्-इति ॥

---

*अस्य मन्त्रस्य स्वाद्वीं त्वा इति (१९) अध्याये पितृभ्यः स्वधायिभ्य इति (३६) कण्डिकाया सप्तमखण्डरूपत्वात् तस्याध्यायस्य च सौत्रामणीष्टयङ्गत्वात् सौत्रामणीमन्त्राणां च "प्रजापतेरार्षमश्विनो सरस्वत्याश्च" इति सर्वानुक्रमसूत्रेण प्रजापत्यश्विसरस्वत्यृषिकत्वबोधनात्, तथैव महीधरभाष्ये उक्तत्वाच्च इन्द्रोल्लेखऋषिप्रदर्शकवाक्ये प्रामादिक इति बोध्यम् । हे पितर शुन्धध्व पाणिप्रक्षालनजलेन शुद्धा यूय भवतेति मन्त्रार्थः ॥

+ हे सवित अहमक्षीभ्याम् ईदन्तत्व छान्दस नेत्रगोलकाभ्यां

अथोपकल्पितमहतं वासः परिधत्ते वक्ष्यमाणमन्त्रेण (परिधास्यै इत्याथर्वणऋषिः पङ्क्तिश्छन्दो वासो देवता अधोवस्त्रपरिधाने विनियोगः)

*ॐपरिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये-इति। ततो द्विराचम्य द्वितीययज्ञोपवीतधारणं कुर्यात्।

ब्रह्मचारिण एकं तु स्नातस्य द्वे बहूनि वेति वचनात्। अत्र केचित् नूतनं यज्ञोपवीतद्वयं धारयित्वा पूर्वधृतं यज्ञोपवीतं त्याज्यमिति वदन्ति। अन्येतु भङ्गादिरूपत्यागनिमित्ताभावात्पूर्वधृतं न त्याज्यम्। तेन एकमेवापरं यज्ञोपवीतं धार्यमित्याहुः।

अथोत्तरीयम् (यशसामेत्याथर्वणऋषिः पङ्क्तिश्छन्दो लिङ्गोक्ता देवता उत्तरीयपरिधाने विनियोगः)

+ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती।

---

क्ष्णा सुचक्षाः साधु चष्टे इति सुचक्षा सुदर्शनो, भूयासमित्युत्तरेणान्वय, मुखेन सुवर्चा· सुतेजाः भूयास, कर्णाभ्या सुश्रुत्सुश्रवणो भूयासम्॥

* हे वस्त्र त्वाम् अह यत्परिधास्यै ऐकारश्छान्दस परिधास्ये, तत्र यशो धास्यै यशो धारयामि। यद्वा परिधास्यै अनेकवस्त्रपरिधानाय, यशोधास्यै कीर्त्याधानाय, डुधाञ् धारणे औणादिकः सिप्रत्य·। धासिमिव प्रभरेत्यादौ तथा दर्शनात्। दीर्घायुत्वाय निर्दुष्टजीवनाय च त्वां सव्ययिष्ये इत्यन्वय। कीदृशोऽह, वासोदेवतानुग्रहेण जरदष्टि-जरन्ती अष्टिस्तनुर्यस्य स· आयुष्परिपाकवान्, पुरूची पुरुभिर्बहुभि· पुत्रधनादिभिः उचः सयोगोऽस्येति पुरूची। उच समवाये। किम्भूत वास, रायस्पोष धनस्य पुष्टिकरम्। किञ्च त्वत्सम्बन्धेनाह शत शरदो जीवामि॥

+हे वस्त्र द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा माम् अपि

यशोभगश्च माऽविन्दद्यशो मा प्रतिपद्यताम्–इति ।
एक एव वासश्चेत्तदा पूर्वोत्तरवर्गेणाच्छादयेत् ।

ततः द्विराचम्य मालारूपाः सुमनसो गृह्णाति वक्ष्यमाण-मन्त्रेण—(याऽआहरदिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवताः पुष्पमालाग्रहणे विनियोगः)

*ॐया ऽआहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ताऽअहं प्रतिगृह्णामि यशसा च भगेन च-इति ।
अथाबध्नीते वक्ष्यमाणमन्त्रेण–(यद्यशोऽप्सरसामिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवताः पुष्पमालाबन्धने विनियोगः)

+ॐयद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन

---

न्दत् विन्दतां प्राप्नुताम्। विद्लृ लाभे। तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मां विन्दतां, भगः सूर्यश्च यशसा युक्तोऽविन्दत् विन्दतु । एवमेतैः सपादितं यशो मा मां प्रतिपद्यतां, मा सदाऽऽश्रोत्विरयथ । अविददिति पाठे लुममाव आर्षं ॥

उत्तरीयमाविकादिकमपि ग्राह्यं, न तु परिधानीयम् । "आविकं असरं चैव परिधाने परित्यजेत् । शस्तं प्रावरणे प्रोक्तं स्पर्शदोषो न हि द्वयोः" ॥ इति लघ्वाश्वलायनस्मृतिवचनात् (१ । १९) । "नग्नः कौशेयकेवल" इति नन्दपण्डितकृतपराशरस्मृतिटीकायां भृगुवचनाच्च । "परिधेयं सदा वासः कार्पासं सदशं सितम् । क्षौमं वा कुतपं वाऽपि न कौशेयं कदाचन' इति तत्रैव जातूकर्ण्यवचनाच्च ॥

*जमदग्निर्ऋषिः याः सुमनसः पुष्पाणि श्रद्धायै धर्मादरार्थं, मेधायै धारणाशक्त्यै, कामाय अभिलाषपूर्तये, इन्द्रियाय तत्पाटवाय च आहरत् आददे ताः सुमनसः यशसा च भगेन च निमित्तेनाहं प्रतिगृह्णामि । चद्वयं मिथः समुच्चये ॥

+हे सुमनसः इन्द्रोऽप्सरसामुर्वश्यादीनां कुसुमावबन्धनेन यद्यशोऽतिसौन्दर्यं सर्वजनप्रियत्वं वा चकार तेन यशसा निमित्तभूतेन ग्रथितास्तन्तुना स्यूता युष्मानाबध्नामि । तद्यशो मयि

संग्रथिताः सुमनस ऽआबध्नामि यशो मयि—इति । अथोष्णीषेण शिरो वेष्टयते वक्ष्यमाणमन्त्रेण—(युवासुवासा इति विश्वामित्रऋषिस्त्रिष्टुप्छन्दः(उष्णीषं)शिरो देवता शिरोवेष्टने वि०)

*ॐ युवा सुवासाः परिवीत ऽआगात्स ऽउ श्रेयान् भवति जायमानः । तन्धीरासः कवय ऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः—इति । ततोऽन्यान्यपि कञ्चुकादीनि वासांसि समाचारात् परिधाय कर्णवेष्टकौ परिधत्ते वक्ष्यमाणमन्त्रेण—(अलंकरणमिति प्रजापतिर्ऋषिः यजुश्छन्दः अलंकरणं दैवतम् अलंकरणे विनियोगः)

+ॐ अलङ्करणमसि भूयोऽलङ्करणं भूयात्—इति कुण्डलं दक्षिणकर्णे परिधाय अनेनैव मन्त्रेण वामकर्णे दधाति । अथाक्षिणी अञ्जनेनाङ्क्ते वक्ष्यमाणमन्त्रेण-(वृत्रस्येति प्रजापतिऋषिर्यजुश्छन्दः अञ्जनं देवता अक्ष्यञ्जने वि०)

÷ॐ वृत्रस्यासि कनीनकश्चक्षुर्दा ऽअसि चक्षुर्मे देहि—इत्यनेन दक्षिणं संस्कृत्य अनेनैव वामं संस्करोतीति

---

विषये सदा, अस्त्विति शेषः । कीदृशं, विपुलं-विशालं, पृथु-सन्ततं दीर्घम् ॥

*यौति गुणानेकीकरोतीति युवा यु मिश्रणे, सुवासाःशोभनवस्त्रः, परिवीतः उष्णीषेण शिरसि वेष्टितः अयं स्नातक आगतः । स उ- स एव एवंगुणविशिष्टः सन् श्रेयान् भवति । तम् एनं स्नातकम् धीरासः धीराः कवयः क्रान्तदर्शिनः स्वाध्यः शोभनचित्तवृत्तयः विद्वांसः मनसा चित्तेन देवयन्तः देवान् कामयमानाः उन्नयन्ति उत्कर्षं गमयन्ति ॥

+हेकुण्डलदैवत त्वमलङ्करणम् अलंक्रियते येनेत्यलङ्करणमसि-अतस्त्वां धारयतो मम भूयो बहु वारंवारं वा ऽलङ्करणं भूयात् ॥

÷य. सं. अ. ४ कं. ३ द्य. २ हे अञ्जन त्वं वृत्रस्यासुरस्य

हरिहरादयः। वामं पूर्वं दक्षिणं पश्चात् बह्वृचश्रुत्यनुरोधादिति गदाधरः। तत आत्मानमादर्शे वक्ष्यमाणमन्त्रेण प्रेक्षते—(रोचिष्णुरिति प्रजापतिर्ऋषिर्यजुश्छन्दः आदर्शो देवता आदर्शे मुखप्रेक्षणे विनियोगः)।

*ॐरोचिष्णुरसि। ततश्छत्रं प्रतिगृह्णाति वक्ष्यमाणमन्त्रेण (बृहस्पतेश्छदिरिति गौतमऋषिः आर्ची बृहती छन्दः छत्रं देवता छत्रग्रहणे वि०)

+ॐबृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि तेजसो यशसो माऽन्तर्द्धेहि—इति॥ तत उपानहौ युगपत्प्रतिमुञ्चते वक्ष्यमाणमन्त्रेण—(प्रतिष्ठे स्थ इति विश्वामित्रऋषिर्विराड्छन्दो लिङ्गोक्ता देवता उपानत्प्रतिमोके वि०)

⊥ॐप्रतिष्ठे स्थो विश्वतो मा पातम्—इति॥ ततो वैणवं दण्डमादत्ते वक्ष्यमाणमन्त्रेण—(विश्वाभ्य इति याज्ञवल्क्यऋषिर्यजुश्छन्दो दण्डो देवता दण्डग्रहणे विनियोगः)—

---

कनीनकोऽसि नयनमध्यगतमण्डलरूपाऽसि। चक्षुर्दा असि कनीनिकारूपत्वात्त्वं दृष्टिप्रदोऽसि, अतो मे मह्यं चक्षुर्देहि सम्यग् दृष्टिपाटवं प्रयच्छ॥

*हे आदर्श त्वं रोचिष्णुः प्रकाशनशील असि॥

+हे छत्र त्वं बृहस्पतेर्देवगुरोः छदिर्यमादिनिवर्त्तकोऽसि अत कारणात्पाप्मनो निषिद्धाचरणात् माम-तर्धेहि व्यवहितं कुरु। तेजसो यशसश्च सकाशात्तु मा अन्तर्धेहि। मा-शब्दोऽत्र निषेधार्थः। तेजोयशोभ्यां युक्तं मां कुर्वित्यर्थः॥

⊥हे उपानहौ युवां प्रतिष्ठे प्रतितिष्ठत्याभ्यामिति प्रतिष्ठे स्थितिहेतू स्थ भवथ अतो विश्वतः सर्वस्मात्कण्टकादेः मा मां पातं रक्षतम्॥

*ॐविश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्व्वतः-इति ।

अत्र मातृपूजनादि पूर्णपात्रदानान्तम् आचार्यस्य कृत्यम्, अष्टकलशाभिषेकादि दण्डग्रहणान्तं ब्रह्मचारिणः बटोः कृत्यम् । वासश्छत्रोपानद्दण्डव्यतिरिक्तानि दन्तधावनादीनि मन्त्रवन्ति सदा कुर्यात्, वासःप्रभृतीनि तु नूतनान्येव मन्त्रवन्ति धारयेत् । तत आचार्यं सम्पूज्य वरं दद्यात् । गौर्ब्राह्मणस्य वर उच्यते । तत्र संकल्पः अद्येहामुकोऽहं मम स्नातकत्वसिद्धये कृतस्य समावर्त्तनकर्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इमां गां गोनिष्क्रयीभूतं सुवर्णं रजतं वा वररूपेण आचार्याय तुभ्यं संप्रददे ॐतत्सत् इति दद्यात् ।

तत आचार्यमुखात् स्नातको नियमान् शृणुयात् । तत्राद्यं सूत्रं—(पारस्करगृह्यकां० २ कं० ७)

स्नातस्य यमान्वक्ष्यामः-इति ॥ १ ॥

स्पष्टार्थम् ॥

कामादितरः ॥ २ ॥

कामात् इच्छया इतरः द्विजातेरन्यः शूद्रोऽपि यमेषु अधिक्रियते ॥

नृत्यगीतवादित्राणि न कुर्यान्नच गच्छेत् ॥ ३ ॥

नृत्यं तालाद्यनुकार्य्यङ्गविक्षेपः । गीतं तालोपनिबद्धपड्जादिस्वरविशेषरागध्वनिः । वादित्रं तालाद्यनुकारि ततादि-

---

*हे वैणवदण्ड त्वं विश्वाभ्यः सर्वाभ्यो नाष्ट्राभ्यो राक्षसादिप्रजाभ्यः सर्वतः सर्वावस्थासु मा मां परिपाहि रक्ष । उपध्मानीयाभावश्छान्दसः ॥

भेदेन चतुर्विधम्। एतानि स्वयं न कुर्यात्। नृत्यादि अन्यैः प्रयुक्तं द्रष्टुं श्रोतुं च न च गच्छेत्॥

क्षेमे रात्रौ ग्रामान्तरं न गच्छेन्नच धावेत्॥ ४॥

क्षेमे राजादिभयराहित्ये सति रात्रौ ग्रामान्तरं न गच्छेत्, न च धावेत्॥

उदपानावेक्षण-वृक्षारोहण-फलप्रपतन-सन्धिसर्पण-विवृतस्नान-विषमलङ्घन-शुक्तवदन-संध्यादित्यप्रेक्षण-भिक्षणानि न कुर्यात्॥ ५॥

अस्यार्थः। उदपानं कूपादि तस्य उपरिष्टात्स्थित्वा कौतुकादिना अधोमुखो भूत्वा अवेक्षणं दर्शनं न कुर्यात्। वृक्षारोहणं वृक्षोपरि गमनम्। फलप्रपतनं तथा ऽपक्वफलत्रोटनम्। संधिसर्पणं-संधिः कुद्वारं जीर्णद्वारं वा तेन सर्पणं गमनं न कुर्यात्। यद्वा संधौ संध्यामनुपास्य सर्पणमध्वगमनं न कुर्यात्। अथवा अनुरक्तयोः—पुत्रजनकयोः, मित्रयोः, दंपत्योः, भ्रात्रोर्वा ऐक्यं संधिः। तत्र भेदाय मध्ये गमनं न कार्यम्। विवृतस्नानं नग्नस्नानम्। विषमलङ्घनं गर्तादिर्लङ्घनम्। शुक्तं लज्जाकरामङ्गलकरदुःखकरेति त्रिविधं निष्ठुरवाक्यम्, तस्य वदनं भाषणम्। सन्ध्यादित्यप्रेक्षणं तिसृषु संध्यासु आदित्यावलोकनम्। तदुक्तम्—

नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कथंचन।
नोपरक्तं न वारिस्थं न मध्ये नभसो गतमिति॥

भिक्षणं सिद्धान्नयाचनम्। एतानि क्षेमे सति न कुर्यात्॥

वर्षत्यप्रावृतो व्रजेत्॥ ६॥

देवे इन्द्रे वर्षति सति अप्रावृतः अनाच्छादितः सन् (अयमिति प्रजापतिर्ऋषिर्जगती छन्दः वज्रो देवता वृष्टिजपे विनियोगः)

ॐअयस्मे व्वज्रः पाप्मानमपहनत्-इमं मन्त्रं प- ठन् व्रजेत् गच्छेत् ॥

अप्स्वात्मानं नावेक्षेत ॥ ७ ॥

अप्सु जलेषु आत्मानं प्रतिबिम्बितं मुखं न पश्येत् । एतच्च तैलादिष्वप्युपलक्षणम् । घृते तु छायादर्शनं कर्तव्यमेव ॥

**अजातलोम्नीं विपुंस्सीं षण्ढं च नोपहसेत् ॥ ८ ॥**

अजातलोम्नीं भ्रूनेत्रादिस्थाने रोमरहितां, विपुंसीं पुरु- षचिह्नश्मश्र्वादियुक्ता स्त्रियं नोपहसेत्, न च गच्छेत् । षण्ढं न- पुंसकं च नोपहसेत् । दोषाधिक्यार्थेनत् ॥

**गर्भिणीं विजन्येति ब्रूयात्, सकुलमिति नकुलं, भगालमिति कपालं, मणिधनुरितीन्द्रधनुः ॥ ९ ॥**

गर्भिणीं स्त्रियं विजन्या इत्येवं ब्रूयात् वदेत् । नकुलं पशुविशेषं सकुलमिति ब्रूयात् । कपालं कर्परं मनुष्यादिशिरः भगालमिति ब्रूयात् । इन्द्रधनुः मणिधनुरिति ब्रूयात् ॥

**गां धयन्तीं परस्मै नाचक्षीत ॥ १० ॥**

स्ववत्सं पाययन्तीं गां "गौस्ते पाययति वत्सम्" इति परस्मै तत्स्वामिने नाचक्षीत न वदेत् ॥

**उर्वरायामनन्तर्हितायां भूमावुत्सर्पंस्तिष्ठन्न मूत्र- पुरीषे कुर्यात् ॥ ११ ॥**

उर्वरायां सस्यवत्यां, तृणैरनन्तर्हितायां च भूमौ, उत्सर्पन् उत्प्लवमानः सन्, तिष्ठन् ऊर्ध्वः सन् मूत्रपुरीषे न कुर्यात् । एतच्च फालकृष्टभूमि-मार्ग-जीर्णदेवायतन-प्राणिगर्तादीनाम- प्युपलक्षणार्थम् ॥

**स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत ॥ १२ ॥**

यत्नं विना पतितेन अयाज्ञियेन काष्ठशकलेन गुदं प्रमृजीत

भोञ्जेत् । एतच्च लोष्ठादीनामप्युपलक्षणम् ॥

विकृतं वासो नाच्छादयीत ॥ १३ ॥

विकृतं स्मृतिशिष्टाचाराभ्यां विरुद्धं नीलादिरक्तं वासो न परिदधीतेत्यर्थः । पालाशादिपुष्परक्तं वासस्तु परिदध्यादेव ॥

दृढव्रतो वधत्रः स्यात् ॥ १४ ॥

दृढं स्थिरं व्रतं प्रारब्धं कर्म्म यस्य सः, असमाप्तकर्मा न स्यादित्यर्थः । वधात् घातात् आत्मानं त्रायते इति वधत्रः । स च शृङ्गिनखिदंष्ट्रिभ्यः सम्भवति । तेभ्यो रक्षां कुर्वीतेत्यर्थः ॥

सर्वत आत्मानं गोपायेत् सर्वेषां मित्रमिव ॥१५॥

आत्मानं सर्वतो रक्षेत् । सर्वेषां स्वेषां परेषां वा मित्रमिव भूयात् । मैत्रो ब्राह्मण उच्यते इति स्मरणात् ॥

इति साधारणशिक्षानियमाः ॥

अथ समावर्त्तनानन्तरं त्रिरात्रनियमाः ।

(कं० ८) तिस्रो रात्रीर्व्रतं चरेत् ॥ १ ॥

समावर्तनानन्तरं त्रिरात्रं वक्ष्यमाणं व्रतं कुर्यात् ।

अमांसाश्यमृन्मयपायी ॥ २ ॥

भवेत् । मांसं न भक्षयेत् । मृन्मयेन पात्रेण जलं न पिबेत् । एतच्चालाबुतुम्ब्यादीनामुपलक्षणम् ॥

स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनमसंभाषा च तैः ॥ ३ ॥

स्त्री नारी, शूद्रश्चतुर्थो वर्णः, शवो मृतकः, कृष्णशकुनिः काकः, श्वा कुक्कुरः । एतेषां दर्शनं भाषणं च त्रिरात्रं वर्जयेत् ॥

शवशूद्रसूतकान्नानि च नाद्यात् ॥ ४ ॥

शवान्नं मृताशौचान्नं, शूद्रान्नं भोज्यान्नस्यापि नापितादेरवर-

वर्णस्यान्नं, सूतकान्नं जाताशौचान्नं च नाद्यात् ॥

मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात् सूर्याच्चात्मानं नान्तर्दधीत ॥ ५ ॥

आतपे घर्मे मूत्रादि न कुर्यात् । छत्रवस्त्रादिना सूर्यात् आत्मानं शरीरं न गोपायेत् ॥

तप्तेनोदकार्थान्कुर्व्वीत ॥ ६ ॥

शौचादीन् तप्तजलेन कुर्यादित्यर्थः ॥

अवज्योत्य रात्रौ भोजनम् ॥ ७ ॥

दीपादि मज्वलय्य रात्रौ भोजनं कुर्यान्नान्धकारे इत्यर्थः ॥

सत्यवदनमेव वा ॥ ८ ॥

अथवा सत्यवदनमेव नियमं कुर्यात् । अनृतं मिथ्याभाषणं न कुर्यात् । एवं शिक्षयित्वा एतान्नियमान्करिष्यामीति वटुमवधार्य—

आचार्यः एनं वटुं स्वपादयोः पातयित्वा पूर्णाहुतिं जुहुयात्-समाचारात्, "विवाहे व्रतबन्धे च शालायां चौलकर्मणि । गर्भाधानादिसंस्कारे पूर्णाहुतिं न कारयेत्" ॥ इति पूर्वोक्तनिषेधस्य समावर्तनेऽभावाच्च । तत्र सङ्कल्पः-अद्येह अमुकोऽहम् अस्य पुत्रस्य समावर्तनकर्मणः न्यूनातिरिक्तदोषपरिहारार्थं सर्वाभ्युदयप्राप्तये च मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये इति सङ्कल्प्य मृडाग्निं गन्धाद्युपचारैः अभ्यर्च्य स्रुचि स्रुवेण द्वादशकृत्वः स्थाल्या आज्यं गृहीत्वा तत्र घृताक्तं रक्तवस्त्रखण्डावृतं सुपूजितं सुभूषितं नारिकेलादिफलं निधाय अधोमुखेन स्रुवेण पिधाय उत्थाय तिष्ठन् समिद्धेऽग्नौ यवप्रमितधारया मूर्धानंदिवइति मन्त्रेण प्रथमभा-

गोक्तेन (१७९) जुहुयात् । स्रुगभावे घृतपूर्णेन स्रुगुक्तविशेषणविशिष्टेन स्रुवेण उपविश्य जुहुयात् ।

(अत्रेतिकर्तव्यतामाह संग्रहकारः—"एवं यथोचितं शक्त्या हुत्वा पूर्णाहुतिं चरेत् । घृतेनापूर्य स्रुग्गर्तमूर्ध्वेनक्स्रुचि स्रुवम् ॥ निधायाधोमुखं, न्यस्येत्स्रुवाग्रे कुसुमाक्षतम् । पश्चाद्वामपुरोदक्षकराभ्यां शङ्खधारया ॥ गृहीत्वा स्रुक्स्रुवौ मन्त्री स्रुवाग्रन्यस्तलोचनः । ऋज्वकायः प्रसन्नात्मा समपादः समुत्थितः ॥ स्थिरधीर्जुहुयादग्नौ यवप्रमितधारया । पूर्णाहुतिरियं प्रोक्ता सर्वकर्मप्रपूरणी" ॥ इति । विधानपारिजाते आश्वलायनः—आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुवम् । तया चाज्याहुतिः कार्या सा पूर्णाहुतिरिष्यते ॥ स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुरिति) ।

ततः स्नातकस्य पित्रादिः चौलादिसमावर्तनान्तकर्मणां परिपूर्त्यर्थं गोदानं कुर्यात् । आचार्यं सम्पूज्य देयद्रव्यं संप्रोक्ष्य संपूज्य संकल्प्य कर्मोपदेशकायाचार्याय दद्यात् । तत उत्तराङ्गत्वेन राजपुत्रनामाग्नेः पूजनं विधाय उत्तराङ्गत्वेन नवग्रहादीनां पूजनं कुर्यात् । स्नातकेन सह ग्रहवेदीसमीपमागत्य आसने उपविश्याचम्य सङ्कल्पं कुर्यात्—ॐविष्णुः ३ अद्येहेत्यादि सं० अमुकोऽहम् अमुकस्य पुत्रस्य कृतानां चूडोपनयनवेदारम्भसमावर्तनकर्मणाम् उत्तराङ्गत्वेन सगणाधिपमातॄणां ब्रह्मवरुणाधिदेवतादिसहितादित्यादिनवग्रहाणां च पूजनं करिष्ये इति । ततः ॐगणपतये नमः ॐमातृभ्यो नमः ॐआदित्याय नमः इत्यादिनाममन्त्रैः ध्यानादिनीराजनान्तं संपूज्य ब्रह्मामुरारिरिति संप्रार्थ्य प्रतिमादानसंकल्पं कुर्यात्—अद्येहेत्यादि सं० अमुकोऽहम् अमुकराशेः पुत्रस्य चूडोपनयनवेदारम्भसमावर्तन-

कर्मणां ग्रहयागस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च इमाः सुपूजिताः सौवर्णीः आदित्यादिनवग्रहप्रतिमाः वस्त्रच्छन्नाः आचार्यादिब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् । कृतैतत्प्रतिमादानप्रतिष्ठासिद्ध्यर्थम् इदं द्रव्यं च ब्राह्मणेभ्यो विभज्य दास्ये इति संकल्प्य प्रतिमाः दत्त्वा जापकादिभ्यो दक्षिणां दद्यात् । ततो भूयसीं संकल्पयेत्—अद्येहेत्यादि सं० अमुकोऽहम् अमुकराशेः पुत्रस्य चूडोपनयनवेदारम्भसमावर्त्तनकर्मणां न्यूनातिरिक्तपरिहारार्थं साद्गुण्यार्थं च इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो नटनर्त्तकगायकेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये इति सं०दद्यात् । ततः समावर्तनकर्मणः साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं च यथोपपन्नेन सिद्धान्नेन दश यथासंख्यकान् वा ब्राह्मणान्भोजयिष्ये इति संकल्प्य राजपुत्रनामाग्निं विसृज्य मातॄणां नवग्रहादीनां च विसर्जनं कुर्यात्—

*ॐउस्रावेतं धूर्षाहौ युज्येथामनश्रू ऽअवीरहणौ ब्रह्मचोदनौ । स्वस्ति यजमानस्य गृहान् गच्छतम् ॥ यान्तु देवगणाः सर्वे पूजामादाय मामिकाम् । इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ गच्छगच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर ॥ इति ।

---

*यस्त्यनयोर्जगदिति उस्रौ जगदधिष्ठानभूतौ हे प्रकृतिपुरुषौ एतम्—पुनर्यज्ञे वितते सति आगच्छतम्, युज्येथां—युक्तौ च भवतम् । युवयोर्योगं विना कर्मप्रचारासम्भवात् । कीदृशौ युवां, धूर्षाहौ—कर्मधुरं वोढुं शक्तौ, अनश्रू—अश्रुरहितौ सोत्साहौ, अवीरहणौ—वीराणां कर्मणि सोत्साहानां हननं नाशमकुर्वाणौ, ब्रह्मचोदनौ—ब्रह्मणो ब्राह्मणस्य कर्माणि प्रेरकौ च । इदानीं गृहान् स्वस्वरूपं गच्छतम् । युष्मत्प्रसादात् यजमानस्य स्वस्ति कल्याणं भवतु । य. सं. अ. ४ मं. ३३ ।

अथ कर्म्मसर्वाङ्गपूर्त्यै ॐयस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐअच्युताय नमः ३ । प्रमादात्कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ॐविष्णवे नमः ३ । ॐकायेन वाचेति ईश्वरार्पणं कुर्यात् ।

ततः घृते छायां स्नातकं दर्शयित्वा अभिषेकतिलकरक्षाबन्धनमन्त्रपाठादि कारयेत् । ततः बहिःशालातः शिविकादियानेन स्वस्तिवाचन—शङ्खघण्टादिशब्दपुरःसरं पिष्टातकस्वस्तिकाङ्कितगोधूमशष्कुल्यलंकृतशुचिवस्त्राच्छन्नाध्वना गृहं प्रविश्य "कुमारी धनदा नन्दा विपुला मङ्गला ऽचला । पद्मा चैव समाख्याताः सप्तैता द्वारमातरः" ॥ इत्युक्त्वा, मातृः देवगृहद्वारि संपूज्य दध्यादिमङ्गलद्रव्यहस्ताभ्यो भगिनीभ्यो रजतादिद्रव्यं दत्त्वा तद्धस्तेन अक्षिणी अञ्जयित्वा जीवमातृणां पूजनं कुर्यात् । तद्यथा आसने उपविश्याचम्य प्राणानायम्य ॐसुमुखश्चेत्यादि पठित्वा अर्घं संस्थाप्य पूजासंकल्पः— अद्येहेत्यादि सं अमुकोऽहम् अमुकराशेः पुत्रस्य चूडोपनयनवेदारम्भसमावर्त्तनकर्म्मणाम् उत्तराङ्गत्वेन गृहप्रवेशकर्म्मणि सर्वाभ्युदयप्राप्तये भित्त्यालिखितानां कल्याण्यादिसप्तजीवमातॄणां यथामिलितोपचारैः पूजनं करिष्ये इति । ॐएतन्त इत्यादि प० ॐभूर्भुवः स्वः कल्याण्यादिसप्तजीवमातर इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य—

ध्यानम्—कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा । जया च विजया चैव सप्तैता जीवमातरः ॥ इति ध्यात्वा नाममन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य वसोर्धाराः पातयित्वा ब्रह्माणीकमलेन्दुसौम्यवदनेति पुष्पाञ्जलिं समर्प्य दक्षिणासंकल्पः—

अद्येहामुकोऽहं चौलादिकर्मणाम् उत्तराङ्गत्वेन कृतस्य जीवमातॄणां पूजनकर्मणः साङ्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् इति दद्यात्। तत आचारात् भगिन्यादिभिर्वटोः महानीराजनं तिलकादि च कार्य्यम्। ततोऽशीतिं यथाशक्ति वा ब्राह्मणान्भोजयित्वा इष्टबन्धुभिः सह भुञ्जीत। यथासुखं विहरेत्॥

ततश्चतुर्थेऽहनि माता बहुना सुवासिनीभिश्च सह शङ्खघण्टादिशब्दपुरःसरं मातृपीठादि चौलकेशांश्च गृहीत्वा जलाशयं गत्वा जलाशयनिकटे संस्थाप्य जलाशयनिकटवर्त्तिनि कुड्ये मत्स्यादिमातॄर्लेखयित्वा नमोऽन्तैः मत्स्यै कूर्म्यै वाराह्यै कुक्कुट्यै दर्दुर्यै जलूक्यै सोमायै इति चतुर्थ्यन्तनाममन्त्रैः गन्धाद्युपचारैः पूजयित्वा जलं माश्य मुक्तबन्धनाः पूर्वनिर्मितपोटलिकाः जलाशयतटे निधाय ब्राह्मणादिद्वारा मातृफलकं क्षालयित्वा नर्तकादिभ्यो मोदकादि दत्त्वा जलकुम्भहस्तानग्रतः कृत्वा शङ्खादिशब्दपुरःसरं गृहं प्रविश्य ताम्रकटाहपाचितं मिष्टान्नं गृहवर्तिभिः स्वजनैः सह भुक्त्वा यथासुखं विहरेत्॥

इति चूडोपनयनवेदारम्भसमावर्त्तनप्रयोगः॥

## (१३)अथ केशान्तः। (गोदानम्)

अयं च "षोडशवर्षस्य केशान्तः" इति पारस्करगृह्यसूत्रात्सप्तदशे वर्षे, कालापकर्षं कृत्वा ततः पूर्वं वा श्मश्रूद्गमानन्तरं कार्यः। यद्यप्ययं द्वादशवार्षिकादिव्रतानुष्ठानानन्तरं समावर्तनपक्षे समावर्तनात्पूर्वमेव प्राप्तस्तथापि पञ्चवार्षिकादिव्रतानुष्ठानानन्तरं समावर्तनपक्षे तदुत्तरमेव प्राप्नोतीति समावर्तनपूर्वकालिकत्वस्यास्यिानियमात् श्मश्रूद्गमनात् पूर्वं मा-

धान्येन श्मश्रुसंस्काररूपस्यास्यानुचितत्वादुपनयनदिने समावर्तनानुष्ठाने कालापकर्षं कृत्वा समावर्तनात् पूर्वमस्यानुष्ठेयत्वाच्च तैः सहास्य तन्त्रेण प्रयोग उपदिष्टः ।

अथ प्रयोगः ।

तत्र चन्द्रतारानुकूले चौलोक्तशुभदिने संस्कार्यस्य पित्रादिः केशान्तं कुर्यात् । तद्यथा—विवाहपूर्वाङ्गप्रयोगोक्तरीत्या (९३) संस्कार्यं संस्नाप्य पित्रादिः सुस्नातो दीपं प्रज्वाल्याचम्य प्राणानायम्य स्वदक्षिणतः संस्कार्यमुपवेश्य शान्तिपाठं (स्वस्तिवाचनं) कृत्वा अर्घं संस्थाप्य देवेभ्यः पुष्पाञ्जलिं समर्प्य पूर्वोक्तविधिना गणेशं सम्पूज्य प्रधानसंकल्पं कुर्यात् । अमुकोऽहममुकशर्मणोऽस्य पुत्रस्य संस्कारातिशयाधानद्वारा श्रीपरमेश्वरप्रीत्यर्थं केशान्ताख्यसंस्कारं करिष्ये । तत्पूर्वाङ्गत्वेन मातृपूजाऽऽभ्युदयिकश्राद्धपुण्याहवाचनानि करिष्ये इति संकल्प्य तानि क्रमेण कृत्वा सति सम्भवे प्रथमभागोक्तरीत्या (१८९) ग्रहयागं कृत्वा अन्यथा कलशे ब्रह्मवरुणसहितादित्यादिग्रहपूजनं कृत्वा रक्षासूत्रमभिमन्त्र्य कलशोपरि स्थापयेत् । समाचारात् चौलात्पूर्वरात्रौ क्रियमाणं केशाधिवासनं त्वत्र न कर्त्तव्यम् । श्मश्रूणां जुटिकाबन्धनयोग्यत्वाभावात् । ततः संस्कार्यस्य पिता स्थण्डिले पञ्चभूसंस्कारान् कृत्वा सूर्यनामाग्निं संस्थाप्य त्रीन् ब्राह्मणान् मिष्टान्नेन तर्पयित्वा आचार्यब्रह्मणोर्वरणं कृत्वा दक्षिणतो ब्रह्मणे आसनं दत्त्वा तत्र तमग्नेः पूर्वमार्गेणोपवेशयेत् । नात्र संस्कार्यस्य मातुरुपस्थे उपवेशनं, बाल्याभावेनायुक्तत्वात् इति गृह्यवृत्तौ नारायणः । ततः कर्ता प्रणीताप्रणयनादि पूर्णपात्रदानान्तं चौलवत् (२८७)

कुर्यात् । तत्र चूडापदस्थाने केशान्तेत्यूहः कार्यः । सूर्य- नामकाग्निश्चात्र प्रतिष्ठापनीयः । ततो लग्नदानं विधायो- पकल्पितपात्रे शीतास्वप्सु उष्णा अप आसिञ्चति वक्ष्यमाणम- न्त्रेण (उष्णेनेति परमेष्ठी ऋषिः प्रतिष्ठा छन्दः लिङ्गोक्ता देवता उष्णोदकासेके विनियोगः) ।

ॐउष्णेन व्वाय ऽउदकेनेह्यदिते केशश्मश्रु व्वप-इति । उष्णोदकामिश्रिते शीतोदके उपकल्पितं घृतपिण्डं तूर्ष्णीं प्रास्यति । तत उदकमादाय दक्षिणगोदानसमीपश्मश्रु वक्ष्यमाण- मन्त्रेणोनत्ति—

( सवित्रेति प्रजापतिर्ऋषिः गायत्री छन्दः आपो देवताः उन्दने विनियोगः ) ।

ॐसवित्रा प्रसूता दैव्या ऽआप ऽउन्दन्तु ते तनूम्। दीर्घायुत्वाय व्वर्चसे—इति । ततस्त्रेण्या शलल्या तूर्ष्णीं श्मश्रु विनीय त्रीणि कुशतरुणान्यन्तर्दधाति—

( ओषधे इति प्रजापतिर्ऋषिः यजुश्छन्द ओषधिर्देवता कुशतरुणान्तर्धाने विनियोगः ) ।

ॐओषधे त्रायस्व–इति मन्त्रेण । ततस्ताम्रपरिष्कृत- मायसक्षुरमादत्ते—(शिवो नामेति प्रजापतिर्ऋषिः यजुश्छन्दः क्षुरो देवता क्षुरग्रहणे विनियोगः)-

ॐशिवो नामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिꣳसीः–इत्यनेन मन्त्रेण ।.ततो दर्भतरुणा- न्तर्हितेषु क्षुरं संलग्नं करोति–(निवर्तयामीति प्रजापतिर्ऋषिः यजुश्छन्दः क्षुरो देवता क्षुरनिधाने विनियोगः) ।

ॐनिवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पो- षाय सुप्रजास्त्वाय सुवीर्याय–इति मन्त्रेण । ततश्छिनत्ति–

(येनावपत् इति आलम्बीयनऋषिः पङ्क्तिश्छन्दः सविता देवता श्मश्रुच्छेदने विनियोगः)–

ॐयेनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्यायुष्यं जरदष्टिर्यथाऽसत्—इत्यनेन मन्त्रेण सश्मश्रूणि कुशतरुणानि प्रच्छिद्य उत्तरतो ध्रियमाणे गोमयपिण्डे न्यस्य उदकस्पर्शं कृत्वा ततस्तस्मिन्नेव दक्षिणश्मश्रुणि एवमेवोन्दनादि वारद्वयं तूष्णीं कर्म कर्तव्यम्। अत्र पश्चिमगोदानाभावात् मध्यत्वसाम्यात् श्मश्रुमध्ये अधरोष्ठादधःस्थे सर्वमुन्दनादि कर्म कुर्यात्। श्मश्रुच्छेदने मन्त्रविशेषः–(त्र्यायुषमिति नारायणऋषिरुष्णिक् छन्दः अग्निर्देवता श्मश्रुच्छेदने विनियोगः)

ॐत्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नो ऽअस्तु त्र्यायुषम्—इति। ततः पूर्ववत् तूष्णीं पुनर्वारद्वयं कर्म कुर्यात्। तत उत्तरगोदानसमीपश्मश्रुणि पूर्ववदुन्दनादि कर्तव्यम्। छेदने मन्त्रविशेषः–(येनेति वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता श्मश्रुच्छेदने विनियोगः)

ॐयेन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्यम्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये–इति। अत्रापि वारद्वयं तूष्णीं पूर्ववदुन्दनादि। ततः त्रिः क्षुरेण शिरः प्रदक्षिणं सक्षुरं परिहरेत्। तत्र प्रथमवारं परिहरणे मन्त्रः–(यत्क्षुरेणेति वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता परिहरणे विनियोगः)।

ॐयत्क्षुरेण मज्जयता सुपेशसा वप्त्रा वा वपति केशश्मश्रु च्छिन्धि, शिरोमुखं मा ऽस्यायुः प्रमोषीः–

इति। ततस्तेनैवोदकेन सर्वत्र आर्द्रीकरणम्। नापिताय क्षुरदानम्–(अक्षण्वन्निति वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता नापिताय क्षुरदाने विनियोगः) ॐअक्षण्वन् परिवप–इत्यनेन मन्त्रेण। स नापित उदङ्मुखस्थितस्य प्राङ्मुखस्थितस्य वा मुण्डनं करोति। सकेशं गोमयपिण्डमनुगुप्तगोष्ठे निधाय पित्रादिः स्वाचार्याय कुमाराचार्याय वा गोरूपं वरं दद्यात्। ततो ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा दश यथाशक्ति वा ब्राह्मणान् भोजयिष्ये इति संकल्प्य अग्निं देवांश्च विसृज्य कर्मसम्पूर्णतां वाचयित्वा यस्यस्मृत्येत्युक्त्वा विष्णुं नमस्कृत्य ब्राह्मणद्वारा अभिषेकतिलकमन्त्रपाठादि कारयेत्।

(केशानाम् अन्तः समीपस्थितः श्मश्रुभाग इति व्युत्पत्त्या केशान्तशब्देन श्मश्रूणामभिधानात् श्मश्रुसंस्कार एव केशान्तशब्देन प्रतिपाद्यते। अत एवाश्वलायनेनापि "श्मश्रूणीहोन्दति" इति श्मश्रूणां संस्कार एवात्रोपदिष्टः। संस्कारगणपतिना चायमेवादृतः। उष्णोदकासेकमन्त्रे केशपदोपादानं तु नापितकर्तृकवपनसाधारण्येन तस्योपयोगित्वाद्बोध्यम्। एवमन्यत्रापि। श्मश्रुशब्देन च मुखजानि लोमान्यभिधीयन्ते इति देवयाज्ञिकः। तस्मादत्र केशानां क्षुरेण समन्त्रकसंस्कारो न। तत्संस्कारस्य पूर्वं जातत्वाच्चेति दिक्) ॥ इति केशान्तः ॥

विवाहप्रयोगस्तु पूर्वमेव प्रदर्शितः। स्मार्ताधानश्रौताधानयोः प्रयोगौ अन्यतोऽवगन्तव्यौ इत्युपरम्यते ॥

वेदाश्वनवभूवर्षे वैशाखे धवले दले।
त्रयोदश्यां शनौ पूर्तिं गतः संस्कारदीपकः ॥

इति श्रीनित्यानन्दपर्वतीयविरचितः संस्कारदीपकः ॥

गुरुः शरणम् ॥

| १ मूलपुरुषः | | मूलपुरुषः | | मूलपुरुष- | | मूलपुरुषः | | मूलपुरुषः | | मूलपुरुषः | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| कन्या | घरः | कन्या | पिता<br>घरः | कन्या | पितामह-<br>पिता<br>घरः | कन्या | प्रपितामह-<br>पितामहः<br>पिता<br>वरः | कन्या | वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>घरः | कन्या | वृद्धतरप्रपिता.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>घरः |
| मू०<br>पिता<br>कन्या | घर | मू०<br>पिता<br>कन्या | पिता<br>घर | मू०<br>पिता<br>कन्या | पितामह.<br>पिता<br>घर. | मू०<br>पिता<br>कन्या | प्रपितामह.<br>पितामहः<br>पिता<br>घरः | मू०<br>पिता<br>कन्या | वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>घरः | मू०<br>पिता<br>कन्या | वृद्धतरप्रपि.<br>वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>घरः |
| मू०<br>पितामहः<br>पिता<br>कन्या | घरः | मू०<br>पितामहः<br>पिता<br>कन्या | पिता<br>घर | मू०<br>पितामहः<br>पिता<br>कन्या | पितामह<br>पिता<br>वर. | मू०<br>पितामहः<br>पिता<br>कन्या | प्रपितामह<br>पितामह<br>पिता<br>वरः | मू०<br>पितामहः<br>पिता<br>कन्या | वृद्धप्रपि.<br>प्रपितामह<br>पितामह.<br>पिता<br>वर | मू०<br>पितामहः<br>पिता<br>कन्या | वृद्धतरप्रपि.<br>वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | मू° | | मू° | | मू° | | मू° | | मू° | | मू° |
| प्रपितामहः | वरः | प्रपितामहः | पिता | प्रपितामहः | पितामहः | प्रपितामहः | प्रपिताम. | प्रपितामहः | वृद्धप्रपि. | प्रपितामहः | वृद्धतरप्रपि. |
| पितामहः | | पितामहः | वरः | पितामहः | पिता | पितामहः | पितामह. | पितामहः | प्रपितामह | पितामहः | वृद्धप्रपिता. |
| पिता | | पिता | | पिता | वरः | पिता | पिता | पिता | पितामहः | पिता | प्रपितामहः |
| कन्या | | कन्या | | कन्या | | कन्या | वरः | कन्या | पिता | कन्या | पितामहः |
| | | | | | | | | | वरः | | पिता |
| | | | | | | | | | | | वरः |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | मू° | | मू° | | मू° | | मू° | | मू° | | मू° |
| वृद्धप्रपिता. | वरः | वृद्धप्रपिता. | पिता | वृद्धप्रपिता. | पितामहः | वृद्धप्रपिता. | प्रपिता. | वृद्धप्रपिता. | वृद्धप्रपि. | वृद्धप्रपिता. | वृद्धतरप्रपि. |
| प्रपितामहः | | प्रपितामहः | वरः | प्रपितामहः | पिता | प्रपितामहः | पितामहः | प्रपितामहः | प्रपिता. | प्रपितामहः | वृद्धप्रपिता. |
| पितामहः | | पितामहः | | पितामहः | वर. | पितामहः | पिता | पितामहः | पितामहः | पितामहः | प्रपितामहः |
| पिता | | पिता | | पिता | | पिता | वरः | पिता | पिता | पिता | पितामहः |
| कन्या | | कन्या | | कन्या | | कन्या | | कन्या | वरः | कन्या | पिता |
| | | | | | | | | | | | वरः |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | मू° | | मू° | | मू° | | मू° | | मू° | | मू° |
| वृद्धतरप्र. | वर. | वृद्धतरप्र. | पिता | वृद्धतरप्र. | पितामह | वृद्धतरप्र. | प्रपितामहः | वृद्धतरप्र. | वृ. प्रपिता. | वृद्धतरप्र. | वृद्धतरप्रपि. |
| वृद्धप्रपिता. | | वृद्धप्रपिता. | वर. | वृद्धप्रपिता. | पिता | वृद्धप्रपिता. | पिताम. | वृद्धप्रपिता. | प्रपिताम. | वृद्धप्रपिता. | वृद्धप्रपिता. |
| प्रपितामहः | | प्रपितामहः | | प्रपितामहः | वरः | प्रपितामहः | पिता | प्रपितामहः | पितामहः | प्रपितामहः | प्रपितामहः |
| पितामहः | | पितामहः | | पितामहः | | पितामहः | वरः | पितामहः | पिता | पितामहः | पितामहः |
| पिता | | पिता | | पिता | | पिता | | पिता | वर. | पिता | पिता |
| कन्या | | कन्या | | कन्या | | कन्या | | कन्या | | कन्या | वरः |

३

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| माता<br>कन्या | मू०<br>वर | माता<br>कन्या | मू०<br>पिता<br>वर | माता<br>कन्या | मू०<br>पितामह<br>पिता<br>वर | माता<br>कन्या | मू०<br>प्रपितामह<br>पितामह<br>पिता<br>वर | माता<br>कन्या | मू०<br>वृ प्रपिताम<br>प्रपितामह<br>पितामह<br>पिता<br>घर | माता<br>कन्या | मू०<br>वृद्धतरप्रपि<br>वृ प्रपिता<br>प्रपितामह<br>पितामह<br>पिता<br>घर |
| मातामह<br>माता<br>कन्या | मू०<br>वर | मातामह<br>माता<br>कन्या | मू०<br>पिता<br>वर | मातामह<br>माता<br>कन्या | मू०<br>पितामह<br>पिता<br>घर | माताम<br>माता<br>कन्या | मू०<br>प्रपिताम<br>पितामह<br>पिता<br>घर | मातामह<br>माता<br>कन्या | मू०<br>वृ प्रपिता<br>प्रापतामह<br>पितामह<br>पिता<br>घर | मातामह<br>माता<br>कन्या | मू०<br>वृद्धतरप्रपि<br>वृ प्रपिता<br>प्रपितामह<br>पितामह<br>पिता<br>घर |
| पितामही<br>पिता<br>कन्या | मू०<br>घर | पितामही<br>पिता<br>कन्या | मू०<br>पिता<br>वर | पितामही<br>पिता<br>कन्या | मू०<br>पितामह<br>पिता<br>वर | पितामही<br>पिता<br>कन्या | मू०<br>प्रपितामह<br>पितामह<br>पिता<br>वर | पितामही<br>पिता<br>कन्या | मू०<br>वृ प्रपिता<br>प्रपिताम<br>पितामह<br>पिता<br>घर | पितामही<br>पिता<br>कन्या | मू०<br>वृ तरप्रपि<br>वृद्धप्रपिता<br>प्रपितामह<br>पितामह<br>पिता<br>घर |

४

| | | | | | |
|---|---|---|---|---|---|
| मू०<br>मातामही<br>माता<br>कन्या<br>घर | मू०<br>मातामही<br>माता<br>कन्या<br>पिता<br>घरः | मू०<br>मातामही<br>माता<br>कन्या<br>पितामहः<br>पिता<br>घरः | मू०<br>मातामही<br>माता<br>कन्या<br>प्रपिताम.<br>पितामह<br>पिता<br>घर | मू०<br>मातामही<br>माता<br>कन्या<br>वृ.प्रपिता<br>प्रपितामहः<br>पितामह<br>पिता<br>घरः | मू०<br>मातामही<br>माता<br>कन्या<br>वृ.तरप्रपिता.<br>वृद्धप्रपिताम.<br>प्रपितामहः<br>पितामहः<br>पिता<br>घरः |
| मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>कन्या<br>घर | मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>कन्या<br>पिता<br>घरः | मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>कन्या<br>पितामहः<br>पिता<br>घर | मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>कन्या<br>प्रपिताम.<br>पितामह<br>पित.<br>घरः | मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>कन्या<br>वृद्धप्रपि.<br>प्रपिताम<br>पितामह<br>पिता<br>घरः | मू०<br>प्रमाताम.<br>मातामहः<br>माता<br>कन्या<br>वृद्धतरप्रपि.<br>वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>घरः |
| मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>कन्या<br>घरः | मू०<br>पितामहीपि.<br>पितामही<br>पिता<br>कन्या<br>पिता<br>घर | मू०<br>पितामहीपि.<br>पितामही<br>पिता<br>कन्या<br>पितामह<br>पिता<br>घर | मू०<br>पितामहीपि.<br>पितामही<br>पिता<br>कन्या<br>प्रपिता.<br>पितामह<br>पिता<br>घरः | मू०<br>पितामहीपि<br>पितामही<br>पिता<br>कन्या<br>वृद्धप्र.<br>प्रपितामह<br>पितामहः<br>पिता<br>घरः | मू०<br>पितामहीपि.<br>पितामही<br>पिता<br>कन्या<br>वृद्धतरप्र.<br>वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>घरः |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ५<br>मातामहीपिता<br>मातामही<br>माता<br>कन्या | मू°<br>वर: | मातामहीपि.<br>मातामही<br>माता<br>कन्या | मू°<br>पिता<br>वर: | मातामहीपि.<br>मातामही<br>माता<br>कन्या | मू°<br>पिताम.<br>पिता<br>वर: | मातामहीपि.<br>मातामही<br>माता<br>कन्या | मू°<br>प्रपिता.<br>पितामह:<br>पिता<br>वर: | मातामहीपि.<br>मातामही<br>माता<br>कन्या | मू°<br>वृद्धप्र.<br>प्रपितामह:<br>पितामह:<br>पिता<br>वर: | मातामहीपि.<br>मातामही<br>माता<br>कन्या | मू°<br>वृद्धतरप्र.<br>वृद्धप्रपिता.<br>प्रपितामह:<br>पितामह:<br>पिता<br>वर: |
| पितामहमाता<br>पितामह:<br>पिता<br>कन्या | मू°<br>वर: | पिताम.मा.<br>पितामह:<br>पिता<br>कन्या | मू°<br>पिता<br>वर | पिताम.मा.<br>पितामह:<br>पिता<br>कन्या | मू°<br>पितामह:<br>पिता<br>वर: | पिताम.मा<br>पितामह:<br>पिता<br>कन्या | मू°<br>प्रपिताम.<br>पितामह:<br>पिता<br>वर: | पिताम.मा.<br>पितामह:<br>पिता<br>कन्या | मू°<br>वृद्धप्रपि.<br>प्रपिताम.<br>पितामह:<br>पिता<br>वर: | पिताम.मा.<br>पितामह:<br>पिता<br>कन्या | मू°<br>वृद्धतरप्रपि.<br>वृद्धप्रपिता.<br>प्रपितामह:<br>पितामह:<br>पिता<br>वर: |
| पितामहीमाता<br>पितामही<br>पिता<br>कन्या | मू°<br>वर: | पिताम.मा.<br>पितामही<br>पिता<br>कन्या | मू°<br>पिता<br>वर | पिताम.मा.<br>पितामही<br>पिता<br>कन्या | मू°<br>पितामह:<br>पिता<br>वर: | पिताम.मा.<br>पितामही<br>पिता<br>कन्या | मू°<br>प्रपिताम.<br>पितामह:<br>पिता<br>वर: | पिताम मा.<br>पितामही<br>पिता<br>कन्या | मू°<br>वृद्धप्रपि.<br>प्रपिताम.<br>पितामह:<br>पिता<br>वर: | पिताम.मा.<br>पितामही<br>पिता<br>कन्या | मू°<br>वृद्धतरप्रपि.<br>वृद्धप्रपिता.<br>प्रपितामह:<br>पितामह:<br>पिता<br>वर: |

| | | | | | |
|---|---|---|---|---|---|
| मू०<br>मातमहीमाता घरः<br>मातामही<br>माता<br>कन्या | मू०<br>मातामहीमा. पिता<br>मातामही घरः<br>माता<br>कन्या | मू०<br>मा.महीमा. पितामहः<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मा.महीमा. प्रपिताम<br>मातामही पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मा.महीमा. वृ.प्रपिता.<br>मातामही प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मा.महीमा. वृद्धतरप्रपि.<br>मातामही वृ.प्रपिताम.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>मातामहमाता घरः<br>मातामहः<br>माता<br>कन्या | मू०<br>मातामह.मा. पिता<br>मातमहः घरः<br>माता<br>कन्या | मू०<br>मातामह.मा. पितामहः<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>मा.म.मा. प्रपिताम.<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मा.म.मा. वृ.प्रपिता.<br>मातामहः प्रपितामहः<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मा.म.मा. वृ.तरप्रपि.म.<br>मातामहः वृ.प्रपितामहः<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |

| | | | |
|---|---|---|---|
| मू०<br>माता पितामही<br>कन्या पिता<br>वरः | मू०<br>माता पितामहमाता<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>माता पितामहीमाता<br>कन्या पितामही<br>पिता<br>वरः | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मातामह<br>माता<br>कन्या | मू॰ पितामही<br>पिता<br>वर | मातामह<br>माता<br>कन्या | मू॰ पितामहमाता<br>पितामह<br>पिता<br>वर | मातामह<br>माता<br>कन्या | मू॰ पितामहीमाता<br>पितामही<br>पिता<br>वर | मातामह<br>माता<br>कन्या | मू॰ पितामहीपिता<br>पितामही<br>पिता<br>वर |
| पितामही<br>पिता<br>कन्या | मू॰ पितामही<br>पिता<br>वर | पितामही<br>पिता<br>कन्या | मू॰ पितामहमाता<br>पितामह<br>पिता<br>वर | पितामही<br>पिता<br>कन्या | मू॰ पितामहीमाता<br>पितामही<br>पिता<br>वर | पितामही<br>पिता<br>कन्या | मू॰ पितामहीपिता<br>पितामही<br>पिता<br>वर |
| मातामही<br>माता<br>कन्या | मू॰ पितामही<br>पिता<br>वर | मातामही<br>माता<br>कन्या | मू॰ पितामहमाता<br>पितामह<br>पिता<br>वर | मातामही<br>माता<br>कन्या | मू॰ पितामहीमाता<br>पितामही<br>पिता<br>वर | मातामही<br>माता<br>कन्या | मू॰ पितामहीपिता<br>पितामही<br>पिता<br>वर |
| प्रमातामह<br>मातामह<br>माता<br>कन्या | मू॰ पितामही<br>पिता<br>वर | प्रमातामह<br>मातामह<br>माता<br>कन्या | मू॰ पितामहमाता<br>पितामह<br>पिता<br>वर | प्रमातामह<br>मातामह<br>माता<br>कन्या | मू॰ पितामहीमाता<br>पितामही<br>पिता<br>वर | प्रमातामह<br>मातामह<br>माता<br>कन्या | मू॰ पितामहीपिता<br>पितामही<br>पिता<br>वर |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| | मू० | | मू० | | मू० | | मू० |
| पितामहीपिता | पितामही | पितामहीपिता | पितामहमाता | पितामहीपिता | पितामहीमाता | पितामहीपिता | पितामहीपिता |
| पितामही | पिता | पितामही | पितामहः | पितामही | पितामही | पितामही | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| | मू० | | मू० | | मू० | | मू० |
| मातामहीपिता | पितामही | मातामहीपिता | पितामहमाता | मातामहीपिता | पितामहीमाता | मातामहीपिता | पितामहीपिता |
| मातामही | पिता | मातामही | पितामहः | मातामही | पितामही | मातामही | पितामही |
| माता | वरः | माता | पिता | माता | पिता | माता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| | मू० | | मू० | | मू० | | मू० |
| पितामहमाता | पितामही | पितामहमाता | पितामहमाता | पितामहमाता | पितामहीमाता | पितामहमाता | पितामहीपिता |
| पितामहः | पिता | पितामहः | पितामहः | पितामहः | पितामही | पितामहः | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| | मू० | | मू० | | मू० | | मू० |
| पितामहीमाता | पितामही | पितामहीमाता | पितामहमाता | पितामहीमाता | पितामहीमाता | पितामहीमाता | पितामहीपिता |
| पितामही | पिता | पितामही | पितामहः | पितामही | पितामही | पितामही | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ९<br>मातामहीमाता<br>मातामही<br>माता<br>कन्या | मू०<br>पितामही<br>पिता<br>वर | मातामहीमाता<br>मातामही<br>माता<br>क या | मू०<br>पितामहमाता<br>पितामह<br>पिता<br>वर | मातामहीमाता<br>मातामही<br>माता<br>कन्या | मू०<br>पितामहीमाता<br>पितामहा<br>पिता<br>वर | मातामहीमाता<br>मातामही<br>माता<br>कन्या | मू०<br>पितामहापिता<br>पितामही<br>पिता<br>वर |
| मातामहमाता<br>मातामह<br>माता<br>कन्या | मू०<br>पितामही<br>पिता<br>वर | मातामहमाता<br>मातामह<br>माता<br>कन्या | मू०<br>पितामहमाता<br>पितामह<br>पिता<br>वर | मातामहमाता<br>मातामह<br>माता<br>कन्या | मू०<br>पितामहीमाता<br>पितामहा<br>पिता<br>वर | मातामहमाता<br>मातामह<br>माता<br>कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वर |
| कन्या | मू०<br>पितामही<br>पिता<br>वर | कन्या | मू०<br>पितामहमाता<br>पितामह<br>पिता<br>वर | कन्या | मू०<br>पितामहीमाता<br>पितामहा<br>पिता<br>वर | कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वर |
| पिता<br>कन्या | मू०<br>पितामही<br>पिता<br>वर | पिता<br>कन्या | मू०<br>पितामहमाता<br>पितामह<br>पिता<br>वर | पिता<br>कन्या | मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वर | पिता<br>कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वर |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १०<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामही<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीमाता<br>पितामही<br>पिता<br>वर | पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामही<br>पिता<br>वरः | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहमाता<br>पितामहः<br>पिता<br>वर | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीमाता<br>पितामही<br>पिता<br>वर | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामही<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू॰<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |

११

वृद्धतरप्रपि
वृद्धप्रपितामह
प्रपितामहः
पितामह
पिता
कन्या

मू°
पितामही वृद्धतरप्रपि
पिता वृद्धप्रपितामह
वर प्रपितामह
पितामह
पिता
कन्या

मू°
पितामहमाता वृद्धतरप्रपि
पितामह वृद्धप्रपितामह
पिता प्रपितामह
वर पितामह
पिता
कन्या

मू°
पितामहीमाता वृद्धतरप्रपि
पितामही वृद्धप्रपितामह
पिता प्रपितामह
वर पितामह
पिता
कन्या

मू°
पितामहीपिता
पितामही
पिता
वर

कन्या

मू°
माता कन्या
वर

मू°
मातामह कन्या
माता
वर

मू°
मातामही कन्या
माता
वर

मू°
प्रमातामह
मातामह
माता
वर

कन्या

मू°
मातामहीपिता कन्या
मातामही
माता
वर

मू°
मातामहमाता कन्या
मातामह
माता
वर

मू°
मातामहीमाता
मातामही
माता
वर

| | | | | |
|---|---|---|---|---|
| पिता<br>कन्या | मू०<br>माता पिता<br>घर: कन्या | मू०<br>मातामह: पिता<br>माता कन्या<br>घर: | मू०<br>मातामही पिता<br>माता कन्या<br>घर: | मू०<br>प्रमातामह:<br>मातामह:<br>माता<br>घर: |
| पिता<br>कन्या | मू०<br>मातामही पिता पिता<br>मातामही कन्या<br>माता<br>घर: | मू०<br>मातामह माता पिता<br>मातामह: कन्या<br>माता<br>घर: | मू०<br>मातामही माता<br>मातामही<br>माता<br>घर: | |
| पितामह:<br>पिता<br>कन्या | मू०<br>माता पितामह:<br>घर: पिता<br>कन्या | मू०<br>मातामह: पितामह:<br>माता पिता<br>घर: कन्या | मू०<br>मातामही पितामह:<br>माता पिता<br>घर: कन्या | मू०<br>प्रमातामह:<br>मातामह:<br>माता<br>घर: |
| पितामह:<br>पिता<br>कन्या | मू०<br>मातामही पिता पितामह:<br>मातामही पिता<br>माता कन्या<br>घर: | मू०<br>मातामह माता पितामह:<br>मातामह: पिता<br>माता कन्या<br>घर: | मू०<br>मातामही माता<br>मातामही<br>माता<br>घर: | |

१३

प्रपितामहः
पितामहः
पिता
कन्या

मू०

माता | प्रपितामह
घर | पितामहः
| पिता
| कन्या

मू०

मातामह | प्रपितामहः
माता | पितामहः
घर | पिता
| कन्या

मू०

मातामही | प्रपितामह·
माता | पितामहः
घर | पिता
| कन्या

मू०

प्रमातामहः
मातामहः
माता
घरः

---

मू०

प्रपितामहः
पितामहः
पिता
कन्या

मू०

मातामहीपिता | प्रपितामह·
मातामही | पितामह
माता | पिता
घरः | कन्या

मू०

मातामहमाता | प्रपितामह
मातामह | पितामह
माता | पिता
घरः | कन्या

मू०

मातामहीमाता
मातामही
माता
घर

---

मू०

वृद्धप्रपितामहः
प्रपितामह·
पितामह
पिता
कन्या

मू०

माता | वृद्धप्रपितामह
घर· | प्रपितामहः
| पितामह
| पिता
| कन्या

मू०

मातामहः | वृद्धप्रपितामहः
माता | प्रपितामह
घर | पितामह·
| पिता
| कन्या

मू०

मातामही | वृद्धप्रपितामहः
माता | प्रपितामहः
घर | पितामह·
| पिता
| कन्या

मू०

प्रमातामहः
मातामहः
माता
घरः

---

मू०

वृ प्रपितामह
प्रपितामहः
पितामहः
पिता
कन्या

मू०

मातामहीपिता | वृ प्रपितामहः
मातामही | प्रपितामहः
माता | पितामहः
घरः | पिता
| कन्या

मू०

मातामहमाता | वृ प्रपितामहः
मातामह | प्रपितामह·
माता | पितामहः
घरः | पिता
| कन्या

मू०

मातामहीमाता
मातामही
माता
घर·

| | | | | |
|---|---|---|---|---|
| पिता<br>कन्या | मू०<br>माता पिता<br>घरः कन्या | मू०<br>मातामहः पिता<br>माता कन्या<br>घर. | मू०<br>मातामही पिता<br>माता कन्या<br>घरः | मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>घरः |
| पिता<br>कन्या | मू०<br>मातामही पिता पिता<br>मातामही कन्या<br>माता<br>घरः | मू०<br>मातामह माता पिता<br>मातामह कन्या<br>माता<br>घर. | मू०<br>मातामही माता<br>मातामही<br>माता<br>घरः | |
| पितामहः<br>पिता<br>कन्या | मू०<br>माता पितामहः<br>घर. पिता<br>कन्या | मू०<br>मातामहः पितामहः<br>माता पिता<br>घर कन्या | मू०<br>मातामही पितामहः<br>माता पिता<br>घरः कन्या | मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>घरः |
| पितामहः<br>पिता<br>कन्या | मू०<br>मातामही पिता पितामहः<br>मातामही पिता<br>माता कन्या<br>घरः | मू०<br>मातामह माता पितामहः<br>मातामहः पिता<br>माता कन्या<br>घरः | मू०<br>मातामही माता<br>मातामही<br>माता<br>घरः | |

१३

प्रपितामहः
पितामहः
पिता
कन्या

मू०
माता | प्रपितामह
घर | पितामहः
| पिता
| कन्या

मू०
मातामह | प्रपितामह.
माता | पितामह.
वर | पिता
| कन्या

मू०
मातामही | प्रपितामह
माता | पितामहः
वर | पिता
| कन्या

मू०
प्रमातामहः
मातामह.
माता
घर.

---

प्रपितामहः
पितामहः
पिता
कन्या

मू०
मातामहीपिता | प्रपितामह
मातामही | पितामह
माता | पिता
घर | कन्या

मू०
मातामहमाता | प्रपितामह
मातामह | पितामह
माता | पिता
घरः | कन्या

मू०
मातामहीमाता
मातामही
माता
वर

---

वृद्धप्रपितामहः
प्रपितामह
पितामह
पिता
कन्या

मू०
माता | वृद्धप्रपितामह
घर | प्रपितामह
| पितामह
| पिता
| कन्या

मू०
मातामह | वृद्धप्रपितामह.
माता | प्रपितामह
वर | पितामह
| पिता
| कन्या

मू०
मातामही | वृद्धप्रपितामह.
माता | प्रपितामह.
वर | पितामह
| पिता
| कन्या

मू०
प्रमातामह.
मातामहः
माता
वरः

---

वृ प्रपितामह
प्रपितामह
पितामह
पिता
कन्या

मू०
मातामहीपिता | वृ प्रपितामह.
मातामही | प्रपितामह.
माता | पितामह
वर | पिता
| कन्या

मू०
मातामहमाता | वृ प्रपितामह.
मातामह | प्रपितामह
माता | पितामहः
घरः | पिता
| कन्या

मू०
मातामहीमाता
मातामही
माता
वर

| | | | |
|---|---|---|---|
| मू०<br>वृद्धतरप्रपितामहः<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या<br>माता<br>वरः | मू०<br>वृद्धतरप्रपितामहः<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या<br>मातामहः<br>माता<br>वरः | मू०<br>वृद्धतरप्रपि.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या<br>मातामही<br>माता<br>वर | मू०<br>वृद्धतरप्रपि.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या<br>प्रमातामहः<br>मातामहः<br>माता<br>वरः |
| मू०<br>वृद्धतरप्रपि.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या<br>मातामहीपिता<br>मातामही<br>माता<br>वरः | मू०<br>वृद्धतरप्रपिताम<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या<br>मातामहमाता<br>मातामहः<br>माता<br>वरः | मू०<br>वृद्धतरप्रपिताम.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या<br>मातामहीमा.<br>मातामही<br>माता<br>वर. | |
| मू०<br>माता<br>कन्या<br>माता<br>वरः | मू०<br>माता<br>कन्या<br>मातामहः<br>माता<br>वरः | मू०<br>माता<br>कन्या<br>मातामही<br>माता<br>वर. | मू०<br>माता<br>कन्या<br>प्रमातामहः<br>मातामहः<br>माता<br>वरः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १५<br>माता<br>कन्या | मू०<br>मातामहमाता<br>मातामह<br>माता<br>घर | माता<br>कन्या | मू०<br>मातामहीपिता<br>मातामही<br>माता<br>घर | माता<br>कन्या | मू०<br>मातामहीमाता<br>मातामहा<br>माता<br>घर | | |
| मातामह<br>माता<br>कन्या | मू०<br>माता<br>घर | मातामह<br>माता<br>क या | मू०<br>मातामह<br>माता<br>घर | मातामह<br>माता<br>कन्या | मू०<br>मातामही<br>माता<br>वर | मातामह<br>माता<br>कन्या | मू०<br>प्रमातामह<br>मातामह<br>माता<br>घर |
| मातामह<br>माता<br>कन्या | मू०<br>मातामहमाता<br>मातामह<br>माता<br>घर | मातामह<br>माता<br>कन्या | मू०<br>मातामहापिता<br>मातामही<br>माता<br>वर | मातामह<br>माता<br>कन्या | मू०<br>मातामहीमाता<br>मातामही<br>माता<br>घर | | |
| पितामही<br>पिता<br>कन्या | मू०<br>माता<br>वर | पितामही<br>पिता<br>कन्या | मू०<br>मातामह<br>माता<br>घर | पितामही<br>पिता<br>कन्या | मू०<br>मातामही<br>माता<br>घर | पितामही<br>पिता<br>कन्या | मू०<br>प्रमातामह<br>मातामह<br>माता<br>वर |

| | | | |
|---|---|---|---|
| १८ मू०<br>मातामहीपिता मातामहमा.<br>मातामही मातामहः<br>माता माता<br>कन्या वरः | मू०<br>मातामहीपिता मातामहीपिता<br>मातामही मातामही<br>माता माता<br>कन्या वरः | मू०<br>मातामहीपिता मातामहीमाता<br>मातामही मातामही<br>माता माता<br>कन्या वरः | |
| मू०<br>पितामहमाता माता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>पितामहमाता मातामहः<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>पितामहमाता मातामही<br>पितामहः माता<br>पिता वरः<br>कन्या | मू०<br>पितामहमाता प्रमातामहः<br>पितामहः मातामहः<br>पिता माता<br>कन्या वरः |
| मू०<br>पितामहमाता मातामहमा.<br>पितामहः मातामहः<br>पिता माता<br>कन्या वरः | मू०<br>पितामहमाता मातामहीपिता<br>पितामहः मातामही<br>पिता माता<br>कन्या वरः | मू०<br>पितामहमाता मातामहीमाता<br>पितामहः मातामही<br>पिता माता<br>कन्या वरः | |
| मू०<br>पितामहीमाता माता<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पितामहीमाता मातामहः<br>पितामही माता<br>पिता वरः<br>कन्या | मू०<br>पितामहीमाता मातामही<br>पितामही माता<br>पिता वरः<br>कन्या | मू०<br>पितामहीमाता प्रमातामहः<br>पितामही मातामहः<br>पिता माता<br>कन्या वरः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १९ मू° | | मू° | | मू° | | | |
| पितामहीमाता | मातामहमाता | पितामहीमाता | मातामहीपिता | पितामहीमाता | मातामहीमाता | | |
| पितामही | मातामहः | पितामही | मातामही | पितामही | मातामही | | |
| पिता | माता | पिता | माता | पिता | माता | | |
| कन्या | वर | कन्या | वरः | कन्या | वर | | |
| मू° | | मू° | | मू° | | मू° | |
| मातामहीमाता | माता | मातामहीमाता | मातामह | मातामहीमाता | मातामही | मातामहीमाता | प्रमातामहः |
| मातामही | वर | मातामही | माता | मातामही | माता | मातामही | मातामहः |
| माता | | माता | वर | माता | वरः | माता | माता |
| कन्या | | कन्या | | कन्या | | कन्या | वरः |
| मू° | | मू° | | मू° | | | |
| मातामहीमाता | मातामहमा. | मातामहीमाता | मातामहीपिता | मातामहीमाता | मातमहीमाता | | |
| मातामही | मातामह- | मातामही | मातामही | मातामही | मातामही | | |
| माता | माता | माता | माता | माता | माता | | |
| कन्या | वर | कन्या | वर | कन्या | वरः | | |
| मू° | | मू° | | मू° | | मू° | |
| मातामहमाता | माता | मातामहमाता | मातामह | मातामहमाता | मातामही | मातामहमाता | प्रमातामहः |
| मातामहः | वरः | मातामहः | माता | मातामहः | माता | मातामहः | मातामहः |
| माता | | माता | वर | माता | वर | माता | माता |
| कन्या | | कन्या | | कन्या | | कन्या | वरः |